Tanjore Saraswathi Mahal Series No 111

# DHARMĀKŪTAM

## YUDDHA KANDAM

BY

TRYAMBAKARĀYAMAKHĪ

EDITED BY

K. VASUDEVA SASTRI, B. A.

PUBLISHED BY

O. A. NARAYANASWAMI, B. A., B. L.,
*Honorary Secretary,*
*T M S S M Library, Thanjavur.*

Śaka 1886 A. D. 1964 *Price:* **Rs. 30/-**

"This book is published under the scheme of editing and publication of rare manuscripts F. No. 18/60/C-2 of the Government of India, Ministry of Education, NEW DELHI".

समष्टि व्यष्टि राष्ट्रसञ्चालक मन्त्रिमण्डल-विश्राणितानल्पवित्तोपकारेण मुद्राप्य प्रकाशितो-ऽयं ग्रन्थ. विजयते ।

सरस्वतीमहाल् ग्रन्थमालायाः पुष्पम् -१११

# ॥ धर्माकूतम् ॥

(श्रीमद्रामायणव्याख्या)

श्रीत्र्यम्बकरायमखिविरचितम् ।

## (युद्धकाण्डः)

के. वासुदेवशास्त्रिणा बी. ए. बिरुदभाजा संकलितम्

तञ्जपुरी सरस्वतीमहाल् निर्वाहकसमित्यक्रीत कार्यदर्शिना
ओ. ए. नारायणस्वामिना बी. ए., बी. एल्., बिरुदालंकृतेन
प्रकाशितम्

शकाब्दाः १८८६ क्रिस्त्वब्दाः १९६४

मूल्यम् रूप्यकाणि ३०

# PREFACE.

As announced in the preface to Kishkindakanda of Dharmakuta we are happy to place the last volume of Dharmakuta Yuddhakanda befoie the Scholars. With the publication of this Kanda of Dharmakuta of Tryambakaraya-makhi the work is completely printed, the first two Kandas namely Bala Kanda and Ayodya Kanda having been published by Sri Vani Vilas Syndicate Ltd, Srirangam and the remaining four kandas by Saraswathi Mahal Library. Uttarakanda evidently had not been commented upon by Tryambakarayamakhi.

Through the five Kandas of this literary feat Tryambakaraya has been sufficiently known to the Scholarly world; hence it is needless to repeat what had been stated in the introduction to the previous volumes about our Makhi. He was a contemporary of Shahaji, Serfoji and Tulajaji and was minister of Ekoji His last days were spent in peace in Swamimalai.

With the index of verses from Ramayana and verses quoted by the commentator, index of authors and works quoted, references are made easy.

We are thankful and grateful to the Union Government and State Government for their liberal and timely financial help, but for which it would not have been possible for us to bring out this useful work.

O A NARAYANASWAMI,
*Honorary Secretary,*
*T M. S S M. Library Committee.*

# INTRODUCTION

As Lord Krishna has himself stated in the Gita His Avatars have three objects in view namely the protection of the Good, the destruction of the bad and the establishment of the Dharma. Of these three the earlier Avatars from Matsya to Nṛsimha have generally fulfilled their object with the first two. It is only in the Avatars of Sri Rama and Sri Krishna that the third object namely establishment of Dharma has been seriously attempted and even here the life of Sri Krishna as given to us in Mahabharata, Srimad Bhagavata and Harivamsa, practically confines the establishment of Dharma to the upadesa made by the Lord to his Bhaktas and the rest of the life is concerned with the Lilas, Dushṭa Nigraha and Sishṭa Paripalana, the emphasis being laid on the Ēswara Bhāva and Soulabhya calculated to induce Bhakti towards the lord. On the other hand the life of Sri Rama as given to us by Bhagavan Vālmiki deals exhaustively with the exemplary Dhārmic life led by Sri Rama.

There is a special feature in the life of Sri Rama which is very important and makes the example of his life more useful to the ordinary man. And that is that Sri Rama acted throughout as the son of Dasaratha and a human being. This was necessitated by the boon given to Rāvaṇa. This aspect in the life of Sri Rama makes Srimad Ramayana a veritable text-book and practical guide of Dhārmic life. That is why Srimad Ramayana is described as a practical version of the Vedas. As the ancient saying has it, 'वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना ॥'—'When the Lord who is revealed by the Vedas took the Avatar of Sri Rama, the Vedas transformed themselves in the hands of Valmiki into Srimad Ramayana.' Thus it is clear that

just as every sentence in the Vedas contains a Dhārmic Truth, every incident in the Ramayana, every description of the characters and every conversation has a Dhārmic Truth to teach. But although we have numerous commentaries on Srimad Ramayana, there has not been one in which the various Dhārmic Truths to be culled from the various parts of the work have been regularly pointed out To supply this desideratum, Sri Tryambakaraya Makhi, who was a minister of Tanjore under the Mahratta king Seifoji I (1711—1725) undertook this cyclopaedic commentary called Dharmakūtam dealing solely with the Dhārmic Truths to be learnt from Srimad Ramayana. In this work not only Dharma strictly as such, but also the various arts and sciences that have to be known for carrying out the Dharma are dealt with. Thus we have a full account of Artha Sāstra, Moksha Sāstra, Kāma Sāstra, Jyoutisha, Sāmudrika Sāstra, Ratna Sāstra, Gaja Sāstra and Aśwa Sāstra and all other minor Sāstras that one who wishes to carry out the Dharma has to learn. And what is more, every Truth that is culled out from Srimad Ramayana is illustrated, supported and enlarged upon by quotations from Bhārata, Puranas, Smrtis, Sūtras, Vēdas, Bhashyas and the various texts of technical sciences and arts. It is therefore not too much to say that one who goes through this commentary will get a cyclopaedic knowledge of all our ancient arts and sciences.

The administrative committee of the Saraswathi Mahal Library, Tanjore therefore deserves the thanks of the public for having undertaken this prodigious task of publishing this huge commentary and getting it finished. I must thank the committee for having given me this opportunity of editing this last portion namely Yuddha Kānda of Dharmākūtam.

*Tanjore*
*25—11—'64*

K. VASUDEVA SASTRI

॥ श्रीः ॥

श्रीमद्रामायणे युद्धकाण्डे

# धर्माकूतविषयानुक्रमणिका ॥

| विषयाः | पृष्ट-संख्या |
|---|---|

| विषयाः | पृष्ट-संख्या |
|---|---|

| विषयाः | पृष्ठ-संख्या |
| --- | --- |

| विषयाः | पुट-संख्या |
|---|---|

| विषयाः | पुट-संख्या |
|---|---|
| तत्र महाभारतवचनसंमति प्रदर्शनम् | ७४ |
| निखिलशत्रुबलभेदनाय मर्मज्ञो ज्ञातिः संग्राह्य इति कथनम् | ,, |
| महापुरुषाणामेव राज्यसुखं व्यामोहकरं न भवतीति कथनम् | ,, |
| मोक्षधर्मे तद्वचनसंमति प्रदर्शनं च | ,, |
| 'न सर्वे भ्रातरस्तात' इति श्लोकस्य औचित्यविचारकरणम् | ७५ |
| सुग्रीवेण, प्रणतिपूर्वकं विभीषणस्य वध्यत्वनिवेदनम् | ,, |
| प्रभोराग्रहे सति मन्त्रिभिः प्रणामादिभिरुपायैः परावृत्ति कर्तव्येति कथनम् | ,, |
| कामस्य निकृष्टत्वकथनं, अर्थधर्ममोक्षाणां उत्तरोत्तरं प्राशस्त्य-कथनं च | ७६ |
| तत्र च, तत्तत्प्रमाणग्रन्थवचनसंमति प्रदर्शन | ,, |
| अर्थधर्मशास्त्रयोर्विरोधे धर्मशास्त्रस्यैव बलवत्व कथनम् | ७७ |
| रामेण सुग्रीवाय कपोतोपाख्यान कथनम् | ,, |
| आतिथ्यकरणाकरणयोर्ये गुणदोषास्ते अभयप्रदानविषयेऽपि भवन्तीति प्रदर्शनम् | ,, |
| कपोतोपाख्यानस्य विस्तरश कथनम् | ७८–७९ |
| श्रीरामेण सुग्रीवाय कण्डुगाधाकथनम् | ८० |
| शरणागतरक्षणं महाफलं स्वर्ग्यं चेति कथनम् | ८१ |
| शरणागतेषु अभयप्रदानं मम व्रतमिति रामेण प्रतिपादनम् | ,, |
| सर्वदानेष्वभयदानमेव उत्कृष्टमिति निरूपणम् | ,, |
| रामेण विभीषणानयने सुग्रीवचोदनम् | ,, |
| पुरातनाधिकारिणां संमत्यैव नूतनमनुष्यसंग्रहः कार्य इति कथनम् | ८२ |
| तत्र कामन्दकमहाभारतवचनसंमति प्रदर्शनं च | ,, |
| साक्षादपकारिणोऽपि शरणागतस्य शत्रोरभयदानं कर्तव्यमिति कथनम् | ,, |

| विषयाः | पृष्ठ-संख्या |
|---|---|

| विषयाः | पुट-संख्या |
|---|---|

| विषयाः | पृष्ठ-संख्या |
|---|---|

| विषयाः | पृष्ठ-संख्या |
|---|---|

| विषयाः | पृष्ट-संख्या |
|---|---|

| विषयाः | पृष्ठ-संख्या |
| --- | --- |
| न्यूनः समो वा परेण सन्धिमेव कुर्यात् अधिकबल एव विग्रह कुर्यादिति कथनम् | ११६ |
| तत्र राजधर्मवचनसमतिश्च | ,, |
| धर्माधर्मप्रवृत्तिभेदेन मनुष्येषु द्वैविध्यप्रदर्शनम् | ,, |
| तत्र गीतावाक्यसमति कथनम् | ,, |
| देवाना ऋषीणां च अनुग्रहो यस्मिन् तस्य जयो नियतः अतस्तेन सन्धिरेव उचित इति कथनम् | ११७ |
| तत्र कर्णपर्ववचनसंमति कथनम् | ,, |
| कालस्य स्वतोऽखण्डस्य न कृतत्वादिकं, किन्तु धर्माधर्म-प्रवृत्त्यधीन एव कृतयुगादिव्यवहारः इति कथनम् | ,, |
| कृतप्रवर्तकस्य राज्ञोऽभिवृद्धि', कलिप्रवर्तकस्य क्षयश्च भवतीति कथनम् | ,, |
| तत्र राजधर्मवचनसंमतिश्च | ,, |
| तपोबलेन लब्धवरोऽपि नित्यं धर्मप्रवृत्तश्चेदेव विजयी भवेदिति कथनम् | ११८ |
| तत्र भारत कामन्दकादिवचन प्रदर्शनम् | ,, |
| विषयलोलुपस्य अकृत्यप्रवृत्त्या आपद भवन्तीति कथनम् | ,, |
| तत्र कामन्दकवचन कथनं च | ,, |
| नित्यनैमित्तिककर्माणि, तपः, वेदाध्ययन अग्निहोत्रधूमः इत्येवमादयो रक्षोनिवर्तका इति कथनम् | ,, |
| अत्र तैत्तिरीयश्रुत्यादि प्रमाण प्रदर्शन च | ,, |
| दर्शपूर्णमासादि कर्मणा तत्तत्फलार्थत्वावगमेऽपि ते फलकामना विरहेऽपि अवश्यमनुष्ठेयाः इति विशेषेण प्रदर्शनम् | ११९–१२० |
| दर्शपूर्णमासाद्यपेक्षया अग्निहोत्रस्योत्कृष्टत्व प्रतिपादनम् | १२१ |
| पुण्यदेश एव तपः कर्तव्यमिति कथनम् | १२२ |

| विषयाः | पृष्ठ-संख्या |
|---|---|

| विषयाः | पृष्ठ-संख्या |
| --- | --- |

| विषयाः | पृष्ठ-संख्या |
|---|---|
| अधर्मिष्ठस्य दुष्टामात्यसहायस्य राज्यं न तिष्ठतीति कथनम् | १४२ |
| तत्र उद्योगपर्ववचनसंमति प्रदर्शनम् | ,, |
| बलवद्विरोधिनः शरणान्तराभावेन मरणस्य निश्चितत्वात् ऐहिकं आमुष्मिकं च झटित्यनेन कर्तव्यमिति कथनम् | १४२ |
| तत्र च उद्योगपर्ववचनसंमति कथनम् | ,, |
| रामचोदितेन वालिपुत्रेन तत्क्षणादेव रावणसमीपं गत्वा आत्मान निवेद्य रामवचन कथनम् | ,, |
| रावणेन चारोऽयं बध्यता मित्याज्ञप्तान् चतुरो राक्षसान् गृहीत्वा सहसोत्पत्य, शिलातले तानवधूय, पादताडनेन प्रासाद च चूर्णीकृत्य, अङ्गदस्य रामसमीपागमनम् | ,, |
| ततः समारब्धे सुघोरे सङ्ग्रामे बहवो वानरराक्षसवीराः निषूदिताः । परस्परं अमर्षवशेन हनुमत्प्रभृतिभिः जम्बुमालीप्रभृतयः द्वन्द्वयुद्धे निहताः इत्यादिवर्णनम् | १४३ |
| रामलक्ष्मणाभ्या अग्निकेतुप्रभृतीनां निषूदनम् | ,, |
| कबन्धानां समुत्पतनम् | ,, |
| रात्रौ राक्षसानां बलाभिवृद्धिर्भवतीति कथनम् | ,, |
| तत्र तैत्तिरीयश्रुति द्रोणपर्व वचन समति प्रदर्शनम् | ,, |
| अन्तर्धानगतेन पापिष्ठेन मेघनादेन निशि नागपाशेन रामलक्ष्मणयोः बन्धनम् | १४४ |
| मायया कूटयुद्धं नकार्यमित्यत्र मनुवाक्य प्रदर्शनम् | ,, |
| नागपाशबद्धौ राघवौ पुनरपि नाराचैर्निर्भिद्य विसञ्ज्ञौ चकारेति कथनम् | ,, |
| तादृशौ राघवौ दृष्ट्वा हनुमदादीनां विषादगमनम् | ,, |
| विभीषणेन सुग्रीव समाश्वासनम् | १४५ |
| सत्यधर्मे निरतानां मृत्युकृता भीतिर्नास्तीति कथनम् | ,, |

| विषयाः | पुट-संख्या |
| --- | --- |

| विषयाः | पृष्ठ संख्या |
|---|---|
| हनुमत्कृत धूम्राक्षवधवर्णनम् | १६० |
| हनुमत्कृत धूम्राक्षहननश्रवणसञ्जातकोपेन रावणेन शत्रुवधाय वज्रदंष्ट्रस्य प्रेषणम् | ,, |
| वज्रदंष्ट्रस्य हरिप्रवीराणां च घोरयुद्धवर्णनम् | ,, |
| प्रभग्नान् वानरवीरानवलोक्य कुपितेनाङ्गदेन शैलशृङ्गप्रक्षेपात्तद्रथस्य प्रमथनम् | ,, |
| ततो भूमाववप्लुतं तं मुष्टियुद्धेन परिश्रान्तं विधाय अङ्गदः महासिना वज्रदंष्ट्रस्य महच्छिरः चिच्छेदेति कथनम् | ,, |
| ततो वानरैः, हतशेषान् राक्षसान् विद्राव्याङ्गदपूजनम् | ,, |
| वालितनयेन निहतो वज्रदंष्ट्र इति श्रुत्वा रावणः शत्रुविजयाय अकंपनं प्रेषयामास | १६१ |
| कुमुद, नल, मैन्द, द्विविद, प्रमुखैर्वानरयूथपैः अकंपनसैन्य-प्रमथनम् | ,, |
| तद्दृष्ट्वा प्रकुपितेनाकंपनेन विद्रावितानां कपिवीराणा हनुमत्समीपागमनम् | ,, |
| योधाः परैर्भग्ना अपि बलवदाश्रयेण पुनः स्थिरा भवन्तीति कथनम् | ,, |
| तत्र भीष्मपर्ववचन समति कथनम् | ,, |
| हनुमान् अश्वकर्णेन सैन्यं विनिहत्य अन्येन महीरुहेण शिरस्यभिहत्याकंपनमप्यन्तक निकेतनं प्रापयामासेति कथनम् | ,, |
| तत्कर्मनोषितैस्सर्वैः हनुमत्प्रशंसनम् | ,, |
| अकंपनं निषूदितं श्रुत्वा लङ्कापुरीरक्षणाय संस्थापितानां गुल्मानामवेक्षणाय प्रस्थितेन रावणेन युद्धाय प्रहस्तस्य प्रेरणम् | १६२ |

| विषयाः | पृष्ठ-संख्या |
|---|---|

| विषयाः | पृष्ठ-संख्या |
|---|---|
| तत्र हरिवंशवचनसंमति प्रदर्शनम् | १६५ |
| विभीषणेन राघवं प्रति सोऽयं रावण इति प्रदर्श्य तस्य वीर्यप्रभावादि कथनम् | ,, |
| रावणस्य तेजोविशेषादिकं दृष्ट्वा रामस्य विस्मयगमनम् | १६६ |
| सीतापहारी पापात्मायं दिष्ट्याद्य मे दृष्टिपथं गत इत्युक्त्वा सक्रोधं धनुरादाय रामः युद्धसन्नद्धः तस्थौ इति कथनम् | ,, |
| रावणेन राक्षसप्रवीरान् प्रति, 'इहागतेषु सर्वेषु युष्मासु वनौकसः लङ्कां प्रविश्य प्रधर्षयेयु'रित्युक्त्वा पुररक्षणाय तेषां प्रतिप्रेषणम् | ,, |
| राज्ञो बहिर्निर्गमनप्रसक्तौ विशिष्य पुरगुप्तिरवश्यं कर्तव्येति कथनम् | १६७ |
| तत्र वनपर्ववचनसंमति कथनम् | ,, |
| राजाज्ञया राक्षसप्रवीराणां प्रतिनिवर्तनम् | ,, |
| राजरक्षणापेक्षया भृत्यानां तदाज्ञाकरणं उत्कृष्टमिति प्रदर्शनम् | ,, |
| तत्र द्रोणपर्ववचन प्रदर्शनम् | ,, |
| रावणेन वानरसेनाविध्वंसनम् | ,, |
| सुग्रीवेण रावणं प्रति महतो गिरिशृङ्गस्य क्षेपणम् | ,, |
| बाणौघैस्तं शकलीकृत्य रावणप्रयुक्तेन महाहिकल्पेन शरेण विद्धस्य सुग्रीवस्य भूमौ निपतनम् | ,, |
| ततो रावणबाणविद्धानां महाकपीनामपि मोघीकृतवीर्याणां भूमौ निपतनम् | १६८ |
| रावणसायकार्तानां कपिवीराणा रामं प्रति शरणगमनम् | ,, |
| राघवस्य युद्धोद्यमः | ,, |
| 'अहमेवैनं नीचं विधमिष्यामी' ति रामं प्रति लक्ष्मणस्य प्रार्थनम् | ,, |

| विषयाः | पृष्ट-संख्या |
|---|---|

| विषयाः | पृष्ठ-संख्या |
| --- | --- |

| विषयाः | पृष्ट-संख्या |
| --- | --- |

| विषयाः | पृष्ट-संख्या |
|---|---|

| विषयाः | पृष्ट-संख्या |
|---|---|

| विषयाः | पुट संख्या |
|---|---|

| विषयाः | पृष्ट-संख्या |
|---|---|

| विषयाः | पुट-संख्या |
|---|---|
| तेजस्विनो बाल्यं वयः पराक्रमनिरोधे न प्रभवतीति कथनम् | २२० |
| तत्र कालिदास वनपर्ववचन समति प्रदर्शनम् | २२१ |
| लक्ष्मणातिकाययोरस्त्रयुद्धवर्णनम् | ,, |
| अथ भगवता वायुना लक्ष्मणं प्रति 'अतिकायोऽयं ब्रह्मदत्तवरः अवध्यकवचावृतश्च अतो ब्राह्मेणैवास्त्रेण हन्तव्योऽय' मिति प्रतिबोधनम् | ,, |
| कवचस्य अभेद्यत्वं च देवताप्रसादकृतं मन्त्रप्रभाव कृत चेति द्विविधमिति कथनम् | ,, |
| देवताप्रसादकृते अभेद्यत्वे मार्कण्डेयपुराण वचन प्रदर्शनम् | ,, |
| मन्त्रप्रभावकृताभेद्यत्वे —द्रोणपर्वणि अर्जुन दुर्योधनयोर्युद्ध-वर्णनप्रस्तावे समतिप्रदर्शनम् | २२२–२२४ |
| लक्ष्मणेन ब्रह्मास्त्रप्रयोगेण अतिकायशिरश्छेदनम् | २२५ |
| वानरवीराणां प्रमोदातिशयवर्णनम् | ,, |
| सौमित्रिनिहतमतिकायं श्रुत्वा रावणस्यानुशोचनम् | ,, |
| रामलक्ष्मणयोः कपिवीराणा च पराक्रमस्मरणकंपितेन रावणेन राक्षसवीरान् प्रति 'द्वारपिधानादिना अप्रमत्तैर्भवद्भि पुरी रक्षणीये'त्याज्ञापनम् | ,, |
| अप्रमेयपराक्रमस्य भ्रातुः पुत्रस्य च वधेन विस्मयाक्रान्तहृदयं, संभ्रान्तराक्षसगणपरिवृतं च पितरं दृष्ट्वा मेघनादेन 'अद्य समुद्यतास्त्रोऽहं सन्त्रासयिष्यामि सपरिवारं शत्रु'मिति प्रतिज्ञाय पितरं समाश्वास्य युद्धाय प्रस्थानम् | २२६ |
| अत्र पुत्रेण पितृविपत्तिसमये स्वप्राणव्ययेनापि तदीयापन्निवृत्तिः कर्तव्येति पुत्रधर्माविष्करणम् | ,, |
| तत्र तैत्तिरीयश्रुति, द्रोणपर्व, आदिपर्ववचनसंमति प्रदर्शनम् | ,, |
| अथ शत्रुवधाय स्वविजयाय च इन्द्रजिताभिचारकर्मकरणम् | २२७ |

| विषयाः | पृष्ट-संख्या |
|---|---|

| विषयाः | पृष्ठ-संख्या |
|---|---|
| अनेन वीराणां अन्यैर्युद्धकरणेन श्रान्तस्य शत्रोर्हननं निन्दितमिति प्रदर्शनम् | २३२ |
| तत्र द्रोणपर्ववचनसंमति कथनम् | ,, |
| ततो मुष्टियुद्धाय समागते कुम्भे, हनुमत्कृतमुष्टिप्रहारविशीर्णदेहस्य तस्य भूमौ निपतनम् | ,, |
| ततः कुम्भवधमसहमानः महापरिघमादाय वानरवीराणां विनाशनाय समागतः निकुम्भोऽपि मारुतिकृतमुष्टिनिपातपरिपिष्टः पञ्चत्वमुपगतः | २३३ |
| ततो रावणप्रेषितस्य खरपुत्रस्य मकराक्षस्य राघवेण हननम् | ,, |
| ततः रक्षःपतिचोदितो मेघनाद हुतवहसतर्पण संप्राप्तं महारथमधिरुह्यान्तर्धाय चात्मानं नभोगतः अक्षयशरक्षेपैर्वानरवाहिनीं रामलक्ष्मणौ च भृशं विक्षोभ्यापीडयदिति वर्णनम् | ,, |
| क्रुद्धेन लक्ष्मणेन रामं प्रति, सर्वरक्षसां विनाशाय ब्रह्मास्त्रं प्रयोक्ष्यामीति कथनम् | २३४ |
| नैकस्य हेतोः सर्वरक्षसां हननं युक्तमिति रामवचनम् | ,, |
| अनेन एकस्य दुष्टस्य कृते बहूनां हननं न कर्तव्यमिति भाव सूचनम् | ,, |
| अत्र हरिवंशे पृथ्वीं प्रति पृथुवचन संमति प्रदर्शनम् | ,, |
| मायिनो दुष्टस्य तस्य हननाय रामस्य त्वरितनिरीक्षणम् | ,, |
| स्वविनाशकरं राघवव्यवसायमध्यवसाय भीतेन मेघनादेन नगरीं प्रविश्य मायामयीं सीता स्वरथमारोप्य केशेषु गृहीत्वा हनुमत्प्रभृतीना हरियूथपाना मनोव्यामोहनाय पश्यतां तेषां निस्त्रिंशेन मायासीतायाः शिरश्छेदनम् | ,, |
| तदवलोक्य व्यथितहृदयेन मारुतिना 'दुरात्मन् आत्मनाशाय केशपक्षे परामृशः' इति निन्दनम् | २३५ |

| विषयाः | पृष्ठ-संख्या |
|---|---|
| निकुंभिलायां हव्यवाहं तर्पयितुं रावणेः प्रस्थानम् | २३८ |
| पवनसुतमुखेन रावणिकृतमीनावधवृत्तांतं श्रुत्वा रामस्य मूर्च्छनम् | ,, |
| लक्ष्मणेन रामसमाश्वासनम् | ,, |
| त्वया सेव्यमानो धर्मः त्वामनर्थेभ्यस्त्रातुं न शक्नोतीत्यतः स निरर्थक इति कथनम् | ,, |
| स्थावरजङ्गमात्मकभूतानां यादृशं स्फुटतरं प्रत्यक्षमस्ति न तथा धर्मस्य प्रत्यक्षदर्शनमस्ति, तस्मान्न धर्मे प्रत्यक्षं प्रमाणम्। यदि धर्मः प्रामाणिकः स्यात् त्वादृशो न विपद्येतेति कथनम् | २३९ |
| धर्माधर्मयोः सुखदुःखानुभवैकलिङ्गत्वस्य वक्तव्यतया, सुखस्य अधर्मेण सहचारस्य रावणे दर्शनात्, त्वयि च दुःखस्य धर्मेणैव सहचारदर्शनेन, व्यभिचारित्वान्नानुमानं प्रमाणं, इति प्रदर्शनम् | ,, |
| तथा च अप्रामाणिकौ धर्माधर्मौ यदि च तत्साधकं प्रमाणान्तरं भवेत् तथापि विपरीत फलकत्वान्निरर्थकावेवेति कथनम् | २४० |
| ईश्वरप्रेरितेनैव पुरुषेण धर्मः अधर्मो वा अनुष्ठीयते न तु स्वतन्त्रेणेत्येतदप्ययुक्तम्, तथा सति स्वतन्त्रस्येश्वरस्यैव पुण्यपापे स्यातां न पुरुषस्य, अस्वातन्त्र्यादिति कथनम् | ,, |
| धर्मस्य फलजनकत्वेऽपि प्रतिबन्धान्न फलोत्पत्तिरित्येतदप्ययुक्तम् अज्ञातप्रतिबन्धकेन, स्वरूपतोऽप्यनभिव्यक्तेन, अतएव असत्कल्पेनानेन धर्मेण कथं सुखं प्राप्तुं शक्यमिति कथनम् | २४१ |
| यतस्तव धर्मैकप्रधानस्येदृशं राज्यभ्रंशादि व्यसनजातमुपगतं ततः स धर्मोऽप्रामाणिकः, सुखफलकत्वमपि तस्य नास्तीति कथनम् | ,, |
| धर्मः सुखहेतुरेव, तथापि पुरुषकारबलमपेक्ष्यैव तस्य कार्यसाधकत्व मिति चेत् तर्हि पुरुषकार एव प्रबलत्वात्सेव्यः, न तु धर्मो दुर्बलः इति कथनम् | ,, |

| विषयाः | पुट-संख्या |
|---|---|
| यदि सत्यवचनं धर्मः तदतिक्रामन् राजा दण्ड्यश्च तथा सति पूर्वमभिषेकं प्रतिज्ञाय पश्चाद्वनप्रस्थापनेन अनृतवादी अकरुणश्च पिता किमिति त्वया न शिक्षितः, तस्मात् धर्मः क्रियत इति तव प्रतिज्ञामात्रमिति कथनम् | २४२ |
| अथ धर्मः प्रामाणिकः अधर्मश्च, तयोर्धर्म एवादरणीयः अधर्मः परित्याज्य इतिचेत् तदा शतक्रतुरिन्द्रः राज्यप्राप्त्यर्थं मुनिं न हन्यात् न वा तत्प्रायश्चित्तं यागं कुर्यादिति कथनम् | ,, |
| धर्मः अधर्मसहित एव अनर्थं विनाशयति न केवलो धर्मः तस्मात्कार्यार्थी पुरुषः धर्माधर्मौ यथेच्छं अर्थप्राप्त्युचित-देशकालानुसारेण कुर्यात्। काले धर्माधर्मोभयपरिग्रह-रूपोऽयमेव धर्मो न्याय्य इति इन्द्रादेरिव ममापि मतमिति लक्ष्मणाशयविवरणम् | ,, |
| एतादृशधर्ममूलं च हस्तप्राप्तं राज्यं परित्यजता त्वया छिन्न-मित्युक्त्या अर्थस्य धर्मं प्रति कारणत्वं विस्पष्टमुक्तं भवतीति कथनम् | ,, |
| धर्मं प्रति अर्थस्य कारणत्वे वनपर्ववचनसंमति प्रदर्शनम् | ,, |
| अर्थस्य अन्वयव्यतिरेकाभ्या सर्वक्रियामूलत्वमुक्त्वा अर्थाभावे काचिदपि क्रिया न प्रवर्तत इति प्रदर्शनम् | ,, |
| अत्र राजधर्मवचनसंमति कथनम् | २४३ |
| धर्ममूलमर्थं परित्यज्य सुखकामस्सन् यः दुःखबहुलं धर्ममारभते तस्य राज्यभ्रंशादिदोषः प्रवर्तत इति प्रदर्शनम् | ,, |
| 'यस्यार्थास्तस्य मित्राणि'— इत्यादिना न केवलं धर्मे मूलमर्थः, किन्तु मित्रबान्धवादि सकल संपतावप्यर्थ एव मूलमित्युक्तं भवतीति कथनम् | ,, |
| अत्र च राजधर्मे युधिष्ठिरं प्रति अर्जुनवाक्य संमति कथनम् | ,, |

| विषयाः | पृष्ट-संख्या |
|---|---|

विषयाः पृष्ठ-संख्या

| विषयाः | पृष्ट-संख्या |
|---|---|
| अत्र भोक्तृरूपस्यान्तःकरणोपाधिकस्य जीवस्य देहावस्थितस्य विषयदेशावस्थानं कथमित्याशंक्य तत्परिहरणम् | २६० |
| अन्तःकरणोपाधिकस्य जीवस्य विषयदेशावस्थितत्वमङ्गी-कार्यमित्यत्र कौषीतकिश्रुतिवचनप्रदर्शनम् | २६१ |
| विषयदेशस्थोप्यात्मा त्वमहमादिशब्दैः व्यवह्रियमाणोऽपि तत्वतो न ज्ञायते इति कथनम् | ,, |
| तत्र सूतसंहिता वचनसंमति कथनम् | ,, |
| मूलबलहनने रामकृतानितरसाधारणयुद्धवर्णनम् | २६२ |
| रावणस्य सर्वमपि मूलबलं दिवसस्य अष्टमे भागे निःशेषं निहत्य रामेण विभीषणसुग्रीवप्रमुखान् प्रति 'एतदस्त्रबलं दिव्यं मम वा त्र्यंबकस्य वा' इति कथनम् | ,, |
| देवगणैः रामप्रशंसनम् | २६३ |
| हतशेषैर्निशाचरैरावेदितवृत्तान्तानां रजनीचराणां तन्नारीणां च बहुधा विलपनम् | ,, |
| प्रत्येकमेव राममाहात्म्यज्ञापनसमर्थैः विराध, कबन्ध, वालि, कुम्भकर्णादिवधैः समुदितैरपि अविदितरामप्रभावस्य दुर्मतेः रावणस्यानीत्या घोरोऽयं विनाश. संप्राप्तः इत्युक्त्वा विलपनम् | ,, |
| अनेन मूर्खस्याधर्मिष्ठस्य राज्ञो दोषेण तद्राष्ट्रस्य, सपुत्रज्ञाति-बान्धवस्य स्वस्य च नाशो भवतीति सूचनम् | ,, |
| तत्र च आश्वमेधिकपर्ववचनसंमति कथनम् | ,, |
| भयेऽस्मिन् महति कोऽपि नः शरणं नास्ति। मम पुत्रो मम भ्राता मम भर्ता रणे हतः इति सर्वा रजनीचरस्त्रियः भृशमार्ताः सुदारुणमुच्चैर्विनेदुः | २६४ |
| तदनु प्रतिगृहं राक्षसीकृतपरिदेवनमाकर्ण्य प्रकुपितेन रावणेन रथमारुह्य अवशिष्टैर्निशाचरैः सह 'अद्यैव मद्धनुर्मुक्तैर्बाणैः राघवं लक्ष्मणं चैव यमसादनं नेष्यामि' इत्युक्त्वा प्रस्थानम् | ,, |

| विषयाः | पुट-संख्या |
|---|---|
| प्रथमं रावणलक्ष्मणयोर्युद्धवर्णनम् | २६८ |
| तदनु सुमित्रापुत्रमतिक्रम्य रावणेन राघवे शरवर्षणम् | ,, |
| रामेण च रावणबाणानां भल्लैश्छेदनम् | ,, |
| रामरावणयोरन्योन्यवधकांक्षिणोस्तुमुलयुद्धवर्णनम् | ,, |
| राम रावणयोर्भयङ्करास्त्रयुद्धवर्णनम् | २६९ |
| ततः कुपित हृदयेन रावणेन दशभिः शरैः राममर्मसु ताडनम् | ,, |
| तथाऽप्यविचलितहृदयेन रामेण तीक्ष्णतरैः शरैः रावणस्य सर्वगात्रेषु ताडनम् | ,, |
| अत्रान्तरे लक्ष्मणः रावणस्य ध्वजं, सारथेः शिरः, धनुश्च चिच्छेदेति वर्णनम् | ,, |
| विभीषणेन गदया पर्वतोपमानां तद्रथाश्वानां हननम् | ,, |
| कुपितेन रावणेन विभीषणं प्रति शक्त्यायुधप्रयोगः | ,, |
| लक्ष्मणेन विभीषणरक्षणाय त्रिभिः शरैः तच्छक्तेश्छेदनम् | ,, |
| ततो रावणेनातिक्रुद्धेन विभीषणवधाय अतिभयंकरायाः शक्तेर्ग्रहणम् | २७० |
| तदा प्राणसंशयमापन्नं विभीषणं विमोक्षयितुं लक्ष्मणेन शक्तिहस्तस्य रावणस्योपरि तीक्ष्णैः शरैरभिवर्षणम् | ,, |
| तत्कर्मकुपितेन रावणेन लक्ष्मणप्राणहरणाय तदुपरि तच्छक्तेः प्रयोगः | ,, |
| तामतिभयंकरां लक्ष्मणप्राणहरणायापतन्तीं शक्तिं दृष्ट्वा रामेण 'स्वस्त्यस्तु लक्ष्मणाये'ति कथनम् | ,, |
| शक्तिनिर्भिन्नहृदयस्य लक्ष्मणस्य भूमौ पतनम् | ,, |
| तदवस्थं लक्ष्मणं प्रेक्ष्य भ्रातृस्नेहाद्विषण्णहृदयोऽपि राघवः न विषादस्य कालोऽयमिति सचिन्त्य, रावणस्य वधे धृतः सुतुमुलं युद्धं चक्रे इति वर्णनम् | २७१ |
| ततो वानरश्रेष्ठैरशक्यां तां शक्तिं हस्ताभ्यां परामृश्य राघवो बभञ्जेति कथनम् | ,, |

| विषयाः | पृष्ट-संख्या |
| --- | --- |

| विषयाः | पुट-संख्या |
|---|---|

विषयाः पुट-संख्या

| विषयाः | पृष्ट-संख्या |
|---|---|
| अतः पित्रा अग्निना अङ्के स्थापनं, सीतयापि तदङ्गीकरणं, तथा दत्तायाः सीतायाः रामेण अङ्गीकरणं च युक्तमेवेति प्रदर्शनम् | ३४७ |
| अत्र, अङ्केनेत्येतच्च दक्षिणांकाभिप्रायं, तस्यैवापत्यस्थानत्वात्, वामांकस्तु स्त्रीस्थानमेवेत्युक्त्वा तद्विशदीकरणाय आदिपर्वगत कथाप्रदर्शनम् | ३४८ |
| अग्निप्रवेशेऽपि सीतायाः अक्लिष्टमाल्याभरणत्वप्रतिपादनम् | ,, |
| अनेन पतिव्रतानां पञ्चमहाभूतान्यपि प्रतिकूलं नाचरन्तीति सूचनम् | ,, |
| अग्निप्रवेशेऽप्यदाहः शुद्धिज्ञापकः इति कथनम् | ,, |
| अत्र छान्दोग्योपनिषद्वचनसंमति कथनम् | ,, |
| अग्निना – 'विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघव' इत्युक्त्वा सीतायाः समर्पणम् | ३४९ |
| अत्र, अग्निमुखेन शुद्धेति परिज्ञानात् चारित्रसन्देहे तत्कर्मसाक्षिणो महाभूतस्य मुखादेव शुद्धता ज्ञातव्येति सूचनम् | ,, |
| अत्र च वनपर्वणि नलोपाख्याने, आदिपर्वणि शकुन्तलोपाख्याने च, संमतिप्रदर्शनम् | ,, |
| राघवेण, अहमप्यवगच्छामि शुद्धां मैथिलीं, परन्तु लोकप्रत्ययार्थं उपेक्षिता मयेत्युक्त्वा सीतास्वीकरणम् | ३५० |
| रामः प्रियया समेत्य सुखितोऽभूदिति कथनम् | ३५१ |
| ततो महेश्वरेण रामं प्रति 'राघव! दिष्ट्या त्वया लोकस्य रावणजं भयमपावृत्तम्। इतोऽयोध्यां गत्वा भरतादीन् समाश्वास्य, राज्यं प्राप्य तुरगमेधादिना चेष्ट्वा प्राप्य चानुत्तमं यशः त्रिदिवं गन्तुमर्हसीति' निवेदनम् | ,, |
| 'एतच्छुभतरं वाक्यं व्याजहार महेश्वर' इति मूलग्रन्थे शुभतरं इति तरप्प्रत्यययोगात् ब्रह्मोपदेशेन उत्पन्नात्मतत्वज्ञानस्याऽपि कर्मपरित्यागापेक्षया तत्करणमेव श्रेय इति सूचितं भवतीति कथनम् | ,, |

विषयाः पुट-संख्या

| विषयाः | पुट-संख्या |
|---|---|

विषयाः | पुट-संख्या
--- | ---

| विषयाः | पुट-संख्या |
|---|---|
| अत्र विषये पूर्वमेवायोध्याकाण्डे मातृनिन्दापरं भरतं प्रति भगवता भरद्वाजेन 'रामप्रव्राजनं ह्येतत् शुभोदर्कं भविष्यती' ति कथितमिति प्रदर्शनम् | ४०१ |
| भरतेनापि निखिल राजोपचारपूजिते पादुके रामपादयोः सयोज्य कृताञ्जलिना— 'एतत्ते रक्षित राजन् राज्यं निर्यातितं मया, अद्य जन्म कृतार्थं मे सवृत्तश्च मनोरथः ॥ अवेक्षतां भवान् कोशं कोष्ठागारं पुरं बलम् । भवतस्तेजसा सर्वं कृतं दशगुणं मया ॥ इति निवेदनम् | " |
| अनेन, स्वस्य प्राप्तं राज्यं गुरवे निवेदनीयं इति सूचितं भवति इति कथनम् | " |
| अत एव च राजधर्मे स्वस्य प्राप्तं राज्यं धर्मराजेन धृतराष्ट्राय निवेदितमित्युक्तमिति प्रदर्शनम् | " |
| ततो रामेण विमानादवतीर्य भरतेन सह तदाश्रमं गत्वा पुष्पकं वैश्रवणवहनाय प्रेषयामासेति कथनम् | " |
| अनेन यदीयं यद्वस्तु अन्येन हृत तत्स्वयं निर्जितं चेदपि तस्मै दातव्यमिति सूचितमिति कथनम् | " |
| अत एव विरोचनहृतं विष्णु किरीटं स्वपराक्रमनिर्जितमपि विष्णवे दत्तवान् वैनतेयः इति प्रतिपादितं हरिवंशे | " |
| कृष्णश्च जाम्बवन्तं जित्वा स्यमन्तकं सत्राजिते ददौ इति च प्रदर्शनम् | " |
| ततो रामेण, पुरोहितस्य पादौ निपीड्य शुभे पृथगासने तेन सहोपवेशनम् | ४०२ |
| ततः कैकेय्यानन्दवर्धनेन भरतेन शिरस्यंजलिमाधाय ज्येष्ठं रामं प्रति—"पूजिता मामिका माता दत्तं राज्यमिदं मम । तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम" ॥ इति कथितम् । | " |

| विषया | पुट-संख्या |
|---|---|
| अत्र, — भरताय दत्ते राज्ये तस्य स्वत्वं वा उत निक्षेपरूपत्वं वा इत्याशङ्क्य, उद्योगपर्वस्थित गालवकथाप्रदर्शनेन अष्टाश्वशतीसंपादनपर्यन्तं ययातिदत्ताया माधव्यां गालवस्वत्ववत्, एकैकपुत्रोत्पत्तिपर्यन्तं च हर्यश्व दिवोदास-औशीनर विश्वामित्राणा स्वत्ववच्च, संकेतितकालापगमे पुनः प्रदानेन निक्षेपरूपत्ववच्च, भरतस्य चतुर्दश सवत्सर पर्यन्तं राज्ये स्वत्वं, तत्कालापगमे यथावत्पुनः प्रदानेन निक्षेपरूपत्वं चेत्युभयरूपत्वमप्युपपन्नमेवेति कथनम् ॥ | ४०३—४०८ |
| राम! समर्थेन त्वया भक्तभृत्यपरिपालनार्थं राज्यपरिपालनाकरणे सति यत्नेन संवर्धितस्य फलकाले विशीर्णस्य वृक्षस्येव जन्म व्यर्थं भवेदिति भरतेन प्रदर्शनम् | ,, |
| अनेन राज्ञां प्रजापरिपालनं मुख्यो धर्म इति प्रदर्शनम् | ,, |
| अत्र च आपस्तम्ब, विष्णुपुराण वचन संमति कथनम् | ४०९ |
| ततो राज्याभिषेकाय भरतप्रार्थितेन रामेण तदङ्गीकरणम् | ,, |
| ततः शत्रुघ्नवचनात् सुखहस्तै श्मश्रुवर्धकै राघवसेवनम् | ,, |
| ततो भरतसुग्रीवादिषु स्नातेषु, विशोधितजटः स्नातो वस्त्रमाल्यानुलेपनः। महार्हवसनो रामः तस्थौ तत्र श्रिया ज्वलन्। इति कथनम् | ४१० |
| संप्राप्तं सुखं भ्रातृभि. सह भोक्तव्यं, उत्सवदिने बन्धुभिः सह मङ्गलस्नानगन्धमाल्य वस्त्रभूषणधारणादिकं कर्तव्यमिति प्रदर्शनम् | ,, |
| अत्र राजधर्मवचन समति कथनम् | ,, |
| सर्वा दशरथस्त्रियः सीताया मनोहरं प्रतिकर्म चक्रुरिति कथनम् | ,, |
| पुत्रवत्सला कौसल्या सर्वासां वानरपत्नीनां शोभनं चकार | ,, |
| ततः सुमन्त्रेणानीतं सर्वाङ्गशोभनं रथमारुरोह रामः | ,, |

| विषयाः | पृष्ट-संख्या |
|---|---|
| रत्नशास्त्रोक्तप्रकारेण रत्नोत्पत्तिस्थाननिरूपणम् | ४१७ |
| नवरत्नेषु, प्रत्येकं लक्षणविशेषाणां, रत्नगुणानां, तद्दोषाणां, तत्तद्धारणे धर्तुः जायमान फलभेदाना, वर्ज्यावर्ज्यरत्नानां, अन्येषां चैतत्संबद्धविषयाणा विस्तरेण निरूपणम् | ४१८—४२२ |
| महापुरुषस्य रामस्य पट्टाभिषेकसमये इन्द्रेण माला प्रेषितेति प्रतिपादनात् अन्यैरपि सामन्तैरिष्टजनैश्च राजाभिषेकसमये उपायनानि दातव्यानीति सूचितं भवतीति कथनम् । | ,, |
| अत्र सभापर्व वचनसंमति प्रदर्शनम् | ,, |
| श्री रामस्य पट्टाभिषेकसमये देवगन्धर्वाः प्रजगुः अप्सरोगणा ननृतुः भूमिः सस्यवती पादपा· फलवन्त· पुष्पाणि च गन्धवन्ति बभूवुरिति वर्णनम् | ४२३ |
| अनेन यस्मिन् राज्ये धार्मिको राजाभिषिच्यते तद्राज्यं वर्धत इति सूचितम् | ,, |
| अत्र विष्णुपुराणवचनसंमति कथनम् | ,, |
| ततो मनुजर्षभ , अश्व गो वृष हिरण्यादीन् महार्हाणि नानाभरणवस्त्राणि च ब्राह्मणेभ्यो ददौ इति वर्णनम् | ,, |
| अर्करश्मिप्रतीकाशां काञ्चनीं दिव्यां स्रजं सुग्रीवाय, वैडूर्यमणिचित्रे वज्ररत्नविभूषिते अङ्गदे अङ्गदाय च ददौ राम | ४२४ |
| अनेन अभिषेकसमये ब्राह्मणेभ्यो बहुविधानि दानानि स्वेष्टजनानां वस्त्राभरणदानादिना बहुमतिश्च कर्तव्येति सूचित भवतीति प्रदर्शनम् | ,, |
| एवमेव अभिषिक्तेन युधिष्ठिरेणापि दत्तमिति राजधर्मवचन प्रतिपादनम् | ,, |
| मणिप्रवरजुष्टं अनुत्तमं मुक्ताहारं रामः सीतायै प्रददौ | ,, |

विषयाः | पुट-संख्या

| विषयाः | पुट-संख्या |
| --- | --- |




॥ श्रीः ॥
॥ श्री गणेशाय नमः ॥
॥ श्री सरस्वत्यै नमः ॥
॥ श्री गुरुभ्यो नमः ॥

# ॥ धर्माकूतम् ॥

## त्र्यंबकरायमखीया श्रीमद्रामायणव्याख्या ।

## युद्धकाण्डः ।

हनुमन्मुखेन सीतासद्भावरावणबलादिविचारणानन्तरं भाविसेनानयनप्रभृति पट्टाभिषेकान्तरामचरितवर्णनमुखेन सेनासन्नाहरक्षणनयनव्यूहनशत्रुपुरनिरोधनयुद्धप्रकारतत्कालसमागतशत्रुपक्षीयसंग्रहणप्रकारशत्रुवधराज्याभिषेकराज्यपरिपालनादीन् राजधर्मान् प्रतिपादयितुं युद्धकाण्डमारभते भगवान् वाल्मीकिः ।

**श्रुत्वा हनुमतो वाक्यं यथावदभिभाषितम् ।**
**रामः प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् ॥**

**कृतं हनुमता कार्यं सुमहद्भुवि दुर्लभम् ।**
**मनसाऽपि यदन्येन न शक्यं धरणीतले ॥**

**भृत्यकार्यं हनुमता सुग्रीवस्य कृतं महत् ।**
**यो हि भृत्यो नियुक्तस्सन् भर्त्रा कर्मणि दुष्करे ॥**

**कुर्यात्तदनुरागेण तमाहुः पुरुषोत्तमम् ।**
**नियुक्तो नृपतेः कार्यं न कुर्याद्यस्समाहितः ॥**

**भृत्यो युक्तः समर्थश्च तमाहुः पुरुषाधमम् ।**
**तन्नियोगे नियुक्तेन कृतं कृत्यं हनूमता ॥**

**न चात्मा लघुतां नीतः सुग्रीवश्चापि तोषितः ।**
**अहं च रघुवंशश्च लक्ष्मणश्च महाबलः ॥**

**वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ।**

अत्र सीतादर्शनकार्ये नियुक्तेन हनूमता तत्कार्याविरोधेन लंकापुरोदहनराक्षसनिग्रहादिकमपि कृतं, परावमानेन आत्मापि लघुतां न नीतः, अहं च रघुवंशश्च रक्षित इत्युक्त्या उत्तमो दूतः उत्तमे कार्ये नियोक्तव्य इति सूचितम् । तथा **चोद्योगे विदुरः**—

त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः । नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ॥ इति । **सभापर्वणि युधिष्ठिरं प्रति नारदप्रश्नोऽपि**—

उत्तमानुत्तमेष्वेव मध्यमेषु च मध्यमान् । जघन्येषु जघन्यांस्त्व नियोजयसि कर्मसु ॥ इति । ततः,

**इदं तु मम दीनस्य मनो भूयः प्रकर्षति ।**
**यदिहास्य प्रियाख्यातुर्न कुर्मि सदृशं प्रियम् ॥**

**इत्युक्त्वा प्रीतिहृष्टांगो रामस्तं परिषस्वजे ।**
**हनूमन्तं महात्मानं कृतकार्यमुपागतम् ॥**

अनेन कृतकार्यस्य स्तुतिर्बहुमतिश्च कर्तव्येति सूचितम् । तथाच **सभापर्वणि युधिष्ठिरं प्रति नारदः**—

कच्चित्कृतं विजानीषे कर्तारं च प्रशंससि । सतां मध्ये महाराज सत्करोषि च पूजयन् ॥ इति । **राजधर्मेऽपि**—

मन्त्रिणं प्रेरयेत्कार्ये तस्मिन्नधिकसाधके । समानं च स्वय कुर्यात्प्रशंसां च विशेषतः ॥ इति । कृते कर्मणि राजेन्द्र पूजयेद्धनसंचयैः । मानेन च यथार्हेण सांत्वेन विविधेन च ॥ इति ॥

**द्वितीये ॥**

तदनु तपनतनयः वरुणालयत(रु)[र]णोपायचिंताकुलितहृदयं कौसल्यातनयमित्थमाश्वासयामास ।

**किं त्वं संतप्यसे वीर यथान्यः प्राकृतस्तथा ।**

अनेन प्राकृत एव कठिने कार्ये संतापं प्राप्नोति न धीर इति सूचितम् । तथाच— **द्रोणपर्वण्यश्वत्थामानं प्रत्यंजनपर्व वचनं**—

किमहं कातरो द्रोणे पृथग्जन इवाहवे । यन्मा भीषयसे वाग्भिरसदेतद्वचस्तव ॥ इति ।

**मैवं भूस्त्यज संतापं कृतघ्न इव सौहृदम् ।**

अनेन कृतघ्नः स्नेहं परित्यजतीति सूचितम् । **तथा च राजधर्मे**—

सत्यधर्मव्यपेतेन न संदध्यात्कथंचन । सुसंहितोऽप्यसाधुत्वमचिराद्याति विक्रियाम् ॥ इति ।

**धृतिमान् शास्त्रवित्प्राज्ञः पंडितश्चासि राघव ।**
**त्यजेमां पापिकां बुद्धिं कृतात्मेवात्मदूषणीम् ॥**

अनेन धैर्यादिकं शोकनिवर्तकमिति सूचितम् । **धैर्यविषये गीतायां—**

धीरस्तत्र न मुह्यतीति । **आपद्धर्मेऽपि—**

धृतिर्नाम सुखे दुःखे यथा नाप्नोति विक्रियाम् । ता भजेत सदा प्राज्ञो यदीच्छेद्-भूतिमात्मनः ॥ इति । **शास्त्रविषये कामंदके—**

शास्त्राय गुरुसंयोगः शास्त्रं विनयवृद्धये । विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदति ॥ इति । **स्त्रीपर्वणि धृतराष्ट्रं प्रति संजयः—**

श्रुतवानसि मेधावी सत्यवाश्चैव नित्यदा । न मुह्यंतीदृशा संतो बुद्धिमंतो भवादृशाः ॥ इति । **प्राज्ञविषये गीतायां—**

विद्वांसस्तत्र न मुह्यन्तीति । **पण्डितविषये गीतायां—**

गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ इति । **स्त्रीपर्वण्यपि—**

असंतुष्टाः प्रमुह्यन्ति संतोषं यान्ति पण्डिताः । शोकस्थानसहस्राणि भयस्थान-शतानि च ॥ दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ इति ।

**निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः ।**
**सर्वार्था व्यवसीदन्ति व्यसनं चाधिगच्छति ॥**

अनेन अनुत्साहदैन्यशोका सर्वार्थनाशका व्यसनप्रदाश्चेति सूचितम् । तत्र **अनुत्साहविषये कामंदकः—**

सत्त्वबुद्ध्युपपन्नोऽपि व्यसनग्रस्तमानसः । स्त्रीभिः षण्ड इव श्रीभिरलसः परिभूयते ॥ इति । **दैन्यविषये गीतायां—**

क्लैब्यं मास्म गमः पार्थ नैतत्त्वय्युपपद्यते । क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ इति । **शोकविषये द्रोणपर्वणि—**

शोचतो हि महाराज ह्यघमेवाभिवर्धते । तस्माच्छोकं परित्यज्य श्रेयसे प्रयतेत् बुधः ॥ इति । **स्त्रीपर्वण्यपि—**

न शोचन् शुभमाप्नोति न शोचन् विन्दते सुखम् । न शोचन् श्रियमाप्नोति न शोचन् विन्दते जयम् ॥ इति ।

**इमे शूराः समर्थाश्च सर्वे नो हरियूथपाः ।**
**त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकम् ॥**

अनेन समर्थाश्शूराः प्राणानप्यविगणय्य स्वामिकार्यं साधयन्तीति सूचितम् । तथा **च राजधर्मे—**

यस्य राज्ञः सुसंहृष्टास्त्यक्तप्राणाः सुनिश्चिताः । अपि पञ्चशत शूराः निघ्नंति परवाहिनीम् ॥ अथवा पञ्चषट्सप्तसहिताः कृतनिश्चयाः । कुलीनाः पूजिताः सम्यग्विजयन्तीह शात्रवान् ॥ इति । **कामन्दकेऽपि—**

प्रियेण दानेन च संगृहीतास्त्यक्षन्ति रक्ष्याण्यपि जीवितानि । इति ।

**येषां हर्षेण जानामि तर्कश्चास्मिन् दृढो मम ।**
**विक्रमेण समानेष्ये सीतां हत्वा यथा रिपुम् ॥**

अनेन सैनिकानां हर्षः राज्ञः कार्यसिद्धिज्ञापक इति सूचितम् । तथा च **राजधर्मे—**

उदीर्णमनसो योधा वाहनानि च भारत । यस्यां भवन्ति सेनायां ध्रुवस्तस्य फलोदयः ॥ इति ।

**तदलं विक्लबा बुद्धी राजन् सर्वविनाशिनी ।**
**पुरुषस्य हि लोकेऽस्मिन् शोकः शौर्यापकर्षणः ॥**
**शूराणां च मनुष्याणां त्वद्विधानां महात्मनाम् ।**
**विनष्टे वा प्रणष्टे वा शोकस्सर्वार्थनाशनः ॥**

अनेन शोकः सर्वार्थनाशक इत्युक्तम् ॥ तथा च **स्त्रीपर्वणि—**

अर्थान्न शोचन् प्राप्नोति न शोचन् विंदते फलम् । न शोचन् श्रियमाप्नोति न शोचन् विंदते परम् ॥ इति ।

**तदलं शोकमालम्ब्य क्रोधमालंब भूपते ।**
**निश्चेष्टाः क्षत्रिया मंदाः सर्वे चण्डस्य बिभ्यति ॥**

अनेन क्षत्रियेण शत्रुषु कोपः कर्तव्य इति सूचितम् । **तथा चोद्योगे—**

मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान् । ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम् ॥ एतावानेव पुरुषो यदमर्षी यदक्षमी । क्षमावान्निरमर्षो हि नैव स्त्री न पुनः पुमान् ॥ इति । तदिह भवानम्भोधेस्तरणाय सञ्चिन्तयतु निदानम् ।

**हतमित्येव तं मन्ये युद्धे समितिनंदन ।**
**किमुक्त्वा बहुधा चापि सर्वथा विजयी भवान् ॥**
**निमित्तानि च पश्यामि मनो मे संप्रहृष्यति ।**

अनेन मनःप्रहर्षः कार्यसिद्धिज्ञापक इत्युक्तम् । तथा च ज्योतिषिके—
निमित्तराशिरेकतो नृणां मनस्तथैकतः ॥ इति । एतच्च प्राक् प्रपञ्चितम् ॥

तृतीये ॥

ततस्तद्वचनाकर्णनसंतुष्टहृदयो रामभद्रः हनूमन्तमिदमाह—

**तपसा सेतुबंधेन सागरोच्छोषणेन वा ।**
**सर्वथा सुसमर्थोऽस्मि सागरस्यास्य लंघने ॥**
**कति दुर्गाणि दुर्गाया लंकायास्तद्ब्रवीहि मे ।**
**बलस्य परिमाणं च द्वारदुर्गक्रियामपि ॥**
**गुप्तिकर्म च लङ्कायां रक्षसां सदनानि च ।**
**सर्वमाचक्ष्व तत्वेन सर्वथा कुशलो ह्यसि ॥** इति ।

अनेन शत्रुबलं दूतमुखान्निश्चित्य कार्यमारंभणीयमिति सूचितम् ॥ तथाच कामन्दके—
सर्वसंपत्समुदयं सर्वावस्थाविचेष्टितम् । चरेण द्विषतां विद्याद्बलं देशं च सर्वतः ॥ इति ।

अतएव धृतराष्ट्र. कार्यकाले विचारितवान् इति प्रतिपादितमुद्योगे—
गावल्गणे ब्रूहि सारं च फल्गु त्वं सेनयोर्यावदिहास्ति किंचित् ।
पाण्डवानाञ्च निपुणं वेत्थ सर्वं किमेष ज्यायः किमु तेषां, कनीयः ॥
त्वमेतयोस्सर्वविचारदर्शी धर्मार्थयोर्निपुणो निश्चयज्ञः ।
स मे पृष्टस्सजय ब्रूहि सर्वं युध्यमाना· कतरे वै न संति ॥ इति ।
इति पृष्टो हनूमान् रामभद्राय दशवदननगरीवृत्तान्तमित्थमकथयत् ।

**हृष्टप्रमुदिता लङ्का मत्तद्विपसमाकुला ।**
**वाजिभिश्च सुसंपूर्णा सा पुरी दुर्गमा परै· ॥**
**दृढबद्धकवाटानि महापरिघवंति च ।**
**द्वाराणि विपुलान्यस्याश्चत्वारि सुमहांति च ॥**
**वप्रे[तत्रे]षूपलयंत्राणि बलवन्ति महांति च ।**
**आगतं प्रतिसैन्यं तैस्तत्र प्रतिनिवार्यते ॥**
**द्वारेषु संस्कृता भीमा कालायसमयाः शिताः ।**
**शतशो रचिता वीरैः शतघ्न्यो रक्षसां गणैः ॥**
**सौवर्णश्च महांस्तस्याः प्राकारो दुष्प्रधर्षणः ।**
**मणिविद्रुमवैडूर्यमुक्ताविरचितान्तरः ॥**
**सर्वतश्च महाभीमाः शीततोयवहाः शुभाः ।**

अगाधा ग्राहवत्यश्च परिघा मीनसेविताः ॥
द्वारेषु तासां चत्वारः संक्रमाः परमायताः ।
यन्त्रैरुपेता बहुभिर्महद्भिर्गृहपंक्तिभिः ॥
त्रायन्ते संक्रमास्तत्र परसैन्यागमे सति ।
यंत्रैस्तैरवकीर्यंते परिघासु समन्ततः ॥
एकस्त्वकंप्यो बलवान् सक्रमः सुमहान् दृढः ।
कांचनैर्बहुभिः स्तंभैर्वेदिकाभिश्च शोभितः ॥
लङ्कापुरी निरालंबा देवदुर्गा भयावहा ।
नादेय पार्वत वन्यं कृत्रिमं च चतुर्विधम् ॥
स्थिता पारे समुद्रस्य दूरपारस्य राघव ।
नौपथोऽपि च नास्त्यत्र निरादेशश्च सर्वतः ॥
शैलाग्रे रचिता दुर्गा सा पूर्देवपुरोपमा ।
वाजिवारणसंपूर्णा लङ्का परमदुर्जया ॥
परिघाश्च शतघ्न्यश्च यन्त्राणि विविधानि च ।
शोभयन्ति पुरीं लङ्कां रावणस्य दुरात्मनः ॥

अनेन राजा गजतुरगादिबलैः सपूर्णां प्राकारपरिघादिभिः परैर्दुर्गमां पुरीमातिष्ठेदिति सूचितम् । तथा **राजधर्मे**—

यत्पुरं दुर्गसंपन्न धान्यायुधसमन्वितम् । दृढप्राकारपरिघ हस्त्यश्वरथसंकुलम् ॥ विद्वांसः शिल्पिनो यत्र निचयाश्च सुसंचिताः । धार्मिकश्च जनो यत्र दाक्ष्यमुत्तममास्थितः ॥ ऊर्जस्वि नरनागाश्च चत्वरापणशोभितम् । प्रसिद्धव्यवहारं च प्रशान्तमकुतोभयम् ॥ प्रसभ सानुनादं च सुप्रशस्तनिवेशनम् । शूरान्यजनसंपन्नं ब्रह्मघोषानुनादितम् ॥ समाजोत्सव-संपन्नं सदा पूजितदैवतम् । वश्यामात्यबलो राजा तत्पुरं स्वयमाविशेत् ॥ इति । तथा

द्वारेषु च पुरस्यैवं यन्त्राणि स्थापयेत्सदा । आरोपयेच्छतघ्नीश्च स्वाधीनाश्चैवकारयेत् ॥ कुलिङ्गद्वारकाणि स्युरुच्छ्वासार्थे पुरस्य च । तेषा च द्वारकागुप्तिः कार्या सर्वात्मना भवेत् ॥ इति । **कामन्दकेऽपि**—

पृथुसीम महाखातमुच्चप्राकारगोपुरम् । समाविशेच्छैलसरिन्मरुस्थलवनाश्रयम् ॥ जलवद्धान्यधनवद्दुर्गं कालसहं महत् । दुर्गहीनो नरपतिर्वाताभ्रावयवैस्समः ॥ औदकं पार्वतं वार्क्षमैरिण धन्वन तथा । प्रशस्तं शस्तमतिभिः दुर्गं दुर्गोपचिन्तकैः ॥ जलान्नायुध-यन्त्राढ्यं वीरयोधैरधिष्ठितम् । गुप्तिप्रधानमाचार्या दुर्गं समनुमेनिरे ॥ सारासाराणि दुर्गाणि भुवः सानूपजांगलाः । निवासाय प्रशस्यन्ते भूभुजां भूतिमिच्छताम् ॥ इति ।

स्वयं प्रकृतिमापन्नो युयुत्सू राम रावणः ।
उत्थितश्चाप्रमत्तश्च बलानामनुदर्शने ॥

अनेन राजा कोशबलादिकं स्वयमेव विचारयेदिति सूचितम् ॥ तथा **चोद्योगे विदुरः**—

अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षिणः । आत्मप्रत्ययकोशस्य स्वाधीनेयं वसुन्धरा ॥ इति ।

अयुतं रक्षसामत्र पूर्वद्वारं समाश्रितम् ।
चर्मखड्गधरास्सर्वे तथा सर्वास्त्रकोविदाः ॥
शूलहस्ता दुराधर्षाः सर्वे खड्गाग्रयोधिनः ।
नियुतं रक्षसामत्र दक्षिणद्वारमाश्रितम् ॥
चतुरङ्गेण सैन्येन योधास्तत्राप्यनुत्तमाः ।
प्रयुतं रक्षसामत्र पश्चिमद्वारमाश्रितम् ॥
रथिनश्चाश्ववाहाश्च कुलपुत्राः सुपूजिताः ।
शतशोऽथ सहस्राणि मध्यमं गुल्ममाश्रिताः ॥
यातुधाना दुराधर्षा साग्रकोटिश्च रक्षसाम् ।

अनेन राज्ञा पुरगुप्त्यर्थं द्वारादिषु बल स्थापनीयमिति सूचितम् ॥ तथाच **राजधर्मे**—

न्यसेत गुल्मान् दुर्गेषु संधौ च कुरुनन्दन । नगरोपवने चैव पुरोद्याने तथैव च ॥ संस्थानेषु च सर्वत्र द्वारेषु नगरस्य च । मध्ये च नरशार्दूल तथा राजनिवेशने ॥ इति ।

इत्थं बहुविधरक्षोगणरक्षितापि राक्षसनगरी मयैकेन रक्षोगणचैत्यप्राकारप्रमदावनभञ्जनेन विनाशिता । किमुत महाप्रभावैर्जाबवत्प्रमुखैस्तद्विजये विचारः । तदिदानीमाज्ञापय क्षिप्रं सेनाप्रस्थानमिति ॥

चतुर्थे ॥

श्रुत्वा हनुमतो वाक्यं यथावदनुपूर्वशः ।
ततोऽब्रवीन्महातेजा रामः सत्यपराक्रमः ॥
अस्मिन् मुहूर्ते सुग्रीव प्रयाणमभिरोचये ।
युक्तो मुहूर्तो विजयः प्राप्ते मध्यं दिवाकरे ॥

अत्र मध्याह्ने अभिजिन्मुहूर्ते प्रयाणं प्रशस्तमित्युक्तम् ॥ तथा च **ज्यौतिषरत्नमालायाम्**—

अष्टमो ह्यभिजिदाह्वयः क्षणो दक्षिणाभिमुखयानमन्तरा ।
कीर्तितोऽपरककुप्सु सूरिभिर्यायिनामभिमतार्थसिद्धिदः ॥ इति ।
उत्पातविष्टिव्यतिपातपूर्वान्निहन्ति दोषानभिजिन्मुहूर्तः ।
करोति यामीमपहाय काष्ठां दिगन्तराणि व्रजतोऽर्थसिद्धिम् ॥ इति च ।

अत्र यद्यपि दक्षिणदिग्याने उदाहृतवचनाभ्या अभिजिन्मुहूर्तस्य निंदा श्रूयते । तथापि किष्किन्धातः प्रस्थितस्य रामस्य लंकाऽऽग्नेयदिगवस्थितेति न दोषः ।

**सीता श्रुत्वाभिधानं मे आशामेष्यति जीविते ।**
**जीवितांतेऽमृतं स्पृष्ट्वा पीत्वा विषमिवातुरः ॥**

अनेन अमृतसेचनं मृतस्यापि सञ्जीवनकरमिति सूचितम् ॥ तथा **चापद्धर्मे कृतघ्नोपाख्याने—**

तदग्र तस्य वचनान्निहतो गौतमेन वै । तेनैवामृतसिक्तश्च पुन. सञ्जीवितो बक ॥ इति । सिक्त्वामृतेन तं विप्रं गौतमं जीवयत्तदा ॥ इति च ।

**उत्तराफल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते ।**
**अभिप्रयाम सुग्रीव सर्वानीकसमावृताः ॥**

अत्र मुहूर्ते नक्षत्रादिविचारपूर्वकमेव प्रस्थानकरणादितैररपि मुहूर्तादिकं विचार्यैव गन्तव्यमिति सूचितम् । अत एव विचारेण प्रस्थितस्य फलावाप्तिर्घुणाक्षरतुल्येत्युक्तम् । **ज्योतिर्निबन्धे—**

यात्राविधानं कथयाम्यथातः सर्वैरुपेतस्य गुणैर्जिगीषोः ।
अतर्किते जन्मनि तस्ययाने फलाप्तिरुक्ता घुणवर्णतुल्या ॥ इति ।

यात्रायां प्रशस्तनक्षत्राणि— हस्तेन्दुमैत्रश्रवणाश्वितिष्यपौष्णश्रविष्ठाश्च पुनर्वसू च । प्रोक्तानि धिष्ण्यानि नव प्रयाणे त्यक्त्वा त्रिपञ्चादिमसप्ततारा: ॥ मध्यमानि वर्ज्याणि च नक्षत्राणि । चित्राविशाखानलयाम्यसार्पवायव्यपित्र्येश्वरदैवतानि । यात्रास्वनिष्टान्यपराणि भानि प्रोक्तानि नेष्टानि न निन्दितानि ॥

ननु रामः प्रयाणस्य उदाहृतवचनेन हस्तनक्षत्रे श्वो भाविनि प्रशस्ते सति मध्यमे उत्तरफल्गुनी नक्षत्रे कथं प्रयाणं कृतवानिति चेदुच्यते । हस्तनक्षत्रस्य प्रयाणे प्रशस्तत्वेऽपि पुनर्वसुनक्षत्रोत्पन्नस्य रामस्य सप्तमत्वेन नैधनतारत्वात् तत्परित्यागेन प्रयाणे मध्यममपि उत्तरफल्गुनीनक्षत्र साधनतारत्वात् तत्र प्रयाणमुचितमेव सप्तमनक्षत्रस्य तत्रैव निषिद्धत्वात् त्यक्त्वा त्रिपञ्चादिमसप्ततारा इति । अथ शूलनक्षत्राणि । शतमखेन्दुहुताशनरक्षसां यमजलेशसमीरणशूलिनाम् । दिवि भुवि क्रमशः परिवर्तते सिततिथिप्रथमादिषु योगिनी ॥

अथ शूल नक्षत्राणि । शतमखेन्दु हुताशनरक्षसां यमजलेशसमीरणशूलिनाम् । दिवि भुवि क्रमशः परिवर्तते सिततिथिप्रथमादिषु योगिनी ॥

प्रकारान्तरेणापि योगिनी अमावास्यया सह षोडशदिनात्मकं पक्षं द्वेधा विभज्य प्रथमाप्रभृति नवमीप्रभृति च तिथिद्वयस्यैकैकस्यां दिशि योगिनी द्रष्टव्या । प्रथमानवम्योः पूर्वस्यां, द्वितीया दशम्योः उत्तरस्यां तृतीयैकादश्योराग्नेय्यां, चतुर्थीद्वादश्योर्दक्षिणस्यां, पञ्चमीत्रयोदश्योर्नैर्ऋत्यां, षष्ठीचतुर्दश्योः पश्चिमायां, सप्तमी पौर्णमास्योर्वायव्यां, अष्टम्यमावस्यो ऐशान्यामिति तत्संमुखतया यात्रा वर्जनीया ।

योगिन्यभिमुखे मृत्युः सा वामे कलहप्रदा । दक्षिणे बहुलाभः स्यात् पृष्ठे सर्वशुभावहः ॥ इति ॥

वारशूलोऽपि, सोमे शनौ न यायात्पूर्वा काष्ठा न वाक्पतौ याम्याम् । कविरव्योरपरान्ता नोदीचीं भौमसौम्ययोः ॥

नक्षत्रयोगिन्यपि : नैद्री मैंद्रे यमदिशमियान्नाजपादे प्रतीचीं नो रोहिण्यां न धनददिश फल्गुनीषूत्तरासु । शूलानीति स्फुटमभिहितान्येषु ये याति तेषां प्रत्यावृत्तिर्गगनकुसुमोद्भेदकालो यदि स्यात् ॥

पृष्ठे दक्षे योगिनी राहुयुक्ता यस्मै(को) [मो]ऽयं शत्रुलक्षं निहन्ति । योगिन्यभिमुख गच्छन् यात्रायां मरणं ध्रुवम् । इति । **चन्द्रप्राबल्य प्रशंसा च रत्नमालायाम्—**

आधार इन्दोर्बलमुक्तमादौ आधेयमन्यद्ग्रहजं च वीर्यम् । आधारशक्तौ परिनिष्ठितायां आधेयवस्तूनिच वीर्यवंती[ति] ॥

प्रयाणे इन्दोर्बलं सर्वापेक्षया प्रधानं तदानुकूल्येन सर्वं सम्यगेव भवतीति । पुनर्वस्वोरुत्पन्नस्य रामस्य उत्तरफल्गुनी नक्षत्रमतश्चन्द्रस्तृतीयचन्द्रत्वाच्छुभप्रद एव । तृतीयचन्द्रस्य शुभप्रदत्व च **रत्नमालायाम्—**

जन्मन्यन्नं दिशति हिमगुर्वित्तनाश द्वितीये दद्याद्द्रव्यं सहजभवने कुक्षिरोगं चतुर्थे । कार्यभ्रंशं तनयगृहगो वित्तलाभं च षष्ठे द्यूने द्रव्यं युवतिसहितं मृत्युसंस्थश्च मृत्युम् ॥ नृपभयं कुरुते नवमे शशी दशमधामगतस्तु महत्सुखम् । विवि[ध]मायगतः कुरुते धनं व्ययगतस्तु रुजं सधनक्षयम् ॥

लग्नबलं **रत्नमालायां—** करोति राशिर्गमने फलं च चरो विलग्ने शुभदृष्टियुक्ते । इति जन्मराशिरुत जन्मविलग्नं तत्पती उदयगौ यदि वा स्तः । स्याय कर्म रिपुभान्युत ताभ्यां शत्रुसंक्षयमेव हि तदानीम् ॥ य स्वजन्मनि शुभग्रहाश्रितो यश्च राशिरिह वेसि सज्ञक. । यस्स्वशत्रुभवनाच्च नैधने लग्नत स गमने शुभावहः ॥ **योगाधियोग फलं तत्रैव—**

एकेनापि ज्ञास्फुजिद्गुरुक्पतीनां योगः प्रोक्तः केंद्रधर्मात्मजेषु । द्वाभ्यामेतैश्चाधियोगाभिधानो नूनं सर्वैरेव योगाधियोगः ॥

योगेन ये नृपतयोऽरिपुरं व्रजन्ति क्षेमेण ते गमनमागमनं च कुर्युः । क्षेमं यशो रिपुविनाशमथाधियोगे योगाधियोगगमनेन जयेद्धरित्रीम् ॥ इति ।

**निमित्तानि च धन्यानि यानि प्रादुर्भवन्ति च ।**
**निहत्य रावणं सीतामानयिष्यामि जानकीम् ॥**

अनेन शुभानि निमित्तानि विजयसूचकानीत्युक्तम्— तानि च प्राक्प्रपंचितानि ।

**उपरिष्टाद्धि नय[नं] स्फुरमाणमिदं मम ।**
**विजयं समनुप्राप्तं शसन्तीव मनोरथम् ॥**

अनेन नयनोपरिभागस्फुरणं विजयसूचकमित्युक्तम् । तथा च **शकुनरत्नमालायां**—

नेत्रस्याध स्फुरणमसकृत्संगरे भीतिहेतुर्नेत्रोपाते हरति च धन नेत्रमूले च मृत्युः । नेत्रभ्योर्ध्वं हरति सकलं मानसं दुःखजात वामे चैतत्फलमविकलं दक्षिणे वैपरीत्यम् ॥ इति—

**अग्रे यातु बलस्यास्य नीलो मार्गमवेक्षितुम् ।**
**वृतश्शतसहस्रेण वानराणां तरस्विनाम् ॥**

अनेन सेनापति र्युवराजो वा कतिपयसेनासहितः सेनामुखे योजनीय इति सूचितम् । तथाच **कामन्दके**—

सेनापतिं चाप्यथवा कुमारं बलैकदेशेन पुरो निदध्यात् । इति फलमूलवता नील शीत काननवारिणा । यथा मधुमता चाशु सेना सेनापते नय ॥

अनेन समृद्धभोज्यपानादियुक्तमार्गेण सेना नेतव्येति सूचितम् । तथा च **राजधर्मे**—

जलवास्तृणवान्मार्गः समो गम्यः प्रशस्यते । इति । **कामन्दकेपि**—

तस्माद्यतो भूरिजलस्तु पंथा घनोदपान्नोपचितो विशोकः । तेनाभियायाज्जनयन् प्रतापं शनैश्शनैरश्रमयन् बलानि ॥ न चातितोयं न च तोयहीनं युक्तं च सम्यग्यवसैधवेन्न । उत्पाद्य मार्ग हुतयज्ञयुक्तः सुखप्रयाणो रिपुमभ्युपेयात् ॥ इति ।

**दूषयेयुर्दुरात्मानः पथि मूलफलोदकम् ।**
**राक्षसाः परिरक्षेथास्तेभ्यस्त्व नित्यमुद्यतः ॥**

अनेन स्थायिना यायिनो मार्गे विध्यमान फलमूलान्नपानादिदूषणेन मार्गो दूषणीय इति सूचितम्— तथाच **राजधर्मे**-

(घोषान्) [योधान्] न्यसेत मार्गेषु मार्गानुत्थापयेदपि । प्रवेशयेच्च तान् सर्वान् शाखा नगरकेष्वपि ॥ ये दुर्गाश्चैव गुप्ताश्च देशास्तेषु प्रवेशयेत् । धनिनो बलमुख्यांश्च सा-

स्रवयित्वा पुनः पुनः ॥ सर्वोपहारं कुर्वीत स्वयमेव नराधिपः। असंभवे प्रवेशस्य दाहयेदग्निना भृशम् ॥ क्षेत्रस्थेषु च सस्येषु शत्रोरुपज(ग्ये)[पे]त्नरान्। विनाशयेद्वा तत्सर्वं बलेनाथ स्वकेन वै ॥ नदीमार्गेषु च तथा सङ्क्रमानवमादयेत्। जलं निस्रावयेत्सर्वमनिस्राव्यं च दूषयेत् ॥ तदात्वेनायतीभिश्च चैत्यवृक्षान्विवर्जयेत्। प्रवृद्धानां द्रुमाणां च शाखाः प्रच्छेदयेत्तथा ॥ चैत्यानां सर्वथा वर्ज्यमपि पत्रस्य पातनम्। देवानामाश्रयाश्चैत्या यक्षराक्षसभोगिनाम् ॥ पिशाचपन्नगाना च गन्धर्वाप्सरसामपि। रौद्राणां चैव भूतानां तस्मात्तान्परिवर्जयेत् ॥ श्रूयते हि निकुंभेन सौदासस्य बलं हतम्। महेश्वरगणेशेन वाराणस्यां नराधिप ॥ इति।

**निम्नेषु वनदुर्गेषु वनेषु च वनौकसः।**
**अभिप्लुत्याभिपश्येयुः परेषां निहितं बलम् ॥**

अनेन यायिना स्थायिदूषितं मार्गं सशोध्यैव गंतव्यमिति सूचितम्। तथाच **कामन्दके**—

विशुद्धपृष्ठः पुरतो विचिन्वन् भयप्रदेशान् परकर्मवेदी। सुशोधितासारविशुद्धमार्गो विशेद्धरित्रीं द्विषतोऽप्रमत्तः ॥ समे प्रदेशे विषमे च भूमौ मिश्रस्थले वा सुमुखेन यायात्। अनातुरस्सन्नभयो हि विद्वान् संनद्धगुल्मो विहितान्नपेयः ॥ सम्यक् सुसस्यं विषयं परस्य यायात् प्रमृद्नन्विजयाय राजा। सस्योपघातेन परस्य वृत्तिच्छेदं स्वसैन्योपचयश्च साधुः ॥ इति।

**यच्च फल्गुबलं किंचिदत्रैवोपयुज्यताम्।**
**एतद्धि कृत्यं घोरं नो विक्रमेण प्रयुज्यताम् ॥**

अनेन अभियाने तुच्छं बलं क्वचिन्निक्षिप्य सारवद्बलेन गन्तव्यमिति सूचितम्। तथा च **राजधर्मे**—

दुर्बलाः क्षतसाराश्च तिष्ठंतु शिबिरेषु ते। इति।

**सागरौघनिभं भीममग्रानीकं महाबलाः।**
**कपिसिंहाः प्रकर्षंतु शतशोऽथ सहस्रशः ॥**
**गवश्च गजसंकाशो गवयश्च महाबलः।**
**गवाक्षश्चाग्रतो यातु गवां दृप्त इवर्षभाः ॥**
**यातु वानरवाहिन्याः वानरः प्लवतां वरः।**
**पालयन् दक्षिणं पार्श्वमृषभो वानरर्षभ ॥**
**गन्धहस्तीव दुर्धर्षं स्तरस्वी गन्धमादनः।**
**यातु वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः ॥**
**यास्यामि बलमध्येऽहं बलौघमभिहर्षयन्।**

**अधिरुह्य हनूमन्तं ऐरावतमिवेश्वरः ॥**
**अङ्गदेनैष संयातु लक्ष्मणश्चान्तकोपमः ।**
**जांबवांश्च सुषेणश्च वेगदर्शी च वानरः ॥**
**ऋक्षराजो महासत्त्वः पृष्ठं रक्षन्तु ते त्रयः ।**

अनेन मध्यमगुल्मे स्थितो राजा परितो बलाध्यक्षान् स्थापयित्वा व्यूह्य गच्छेत्– इति सूचितम् । तथाच मनुः—

दण्डव्यूहेन तं मार्गं यायात्तु शकटेन वा । वराह मकराभ्यां वा सूच्यावा गरुडेन वा ॥ यतो भवेद्भयाशङ्का ततो विस्तारयेद्बलम् । पद्मेन चैव व्यूहेन निविशेत तदा स्वयम् ॥ सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत् । यतो भवेद्भयाशङ्का प्राचीनां कल्पयेद्भृशम् । गुल्माश्च स्थापयेदासक्रुतसंज्ञान् समंततः ॥ स्थाने युद्धेच कुशलानभीरूनविकारिणः । संहतान् योधयेत्कल्पान्कामान् विस्तारयेद्बहून् ॥ इति ।

ततो यथानिदेशं प्रस्थितेषु स्वस्व सेनापरिवृतेषु वानरयूथपेषु,

**दरीमुखः प्रजङ्गश्च दम्भोऽथ रभसः कपिः ।**
**सर्वतश्च ययुर्वीरा स्त्वरयन्तः प्लवङ्गमान् ॥**
**रामस्य शासनं ज्ञात्वा भीमकोपस्य भीतवत् ।**
**वर्जयन्नगराभ्याशांस्तथा जनपदानपि ॥**
**सागरौघनिभं भीमं तद्वानरबलं महत् ।**
**निस्ससर्प महाघोषं भीमवेग इवार्णवः ॥**

अनेन स्वकीय सेना नयन समये अवस्थापन समये च देशोपद्रवो यथा न भवति तथा कर्तव्यमिति सूचितम् । तथाच भारते—

परिहृत्य श्मशानानि देवतायतनानि च । आश्रमांश्च महर्षीणां तीर्थान्यायतनानि च ॥ निवेशं कारयामास कुन्तीपुत्रो युधिष्ठिरः ॥ इति ।

ततो रामशासनात् जनपद नगराभ्याशं वर्जयन्त्यां वाहिन्यां दक्षिणां दिशमभिगामिन्यां तन्मध्यतः प्रतपंतमिव विवस्वन्तं राममालोक्य लक्ष्मण एवमुवाच ।

**महांति च निमित्तानि दिवि भूमौ च राघव ।**
**शुभानि तव पश्यामि सर्वाण्येवार्थसिद्धये ॥**
**अनुवाति शुभो वायुः सेनामृदुहितः सुखः ।**
**पूर्णवल्गु स्वराश्चेमे प्रवदन्ति मृगद्विजाः ॥**
**प्रसन्नाश्च दिशस्सर्वा विमलश्च दिवाकरः ॥**

अनेन अनुकूलवात दिक्प्रसाद दिवाकर वैमल्यादिकं विजयज्ञापकमिति सूचितम्—तथा च **होरामकरन्दे**—

मृदुर्नभस्वान् विरजस्कमम्बरं बलाहका स्निग्धरुचो दिवौकसः। स्वस्था मुहूर्ता यदि सुप्रशस्ताः पापं तदायाति विनाशमाशु॥ इति। तथा **समरसारेऽपि**—

वायुः पृष्ठे दक्षिणे च वहन् सूचयते बलम्। संमुखीनश्च वामश्च भटानां भङ्गदायकः॥ इति। **राजधर्मेऽपि**—

अन्वेतान् वायवो यांति तथैवेन्द्रधनूंषि च। अनुधावन्ति मेघाश्च तथादित्यस्य रश्मयः॥ गोमायवश्चानुकूला बला गृध्राश्च सर्वशः। अन्वगेयुर्यदा सेना तदा सिद्धिरनुत्तमा॥ मङ्गल्यशब्दान् शकुना वदन्ति हंसाः क्रौञ्चाः शतपत्राश्च भासा इति। **तोडरानन्दे**—

अमल विपुल वक्त्रमण्डल. स्फुट विपुलामल दीर्घदीधितिः।

अविकृततनुवर्ण चिह्नभृत् जगति करोति शुभं दिवाकरः॥ इति।

**उशना च प्रसन्नार्चिरनु त्वां भार्गवो गतः।**

अनेन शुक्रं पुरतः कृत्वा न क्वचिदपि प्रयाणं कर्तव्यमिति सूचितम्॥ तथा च **रत्नमालायां**—

स्वल्पोऽपि नार्थः प्रतिशुक्रयाने यियासतां सिद्धिमुपैति नन्दन।

कामं व्रजेद्वा प्रतिशुक्रमस्तंगते तु यायान्नजिगीषुरत्र॥

नीचगे ग्रहजिते प्रतिलोमे भार्गवे कलुषितेऽस्तंगते वा।

प्रस्थितो नरपतिः प्रबलोऽपि क्षिप्रमेव वशमेति रिपूणाम्॥

उदयति दिशि यस्यां याति यत्र भ्रमाद्वा विचरति च भचक्रे येषु दिग्द्वारभेषु।

त्रिविधमिह सितस्य प्रोच्यते सन्मुखत्वं मुनिभिरुदय एव त्यज्यते तेषु यत्नात्॥

एवं विधे स्यात् स्फुजिति प्रयायाद् बुधो यदि स्यादनुकूलवर्ती।

प्रतीन्दुजं भूमिपतेर्गतस्य नान्ये ग्रहास्त्राणविधौ समर्थाः॥

प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च। अपि शक्रसमो राजा गत्वा तु न निवर्तते॥ इति। **मुहूर्तमार्तण्डे**—

प्रतिशुक्रापवादः। स्वग्रामैकपुरात्मसद्मसु चतुर्वक्त्रे चतुश्शानकेतूद्वाहेषु वधूप्रवेश नृपभीदुर्भिक्ष पीडासु च। तीर्थस्वामिनिदेशयोर्भृगुवसिष्ठात्र्यङ्गिरः कश्यपे भारद्वाजजवात्स्ययोर्हितकरं यानं सितज्ञोन्मुखम्॥ **लल्लोऽपि**—

स्वभुव पुर प्रवेशे देशानां विप्लवे तथोद्वाहे इति।

**ब्रह्मराशिर्विशुद्धश्च शुद्धाश्च परमर्षयः ।**
**अर्चिष्मन्तः प्रकाशन्ते ध्रुवं सर्वे प्रदक्षिणम् ॥**

अनेन अगस्त्यस्य सप्तर्षीणां च प्रसादः शुभफलप्रदः अप्रसादः क्लेशप्रद इति । सूचितम्—

तत्रागस्त्य विषये— अगस्त्य स्त्वरुणो रूक्षः शावो रेणुकया हतः । एवं विधे ध्रुवे- चैव त्रैलोक्यमपि पीड्यते ॥ शुभलक्षणम् ।

शातकुम्भसदृशःस्फटिकाभः तर्पयन्निव महीं किरणाग्रैः ।

दृश्यते यदि ततः प्रचुरान्ना भूर्भवेत् सुजन सत्त्वजनाढ्या ॥ इति— ऋषि विषये

उल्कयाभिहता रूक्षस्फुरणा रजसा हताः । ऋषयः सर्वलोकानां विनाशाय च भूभृताम् ॥ वराहसंहितायाम्—

उल्काशनिधूमाद्यैर्हता विवर्णा विरश्मयो ह्रस्वाः । हन्युः स्व स्व वर्गं विपुलाः स्निग्धा- श्चतद्वृध्यै ॥ उल्कया केतुना वापि धूमेन रजसाऽपिवा । हता विवर्णा स्वल्पा वा किरणैः परिवर्जिताः ॥ स्वं स्वं वर्गं हन्युः मुनयः सर्व एवैते विपुलाः स्निग्ध वर्णाश्च स्ववर्ग परितोषकाः ॥ इति । स्ववर्गाश्च वराहसंहितायाम्—

गन्धर्व देवदानव मन्त्रौषध पक्षिसिद्धनागानाम् । पीडाकरो मरीचिः ज्ञेयो विद्याधराणां च ॥ इति । विष्णुधर्मोत्तरेऽपि—

उल्कयाऽभिहता रूक्षस्फुरणा रजसा हताः । ऋषयस्सर्वलोकानां विनाशाय च भूभृताम् ॥ इति ।

बिंबप्रकाशे शुभफलं तत्रैव— बिंबान्यमीषां स्निग्धानि शुभानि विमलानि च । अर्चि- ष्मंति प्रसन्नानि तानि कुर्युः प्रजाहितम् ॥ इति ।

दृढव्रतस्त्रिशंकुश्च आज्यो वैश्वानरो मृगः । अरुहश्चैकदन्तश्च याम्यायां स्थावरा मताः ॥ उत्तरस्यामपि स्थावराः— गौतमोऽत्रिर्वसिष्ठश्च विश्वामित्रश्च कश्यपः । ऋषिपुत्र- क्रमाज्ज्ञेयो भरद्वाजश्च वीर्यवान् ॥ इति ।

**विमले च प्रकाशे ते विशाखे निरुपद्रवे ।**
**नक्षत्र परमस्माकमिक्ष्वाकूणां महात्मनाम् ॥**

अनेन इक्ष्वाकुवंशस्य सूर्यवंशत्वात् सूर्यजन्म नक्षत्रमेव तत्कुलीनाना जन्मनक्षत्रम् । अतस्तत्प्रसादः तत्कुलीनानां अस्माक शुभसूचक इत्युक्त्या यन्नक्षत्रं निर्दुष्टं प्रसन्नं तस्य पुरुषस्यार्थ सिद्धिर्भवतीति सूचितम्— सूर्यादि ग्रहाणा जन्मनक्षत्राणि मुहूर्तमार्तण्डे—

द्विविशाखाग्न्यब्जजभाग्यभानि गुरुभं पौष्णातर्के सार्पभं जन्मऋक्षाणि रवे – इति ।

जन्मर्क्षमिदं येषां प्रसन्नभं शुभं तेषां पीडितमेषां पीडेति च । **तोडरानन्दे**—

एतदपवादोऽपि— स्निग्धरश्मिर्विशालश्च प्रकृतिस्थश्च यो ग्रहः । ग्रहयुद्धरजो धूमनिर्घातोल्काभिराहतः ॥ स्वमन्यथा हंति नित्यं जननाशं करोति च । नृपाणां भयद प्रोक्तः सुवृष्टिभयकारकः ॥ इति ।

**नैर्ऋतं नैर्ऋतानां च नक्षत्रमभिपीड्यते ।**
**मूलं मूलवता स्पृष्टं धूप्यते धूमकेतुना ॥**
**सर्वं चैतद्विनाशाय राक्षसानामुपस्थितम् ।**
**काले काले गृहीतानां नक्षत्रं ग्रहपीडितम् ॥**

अत्र नैर्ऋताना कुलनक्षत्र मूलं मूलवता पुच्छवता धूमकेतुना धूप्यते सञ्जात तापं क्रियते । अतो राक्षसाना हानिकाल इत्युक्त्या यदीयजन्मनक्षत्रस्य ग्रहपीडा तस्याऽचिराद्विनाशो भवतीति सूचितम् । मूल नक्षत्र राक्षसानामित्येतत्तु **निघण्टौ**—

मूलं निशाचरं प्रोक्तमासुर नैर्ऋतं तथा ॥ इति । नक्षत्रस्य ग्रहपीडायां दोषः **तोडरानन्दे**—

ग्रन्नक्षत्रं धूमकेतुराक्रमेत बलाद्यदा । तदा विपत्तिं जानीयात्तन्नक्षत्रोद्भवस्य तु ॥
येषां नक्षत्रविषये रूक्ष· सज्वालरोहितः । दृश्यते बहुमूर्तिश्च तेषां विद्यान्महद्भयम् ॥
अवर्षं शस्त्रकोप च व्याधिर्दुर्भिक्षमेव च । कुर्यान्नृपति पीडां च स्वचक्रपरचक्रतः ॥
यत्र तिष्ठति नक्षत्रे प्रवासं यत्रगच्छति । भूमयेद्वास्पृशेद्वापि हन्याद्देशांस्तथाश्रयान् ॥ इति ।

तत्रैव धूमकेतुलक्षणं— एकोत्तरशतंत्वेके सहस्रमपरे विदुः । एकस्तु बहुधा भाति प्राह वै नारदो मुनिः ॥ अहुताशेऽनलरूपं यस्मिन् तत्केतुरूपमेवोक्त खद्योत पिशाचालय—मणिरत्नादीन् परित्यज्य । धूमध्वजो धूमशिखो धूमार्चिर्धूमकेतुता एवं तावद्धूमकेतोर्लक्षणं समुदाहृतम् ॥ नक्षत्रग्रहपीडायां दोषः । **अयोध्याकाण्डेऽपि**—

अवष्टब्धं च मे राम नक्षत्रं दारुणैर्ग्रहैः । आवेदयंति दैवज्ञाः सूर्यागारकराहुभिः ॥ प्रायेण हि निमित्तानां ईदृशाना समुद्भवे । राजा वा मृत्युमाप्नोति घोरा वा पदमृच्छति ॥ इति ।

**प्रसन्नास्सुरसाश्चापो वनानि फलवन्ति च ।**
**प्रवांत्यभ्यधिकं गन्धान्यथर्तुकुसुमा द्रुमाः ॥**

अनेन यस्य सेनायां महाभूतानुकूल्यं तस्य ज ो भवतीति सूचितम् । तथाच **भीष्मः**-

प्रसन्नभाः पावक ऊर्ध्वरश्मिः प्रदक्षिणा ऊर्ध्वशिखाविधूमाः ।
पुण्या गन्धाश्चाहुतीना प्रवान्ति जयस्यैतद्भाविनो रूपमाहुः ॥

शब्दरूपरसस्पर्शं गन्धाश्चाविकृताश्शुभाः । सदा हर्षश्च योधानां जयतामिह लक्षणम् ॥ शब्दास्पर्शा तथा गन्धा विचरन्ति मनःप्रियाः । धैर्यं च विंशतेयोधान् विजयस्य मुखं हि तत् ॥ इति ।

व्यूढानि कपिसैन्यानि प्रकाशन्तेऽधिकं प्रभो ।
देवानामिव सैन्यानि संग्रामे तारकामये ॥

अनेन सैन्यकान्तिर्विजयप्रदेति सूचितम् । तथा च **राजधर्मे**—

शस्त्रैः पत्रैः कवचैः केतुभिश्च स्वभानुभिर्मुखवर्णैश्च यूनाम् । भ्राजिष्मती दुष्प्रतिवीक्षणीया येषां चमूस्तेऽभिभवन्ति शत्रून् ॥ इति ।

एवमार्य समीक्ष्यैतान् प्रीतो भवितुमर्हसि ॥
अथावृत्य महीं सर्वां जगाम महती चमूः ।
हृष्टाः प्रमुदितास्सर्वे सुग्रीवेणाभिपालिताः ॥
आप्लवंतः प्लवन्तश्च गर्जतश्च प्लवङ्गमा ।
क्ष्वेलंतोऽपि नदन्तस्ते जग्मुर्वै दक्षिणां दिशम् ॥
ते हृष्टमनसः सर्वे जग्मुर्मारुतरंहसः ।
हर्षं वीर्यं बलोद्रेकान् दर्शयन्तः परस्परम् ॥
महानादान् विमुंचन्ति क्ष्वेलामन्ये प्रचक्रिरे ।
सास्मयाति दिवारात्रं महती हरिवाहिनी ॥
हृष्टा प्रमुदिता सेना सुग्रीवेणाभिरक्षिता ।

अत्र सेनाहर्षादिक आगामिजयज्ञापकमिति सूचितम् ॥ तथाच **राजधर्मे**—

उदीर्णमनसो योधा वाहनानिच भारत । यस्या भवन्ति सेनायां तस्यां च न पराजयः ॥

हृष्टा योधा प्रस्थिताः खड्गवन्तो जयस्यैतद्भाविनो रूपमाहुः ।

परस्परं सौहृदमास्थिताश्च शुश्रूषवश्चाऽनभिमानिनश्च ॥

येषां योधाः सुहृदमन्वतिष्ठन् जयस्यैतद्भाविनो रूपमाहुः । अल्पायां वा महत्यां वा सेनायामिति निश्चयः । हर्षो योधगणस्यैको जयलक्षणमुच्यते ॥ इति —

तथाच पुरतः पार्श्वतश्च शनैस्संतरन्त्या गिरिवर वनावगाहिन्या कपियूथपवाहिन्या सहितो रामचन्द्रो विन्ध्यमन्दरादि भूधरानाक्रम्य मृगविहगानोकहसमूह भूषितौ सह्यमलयावतीत्य महेन्द्रमासाद्य तत्प्रान्त निर्मल सलिलाशय कल्लोल परंपरा प्रधौतोपलतलामुदधिवेला संप्राप्य सुग्रीवमेवमुवाच—

एते वयमनुप्राप्तास्सुग्रीव वरुणालयम् ।
अतः परमतीरोऽयं सागरः सरितां पतिः ॥

न चायमनुपायेन शक्यस्तरितुमर्णवः ।
तदिहैव निवेशोऽस्तु मन्त्रः प्रस्तूयतामिति ॥

अनेन दुष्करमपि कर्म उपायेन साधयितुं शक्यमिति सूचितम् । **तथाच कामन्दके-**
उपायेन पदं मूर्ध्नि न्यस्यते मत्तहस्तिनः । न किंचित्क्वचिदस्तीह वस्त्वसाध्यं विपश्चितः ॥
अयो भेद्यमुपायेन द्रवतामुपनीयते । लोकप्रसिद्धमेवैतद्वारि वह्नेर्विनाशकम् ॥
उपायेन गृहीतेन तेनैव परितोष्यते । इति ।

एवमुदीर्य महावीर्यधैर्यशाली रामः सागरमवलोक्य तद्वेलाया वानरयूथपानपि

स्वां स्वां सेनां समुत्सृज्य मा च कश्चित्कुतो व्रजेत् ।
गच्छन्तु वानरा शूरा ज्ञेयं छन्नं बलं च नः ॥

इत्याज्ञापयामास । अनेन रिपुप्रयुक्तभयसंभावनायां सेनानाथकेन स्वसैन्यं विहायान्यत्र न गन्तव्यमिति सूचितम् । तथा च **राजधर्मे—**
सेनानिवेशे संप्राप्ते शत्रुपक्षभये सति । अन्यत्र हि न गन्तव्यं स्वस्थानाद्युद्धचारिणा ॥ इति ।

ततः

रामस्य वचनं श्रुत्वा सुग्रीवः सहलक्ष्मणः ।
सेनां न्यवेशयत्तीरे सागरस्य द्रुमायुते ॥
सा वानराणां ध्वजिनी सुग्रीवेणाभिपालिता ।
त्रिधा निविष्टा महती रामस्यार्थपराऽभवत् ॥
सा महार्णवमासाद्य हृष्टा वानरवाहिनी ।
हसन्तमिव फेनौघैर्नृत्यंतमिव चोर्मिभिः ॥
चन्द्रोदयसमाधूत प्रतिचन्द्रं समाकुलम् ।
सागरं चांबरप्रख्यम् अंबरं सागरोपमम् ॥
सागरं चांबरं चेति निर्विशेषमदृश्यत ।
तादृग्रूपेस्म दृश्येते तारारत्नसमाकुले ॥
समुत्पतितमेघस्य वीचीमालाकुलस्य च ।
विशेषो न द्वयोरासीत्सागरस्याम्बरस्य च ॥
ददृशुस्ते महात्मानं वाताहतमपां पतिम् ।

**पञ्चमे ॥**

सा तु नीलेन विधिवत् स्वारक्षा सुसमाहिता ।
सागरस्योत्तरे तीरे साधु सेना निवेशिता ॥

अनेन सेनानिवेशस्थले यथा शत्रुकृतोपद्रवेण विना सेनायाः सौख्यं भवति तथा सेना निवेशनीयेति सूचितम् ।

अत एव धर्मपुत्रेण उक्तरीत्या सेनानिवेशः कृत इत्युक्तमुद्योगे—

मधुरेऽनूषरे देशे शुचौ पुण्ये महामति । निवेशं कारयामास कुन्तीपुत्रो युधिष्ठिरः ॥
शिबिरं स्थापयामास दृष्टद्युम्नश्च पार्श्वतः । खानयामास परिखां केशवस्तत्र भारत ॥
गुप्त्यर्थमपि चोद्दिश्य बलं तत्र न्यवेशयत् । विधिर्यः शिबिरस्यासीत्पाण्डवानां महात्मनाम्
तद्विधानि नरेन्द्राणा कारयामास सर्वत· । प्रभूतजलकाष्ठानि दुराधर्षतराणि च ॥
भक्ष्यभोज्योपपन्नानि शतशोऽथ सहस्रश । तत्रासन् शिल्पिनः प्राज्ञा शतशो दत्तवेतना·॥
सर्वोपकरणैर्युक्ता वैद्याश्च सुविशारदा । ज्याधनुर्वर्मशस्त्राणा तथैव मधुसर्पिषो· ॥
ससर्ज रसयूपाना[1] राशयः पर्वतोपमाः । बहुकंदं सवयसं तुषागारसमन्वितम् ॥
शिबिरे शिबिरे राजा स चकार युधिष्ठिरः । महायन्त्राणि नाराचास्तोमराणि परश्वधाः ॥
धनूंषि कवचादीनि संबभूवुस्तृणास्तदा[2] । गजा· कण्टकसन्नाहा लोहवर्मोत्तरच्छदाः ॥
अदृश्यंस्तत्र गिर्याभाः सहस्रशतयोधिनः ॥ इति ॥ **कामन्दकेऽपि—**

यायाद्वैरिपुराभ्याश भूभागे साधुसंमतम । स्कंधावारनिवेशज्ञः स्कन्धावारं निवेशयेत् ॥
चतुरश्रं चतुर्द्वारं नातिविस्तारसंकटम् । साट्टप्रतोलीप्राकारं महाखनिसमावृतम ॥
शृङ्गाटमर्धचन्द्र वा मण्डलं दीर्घमेव वा । भूमिप्रदेशसामर्थ्यादाकारमुपकल्पयेत् ॥
विभक्तैश्चाविभक्तैश्च पार्ष्णिभिश्च समन्वितम् । गुप्तं पक्षपुटाकारं महामात्रसमन्वितम् ॥
तस्य मध्ये मनोह्लादि महाबलसमावृतम् । अन्तःकोशबलोपेतं कारयेद्राजमन्दिरम् ।
मौलं भृतं श्रेणि सुहृद्द्विषदाटविकं बलम् । राजहर्म्यं समावृत्य क्रमेण विनिवेशयेत ॥
अन्त श्वगणिनश्शूरान् लुब्धकान् दुष्टकर्मण । पर्याप्तवेतनानाप्तान् मण्डले विनिवेशयेत्
हस्तिनो लब्धमानास्तु तुरङ्गास्तु मनोजवाः । ग्रहोपकण्ठे नृपतेर्वसेयुस्त्वाप्तरक्षिताः ॥
यामवृत्या सुसन्नद्धान् रात्रिं दिवमुदाहृतम् । अन्तर्वेशिकसैन्यं च तिष्ठेत्तारातिगुप्तये ॥
युद्धयोग्यो महामन्त्री संनद्धः सत्त्वसंस्थित । तिष्ठन्नरपतेर्द्वारि वेगवाश्च तुरंगमः ॥
परसैन्यप्रचारं च सद्ग्राहाः शीघ्रयायिन । वार्तिकाश्च विजानीयुर्दूरसीमान्तपातिन· ॥
तोरणाबद्धमाल्येषु यन्त्रवत्सु पताकिषु । द्वारेषु परमा गुप्ति कारयेदाप्तकारिभिः ॥
उद्गच्छेच्च विशेच्चापि सर्व एवोपलक्षितः । तिष्ठेयुः परदूताश्च राजशासनगोचराः ॥
वृथा कोलाहलाद्धास्यात्कुत्सनाच्च निवारितः । सज्जोपकरणस्तिष्ठेत्सर्वकार्योन्मुखो जन. ॥
बहिश्च खातात्सैन्यानामुक्तसञ्चारमापतन् । परसैन्यविनाशार्थं सर्वां भूमिं विनाशयेत् ॥

---

1. पांसूनां इति पाठांतरम् । 2. ऋष्टयस्तूणसंयुता· इति चित्रशालामुद्रिते ।

क्वचित्कण्टकशाखाभिः क्वचित्कीलैरयोमुखैः । दूषयेत्परितो भूमिं प्रच्छदः प्रदरैरपि ॥
निर्वृक्षे क्षपया बाणस्थाणुवल्मीकनिह्नवे । कारयेत्करणैश्चैत्यैस्सैन्यव्यायाममन्वयम् ॥
यस्मिन्देशे यथाकालं सैन्यव्यायामभूमयः । यत्र मध्यस्स उद्दिष्टो देश शास्त्रार्थचिंतकै ॥
अरातिसैन्यव्यायामसुपर्याप्तमहीतलम् । आत्मनो विपरीत च स देशोऽथाधम.स्मृत· ॥
नित्यमुत्तममाकांक्षे तदभावे तु मध्यमम् । अधमं बद्धमागारं नोपसेवेत सिद्धये ॥
तन्मूलत्वात्प्रजाना तु राजा स्कन्ध इति स्मृतः । अरातौ मान्यदण्डादि वृत्तिरावार उच्यते
भूतानां भूतनिष्पत्तिरपायेन महीयसा । आवृत्तस्तु यतस्स्कंध· स्कंधावारस्ततः स्मृतः ॥
इति ।

**मैदश्च द्विविदश्चोभौ तत्र वानरपुंगवौ ।**
**विचेरतुश्च तां सेनां रक्षार्थं सर्वतो दिशम् ॥**

अनेन सेनानिवेशानन्तर तद्रक्षणार्थं शूरै परितः संचार कर्तव्य इति सूचितम् ।

अत एव सेनानिवेशानन्तरं तद्रक्षणाय पार्थेन सह कृष्ण. संचारं कृतवानित्युक्त-**मुद्योगे**—

विद्राव्य शतशो गुल्मान् धार्तराष्ट्रस्य सैनिकान् । पर्यक्रामत्समंताच्च पार्थेन सह केशवः ॥
इति । **कामन्दकेऽपि** -

सैन्यैकदेशे संनद्धः सेनापतिपुरस्सरः । प्रयत्नवान् परिपतेन्मण्डलेन बहिर्निशि ॥ इति ।
ततस्समीपस्थं लक्ष्मणं काकुत्स्थ एवमुवाच—

**शोकश्च किल कालेन गच्छता ह्यपगच्छति ।**
**मम चापश्यतः कान्तामहन्यहनि वर्धते ॥**
**न मे दुःखं प्रिया दूरे न मे दु.खं हृतेति वै ।**
**एतदेवानुशोचामि वयो ह्यस्यातिवर्तते ॥**
**वाहि वात यतः कांता तां स्पृष्ट्वा मामपि स्पृश ।**
**त्वयि मे गात्रसंस्पर्श· चन्द्रे दृष्टिसमागमः ॥**
**तन्मे दहति गात्राणि विषं पीतमिवाशये ।**
**हा नाथेति प्रिया सा मा ह्रीयमाणा यदब्रवीत् ॥**
**बह्वेतत्कामयानस्य शक्यमेतेन जीवितुम् ।**
**यदहं सा च वामोरुरेकां धरणिमाश्रितौ ॥**
**केदारस्येव केदार· सोदकस्य निरूदकः ।**
**उपस्नेहेन जीवामि जीवन्तीं यच्छृणोमि ताम् ॥**
**कदा नु खलु सुश्रोणीं शतपत्रायतेक्षणाम् ।**

**विजित्य शत्रून् द्रक्ष्यामि सीतां स्फीतामिव श्रियम् ॥**

अनेन इष्टजनदर्शनेनापि दुःखनिवृत्तिर्भवतीति सूचितम् ॥

तथा च **प्राचीनाः**—

सुस्निग्धबंधुजनदर्शनहानिः दुःखम । इति ॥

**कदा नु चारुबिंबोष्ठं तस्याः पद्ममिवाननम् ।**
**ईषदुन्नम्य पास्यामि रसायनमिवातुरः ॥**

अनेन आतुरस्य रसायने पीते सर्वरोगनिवृत्तिर्जायत इति सूचितम् । तथाच **वाग्भटे**—

ब्रह्मणा विहित धन्यमिद प्राश्य रसायनम । वैखानसा बालखिल्यास्तथैवान्ये तपोधनाः ॥
तन्द्राश्रमक्लमजरापलितामयवर्जिताः । मेधास्मृतिबलोपेता बभूवुरमितायुषः ॥
दीर्घमायुः स्मृति मेधा आरोग्यं तरुणं वयः । प्रभावर्णस्वरौदार्यदेहेन्द्रियबलोदयम ॥
वाक्शुद्धिं वृषतां कान्तिमवाप्नोति रसायनात् ॥ इति ।

**कदा शोकमिम घोर मैथिली विप्रयोगजम् ।**
**सहसा विप्रमोक्ष्यामि वासश्शुक्लेतरं यथा ॥**

अनेन मलिनवस्त्र न धार्यं परित्यक्तव्यमिति सूचितम् । तथा च **गौतमः**—

न जीर्णमलवासास्स्यादिति । **आपस्तम्बोऽपि**—

सर्वान् रागान् वासंसि वर्जयेत् कृष्ण च स्वाभाविकमिति । अप्रतिकृष्टं च शक्ति-विषय इति च ।

**एवं विलपतस्तस्य तस्य रामस्य धीमतः ।**
**दिनक्षयान्मन्दरुचिर्भास्करोऽस्तमुपागमत् ॥**

अत्र सीताविरहितस्य रामभद्रस्य पूर्वकालापेक्षया सानिध्यागमनेन मन्मथोद्रेकातिशयस्य धैर्यच्युतेरप्यवगमादितरेषामपि विरहिणां विशेषेण सान्निध्यप्रयुक्ततया मन्यथोद्रेकः धैर्यच्युतिश्च भवतीति सूचितम । तथा च **प्राचीनाः**—

तीव्रस्य संतापो न तथादौ बाधते तथासन्ने ।
तपति प्रावृषि नितरा अभ्यर्णघनागमो दिवस ॥

**धैर्यच्युतिविषये**—

जागर्ति लोको ज्वलति प्रदीपः सखीजन पश्यति कौतुकं मे ।
मुहूर्तमात्रं रुत [भज]कात धैर्यं बुभुक्षित किं द्विकरेण भुङ्क्ते ॥
जागर्तु लोको ज्वलतु प्रदीप सखीजनः पश्यतु कौतुकानि ।
धैर्यं कुत. कामिनि कामुकानां पिबेत् तृषार्तः करसपुटेन ॥ इति ।

षष्टे ॥

दशमुखः केनापि वानरवराकेण देवदानवदुष्प्रवेशा लंकापुरी चैत्यप्रासादनिषूदनगृहदाहाक्षकुमारप्रमुखराक्षसहननादिभिराकुलीकृतेति मनसि विचिन्त्य तत्कालोचितमित्थममात्यानवोचत् ।

**उच्यतां नः समर्थं च यत्कृतं सुकृतं भवेत् ।**
**मन्त्रमूलं हि विजयं प्राहुरार्या मनस्विनः ॥**
**तस्माद्वै रोचये मन्त्रं रामं प्रति महाबलाः ।**

अनेन शत्रोस्समागमे सति स्वहितार्थतया मन्त्रः कर्तव्य इति सूचितम् ।

तथा च **राजधर्मे**—

मन्त्रमूलं हि विजयं प्राहुरार्या मनीषिणः ॥ इति । **कामन्दकेऽपि**—

इति मन्त्रबलान्महीपतिर्महतो दुष्टभुजंगमानिव ।
विनयेन्नयमार्गमास्थितो वशमुद्योगसमन्वितो रिपून् ॥ इति ।

**त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ।**
**तेषां तु समवेतानां गुणदोषौ वदाम्यहम् ॥**
**मन्त्रिभिर्हितसंयुक्तैः समर्थैर्मन्त्रनिर्णये ।**
**मित्रैर्वापि समानार्थैर्बान्धवैरपि वा हितैः ॥**
**सहितो मन्त्रयित्वा यः कर्मारम्भान् प्रवर्तयेत् ।**
**दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥**
**एकोऽर्थान् विमृशेदेको धर्मे प्रकुरुते मनः ।**
**एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ॥**
**गुणदोषावनिश्चित्य त्यक्त्वा दैवव्यपाश्रयम् ।**
**करिष्यामीति यः कार्यं उपेक्षेत्स नराधमः ॥**

अनेन कार्यकर्तारो राजानः उत्तमाधममध्यमभेदेन त्रिविधा उक्ताः ॥ अयमेव प्रकारो नीतिमयूखे—

**भारते**—

त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः । तेषां च समवेतानां गुणदोषान् वदाम्यहम् ॥
मन्त्रिभिर्हितसंयुक्तैः समर्थैरर्थनिश्चये । मित्रैर्वापि समानार्थैर्बान्धवैरप्यगर्हितैः ॥
स मन्त्रयित्वा यत्कर्मप्रारम्भे संप्रवर्तते । धैर्याच्च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥
एकोऽर्थान् विमृशत्येको धर्मे वै कुरुते मतिम् ।
एकः कर्माणि कुरुते तमाहुर्मध्यमं नरम् ॥

गुणदोषावनिश्चित्य दैवमेव व्यपाश्रित. । करिष्यामीति यः कार्योपेक्षकः स नराधमः ॥
इति ।

**एव मन्त्रा हि विज्ञेया उत्तमाधममध्यमाः ।**
**ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा ॥**
**मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम् ।**
**बह्व्यो विमतयो गत्वा मन्त्रिणो ह्यर्थनिर्णये ॥**
**पुनर्यत्रैकतां प्राप्ताः स मन्त्रो मध्यम' स्मृत' ।**
**अन्योन्यमतिमास्थाय यत्र संप्रतिभाष्यते ॥**
**न चैकमत्ये श्रेयोऽस्ति मन्त्रस्सोऽधम उच्यते ।**

अनेन मन्त्रोऽपि उत्तमादिभेदेन त्रिविध इत्युक्तम् । तत्रोत्तममन्त्र' **कामन्दके**—

यत्र मन्त्रिमनस्साम्यं यत्र चेतो न शङ्कते ।
यच्च सन्तो न निन्दन्ति तत्परीयाच्चिकीर्षितम् ॥
अपश्चात्तापकृत्सम्यगनुरक्तिफलप्रदः । अदीर्घकालोऽभीष्टश्च प्रशस्तो मन्त्र इष्यते ॥
इति ॥

**तस्मात्सुमन्त्रितं साधु भवन्तो मन्त्रिसत्तमाः ॥**
**कार्यं संप्रतिपद्यन्तां एतत्कृत्यतमं मम ।**

अत्र सुमन्त्रितमित्युक्त्या मन्त्रे संभावितदोषवर्जनेन कृतौगैरुपेतो मन्त्रः कार्यसाधको भवतीत्युक्तम् ॥ तथा च **कामन्दके**—

पश्यद्भिर्दूरतोऽपायानुपायप्रतिपत्तिभिः । भवन्ति च फलायैवं भवद्भिश्चिन्तिता' क्रियाः॥
इति । मन्त्राङ्गानि च **कामन्दके**—

सहायसाधनोपाया' विभागो देशकालयो । विपत्तेश्च प्रतीकारो मन्त्रः पञ्चाङ्ग इष्यते ॥
इति । मन्त्रदेशाश्च **मानवे**—

विसृज्य च प्रजास्सर्वा मन्त्रयेत्सह मन्त्रिभिः । गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः ॥
अरण्ये निश्शलाके वा मन्त्रयेताविभावितः ॥ इति । **भारतेऽपि**—

आरुह्य वा, वेश्म तथैव शून्यं स्थूलं प्रकाश कुशकाशहीनम् ।
वागङ्गदोषान् परिहृत्य सर्वान् संमन्त्रयेत्कार्यमहीनकालः ॥
सुसवृतं मन्त्रगृह स्थलं चारुह्य मन्त्रयेत । अरण्ये निश्शलाके वा वने रात्रौ कथंचन ॥
निस्तम्भे निर्गवाक्षे च निर्भित्त्यंतरसंश्रये । प्रासादोपर्यरण्ये वा मन्त्रयेताविभावितः ॥
इति । मन्त्रकाल **मनुराह**—

मन्त्रिसंख्याऽपि तत्रैव—

सचिवान् सप्त वाष्टौ वा कुर्वीत सुपरीक्षितान् । अपि यत्सुकरं कर्म तदप्येकेन दुष्करम् ॥

विशेषतोऽसहायेन किमु राज्यं महोदयम् ॥ इति । भारतेऽपि—

पौरजानपदा यस्मिन् विश्वास धर्मतो गता ।

मन्त्रिण सुकृतज्ञाः स्युस्त्र्यवरा महदीप्सवः ॥ इति ।

कामन्दकेऽपि—

द्वादशेति मनु प्राह षोडशेति बृहस्पतिः । उशना विंशतिरिति मन्त्रिणां मन्त्रिमण्डलम्॥

यथा समूहमित्यन्ये तत्प्रविश्य यथाविधि । मन्त्रयेताऽऽहितमनाः कार्यसिद्धिविवृद्धये ॥

इति ॥

तत्र ब्राह्मणोऽपि मन्त्रणे कश्चित् स्थापनीयः ।

तथा च मनुः—

सर्वेषा तु विशिष्टेन ब्राह्मणेन विपश्चिता । मन्त्रयेत परं मंत्र राज्ञा षाड्गुण्यसंयुतम् ॥

नित्यं तस्मिन् समाश्वस्त· सर्वकार्याणि निक्षिपेत् ।

तेन कार्यं विनिश्चित्य ततः कर्म समारभेत् ॥ इति ।

मन्त्रिणा सपत् कामन्दके—

स्मृतिस्तत्परतार्थेषु वितर्को ज्ञाननिश्चयः । दृढता मन्त्रगुप्तिश्च मन्त्रिसंपत् प्रकीर्तिता ॥

इति ।

स च मन्त्रो गुप्तः कर्तव्य इति मानवे—

यस्य मन्त्रं न जानाति समागम्य पृथग्जनः । स कृत्स्नां पृथिवीं भुंक्ते कोशहीनोऽपि पार्थिवः ॥ इति ।

भारतेऽपि—

नास्य छिद्र परः पश्येच्छिद्रेषु परमन्वियात् । गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥

इति । कामन्दकेऽपि—

मन्त्रो हंत क्रियागूढो नातिक्रामति मन्त्रिणम् ।

यस्मिन् भिन्ने ध्रुव भेदः गुप्ते गुप्तिरनुत्तमा ॥

क्रियमाणं सकुल्यास्तु विधुरस्य परे कृतम ॥ इति । मन्त्रिनोऽप्यर्थ· काले कर्तव्यः ।

तथा च कामन्दके—

नातीयात्कार्यकाल हि कृत्वा मन्त्रविनिश्चयम ।

अतिक्रान्तं तु संभूय यथायोग प्रकल्पयेत् ॥

न कार्यकालं मतिमानतिक्रामेत्कदाचन । कथंचिदेवातिक्रान्ते कार्ये योगस्सुदुर्लभः ॥

सतां मार्गेण मतिमान् काले कर्म समाचरेत् ।

काले समाचरन् साधु रसवत्फलमश्नुते ॥ इति ।

तत्तन्मन्त्रिमतानि च अश्लाघनेनैव गृह्णीयात् ।

तदुक्तं च कामन्दके—

अकत्थनेन कार्याणि संप्रधार्य पुनः पुनः । प्रविशेत्स्वहितान्वेषी मतमेषा पृथक् पृथक् ॥ इति । स्वार्थापीडनेन मन्त्रितोर्थः प्रयोक्तव्यः ।

तथा च मनुः—

तेषा स्वस्वमभिप्रायमुपलभ्य पृथक् पृथक् ।

समस्ताना च कार्येषु विदध्याद्धितमात्मनः ॥ इति । कामन्दकेऽपि—

कृतोऽपि मन्त्रो मन्त्रज्ञैस्स्वयं भूपो विचारयेत् ।

तथा वर्तेत तत्त्वज्ञो यथा स्वार्थं न पीडयेत् ॥ इति ।

सानुजस्सरामो वानरानीकपरिवृतो नूनं तरसा पारावारमेनं तरिष्यति शोषयिष्यति वीर्योत्सेकेन किंचान्यत्करिष्यतीति चिन्ताकुल मे मनः ॥

**अस्मिन्नेवं गते कार्ये विरोधे वानरैस्सह ॥**
**हितं पुरे च सैन्ये च सर्वं संमन्त्र्यतां मम ।**

सप्तमाष्टमनवमेषु ॥

ततो महेन्द्रप्रमुखलोकपालविजेतुः स्ववशीकृतभोगवतीनिलयवासुकीपुरोगमोरगराज-कुलस्य निजभुजविचलितकैलासाद्रेर्विजयसंप्राप्तपुष्पकस्य दशाननस्य भवत· अक्षय्यशौर्य-निक्षेपेष्वस्मासु सत्सु,

**राजन्नापदयुक्तेयमागता प्राकृताज्जनात् ॥**
**हृदि नैव त्वया कार्यं त्वं विनेष्यसि राघवम् ।**

इत्यभिदधानान् गृहीतायुधान् यातुधानान्निवार्य विभीषणो रावणमेवमब्रवीत् ॥

**अप्युपायैस्त्रिभिस्तात योऽर्थः प्राप्तुं न शक्यते ॥**
**तस्य विक्रमकालांस्तान् युक्तानाहुर्मनीषिण. ।**

अनेन उपायान्तरासाध्य एव दण्ड· प्रयोक्तव्य इत्युक्तम् ॥

तथा च राजधर्मे—

अयुद्धेनैव विजयं (वर्जयेद्व) [वाञ्छेच्च व] सुधाधिपः ।

जघन्यमाहुर्विजयं यद्युद्धेन नराधिप ॥ इति। **कामन्दकेऽपि—**

सामादीनामुपायानां त्रयाणां विफले नये। विनयेन्नयसंपन्नो दंडं दंड्येषु धर्मवत् ॥
इति।

प्रमत्तेष्वभियुक्तेषु दैवेन प्रहृतेषु च।
विक्रमास्तात सिध्यन्ति परीक्ष्य विधिना कृताः ॥

अनेन प्रमत्तादिष्वेव शत्रुषु कृतो विक्रमः सिध्यतीति सूचितम्। तथा च **राजधर्मे**—
प्रमादो नैव कर्तव्यस्तात भूतिमभीप्सता। प्रमादिनं हि राजानं सर्वे परिभवन्त्युत ॥
इति। **कामन्दके—**

असत्यता निष्ठुरताऽकृतज्ञता भयं प्रमादोऽलसता विषादिता।
तथाभिमानो ह्यतिदीर्घसूत्रता तथाङ्गनाक्षादि विनाशनं श्रियः ॥
इति स्म दोषान्वितमाशु विद्विषं त्रिशक्तियुक्तो विजिगीषया व्रजेत्।
अतोऽन्यथा साधुजनस्य समतः करोति विद्वानुपघातमात्मनः ॥ इति।
दैवोपहतकश्चैव दैवचिन्तक एव च। दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः ॥
एतैस्संधिं न कुर्वीत विगृह्णीयात् तु केवलम्।
एते विगृह्यमाणा हि क्षिप्रं याति रिपोर्वशम् ॥ इति च।

**अप्रमत्तं कथं त्वंतु *विजिगीषं बले स्थितम्।**
**जितरोषं दुराधर्षं प्रधर्षयितुमिच्छसि ॥**

अनेन अप्रमादादिगुणविशिष्टः परैः असाध्य इति सूचितम्। तथा च **कामन्दके—**
कुलोद्गतं सत्यमुदारविक्रमं स्थिरं कृतज्ञं धृतिमन्तमूर्जितम्।
अतीव दातारमुपेतवत्सलं सुदुष्प्रसाध्यं प्रवदन्ति विद्विषम् ॥ इति।

**बलान्यपरिमेयानि वीर्याणि च निशाचराः।**
**परेषां सहसावज्ञा न कर्तव्या कदाचन ॥**

अनेन रिपोरवज्ञा न कर्तव्या इति सूचितम्। तथा च **पुराणसारे—**
नावज्ञेयो रिपुः कश्चिद्दुर्बलोऽपि बलीयसा। उद्वेजयति सूक्ष्मोऽपि चरणं कण्टकांकुरः ॥
इति।

**किंच राक्षसराजस्य रामेणापकृतं पुरा।**
**आजहार जनस्थानाद्यस्यभार्यां यशस्विनः ॥**
**खरो यद्यतिवृत्तस्तु रामेण निहतो रणे।**
**अवश्यं प्राणिनां प्राणा रक्षितव्याः कथंचन ॥**

---

* 'तंतु' इति पाठभेदः

अनेन आत्मरक्षणं सर्वप्रकारेण कर्तव्यं इति सूचितम् ।

तथा च **गौतमः**—

सर्वत एवात्मानं गोपायेत् । इति । **भारतेऽपि**—

द्रव्याणि संततिश्चैव सर्वं भवति जीवतः । सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ॥

एतां बुद्धिं समास्थाय जीवितव्य सदा भवेत् ॥ इति ।

**अयशस्यमनायुष्यं परदाराभिमर्शनम् ।**
**अर्थक्षयकरं घोर पापस्य च पुनर्भवम् ॥**

अनेन परदाराभिमर्शनं विनाशकरयिति सूचितम् । तथा च **पुराणसारे**—

अभिलाषः परस्त्रीषु विनाशायैव जायते । तेनैव निधनं यातो दशास्यः सह बन्धुभिः ॥

इति ।

**एतन्निमित्तं वैदेह्या भयं नः सुमहद्भवेत् ।**
**आहृता सा परित्याज्या कलहार्थे कृतेन किम् ॥**

अनेन कलहनिमित्तं वस्तु परित्यज्य कलहशातिः कर्तव्येति सूचितम् ।

तथा च **कामन्दके**—

राज्यस्त्रीस्थानदेशाना दानेन दमनेन च । विग्रहस्य तु युक्तिज्ञैरिति प्रशमनं स्मृतम् ॥

इति ।

**न नःक्षमं वीर्यवता तेन धर्मानुवर्तिना ।**
**वैरं निरर्थकं कर्तुं दीयतामस्य मैथिली ॥**

अनेन बलवद्विरोधं धार्मिकविरोधं शुष्कविरोधं च वर्जयेदिति सूचितम् ।

तथा च **कामन्दके**—

समाक्रान्तस्य बलिना सर्वयत्नवतोऽपि हि । हरिणस्येव सिंहेन शरणं नैव दृश्यते ॥

ईषदायच्छमानोऽपि सिंहो मत्तानिव द्विपान् ।

हिनस्ति बलवान् तस्मात् सन्धेयः शुभमिच्छता ॥

बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।

प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥ इति । धार्मिकविरोधविषये **कामन्दके**—

धार्मिकस्यापि युक्तस्य सर्व एव हि युध्यते ।

प्रजानुरागाद्धर्माच्च दुरुच्छेद्यो हि धार्मिकः ॥ इति । शुष्कवैरविषये, **मनुः**—

शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥ इति । **विष्णुपुराणेऽपि**—

नारभेत कलिं प्राज्ञः शुष्कवैर च वर्जयेत् ।

अप्यल्पहानिः सोढव्या वैरं पार्थाहवं त्यजेत् ॥ इति ।

**त्यजस्व रोषं सुखधर्मनाशं भजस्व धर्मं रतिकीर्तिवर्धनम् ।**
**प्रसीद जीवेम सपुत्रबांधवाः प्रदीयतां दाशरथाय मैथिली ॥**

अत्र क्रोधम्सुखधर्मनाशकत्वात् परित्याज्यः (अधर्म·) [धर्म ] रतिकीर्तिवर्धनत्वात् सेव्य इत्युक्तम् । तत्र रोषवर्जनं **विष्णुपुराणे**—

स्वर्गापवर्ग (व्यसेऽथ) [नाशेऽथ] कारण परमर्षयः । वर्जयंति महाक्रोधं तात मा तद्वशो भव ॥ इति । धर्मसेवनं **भारते**—

धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥ इति ।

इति तद्वचनं निशम्य,

**विसर्जयित्वा तान् सर्वान् प्रविवेश स्वकं गृहम् ।**

इति ॥

दशमे ॥

ततो दिचित्रतरं रावणभवनं प्रविश्य विभीषणः ।

**पुण्यान् पुण्याहघोषांश्च वेदविद्भिरुदाहृतान् ।**
**शुश्राव सुमहातेजा भ्रातुर्विषय[1] संश्रितान् ॥**
**पूजितान् दधिपात्रैश्च सर्पिर्भिः सुमनोऽक्षतैः ।**
**मन्त्रवेदविदो विप्रान् ददर्श सुमहाबलः ॥**

अनेन राज्ञा ब्राह्मणा नित्यं पूज्याः सन्तोषणीया इति सूचितम् । तथा च **मनुः**—

उत्थाय पश्चिमे यामे कृतशौचस्समाहितः ।
हुत्वाऽग्नि ब्राह्मणाश्चार्च्य प्रविशेच्च शुभा सभाम् ॥
दानसंमानसत्कारैः श्रोत्रियान् मानयेत्सदा ॥ इति च ।

ततो दिनकरकोटिसमप्रभा भ्रातृसभा प्रविश्य समुन्नतदिव्यासनासीनं दशानन-मभिवाद्य

**स राजदृष्टिसंपन्नं आसनं हेमभूषितम् ।**
**जगाम समुदाचारं प्रयुज्याचारकोविदः ॥**

---

1 'विजयसंस्थितान्' इति पाठान्तरम् ।

अनेन राजसभायां स्तंभचापलादीन् वर्जयित्वा राज्ञोऽवसरप्रेप्सुर्विनीतस्सन् उचित-स्थाने तिष्ठन् सुवेषवान् । यथाकालमुपासीत राजानं विनयान्वितः ॥ इति । सूचितम् ।

**स रावणं महात्मानं विजने मन्त्रिसंनिधौ ।**
**उवाच हितमत्यर्थं वचन हेतुनिश्चितम् ॥**

**प्रसाध्य भ्रातरं ज्येष्ठं सांत्वेनोपास्थितक्रमः ।**

अनेन गुर्वादेर्धर्मव्यतिक्रम रहस्येव सात्वपूर्वकं बोधनीयः नतु सभायामिति सूचितम् । तथाचापस्तम्भ —

प्रमादादाचार्यस्य बुद्धिपूर्वं वा नियमातिक्रमं रहसि बोधयेत् । इति—

**यदा प्रभृति वैदेही संप्राप्तेह पुरीं तव ।**
**तदा प्रभृति दृश्यन्ते निमित्तान्यशुभानि नः ॥**
**सस्फुलिङ्गः सधूमार्चिः सधूमकलुषोदयः ।**
**मन्त्रसंधुक्षितोऽप्यग्निर्न सम्यगभिवर्धते ॥**

अनेन होमकाले अग्निजातं मधूमकलुषज्वालादिकं अशुभनिमित्तमित्युक्तम् ।

तथा च **भीष्मपर्वणि**—

अशुभनिमित्तान्युपक्रम्य । नीललोहितपीतश्च भवत्यग्निर्हुतो द्विजै ।

वामार्चिर्दुष्टगन्धश्च मुंचन् वै दारुणं स्वनम् ॥ इति । **मौसलेऽपि**—

विभावसु. प्रज्वलितो वामं विपरिवर्तते ।

नीललोहितमाजिष्ठान् सृजन्नर्चिष· पृथक् ॥ इति—

**अग्निष्ठेष्वग्निशालासु तथा ब्रह्मस्थलीषु च ।**
**सरीसृपाणि दृश्यन्ते हव्येषु च पिपीलिकाः ॥**

अनेन गृहे सर्पदर्शनं हविष्षु पिपीलिकादर्शन चाशुभनिमित्तमित्युक्तम् । तथा च **बोधायनगृह्ये**—

सर्पदर्शनं शातिनिमित्ततया, उत्पातत्वेनोक्तम् ।

अथ यथागारे स्थूणा विरोहेत् ,कपोतो वागारमध्येऽधिपतेद्वायसो वा गृहं प्रविशेत् गौर्वा गृहमारोहेद्गौर्वा गांधेयेद् गौर्वात्मानं प्रत्यग्धयेदनड्वा दिवमुल्लिखेदनग्नौ वा धूमो जायेतानग्नौ वा दीप्येत मधुवाजायेत वल्मीकं वोपजायेत मण्डूकोवा न अपो (?) वाशयेत् श्येनः प्रसूतो वा श्वानो गृहमारोहेत् सर्पोवा गृहपति जायावोत्पतेत् देवतान्येषु चाद्भुतोत्पातेषु । इति ।

एवमेव यादवकुलक्षयकरा उत्पाता हविष्षु जाता इत्युक्तम् **मौसले**—

महानसेषु सिद्धेषु संस्कृतेषु हविष्षुच । आहार्यमाणे क्रिमयो व्यदृश्यंत सहस्रशः ॥ इति ।

गवां पयांसि स्कन्नानि विमदा वीरकुञ्जराः ।
दीनमश्वाः प्रहेषंते न च ग्रासाभिनन्दिनः ॥
खरोष्ट्राश्वतरा राजन् भिन्नरोमाःस्रवंतिनः ।
न स्वभावेऽवतिष्ठंते विधानैरपि चिंतिताः ॥
वायसाः सङ्घशः क्रूरा व्याहरंति समन्ततः ।
समवेताश्च दृश्यन्ते विमानाग्रेषु सङ्घशः ॥
गृध्राश्च परिलीयन्ते पुरीमुपरि पिण्डिताः ।
उपपन्नाश्च सन्ध्ये द्वे व्याहरंत्यशिव शिवाः ॥
क्रव्यादानां मृगाणां च पुरद्वारेषु संघश ।
श्रूयन्ते विपुला घोरा सविस्फूर्जितनि.स्वनाः ॥

अत्र पक्षिमृगाणा सन्घीभूताना क्रूरव्याहरणादिकमशुभनिमित्तमित्युक्तम् । तथा च अन्यत्रापि अनिष्टसूचकानि प्रतिपादितानि ।

वीचीकूचीति वाश्यन्त· शारिका वेश्मसु स्थिताः ।
पतंति ग्रथिताश्चापि निर्जिताः कलहैषिण· ॥
पक्षिणश्च मृगास्सर्वे प्रत्यादित्य रुदन्ति ते ।
व्याला गोमायवो गृध्रा वाश्यन्ति च सुभैरवम् ॥
प्रविश्य लङ्कामनिशं समवायाश्च कुर्वते ।
पाण्डरा रक्तपादाश्च विहगाः कालचोदिताः ॥
राक्षसाना विनाशाय कपोता विचरन्ति च ।

तथा

उत्पातान् विविधान् दृष्ट्वा घोरान् बहुविधांम्तथा ।
विनाशमनुपश्यामि सर्वेषा रक्षसामहम् ।
खराभिस्तनिता घोरा मेघाः प्रतिभयकरा ॥
शोणितेनाभिवर्षंति लङ्कामुष्णेन सर्वतः ।
रुदता वाहनाना च प्रपतन्त्यास्रबिन्दवः ॥
ध्वजाध्वस्ता विवर्णाश्च न प्रभाति यथा पुरा ॥
कालिकाः पाण्डरैर्दन्तैः प्रहसंत्यग्रत स्थिताः ।
स्त्रियः स्वप्नेषु मुष्णंत्यो गृहाणि प्रतिभाष्य च ॥
गृहाणां बलिकर्माणि श्वानः परिभुञ्जते । मार्जारा द्वीपिभिस्सार्धं सूकराश्शुनकैस्सह ॥

किनरा राक्षसैश्चापि समेयुर्मानुषैस्सह । करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ॥
कालो गृहाणि सर्वेषा काले कालेऽन्ववेक्षते ।
एतान्यन्यानि दुष्टानि निमित्तान्युत्पतंति च ॥
ज्ञात्वा त्वयार्य कर्माणि क्रियतामायतक्षमम् । इति ।

अत्र क्रव्यादाना पक्षिमृगाणा वाहनाना च क्रूरस्वरादिकमशुभनिमित्तमित्युक्तम् ।

तथा च **भीष्मपर्वणि**—

दिक्षु प्रज्वलितास्याश्च व्याहरन्ति मृगद्विजा । अत्याहितं दर्शयन्ति वेदयन्ति महद्भयम् ॥
एकपक्षाक्षिचरणः शकुनिः खचरो निशि । रौद्रं वदति संरब्धः शोणितं छर्दयन्निव ॥
कोकिलाः शतपत्राश्च चाषभासाः शुकास्तथा ।
सारसाश्च मयूराश्च वाचो मुञ्चंति दारुणाः ॥

इति च । **उद्योगेऽपि**—

एकपक्षाक्षिचरणा नर्दन्तो घोरदर्शनाः । पक्षिणोऽव्यसृजन् घोरं तत्पराभवलक्षणम् ॥
शिवाश्च वाशते घोरं तत्पराभवलक्षणम् । कृष्णग्रीवाश्च शकुना नीलपादा भयङ्कराः ॥
सन्ध्याभिमुखमायांति तत्पराभवलक्षणम् ॥ अपसव्या मृगास्सर्वे शिवाश्चैव खरस्वनाः ॥
गृध्राः कंकाबकाः श्येनाः यातुधानास्तथावृकाः ।
माक्षिकाणां च सन्घाता अनुगच्छन्ति कौरवान् ॥
तथैवान्याश्च दृश्यन्ते स्त्रियो वै ब्रह्मवादिनाम् । वैनतेयान्मयूरांश्च जनयन्ति पुरे तव ॥
गोवत्स बडबा सूते श्वस्सृगालं महीपते । कुक्कुरान् करभाश्चैव शुकांश्चाशुभवादिनः ॥
वाहनाना च रुदता निपतन्त्यश्रुबिन्दवः । उत्पातमेघा रौद्राश्च रात्रौ वर्षंति शोणितम् ॥
धूमं ध्वजाविमुञ्चन्ति कंपमानामुहुर्मुहु । **मौसलेऽपि**—

पाण्डरा रक्तपादाश्च विहगा कालचोदिताः । वृष्ण्यंधकाना गेहेषु कपोताव्यचरंस्तदा ॥
श्येनागृध्राश्च काकाश्च कङ्काश्च सहिता बलैः । संपतन्ति नगाग्रेषु समवायांश्च कुर्वते ॥
वीचीकूचीति वाशन्ति शारिका वृष्णिवेश्मसु । नोपशाम्यति शब्दः स सदिवारात्रमेवहि ॥
अग्निहोत्रनिकेतेषु वास्तुमध्येषु वेश्मसु । वृष्ण्यंधकानाखादन्त स्वप्नेगृध्राभयानका ॥
अन्वकुर्वन्नुलूकानां सारसा विरुतं तथा । अजाः शिवाना विरुतमन्वकुर्वत भारत ॥
व्यजायंत खरा गोषु करभाश्वतरीषु च । शुनीष्वपि बिडालाश्च मूषिका नकुलीषु च ॥
मार्जारा द्वीपिभिस्सार्धं कुक्कुरा शुनकैस्सह । किन्नरा राक्षसैश्चापि समेयुर्मानुषैस्सह ॥
काली स्त्री पाण्डरैर्दन्तैः प्रविश्य हसती निशि ।
स्त्रियः स्वप्नेषु मुष्णन्ति द्वारका परिधावति ॥

करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ।
काली ग्रहाणि सर्वेषां परिक्रामति नित्यशः ॥

**उद्योगेऽपि—**

निःश्वसन्ति च मातङ्गा मुंचंत्यश्रूणि वाजिनः । अल्पे भुक्ते पुरीषं च प्रभूतमिह दृश्यते ॥
वाजिनां वारणानांच मनुष्याणा च केशव । इति ।

**तदेवं प्रस्तुते कार्ये प्रायश्चित्तमिदं क्षमम् ।**
**रोचते यदि वैदेही राघवाय प्रदीयताम् ॥**

अनेन यन्निमित्तं भयमुपस्थित तद्भयनिवृत्तये तन्निमित्तं अवश्यं त्यक्तव्यमिति सूचितम् ॥

तथा च **मोक्षधर्मे—**

यन्निमित्त भवेच्छोकस्तापो वा दुःखमेव वा । आयासो वा यतो मूलं तदेकांगमपि त्यजेत् ॥ इति ।

**इदं च यदि वा मोहाल्लोभाद्वा व्याहृतं मया ।**
**तत्रापि च महाराज न दोष कर्तुमर्हसि ॥**

अनेन महत्सु अप्रियमुक्त्वा क्षमापनं कुर्यादिति सूचितम् ।

तथा च **विराटपर्वणि**

एव सर्वे सहामात्याः कुन्तीपुत्रं युधिष्ठिरम् । प्रसादयामो भद्रं ते सानुजं पाण्डवर्षभम् ॥
यदस्माभिरजानद्भिः किंचिदुक्तो नराधिपः । क्षन्तुमर्हति तत्सर्वं धर्मात्मा ह्येष पाण्डवः ॥
इति ।

**अयं हि दोषः सर्वस्य जनस्याप्युपलक्ष्यते ।**
**क्षयाय राक्षसानां च पुरस्यांतःपुरस्य च ॥**

अनेन राजदोषात्प्रजाना क्लेशो भवतीति सूचितम्—

तथा च **राजधर्मे—**

पार्थिवानामधर्मत्वात्प्रजानामभवत्सदा । राजदोष भयादेव प्रजाःक्लिश्यंत्ययत्नत. ॥ इति

**श्रावणे चास्य मन्त्रस्य निवृत्तास्सर्वमन्त्रिणः ।**
**अवश्यं च मया वाच्यं यद्दृष्टमपि वा श्रुतम् ॥**
**संप्रधार्य यथान्यार्थं तद्भवान् कर्तुमर्हति ।**

अनेन प्रभोस्तात्कालिकाप्रीतिकरत्वात्परैरनिवेदितमपि हितैषिणा आप्तेनापृष्टेनापि स्पष्टं वक्तव्यमिति सूचितम् । तथा च **कामन्दके—**

अपृष्टोऽपि हितान्वेषी ब्रूयात्कल्याणभाषितम् ।
प्रियं तथ्यं च पथ्य च वदेद्धर्मार्थमेव च ॥ इति । **हरिवंशे** इन्द्रं प्रति नारदः—

कामं प्रियाणि राजानो वक्तव्या नात्र संशयः । प्राप्तकाल हि वक्तव्यमिदमप्रियमप्युत ॥
अनियुक्तः पुरा यो वै विनियुक्तं हितं वदेत् । स लोकगतितत्त्वज्ञो नयविज्ञानकोविदः ॥
अनुक्तेनापि सुहृदा वक्तव्य जानता हितम् । न्याय्यं च प्राप्तकाल च पराभवमनिच्छता ॥
वक्तव्यं सर्वदा सद्भि. प्रियं चापि प्रियाद्धितम् । आनृण्यमेव स्नेहस्य सद्भिरेवाहृत पुरा ॥

इति ।

ततश्च तद्वचनश्रवण संजात संज्वरो निशाचरेश्वर· ।

**भयं न पश्यामि कुतश्चिदप्यहं न राघवः प्राप्स्यति जातु मैथिलीम् ।**
**सुरैः सुरेन्द्रैरपि सङ्गतः कथं ममाग्रतः स्थास्यति लक्ष्मणाग्रजः ॥**
**इतीदमुक्त्वा सुरसैन्यनाशनो महाबलः सयतिचण्डविक्रमः ।**
**दशाननो भ्रातरमाप्तवादिनं विसर्जयामास तदा विभीषणम् ॥**

एकादशे ॥

**स वभूव कृशो राजा मैथिलीकाममोहित. ।**
**असंमानाच्च सुहृदां पापः पापेन कर्मणा ॥**

अनेन काममोहित पापिष्ठ सुहृन्निन्दकश्च कृशो भवतीति सूचितम्– तत्र काम मोहितस्य कृशत्वं...पुराणे—

यद्यत्त्यजति कामानां तत्सुखेनाभिपूर्यते । कामानुसारी पुरुष तस्मादेव कृशो भवेत् ॥ इति ।

अधर्मिष्ठस्य कृशता कामन्दके—

सदा धर्मबलीयस्त्वा द्वेव ब्राह्मणनिन्दकः । विशीर्यते स्वयं चैव दैवोपहतकस्तथा ॥ इति

ततो रथवरमास्थाय सभाप्रस्थितं रावणम् ।

**असिचर्मधरायोधाः सर्वायुधधरास्तदा ।**
**राक्षसा राक्षसेन्द्रस्य पुरस्तात्संप्रतस्थिरे ॥**
**पार्श्वतः पृष्ठतश्चैव परिवार्य ययुस्तदा ।**

अनेन प्रस्थितं राजानं गृहीतायुधा भृत्या परिवार्य गच्छेयुरिति सूचितम—

तथा च भीष्मपर्वणि—

पदातयश्च त्वरिता नखरप्रासयोधिनः । परिवव्रुर्महेष्वासा धार्तराष्ट्रं महारथम् ॥
आत्तशस्त्राश्च सुहृदो रक्षणार्थं महीपते । प्रादुर्बभूवुस्सहिताश्शक्रस्येवामरा दिवि ॥ इति

**ततस्तूर्यसहस्राणां सञ्जज्ञे निस्वनोमहान् ।**
**विमलं चातपत्राणं प्रगृहीतमशोभत ॥**

चामरव्यजने चास्य चेरतुस्सव्यदक्षिणम् ।

ते कृतांजलयस्सर्वे रथस्थं पृथिवीस्थिताः ॥
राक्षसा राक्षसश्रेष्ठ शिरोभिस्त ववन्दिरे ।
राक्षसैः स्तूयमानस्सन् जयाशीर्भिररिंदमः ॥
आससाद महातेजाः सभा विरचिता शुभाम् ।

अनेन निखिलराजोपचारयुक्त एव बहिर्निर्गच्छेदिति सूचितम् ।

तच्च प्राक् प्रपचितम् । तदनु च षड्भि· पिशिताशशतैरभिगुप्तां शातकुंभस्तंभवातायनशोभिता सभा प्रविष्टेन राज्ञा समानीता मन्त्रिण प्रविश्य राजसभाम् ।

**राज्ञः पादौ गृहीत्वा ते राज्ञा ते प्रतिपूजिताः ।**
**पीठेष्वन्ये ब्रसीष्वन्ये भूमौ केचिदुपाविशन् ॥**

विभीषणोऽपि प्रविश्य राजसभां—

**स पूर्वजायावरज शशंस नामाऽथ पश्चाच्चरणौ ववन्दे ।**
**सुवर्णनानामणिभूषणानां सुवाससां संसदि राक्षसानाम् ॥**
**तेषां परार्ध्यागरुचन्दनानां स्रजां च गन्धाश्च वबुस्समन्तात् ।**

अनेन राजसभायां सुवेषै सुगन्धैश्च भृत्यैः स्थातव्यमिति सूचितम् ।

तथा च कामन्दके—

प्रविष्टस्सम्यगुचिते स्थाने तिष्ठन् सुवेषवाक् ।
यथाकालमुपासीत राजान विनयान्वितः ॥ इति ।

**न चुक्रुशुर्नानृतमाह कश्चित् सभासदो नैव जजल्पुरुच्चैः ।**
**संसिद्धार्थाः सर्व एवोग्रवीर्या भर्तुस्सर्वे तेऽभ्यपश्यन् मुखानि ॥**

अनेन राजसभाया स्थितैरुच्चैर्भाषणादिकमकृत्वा स्वामिमुखावलोकनपरैः स्थेयमिति सूचितम् ।

तथा च कामन्दके—

उच्चैः प्रहसनं कासष्ठीवनं कुत्सनं तथा । जृम्भणं गात्रभङ्गं च पर्वस्फोटं च वर्जयेत् ॥
ब्रूयात्किमयमित्यस्य तिष्ठेदास्यं विलोकयन् । इति ॥

द्वादशे ॥

तदनु

**सेनापतेर्यथा ते स्यु· कृतविद्याश्चतुर्विधाः ।**
**योधा नगररक्षायां तथा व्यादेष्टुमर्हसि ॥**

इति दशवदनसमादिष्टः

**स प्रहस्तः प्रहृष्टात्मा चिकीर्षन् राजशासनम् ।**
**विनिक्षिप्य बलं सर्वं बहिरन्तश्च मन्दिरे ॥**
**ततो विनिक्षिप्य बलं पृथङ्नगरगुप्तये ।**
**विहितं बहिरन्तश्च बल बलवतस्तव ।**
**कुरुष्वाविमनाः क्षिप्रं यदभिप्रेतमस्ति ते ॥**

अनेन परैरभियुक्तो राजा मन्त्रालोचनाय प्रधानानामानयनावसरे पुरगुप्त्यै पूर्वं स्थापनीया इति सूचितम् ।

तथा च **वनपर्वणि**— सौभवधे

वृष्ण्यंधकपुरे राजन् तदा सौभसमागमे । अनुरथ्यासु सर्वासु चत्वरेषु च कौरव ॥
बलं बभूव राजेन्द्र प्रभूतगजवाजिमत् ॥ इति ।
तदनु सभासदोऽमात्यानवलोक्य दशग्रीव इत्थमकथयत् ।

**प्रियाप्रिये सुखं दुःखं लाभालाभौ हिताहिते ।**
**धर्मकामार्थकृच्छ्रेषु यूयमर्हथ वेदितुम् ॥**

अनेन राज्ञा धर्मार्थकुशलैर्मन्त्रिभिस्सह मन्त्रः कर्तव्य इति सूचितम् ।
तथा**चाश्रमवासे**—

मन्त्रिणश्चैव कुर्वीथ द्विजान् विद्याविशारदान् ।
विनीतांश्च कुलीनाश्च धर्मार्थकुशलानृजून् ॥
तैः सार्धं मन्त्रयेथास्त्वं नात्यर्थं बहुभिस्सह ॥ इति—

**सर्वकृत्यानि युष्माभिः समारब्धानि सर्वदा ।**
**मन्त्रकर्मनियुक्तानि न जातु विफलानि मे ॥**

अनेन समीचीनेन मन्त्रिणा सम्यक् मन्त्रितोर्थो न विफलो भवतीति सूचितम् । तथा च **कामन्दके**—

इति स राज्यं सकलं समीरित परा प्रतिष्ठाऽस्य धन सुसाधनम् ।
गृहीतमेतन्निपुणेन मन्त्रिणा त्रिवर्गनिष्पत्तिमुपैति शाश्वतीम् ॥ इति ।

**स सोमग्रहनक्षत्रैः मरुद्भिरिव वासवः ।**
**भवद्भिरहमत्यर्थं कृतः श्रियमवाप्नुयाम् ॥**

अनेन समीचीनपरिवारस्य श्रीरभिवृद्धा भवतीति सूचितम् । तथा च **कामन्दके**—
मन्त्रिणो यस्य कुलजा असंहार्याः सहोषिताः । नृपतेर्मतिदास्संति संबन्धज्ञानकोविदा. ॥
अतिक्रान्तमशोचन्तः स राज्यफलमश्नुते ॥ इति ।

**अदेया च यथा सीता वध्यौ दशरथात्मजौ ।**
**भवद्भिर्मन्त्र्यतां मन्त्रः सुनीतं चाभिधीयताम् ॥**
**तस्य कामपरीतस्य निशम्य परिदेवितम् ।**
**कुंभकर्णः प्रचुक्रोध वचनं चेदमब्रवीत् ॥**
**यदा तु रामस्य सलक्ष्मणस्य प्रसह्य सीता खलु सा इहाहृता ।**
**सकृत्समीक्ष्यैव सुनिश्चितं तदा भजेत चित्तं यमुनेव यामुनम् ॥**

अत्र यदा प्रसह्य सीता हृता तदेव खलु अस्माभिस्सह सकृत्समीक्ष्यैव सुनिश्चय सीता-हरणमनर्थसंपादकमिति शोभननिश्चययुक्तं मनो भवान् नियमेन भजेत यमुनायामुनं-हृदमिव । इदानीं तु विचारो निष्फलः अतः मन्त्रस्य कालातिक्रमो न कर्तव्य इति सूचितम् । तथा च **कामन्दके**—

न कार्यकालं मतिमानतिक्रामेत् कदाचन । कथंचिदेव भवति कार्ययोगः सुदुर्लभः ॥ इति ।

**सर्वमेतन्महाराज कृतमप्रतिमं तव ।**
**विधीयेत सहास्माभिरादावेवास्य कर्मणः ॥**

अनेन विचार्य कार्यमारंभणीयमिति सूचितम् ॥ तथा च **प्राचीनाः**—

चिन्तनीया हि विपदामादावेव प्रतिक्रिया । न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥ इति ।

**न्यायेन राजकार्याणि यः करोति दशानन ।**
**न स संतप्यते पश्चान्निश्चितार्थमतिर्नृपः ॥**

अनेन कार्यकर्ता राजा कदाऽपि न सीदतीति सूचितम् । तथा च **कामन्दके**—

न्यायप्रवृत्तो नृपतिरात्मानमथच प्रजाः । त्रिवर्गेणोपसंधत्ते निहति ध्रुवमन्यथा ॥ इति ।

**अनुपायेन कर्माणि विपरीतानि यानि च ।**
**क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥**

अनेन मन्त्रिभिस्सह उपायविचारमन्तरा स्वयमेव हठाद्यान्यन्याय्यकर्माणि कृतानि तानि निष्फलानि भवन्ति । प्रत्युत कर्तुर्विपरीतकानि भवन्ति । अप्रयतेषु हवींष्यपि निष्फलानि भवन्तीति सूचितम् । तत्राद्येऽनयोः **राजधर्मे**—

अनीतिजं यस्य विधानजं सुखं हठात्प्रणीतं विधिवत्प्रदृश्यते ।
न विद्यते तस्य गतिर्महीयते न विद्यते राष्ट्रजमुत्तमं सुखम् ॥ इति । **अप्रयतेषु हवींषि** निष्फलानीत्यत्र । **मनुः**—

ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति । तस्मै हव्यं न दातव्यं नहि भस्मनि हूयते ॥
यथेरिणे बीजमुप्त्वा न वप्ता लभते फलम् । तथाऽनृचे हविर्दत्त्वा न दाता लभते फलम् ॥
इति ।

**यः पश्चात्पूर्वकार्याणि कर्माण्यभिचिकीर्षति ।**
**पूर्वं चापरकार्याणि न स वेद नयानयौ ॥**

अनेन कार्यकालो नातिक्रामणीय इति सूचितम् । तथा च **कामन्दके—**
न कार्यकालं मतिमानतिक्रामेत्कदाचन । कथंचिदेव भवति कार्ये योगस्सुदुर्लभः ॥ इति ।

**चपलस्य तु कृत्येषु प्रसमीक्ष्याधिक बलम् ।**
**क्षिप्रमन्ये प्रपद्यते क्रौंचस्य खमिव द्विजाः ॥**

अनेन महाबलवतोऽपि चापल्याद्विनाशो भवतीति सूचितम । तथा **चोद्योगे—**
चलचित्त मलात्मानमिन्द्रियाणां वशानुगम् । अर्थाः समतिवर्तन्ते हंसाःशुष्कसरो यथा ॥
इति । **आपद्धर्मेऽपि—**

आत्मनश्चपलो नास्ति कुतोऽन्येषा भविष्यति ।
तस्मात्सर्वाणि कार्याणि चपलो हन्त्यसंशयम् ॥ इति ।

**त्वयेदं महदारब्ध कार्यमप्रतिचिन्तितम् ।**
**दिष्ट्या त्वां नावधीद्रामो विषमिश्रमिवामिषम् ॥**

अनेन प्रबलविरोधिन. अविचारेण नाशो भवतीति सूचितम् । तथा च **प्राचीनाः—**
अनुचितकर्मारंभः स्वजनविरोधो बलीयसि स्पर्धा ।
प्रमदाजनविश्वासो मृत्योर्द्वाराणि चत्वारि ॥ इति ।

**तस्मात्त्वया समारब्धं कर्म ह्यप्रतिम परैः ।**
**अहं समीकरिष्यामि हत्वा शत्रूंस्तवानघ ॥**

अनेन राज्ञोऽतिक्रमो मन्त्रिणा समाधेय इति सूचितम् । **कामन्दके—**
तस्मिन्धर्मार्थयोर्व्यग्रे तथा चास्वस्थचेतसि । सर्वमेतदशेषेण मन्त्री सन्धातुमर्हति ॥ इति ।

**हत्वा तु रामं सहलक्ष्मणेन खादामि सर्वान् हरियूथमुख्यान् ।**
**रमस्व कामं पिब चाग्र्यवारुणीं कुरुष्व कार्याणि हितानि विज्वरः ॥**
**मया तु रामे गमिते यमक्षयं चिराय सीता वशगा भविष्यति ॥**

इति समाश्वासयामास ।

त्रयोदशे ॥

**रावणं क्रुद्धमालोक्य महापार्श्वो महाबलः ।**

**मुहूर्तमनुसंचिन्त्य प्राञ्जलिर्वाक्यमब्रवीत् ॥**
**यः खल्वपि वनं प्राप्य मृगव्यालसमाकुलम् ।**
**न पिबेन्मधु संप्राप्तं स नरो बालिशो भवेत् ॥**

अनेन प्रयासलब्धार्थस्य अनुपभोगो निन्दित उपभोगश्च प्रशस्त इति सूचितम् । तथा च **राजधर्मे**—

श्रमेण प्राप्तमपि राज्यमभुञ्जानं धर्मपुत्र प्रति भीम' ।

अधिरुह्य महावृक्षमपहृत्य ततो मधु । अप्राश्य मरणं गच्छेत्कर्मेद नस्तथोपमम् ॥ इति ।

**प्राचीनाः**- उपभोगे ।

सिद्धमन्नं फलं पक्वं नारीं प्रथमयौवनाम् । सुभाषितं च तांबूलं सद्यो गृह्णाति बुद्धिमान् ॥ इति ।

**बलात्कुक्कुटवृत्तेन वर्तयस्व महाबल ।**
**आक्रम्याक्रम्य सीतां वै भुंक्ष्व च रमस्व च ॥**

अत्र शास्त्रप्रतिषिद्धस्य अकामयमानस्त्रीगमनप्रतिपादनात् क्षुद्रामात्याः धर्मविरुद्ध-बोधनेन राजानं नाशयन्तीति सूचितम् । तत्राकामयानस्त्रीगमनं प्रतिषेधति **मनु**'—

प्रेष्यासु चैकभक्तासु रह प्रव्रजितासु च । योऽकामां दूषयेत्कन्या स सद्योवधमर्हति ॥ इति । **उद्योगे अम्बोपाख्यानेऽपि**—

को जातु परभावा हि नारीं व्यालीमिव स्थिताम् ।
वासयेत्स्वगृहे जानन् स्त्रीणा दोषान् महातपाः ॥ इति ।

**भीष्मं प्रत्यबावचनमपि**—

कथं मामन्यकामा त्वं राजन् शास्त्रमधीत्य वै ।
वामयेथा गृही भीष्म कौरवस्सन् विशेषतः ॥

मया साल्वपतिर्वीर मनसाभिवृत पतिः । न मामर्हसि धर्मज्ञ दातुं भ्रात्रेऽन्यमानसाम् ॥ इति । **माधवे व्याघ्रोपि**—

ब्राह्मणो ब्राह्मणी गच्छेदकामां यदि कामतः । कृच्छ्रचान्द्रायणे कुर्यादर्धमेव प्रमादतः ॥ इति ।

अकामास्त्रिय गच्छत' आमयोद्भवो **वाहटे**—

स्त्रीव्यवायनिवृत्तस्य सहसा भजतोऽथवा । दोषाध्युषितसकीर्णमलिनाणुरज पथाम् ॥
अन्ययोनिमनिच्छन्तीअगम्या नवसूतिकाम् । दूषितं स्पृशतस्तोयं रतांतेष्वपि नैव वा ॥
विवर्धयिषया तीव्रान् प्रलेपादीन् प्रयच्छतः । मुष्टिदन्तनखोत्पीडा विषवच्छूकपातनैः ।

वेगनिग्रहदीर्घातिस्वरस्पर्शातिघट्टनैः । दोषादुष्टगता गुह्य त्रयोविंशतिमामयान् ॥ इति ।

ग्राम्यधर्मे त्यजेन्नारीमनुत्ताना रजस्वलाम् । अप्रियामप्रियाचारां दुष्टसंकीर्णमेहनाम् ॥

अतिस्थूलां कृशा सूता गर्भिणीमन्ययोषितम् । वर्णिनीमन्ययोनिं च गुरुदेवनृपालयाम् ॥

चैत्यश्मशानायतनचत्वरांबुचतुष्पथाम् । पर्वण्यनगदिवसं शिरोहृदयताडनम् ॥

अत्याशतो धृतिक्षुब्धो दुस्थितांगः पिपासितः ।

बालो वृद्धोऽन्यवेगार्तः त्यजेद्रोगी च सङ्गमम् ॥ इति च

दौर्मन्त्र्याद्विनाशे च **प्राचीनाः—**

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिस्संगात्सुतो लालनात्

विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ।

ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयात्

मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ इति ।

**उपप्रदानं सान्त्वं वा भेदं वा कुशलैर्वृतम् ।**
**समतिक्रम्य दण्डेन सिद्धिमर्थेषु रोचय ॥**

अत्र उपायत्रयं परित्यज्य दण्डोपायादेव कार्यं साधनीयमिति नीतिशास्त्रप्रतिषिद्धार्थ-कथनात् क्षुद्राः नीतिविरुद्धकथनेन राजानं नाशयन्तीति सूचितम् । सामाद्युपाय संभवे दण्डं निषेधति **मनुः—**

साम्ना दानेन भेदेन समस्तैरुत वा पृथक् । विजेतु प्रयतेचारीन्न युध्येत कदाचन ॥

त्रयाणामप्युपायाना पूर्वोक्तानामसंभवे । तथा युद्ध्येत संयुक्तो विजयेन रिपून् यथा ॥

इति । **नीतिशास्त्रेऽपि—**

सामादिदण्डपर्यन्तो नयो दृष्टश्चतुर्विध । तेषां दण्डस्तु पापीयान् तस्मात्तं परिवर्जयेत् । इति ।

सामादिदण्डपर्यन्तं नयो दृष्टश्चतुर्विधः । संख्यामात्रं फलं तेषां सिद्धिस्साम्नि व्यवस्थिता ॥ इति । **राजधर्मेऽपि—**

सामादीनामुपायाना त्रयाणा विफले नये । विनयेन्नयसंपन्नो दण्डं दण्ड्येषु दण्डवत् ॥ इति ।

तदधुना सर्वानपि शत्रुवर्गान् समाक्रम्य पीत्वा च वरवारुणीं अभीष्टमविशंक्यैव त्वं साधय । कुंभकर्णमेघनादसहायस्य तव न भयस्थानं न किंचित्पश्यामीति ॥ अत्र अकार्ये प्रवृत्तस्य राज्ञः दोषोद्घाटनेन अकार्यान्निवृत्तिं प्रतिपादयतो विभीषणस्य वचनेन अनुद्धा-

त्यैव दोषं उन्मार्गप्रवृत्तस्य राजमतानुसारिणो महापार्श्वस्य वचनेन च उत्तममध्यमाधम-भेदेन मन्त्रिणः त्रिविधा उक्ताः । तेषु उत्तममन्त्रिणो विभीषणस्य मन्त्रमशृण्वतो रावणस्य विनाशदर्शनेन उत्तममन्त्रिवचनमतिक्रम्य अधममन्त्रिवचनश्रोता नश्यतीति सूचितम् । तथा चोद्योगे कृष्णः—

सतां मतिमतिक्रम्य योऽसता वर्तते मते । शोचन्ते व्यसने तस्य सुहृदो नचिरादिव ॥
मुख्यानमात्यानुत्सृज्य यो निहीनान्निषेवते । सुघोरामापदं प्राप्य नोत्तरं सोऽधिगच्छति ॥
इति ।

तदनु तद्वचनाकर्णनसन्तुष्टहृदयो दशवदनः पुंजिकस्थलाबलात्करण कुपितहृदयेन पितामहेन प्रयुक्तम् ।

**अद्य प्रभृति यामन्यां बलान्नारीं गमिष्यसि ।**
**तदा ते शतधा मूर्धा फलिष्यति न संशयः ॥**

इति शापं च संस्मृत्य नारोपये बलात्सीता वैदेहीं शयने शुभे । इत्यवदत् ।

चतुर्दशे ॥

**निशाचरेन्द्रस्य निशम्य वाक्यं स कुंभकर्णस्य च गर्जितानि ।**
**विभीषणो राक्षसराजमुख्यं उवाच वाक्यं हितमर्थयुक्तम् ॥**

अत्र दुर्मन्त्रिभि अनर्थं ग्राहितस्य राज्ञः अपृष्टेनापि सन्मन्त्रिणा असन्मार्गान्निवर्त-नाय तत्कालाप्रियमपि शुभोदर्कं वक्तव्यमिति सूचितम् । तथा च हरिवंशे—

वक्तव्य सर्वदा सद्भिरप्रियं चापि यद्धितम् । आनृण्यमेतदेवं स्यात्सद्भिरेवमुदाहृतम ॥
इति ।

कामं प्रियाणि राजानो वक्तव्या नात्र संशय. । प्राप्तकालं हि वक्तव्य हितमप्रियमित्युत ॥
इति च । कामन्दकेऽपि—

आपद्युन्मार्गगमने कार्यकालात्ययेषु च । अपृष्टोऽपि हितान्वेषी ब्रूयात्कल्याणभाषितम् ॥
प्रियं तथ्य च पथ्य च वदेद्धर्मार्थमेव च ॥ इति ।

**वृतो हि बाह्वन्तरभोगराशिः चिन्ताविषः सुस्मिततीक्ष्णदंष्ट्रः ।**
**पञ्चांगुली पञ्चशिरोतिकायः सीतामहाहिस्तव केन राजन् ॥**
**पुरा शरान् सूर्यमरीचिसन्निभान् सुवर्णपुङ्खान् सुदृढान्नृपात्मजः ।**
**सृजत्यमोघान् विशिखान् वधाय ते प्रदीयतां दाशरथाय मैथिली ॥**
**यावन्न लङ्कां समभिद्रवन्ति वलीमुखाः पर्वतकूटमात्राः ।**
**दंष्ट्रायुधाश्चैव नखायुधाश्च प्रदीयतां दाशरथाय मैथिली ॥**

**यावन्न गृह्णन्ति शिरांसि बाणा रामेरिता राक्षसपुङ्गवानाम् ।**
**वज्रोपमा वायुसमानवेगाः प्रदीयतां दाशरथाय मैथिली ॥**
**न कुम्भकर्णेन्द्रजितौ न राजंस्तथा महापार्श्वमहोदरौ च ।**
**निकुम्भकुम्भौ च तथातिकायः स्थातुं न शक्ता युधि राघवस्य ॥**
**जीवंस्तु रामस्य न मोक्ष्यसे त्वं गुप्तः सवित्राप्यथवा मरुद्भिः ।**
**न वासवस्यांकगतो न मृत्योर्नभो न पातालमनुप्रविष्टः ॥**

अनेन मन्त्री समये हित ब्रूयात् तत्पराङ्मुखश्चेत्तदा भावि दुःखभीत्या वा अनिष्टकृत्यान्निवर्तेतेति बुद्ध्या भाव्यनिष्टं निवेदयेदिति सूचितम् । अत एव हितवचनमश्रृण्वतो दुर्योधनस्य भीष्मद्रोणादिभिर्भाविदुःखं निवेदितमुद्योगे—

धृतराष्ट्रवचः श्रुत्वा भीष्मद्रोणौ समेत्य तौ । दुर्योधनमिदं वाक्यमूचतुः शासनातिगम् ॥
यावत्कृष्णावसन्नद्धौ यावत्तिष्ठति गाण्डिवम् । यावद्धौम्यो न सेनाग्नौ जुहोतीह द्विषद्बलम् ॥
यावन्न प्रेक्षते क्रुद्धः सेनां तव युधिष्ठिरः । ह्रीनिषेधो महेष्वासस्तावच्छाम्यतु वैशसम् ॥
यावन्न दृश्यते पार्थः स्वेष्वनीकेष्ववस्थितः । भीमसेनो महेष्वासस्तावच्छाम्यतु वैशसम् ॥
यावन्नचरते मार्गान् पृतनामभिहर्षयन् । यावन्न शातयत्याशु शिरांसि गजयोधिनाम् ॥
गदया वीरघातिन्या फलानीव वनस्पतेः । कालेन परिपक्वानि तावच्छाम्यतु वैशसम् ॥
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्श्वत. । विराटश्च शिखण्डी च शैशुपालिश्च दंशितः ॥
यावन्न प्रविशंत्येते नक्रा इव महार्णवम् । कृतास्त्राः क्षिप्रमस्यन्तस्तावच्छाम्यतु वैशसम् ॥
यावन्न सुकुमारेषु शरीरेषु महीक्षिताम् । गार्ध्रपत्राः पतंत्युग्रास्तावच्छाम्यतु वैशसम् ॥
चन्दनागरुदिग्धेषु हरिनिष्कधरेषु च । नोरस्तु यावद्योधाना महेष्वासैर्महेषवः ॥
कृतार्थैं क्षिप्रमस्यद्भिर्दूरपातिभिराशुगाः । अभिलक्ष्यैर्निपात्यते तावच्छाम्यतु वैशसम् ॥
यावन्न निशिता बाणा. शरीरेषु महीक्षिताम् । गृध्रपत्रा पतंत्युग्रास्तावच्छाम्यतु वैशसम् ॥

इति । **तत्रैव दुर्योधनं प्रति गांधार्याप्युक्तम्—**

ऐश्वर्यकामदुष्टात्मन् वृद्धाना शासनातिगम् । ऐश्वर्यजीवितं हित्वा पितरं हसि बालिश ॥
वर्धयन् दुर्हृदा प्रीतिं मां च शोकेन वर्धयन् । निहतो भीमसेनेन स्मर्ताऽसि वचनं पितुः ॥

इति ।

तदनु राजमतानुवर्तनेन पुनरनर्थमेव वदन्तं प्रहस्तं निर्भर्त्स्य विभीषण एवमवोचत् ।

**प्रहस्त राजा च महोदरश्च त्वं कुम्भकर्णश्च यथार्थजातम् ।**
**ब्रवीत राम प्रति तन्न शक्यं यथा गतिः स्वर्गमधर्मबुद्धेः ॥**

अत्र धर्मिष्ठस्य स्वर्गगतिर्दुर्लभेत्युक्तम् । तच्च प्रागुक्तम्—

**वधस्तु रामस्य मया त्वया वा प्रहस्त सर्वैरपि राक्षसैर्वा ।**

**कथं भवेदर्थविशारदस्य महार्णवं तर्तुमिवाप्लवस्य ॥**

**धर्मप्रधानस्य महारथस्य इक्ष्वाकुवंशप्रवरस्य राज्ञः ।**

**प्रहस्तदेवाश्च तथाविधस्य कृत्येषु शक्तस्य भवन्ति मूढाः ॥**

अनेन बलवान् धार्मिकः शत्रुभिरसाध्यो भवतीति सूचितम् । तथा च **कामन्दके**—

कुलोद्गतं सत्यमुदारविक्रमं स्थिरं कृतज्ञं स्मृतिमन्तमूर्जितम् ।

अतीव दातारमुपेतवत्सलं सुदुष्प्रसाध्यं प्रवदन्ति विद्विषम् ॥ इति ।

**तीक्ष्णा न तावत्तव कङ्कपत्रा दुरासदा राघवविप्रमुक्ताः ।**

**भित्वा शरीरं प्रविशन्ति बाणाः प्रहस्त तेनैव विकत्थसे त्वम् ॥**

अनेन असन्मार्गोपदेष्टा दुर्मंत्री विविधभविष्यदापन्निवेदनेन भीषयितव्य इति सूचितम् ।

अत एव **कर्णपर्वणि** कर्णं प्रति शल्यवचनम् ।

यदा त्वां वै फाल्गुनवेगनुन्ना ज्याचोदिता हस्तवता विसृष्टाः ।

अन्वेतारः कंकपत्रा शिताग्रास्तदा तप्स्यस्यर्जुनस्यात्मयोगात् ॥

यदा दिव्यं धनुरादाय पार्थं प्रतापयन्पृतना सव्यसाची ।

त्वमर्दयिष्यन्निशितैः पृषत्कैस्तदा पश्चात्तप्स्यसे सूतपुत्र ॥

बालश्चन्द्रं मातुरङ्के शयानो यथा कश्चित्प्रार्थयतेऽपहर्तुम् ।

तद्वन्मन्ये द्योतमाने रथस्थं सम्प्रार्थयस्यर्जुनं जेतुमद्य ॥ इति ।

**अयं हि राजा व्यसनाभिभूतो मित्रैरमित्रप्रतिमैर्भवद्भिः ।**

**अन्वास्यते राक्षसनाशनार्थे तीक्ष्णः प्रकृत्या ह्यसमीक्ष्यकारी ॥**

अनेन उन्मत्तो राजा वञ्चकैर्दुष्टमन्त्रिभिः परिवृतो नश्यतीत्युक्तम् ॥ तथा **चोद्योगे**—

नृशंसः पापभूयिष्ठः क्षुद्रकर्मसहायवान् । पापैः सहायैः संहत्य पापं कर्म चिकीर्षसि ॥

तमिमं पुण्डरीकाक्षमप्रधृष्य दुरासदम् । पापैः सहायैः संहत्य निगृहीतुं त्वमिच्छसि ॥

इति । **कामन्दकेऽपि**—

निरुन्धानास्सतां मार्गं भक्षयन्ति महीपतिम् ।

क्रूरात्मानस्तु सचिवास्तस्मात्सुसचिवो भवेत् ॥ इति ।

**अनन्तभोगेन सहस्रमूर्ध्नि नागेन भीमेन महाबलेन ।**

**बलात्परिक्षिप्तमिम भवन्तो राजानमुत्क्षिप्य विमोचयन्तु ॥**

अनेन उन्मार्गः आपद्गतो राजा सन्मन्त्रिभिर्मोचनीय इति सूचितम् ॥ तथा च **कामन्दके**-

नृपस्य ते हि सुहृदस्त एव गुरवो मताः । य एनमुत्पथगतं वारयन्ति निवारिताः ॥

इति । **भारतेऽपि**—

आपद्गतं कञ्चन यो विमोक्षेत्सबान्धवः स्नेहयुक्तः सुहृच्च ।
एवं पुराणे ऋषयो वदन्ति धर्मस्सदा सद्भिरनुष्ठितश्च ॥ इति ।

**यावद्धि केशग्रहणाद्भवद्भिः समेत्य सर्वैः परिपूर्णकामैः ।**
**निगृह्य राजा परिरक्षितव्यो भूतैर्यथा भीमबलैर्गृहीतः ॥**

अत्र भूतगृहीतो जनः केशग्रहणादिना सम्यक् शिक्षयित्वा यथा तद्विमोचनेन रक्षणीयः तथा अनर्थपर्यवसायि दुराग्रहग्रस्तो राजाऽपि केशग्रहादिना अवमत्यापि सन्मार्गे प्रवर्तनीयः । **कामन्दके**—

आकेशग्रहणाद्वाच्य इति पूर्वमुदाहृतम् ॥

अथवा केशग्रहणादिना राजकृतावमानमपि सोढ्वा राजा रक्षितव्य इति सूचितम्—

अत एव विराटराजेन अक्षताडितस्तन्मन्त्रिभूतो युधिष्ठिरः रुधिरस्य भूपतनं परिहरन् तद्धितमेव कृतवानिति प्रतिपादितं विराटपर्वणि— चिरं क्षातमिदं राजन्नमन्युर्विद्यते मम ।

यदि ह्येतत्पतेद्भूमौ रुधिरं मम नस्ततः । सराष्ट्रस्त्वं महाराजन् विनश्येथा न संशयः । न दूषयामि ते राजन् यद्वै हन्या अदूषकम् ॥ इति ।

अथवा आङ् मर्यादायां राज्ञः शत्रुकृतकेशग्रहणादिरूपावधिर्यावद्भवेत् तावत्पर्यन्तं हितोपदेशः कर्तव्य इति सूचितम् । अत एव भीष्मद्रोणादीनां हननानन्तरमपि दुर्योधनस्य साक्षादवमते. प्राक् अश्वत्थाम्ना हितोपदेशः कृतः । **कर्णपर्वणि**—

प्रसीद दुर्योधन शाम्य पाण्डवैरलं विरोधेन धिगस्तु विग्रहम् ।
हतो गुरुर्ब्रह्मसमो महास्त्रः तथैव भीष्मप्रमुखा महारथाः ॥
न चेद्वचः श्रोष्यसि मे नराधिप ध्रुवं प्रतप्ताऽसि हतोऽरिभिर्युधि ॥ इति ।

**इदं पुरस्यास्य सराक्षसस्य राज्ञश्च पथ्यं च सुहृज्जनस्य ।**
**सम्यग्घि वाक्यं स्वमतं ब्रवीमि नरेन्द्रपुत्राय ददाम पत्नीम् ॥**

**परस्य वीर्यं स्वबलं च बुध्वा स्थानं क्षयं चैव तथैव वृद्धिम् ।**
**तथा स्वपक्षेऽप्यनुदृश्य बुद्ध्या वदेत्क्षमं स्वामिहितं च मन्त्री ॥**

पञ्चदशे ॥

ततः अस्मत्कुलानुचितं भीरुजनसेवितं मार्गमासाद्य ज्ञातपराक्रमोऽपि भवन्तं भीषयतेऽद्य विभीषणः तदहमेव सपरिवारं राघवं जेष्यामीति सगर्वं रावणं प्रति वदन्तं मेघनादं विभीषण एवमुवाच ।

न तात मन्त्रे तव निश्चयोऽस्ति बालस्त्वमद्याप्यविपक्वबुद्धि. ।
तस्मात्त्वया ह्यात्मविनाशनाय वचोऽर्थहीनं बहुविप्रलप्तम् ॥
त्वमेव वध्यश्च सुदुर्मतिश्च स चापि वध्यो य इहानयत् त्वाम् ।
बालं दृढं साहसिकं च योऽद्य प्रावेशयन्मन्त्रकृतां समीपे ॥
मूढः प्रगल्भोऽविनयोपपन्नस्तीक्ष्णस्वभावोऽल्पमतिर्दुरात्मा ।
मूर्खस्त्वमत्यर्थंसुदुर्मतिश्च त्वमिन्द्रजिद्बालतया ब्रवीषि ॥
पुत्रप्रवादेन तु रावणस्य त्वमिन्द्रजिन्मित्रमुखोऽसि शत्रुः ।
यस्येदृशं राघवतो विनाशं निशम्य मोहादनुमन्यसे त्वम् ॥

अत्र बाल्यसाहसादि दोष प्रयुक्तो मन्त्र समये आगत्य चापल्यात्स्वयमपि किंचिद्वदन् वध्य । तादृशं दुष्टममात्य मन्त्रे य॰ प्रवेशयति सोऽपि वध्य इत्युक्त्या बाल्य साहसादिदोषप्रयुक्तस्य मन्त्रकाले न प्रवेश॰ कार्यं स्वकीय मन्त्रोऽपि तच्छ्रवण-पथं यथा न प्राप्नोति तदा गोपनीयस्तदीयमन्त्रश्रवणे सपरिवारो राजा नश्यतीति च सूचितम् ।

तत्र मन्त्रसमये वर्ज्या **मानवे—**

क्रूरं व्यसनिनं स्तब्धमप्रगल्भममानुषम् । मूर्खमन्यायवृत्तं च मन्त्रकार्ये विवर्जयेत् ॥
अलस दुर्मुखं स्तब्धं बालमप्रियवादिनम् । असन्तुष्टमभक्तं च मन्त्रेष्वेतान् विवर्जयेत् ॥
जडांधमूकबधिरान् तैर्यग्योनीन् वयोऽधिकान् ।
स्त्रीम्लेच्छव्यथितव्यग्रान् मन्त्रकालेऽवसेधयेत् ॥

निदन्त्यवमता मन्त्रं तिर्यग्योना स्तथैव च । स्त्रियश्चैव विशेषेण (तस्मात्तत्रादृतो) [तत्त-त्रत्यादृतो] भवेत् ॥ इति । **आश्रमवासिकेऽपि—**

वानराः पक्षिणश्चैव ये मनुष्यानुसारिणः । सर्वमन्त्रग्रहे वर्ज्या ये चापि जडपङ्गव. ॥ इति । **राजधर्मे—**

न वामना कुब्जकृशा न खञ्जा नांधो जडः स्त्रीच नपुंसकं च ।
न चात्र तिर्यङ् न पुरो न पश्चान्नोर्ध्वं च नाधः प्रचरेत कश्चित् ॥
अनृजुस्त्वनुरक्तोऽपि सम्पन्नश्चेतरैर्गुणैः । राज्ञः प्रज्ञानियुक्तोऽपि न मन्त्रं श्रोतुमर्हति ॥
यो मित्रैस्सह संबधो न पौरान् बहुमन्यते । असुहृत्तादृशो राज्ञो न मन्त्रं श्रोतुमर्हति ॥
अविद्वानशुचिः स्तब्धः शत्रुसेवी विकत्थनः ।
अशुद्धः क्रोधनो लुब्धो न मन्त्रं श्रोतुमर्हति ॥
विधर्मतो विप्रकृतः पिता यस्याभवत्पुरा ।

सत्कृतः स्थापितस्सोऽपि न मन्त्रं श्रोतुमर्हति ॥

आगंतुश्चानुरक्तोऽपि काममस्तु बहुश्रुतः । सत्कृत सविभक्तोऽपि न मन्त्रं श्रोतुमर्हति ॥

यस्तु तुल्येन कार्येण सकृदावारितोऽपि सन् ।

पुनरन्यैर्गुणैर्युक्तो न मन्त्रं श्रोतुमर्हति ॥ इति ।

तादृशस्य मतानुसारेण नश्यतीत्यत्र । उद्योगे विदुरः-

यत्र स्त्री यत्र कितवो बालो यत्रानुशासिता । मज्जन्ति तेऽवशा राजन्नद्यामश्मप्लवा इव ॥ इति ।

षोडशे ॥

इति विभीषणभाषणमाकर्ण्य दशवदन परुषतरमेवमभाषत ।

> वसेत्सह सपत्नेन क्रुद्धेनाशीविषेण वा ।
> न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ॥

अनेन मित्रवेषधारिणा शत्रुणा सह स्नेहो न कर्तव्य इति सूचितम् ।

तथा चापद्धर्मे-

यो मित्रैस्सह संबद्धो नात्मीयान् बहुमन्यते । शत्रुर्मित्रमुखो यश्च जिह्मप्रेक्षी विलोचनः ॥

कृतघ्नश्चाधमो लोके न सन्धेयः कदाचन ॥ इति ।

> जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस ।
> हृष्यंति व्यसनेष्वेते ज्ञातीनां ज्ञातयस्सदा ॥
> प्रधानं साधकं वैद्यं धर्मशीलं च राक्षस ।
> ज्ञातयो ह्यवमन्यंते शूरं परिभवंति च ॥
> नित्यमन्योन्यसंहृष्टा व्यसनेष्वाततायिनः ।
> प्रच्छन्नहृदया घोरा ज्ञातयस्तु भयावहाः ॥
> श्रूयंते हस्तिभिर्गीता श्लोकाः पद्मवने क्वचित् ।
> पाशहस्तान् नरान् दृष्ट्वा शृणु तान् गदतो मम ॥
> नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः ।
> घोरा स्वार्थप्रयुक्ताश्च ज्ञातयो नो भयावहा ॥
> उपायमेते वक्ष्यंति ग्रहणे नात्र संशयः ।
> कृत्स्नाद्भयाद्ज्ञातिभयमुत्कृष्टं विदितं च न' ॥

अत्र नूतनगजग्रहणाय प्रयुक्तेषु विनीतगज अग्निशस्त्रपाशेषु मध्ये मर्मज्ञो विनीतगज एवातिभयावह इत्युक्त्या मर्मज्ञस्य ज्ञातेर्भीतिर्दुष्परिहरेति सूचितम् । तथा च पाद्मे-

ज्ञातिभ्यश्चैव बुध्येथा मृत्योरिव भयं सदा । उपराजेव राजार्द्धिं ज्ञातिर्न सहते सदा ॥
ऋजो मृदो वदान्यस्य ह्रीमंतः सत्यवादिन ।
नान्यो ज्ञातेर्महाबाहो विनाशमभिनन्दति ॥ इति । **कामन्दकेऽपि—**
विषं विषेण व्यथते वज्रं वज्रेण भिद्यते । गजेन्द्रो दृष्टसारेण गजेन्द्रेणैव बध्यते ॥
मत्स्यो मत्स्यं समादत्ते ज्ञातिं ज्ञातिरसंशयः ॥ इति ।

**विद्यते गोषु संपन्नं विद्यते ब्राह्मणे दमः ।**
**विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् ॥**

अनेन गवादीना समृद्धिकरत्ववत् ज्ञातीनां भयंकरत्वं स्वाभाविकमित्युक्तम् ॥
तत्र गोषु सपत्तिरानुशासनिके—
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ।
गावो लक्ष्म्या स्तथा मूलं गोषु दत्तं न नश्यति ॥
अन्न हि परम गावो देवाना परमं हविः । स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ॥
सायं प्रातश्च सततं होमकाले महाद्युते । गावो ददति वै होम्यं ऋषिभ्यः पुरुषर्षभ ॥
इति । ब्राह्मणे दम इत्येतद्गीतायाम्—
शमो दमस्तप शौचं क्षातिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥
इति । **सौप्तिकेऽपि—**
ब्राह्मणे दममग्र्यं तु क्षत्रिये तेज उत्तमम् । दाक्ष्यं वैश्ये च शूद्रे च सर्ववर्णानुकूलता ॥
अदातो ब्राह्मणोऽसाधु र्निस्तेजाः क्षत्रियोऽधम ।
अदक्षो निन्द्यते वैश्य शूद्रस्तु प्रतिकूलवान् ॥ इति । **राजधर्मेऽपि—**
दमो यज्ञः क्षमा विद्या भैक्ष्यमिन्द्रियसंयमः । ध्यानमेकांतशीलत्वं तुष्टिर्दानं च शक्तितः ॥
ब्राह्मणाना महाराज चेष्टा संसिद्धिकारिका ॥ इति। स्त्रीषु चापल्य **अनुशासिके—**
चलस्वभावा दुस्सेव्या दुर्ग्राह्या भावतस्तथा ।
प्राज्ञस्य पुरुषस्येह यथा वाचस्तथा स्त्रिय ॥ इति ।
ज्ञातितो भयमित्येतच्च **राजधर्मे—**
ज्ञातिभ्यश्चैव बुध्येथा मृत्योरिव भयं सदा ॥ इति । **विदुरनीतावपि—**
सभाव्यं गोषु सपन्नं सभाव्यं ब्राह्मणे तपः ।
संभाव्य चापल स्त्रीषु संभाव्य ज्ञातितो भयम् ॥ इति ।

**तव नेष्टमिदं सौम्य यदह्व लोकसत्कृतः ।**
**ऐश्वर्यमभिजातश्च रिपूणां मूर्ध्नि च स्थितः ॥**

यथा पुष्करपर्णेषु पतितास्तोयबिन्दवः ।
न श्लेषमुपगच्छन्ति तथाऽनार्येषु सङ्गतम् ॥
यथा पूर्वं गजः स्नात्वा गृह्य हस्तेन वै रजः ।
दूषयत्यात्मनो देहं तथाऽनार्येषु सङ्गतम् ॥
यथा मधुकरस्तर्षाद्रसं विंदन्न सज्जते ।
तथा त्वमपि तत्रैव तथाऽनार्येषु सौहृदम् ॥
यथा शरदि मेघानां सिंचतामपि गर्जताम् ।
नाभवत्यम्बुसंक्लेदस्तथाऽनार्येषु सङ्गतम् ॥

अत्र पुष्करपर्ण गज मधुकर शरन्मेघदृष्टान्तेन स्नेहानिष्पत्ति तद्दूषण कृतघ्नतानिष्फलत्वादि प्रतिपादनात् दुष्टेषु स्नेहो न भवत्येव भवन्नपि स्नेहोऽस्थिरः सत्यपि स्नेहे कृतघ्नतया प्रीतिं न करोति प्रीत्या संभाषणमात्रसत्त्वेऽपि वा फलपर्यवसानं न भवत्येवेति सूचितम् । तथा च आपद्धर्मे—

कुमित्रे सङ्गतं नास्ति नित्यमस्थिरसौहृदे ॥ इति— विष्णुपुराणेऽपि—

न बबन्धावरे स्थैर्यं विद्युदत्यतचञ्चला । मैत्रीव प्रवरे पुंसि दुर्जनेन प्रचोदिता ॥ इति ।

उद्योगे विदुरः—

निवर्तमाने सौहार्दे प्रीतिर्नीचे प्रणश्यति। या चैव परनिर्वृत्ति सौहार्दे चैव यत्सुखम् ॥
यतते चापवादाय यत्नमातिष्ठते क्षये। स्वल्पेऽप्यपकृते मोहान्न शान्तिमुपगच्छति ॥
तादृशैः सङ्गतं नीचैर्नृशंसैरकृतात्मभिः । निशम्य निपुणं बुद्ध्या विद्वान् दूराद्विवर्जयेत् ॥

इति । प्राचीना अपि—

आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥ इति ।

सरलयोः सखि सख्यमुदाहृतं कुटिलयोर्घटनैव न जायते ।
यदि भवेत्सरलेन खलेन वा न चिरमस्ति धनुश्शरयोरिव ॥ इति च ।

अन्यस्त्वेवं विधं ब्रूयाद्वाक्यमेतन्निशाचर ।
अस्मिन् मुहूर्ते न भवेत् त्वां तु धिक्कुलपांसनम् ॥

अत्र अन्यस्त्वेवं ब्रुवन् वध्य एवं त्वं तु भ्रातेति धिगिति त्वां निंदामीत्युक्त्या ज्ञातीनामवध्यत्वमुक्तम । तथा चोद्योगे विदुरः—

अवध्या ब्राह्मणा गावो ज्ञातयश्शिशवः स्त्रियः ।
येषा चान्नानि भुंजीत ये च स्युश्शरणागताः ॥ इति ।

**इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः ।**
**उत्पपात गदापाणिश्चतुर्भिस्सह राक्षसैः ॥**
**अब्रवीच्च तदा वाक्यं जितक्रोधो विभीषणः ।**
**अन्तरिक्षगतः श्रीमान् भ्रातरं राक्षसाधिपम् ॥**
**स त्वं भ्राताऽसि मे राजन् ब्रूहि मां यद्यदिच्छसि ।**
**ज्येष्ठो मान्यः पितृसमो न च धर्मपथे स्थितः ॥**

अनेन उन्मार्गगामी ज्येष्ठभ्रात्रादिभिरुपालब्धोऽपि न प्रतिवदेत्तेषु क्षमामेव कुर्यादिति सूचितम् । तथाच **कामन्दके**—

पुत्रान् भ्रातॄंश्च बन्धूंश्च सामार्थेनैव साधयेत् ।
साम तेषु प्रयुंजीत दैवात्प्रस्खलितेष्वपि ॥ इति

**इदं तु परुषं वाक्यं न क्षमाम्यनृतं तव ।**

अनेन प्रभुहितं वदन्नमात्यस्तेजस्वी अज्ञानात्प्रभुकृतमवमानं वाक्पारुष्यं च न सहत इति सूचितम् । तथा च **कामन्दके**—

कुलीनान्नावमन्येत सम्यग्वृत्तमनस्विनः । त्यजन्ते तेऽवमन्तारं घ्नन्ति वा मानहेतवे ॥
गौरवेण परित्यक्तं निस्नेहं परिवर्जयेत् । सोदर्यं भ्रातरमपि किमुतान्यं पृथग्जनम् ॥
वाक्पारुष्यविषये **कामन्दके**—

वाक्पारुष्यं परं लोके उद्वेजनमनर्थकम् । न कुर्यात् प्रियया वाचा प्रकुर्याज्जगदात्मसात् ॥
हृदये वागसिस्तीक्ष्णो मर्मच्छेदी पतन्मुहुः । तेजस्विनो दीपयति स दीप्तो याति वैरताम्
इति ।

**सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।**
**अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥**

अनेन राज्ञां तत्काले अप्रियस्य उदर्के हितस्योपदेष्टा मन्त्री तद्वचनश्रोता राजा च दुर्लभ इति सूचितम् । तथा च **सभापर्वणि**—

लभ्यते खलु पापीयान् नरः सुप्रियवागिह । अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥
इति । **उद्योगेऽपि**—

यस्तु धर्मपरश्च स्याद्धित्वा भर्तुः प्रियाप्रिये । अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥
इति ।

**बद्धं कालस्य पाशेन सर्वभूतापहारिणा ।**
**न नश्यन्तमुपेक्षेयं प्रदीप्तं शरणं यथा ॥**

**दीप्तपावकसंकाशैः शितैः कांचनभूषणैः ।**
**न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः ॥**

अनेन दुर्बुद्ध्या आपन्नो राजा नोपेक्षणीय इति सूचितम् । तथा च **कामन्दके**—

राजानं ये ह्युपेक्षन्ते सज्जमानं विकर्मसु । ते गच्छंत्यकृतात्मानः सह तेन पराभवम् ॥

इति ।

**शूराश्च बलवंतश्च कृतास्त्राश्च रणाजिरे ।**
**कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥**

अनेन सकलदृष्टसाधनसंपत्तिरपि दैवहतस्य व्यर्था भवतीति सूचितम् ॥

तथा च **द्रोणपर्वणि**—

निकृत्या वंचिताः पार्था विषयोगैश्च भारत । दग्धा जातुगृहे चैव द्यूतेन च पराजिताः ॥
राजनीतिं समाश्रित्य प्रहिताश्चैव काननम् । यत्नेन च कृतं तत्तत् दैवेन विनिपातितम् ॥
बहूनि तव सैन्यानि योधाश्च बहवस्तव । न तथा पाण्डुपुत्राणामेवं युद्धमवर्तत ॥
तैरल्पैर्बहवो यूयं क्षयं नीता. प्रहारिणः । शके दैवस्य तत्कर्म पौरुषं येन नाशितम् ॥
दैवोपसृष्टः पुरुषो यत्कर्म कुरुते नृप । कृतं कृतं हि तत्तस्य दैवेन विनिपात्यते ॥

इति । **प्राचीना** अपि—

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ इति । **अन्यत्रापि**—

नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुरास्सैनिकाः
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावतो वाहनम् ।
इत्याश्चर्यबलान्वितोऽपि बलभिद्भग्न परैस्संगरे
तद्व्यक्तं न तु दैवमेव शरणं धिग्धिग्वृथा पौरुषम् ॥ इति ।

**तन्मर्षयतु यच्चोक्तं गुरुत्वाद्धितमिच्छता ।**

अनेन क्रुद्धो गुरुः प्रसादनीय इति सूचितम् । तथा **चानुशासनिके**—

गुरूणा चैव निर्बन्धो न कर्तव्यः कदाचन ।
अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधिष्ठिर ॥ इति ।

**आत्मान सर्वदा रक्ष पुरीं चेमां सरक्षसाम् ।**
**स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥**

अनेन उत्पथं प्रतिपन्नो गुरुः स्वस्मिन् निरपराधे अतिशंकते यः स परित्याज्य इति सूचितम् । तथा च **मनुः**—

उत्पथं प्रतिपन्नस्य परित्यागो विधीयते इति ।

**निवार्यमाणस्य मया हितैषिणा न रोचतैते वचनं निशाचर ।**
**परेतकल्पा हि गतायुषो नरा हितं न गृह्णंति सुहृद्भिरीरितम् ॥**

अनेन मृत्युगृहीताना हितवचनं न रोचत इत्युक्तम् ।
तथा **चोद्योगे** कर्णं प्रति कृष्णः—

उपस्थितविनाशेयं नूनमद्य वसुन्धरा । तथा हि मे वचः कर्ण नोपैति हृदयं तव ॥
सर्वेषा तात भूतानां विनाशे समुपस्थिते ।
अनयो नयसंकाशो हृदयान्नापसर्पति ॥ इति ।

**सप्तदशे** ॥

**इत्युक्त्वा परुष वाक्यं रावणं रावणानुजः ।**
**आजगाम मुहूर्तेन यत्र रामस्सलक्ष्मणः ॥**

अत्र विभीषणः रावणं परित्यज्य तच्छत्रुं रामं प्रत्यागत इति प्रतिपादितम् । तदयुक्तम् ।
स्वामिनः ज्येष्ठभ्रातु पोषकस्य आपदि परित्यागे दोषश्रवणात्, अभियुक्ताचार विरोधाच्च । तथाहि स्वामिपरित्यागे दोषः । **कामन्दके**—

निर्गुणं ह्यपि भर्तारमापत्सु न परित्यजेत् । ततः परतरो नास्ति य आपत्सूपतिष्ठते ॥ इति ।

ज्येष्ठभ्रातुः परित्यागविषये **माधवीये**—

ज्येष्ठं पितृसमं चापि भ्रातरं योऽवमन्यते । सोऽपि मृत्युमवाप्नोति क्रौंचयोनौ प्रजायते ॥
त्यागिनो बांधवानां च त्यागिनश्शरणार्थिनाम् ।
अमेध्ये क्रुमयस्सर्वे मृगव्याधा भवन्ति च ॥ इति । पोषकपरित्यागे दोषश्च **शांतिपर्वणि**—

कर्णवाक्यानुवादके युधिष्ठिरवचने । न हि शक्ष्यामि तं त्यक्तुं दुर्योधनमहं रणे ।
अनार्यत्वं नृशंसत्वं कृतघ्नत्वं च मे भवेत् ॥ इति—
अपरित्यागे भीष्मप्रभृतीनामाचारोऽपि । **भीष्मपर्वणि**—

अर्थस्य पुरुषो दासो नार्थो दासोऽस्ति कस्यचित् ।
इति सत्य महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥ इति । **उद्योगे कर्णवचनेऽपि**—
न पृथिव्या सकलया न सुवर्णस्य राशिभिः । हर्षाद्भयाद्वा गोविन्द मिथ्याकर्तुं तदुत्सहे ॥
धृतराष्ट्रकुले कृष्ण दुर्योधनसमाश्रयात् । मया त्रयोदश समा भुक्तं राज्यमकण्टकम् ॥

इष्टं च बहुभिर्यज्ञैः सह सूतैर्मया कृता । वधाद्बंधाद्भयाच्चापि लोभाद्वापि जनार्दन ।
अनृतं नोत्सहे कर्तुं धार्तराष्ट्रस्य माधव । त्यक्तप्राणं हि मा विद्धि दुर्योधनहितैषिणम् ॥
इति । **भीष्मपर्वण्यपि—**

न विप्रियं करिष्यामि धार्तराष्ट्रस्य माधव । त्यक्तप्राणं हि मा विद्धि दुर्योधनहितैषिणम् ॥
इति ॥

शास्त्रनिन्दितकृतघ्नस्य दोषापत्त्या च परित्यागोऽनुचितः । कृतघ्नस्य निन्दा च । **द्रोणपर्वणि—** कृष्णं प्रति युधिष्ठिरवचने । तत्कृतस्य कृतज्ञाश्च मित्राणा न भवन्ति ये ।
तन्मृतानपि क्रव्यादाः कृतघ्नन्नोपभुञ्जते ॥

विदिता मे महाबाहो धर्माणां परमागतिः । ब्रह्महत्याफलं तस्य यः कृतं नावबुद्ध्यते ॥
गोघ्ने चैव सुरापेच चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भि. कृतघ्ने नास्ति निष्कृतिः ॥ इति । **लुब्धकपोतीयेऽपि—**

कुत कृतघ्नस्य सुखं कुतः स्वस्ति कुतो धनम् ।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥ इति । अपि च,

इत्यनेन रावणवधेऽपि प्रवृत्त इत्यवगम्यते तदयुक्तं तस्य निषिद्धत्वात् । तथा **चोद्योगे—**

अवध्या ब्राह्मणा गावो ज्ञातयः शिशवः स्त्रिय ।
येषा चान्नानि भुंजीत येच स्युश्शरणागताः ॥ इति । **गारुडेऽपि-**

गुरुमित्रद्रुहः पापा ये च स्वामिद्रुहो जना. ।
द्विजशिष्टद्रुहश्चैव कृतघ्ना नास्तिकास्तथा ॥
अमेध्ये कृमयस्सर्वे मृगव्याधा भवन्ति च । उरोरोगगणोपेता जायन्ते जंबुका जले ॥
इति—

तस्माज्ज्येष्ठभ्रातुः पोषकस्य स्वामिनः आपदि परित्यागस्तद्वधे च व्यापार धार्मिकस्य विभीषणस्य अनुपपन्न एवेति चेत्, उच्यते— सत्यमुक्तरीत्या दोषास्सभवन्ति । तथापि राज्ञा अङ्गीकृत्यापि तान् दोषान् स्वधर्मपरिपालनाय राज्यमवश्य सपादनीयमेव—

तथाच **आरण्यके—** धर्मपुत्रं प्रति भीष्मः—

स्वधर्माद्धि मनुष्याणा चलनं न प्रशस्यते । धर्ममूलं जगद्राजन् नान्यद्धर्माद्विशिष्यते ॥
अनुबुध्यस्व राजेन्द्र वेत्थ धर्मान् सनातनान् । क्रूरकर्माभिजातोऽसि यस्मादुद्विजते जनः ॥
प्रजापालनसंभूतं फलं तव न गर्हितम् । एष ते विहितो राजन् धात्रा धर्मस्सनातन. ॥

तस्मादपचितः पार्थ लोके हास्यं गमिष्यसि । स्वधर्माद्धि मनुष्याणां चलनं न प्रशस्यते ॥
एवमेतन्मनुष्येन्द्र धर्मं त्यक्त्वाऽल्पकं नरः । बृहन्त धर्ममाप्नोति सबुद्ध इति निश्चितम् ॥
न हि केवलधर्मात्मा पृथिवीं जातु कश्चन । पार्थिवो व्यजयद्राजन्न भूतिं न पुन श्रियम्
जिह्वां दत्वा बहूना हि लुब्धाना क्षुब्धचेतसाम् । निकृत्या लभते राज्यमाहारमिव शल्यक
भ्रातर पूर्वजाताश्च सुसंवृद्धाश्च सर्वश । निकृत्या निर्जिता देवैरसुराः पार्थिवर्षभ ॥ इति ।
तस्मात्प्रसक्तं पापमङ्गीकृत्य राज्याशया विभीषणागमनं युक्तम् ।

ननु विभीषणः रावण परित्यज्य राज्याशयैव समागत इति कथमवगत इति चेत् उच्यते ।

पितृपैतामहं राज्य कस्य नावर्तयेन्मन. । इति रामभद्रवचनपर्यालोचनया धार्मिकेऽपि भरते राज्यलोभशंकावगमेन राक्षसजातीये विभीषणे राज्यलोभसंभवात् । पराभिप्रायाभिज्ञाने कुशलाना श्रीरामहनुमत्प्रभृतीना वचनात् साक्षाद्विभीषणवचनाच्च तस्य राज्याऽशयैवागमनमित्यवगम्यते । तथा हि रामवचनम्—

न वयं तत्कुलीनाश्च राज्यकाङ्क्षी च राक्षस । पण्डिता हि भविष्यन्ति तस्माद्ग्राह्यो विभीषण: ॥ इति हनुमद्वाक्येऽपि–

वालिनश्च वध श्रुत्वा सुग्रीवं चाभिषेचितम् । राज्यं प्रार्थयमानश्च बुद्धिपूर्वमिहागतः ॥
साक्षाद्विभीषणवाक्येन राज्याशावगमोऽपि—
भवद्गतं च मे राज्यं जीवितं च सुखानि च ॥ इति । नागपाशप्रकरणेऽपि—
ययोर्वीर्यमुपाश्रित्य प्रतिष्ठा काङ्क्षिता मया । तावुभौ देहनाशाय प्रसुप्तौ पुरुषर्षभौ ।
जीवन्नद्य विपन्नोस्मि नष्टराज्यमनोरथः । इति ।

विभीषणं प्रति सुग्रीववचनेऽपि— राज्यं प्राप्स्यसि धर्मज्ञ लङ्कायां नात्र संशयः । इति । रामस्य प्रतिज्ञावाक्येऽपि—

अहं हत्वा दशग्रीवं सप्रहस्तं सबाधवम् । राजानं त्वा करिष्यामि सत्यमेतद्ब्रवीमि ते ॥ इति । नन्वेवमपि ।

किं मे धर्माद्विहीनस्य राजधर्मः करिष्यति । इति । भरतवचनेन राज्यापेक्षया ज्येष्ठभ्रात्रनुसरणस्यैवावश्यकत्वावगमेन तत्परित्यज्य धार्मिको विभीषणः तच्छत्रु रामं कथमाश्रितवान् धार्मिकत्वं च विभीषणस्य उत्तरकाण्डे— विभीषणस्तु धर्मात्मा प्रोवाच प्रणतो वचः । परमापद्गतस्यापि धर्मे मम मतिर्भवेत् ॥

या या मे जायते बुद्धिर्येषु तेष्वाश्रमेष्विह । सा सा भवतु धर्मिष्ठा तं तं धर्मं च पालये ॥
एवं मे परमोदारो वरः परमको मतः । न हि धर्मानुरक्तानां लोके किञ्चित्सुदुर्लभम् ॥

पुन· प्रजापतिः प्रीतो विभीषणमुवाच ह । धर्मिष्ठस्त्वं यथावत्स तथा चैतद्भविष्यति ॥

यस्य ते राक्षसे योनौ जातस्यामित्रकर्शन। नाधर्मे जायतेबुद्धिरमरत्वं ददामिते॥ इति।
तथा कैकसीं स्वभार्यां प्रति विश्रवसो वचने—

अथाब्रवीन्मुनिस्तत्र पश्चिमो यस्तवात्मजः। मम वंशानुरूपश्च धर्मात्मा च भविष्यति ॥
इति ।

विभीषणस्तु धर्मात्मा कैकस्याः पश्चिमस्सुतः ॥ इति च ।

तथा च धर्मिष्ठो विभीषणः ज्येष्ठभ्रात्रनुसरणरूपं धर्मं कथं परित्यक्तवानितिचेदुच्यते—
क्षत्रियाणा धर्मो द्विविधः। मुख्यो गौणश्चेति। तत्र गुर्वादिनिरोधे राज्यलाभं परित्यज्य
गुरोराज्ञापरिपालनादिना सपाद्यो धर्मो मुख्यः। गुर्वादिनिग्रहेण राज्यं संपाद्य प्रजापालना-
दिना संपाद्यो धर्मो गौण ।

आद्यो मुख्यधर्मस्तु श्रीरामेण भरतेन चानुष्ठित· । अत एव तादृशं मुख्यधर्मानुष्ठान
अति दुष्करं कैश्चिदेव महाबलैः पुरुषधौरेयै रनुष्ठीयते न सर्वैरित्यभिप्रायकम् ।

न सर्वे भ्रातरस्तात भवन्ति भरतोपमा । मद्विधा वा पितुः पुत्राः इति रामवचनादपि
संगच्छते। अत एव शत्रुसकाशादागतो विभीषणः राजधर्मरीत्या न संग्राह्य इति सुग्रीवेण
बहुधा प्रतिबोधितोऽपि रामः—

अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर इति । स्वस्मिन्नप्रमेय सामर्थ्यं जानन्।
शरणागतसंरक्षणरूपमुख्यधर्मपरित्यागे प्रत्यवायो भवेत्— इति सुग्रीवोक्त गौणधर्म परि-
त्यज्य मुख्यधर्मं शरणागतविभीषणरक्षणमेव कृतवान्; गौणस्तु विभीषणेनानुष्ठित इति।

ननु धार्मिकस्य विभीषणस्य मुख्य धर्मं परित्यज्य गौणधर्मानुष्ठान तद्धेतुभूताभिरुचिश्च
नोपपद्यते मुख्यधर्मं परित्यज्य गौणधर्मानुष्ठानस्य प्रत्यवायकरत्वात्। तथा च मनुः—

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते। न सापरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥
इति चेदुच्यते ।

विभीषणस्य मुख्यधर्मानुष्ठानासमर्थस्य गौणधर्मानुष्ठानमेव युक्तम्। तथा हि। विभी
षणस्तावत् ज्येष्ठानुवर्तनरूपं मुख्यधर्मं परिपालयितुं सीतापहरणाद्यकार्यप्रवृत्ताय ज्येष्ठाय
हितं वचनमुक्तवान् ।

तेन च शत्रुपक्षगतोऽयमित्याशंक्यमानेन दासवदवमानित— अतः एतस्य समीपे
ममावस्थानमनुचितम् ।

सता माने म्लाने मरणमथवा दूरगमनम्— इति प्रसिद्धेः। अकार्यप्रवृत्तस्य रावणस्य जयोऽपि दुर्लभः अत्याहितसूचकानां निमित्तानामपि एतस्मिन् बहुलमुपलम्भात इति निश्चित्य ज्येष्ठसमीपान्निर्गत । निर्गतेन च तेन धार्मिकेण स्वधर्मपरिपालनाय स्वोपभोगाय च अर्था संपादनीयाः राजन्यस्य तस्य न याचनाऽर्थसंपादनोपायः राजन्ययाच्ञा धर्मशास्त्रनिषिद्धत्वात् ।

तथा **चोद्योगे**— कृष्णं प्रति कुन्तीवचनम्—

ब्राह्मण· प्रचरेद्भैक्ष्यं क्षत्रियः परिपालयेत् । वैश्यो धनार्जनं कुर्यात् शूद्रः परिचरेच्च तान् ॥
भैक्ष्यं विप्रतिषिद्धन्ते कृषिर्नैवोपपद्यते । क्षत्रियोऽसि क्षतात् त्राता बाहुवीर्योपजीविता ॥
पित्र्यमंश महाबाहो निमग्न पुनरुद्धर । इति । **वनपर्वणि**—
धर्मश्चार्थेन महता शक्यो राजन्निषेवितुम् । न चार्थो भैक्ष्यचर्येण नापि क्लेशेनकर्हिचित्
प्राप्तुं शक्यः : सदा राजन् केवलं धर्मबुद्धिना ।
प्रतिषिद्धो हि ते याच्ञा यया सिध्यन्ति वै द्विजा· ॥
तेजसैवार्थलिप्सायां यतस्व पुरुषर्षभ । भैक्ष्यचर्या न विहिता न च विट्शूद्रजीविका ॥
क्षत्रियस्य विशेषेण धर्मस्य बलमौरसम् । उदारमेव विद्वांसो धर्मं प्राहुर्मनीषिणः ॥
उदारं प्रतिपद्यस्व नावरे स्थातुमर्हसि ॥ इति ।

तस्माद्राजन्यस्य या नार्थसपादनोपायः तच्च प्राप्ते राज्ये संभवति ।

तच्च राज्यं ज्येष्ठद्रोहाचरणं विनैव स्वभुजबलेन रामानुमत्या सामंतान्निर्जित्य यद्यपि सपादयितु न्याय्यम् । तत्तु न संभवति स्वैकशूराणा सामन्ताना मुपरोधभयेन अनन्यपूर्वे सद्योनिर्मितग्राम नगर प्राकाराद्यलंकृते देशविशेषे स्वपुत्राणामप्यभिषेक्तरि चक्रवर्तिनि रामे जाग्रति सति— विभीषण कर्तव्यस्य सामन्तराज्यग्रहणस्य असंभावितत्वात् स्वत· सामर्थ्याभावेन राममभिगणय्यापि राज्यं सपादयितुं न शक्यते । लङ्काराज्यं तु लब्ध्वा कुलधन राजा लङ्का प्रायाद्विभीषणः । इति वचनेन राक्षसाना कुलधनत्वेनावगत मातामहेन प्रथममुपभुक्तं तदनु ज्येष्ठभ्रात्रा उपभुज्यमानं न्यायतः स्वीय धर्म्यंच तस्मात्तदेव लङ्काराज्य सपादनीयम । अत एव इतरराज्यापेक्षया स्वराज्यमेव विशिष्टं तत्सपादने प्राणपरित्यागोऽपि श्लाघ्य इति । उद्योगे– सञ्जयं प्रति भगवद्वाक्यं–

भागः पुनः पाण्डवाना विशिष्ट तन्नोकस्मादाददीरन् परे वै ।
अस्मिन् पदे युध्यता नो वधोऽपि श्लाघ्यः पित्र्यं परराज्याद्विशिष्टम् ॥ इति ।

एतच्च लंकाराज्य रावणनिग्राहकस्य रामस्यानुवर्तनं विना न प्राप्तु शक्यते । न च रावणनिग्रहोत्तरकालमपि रामसमीपागतेनापि विभीषणेन रामं प्रसाद्य लंकाराज्यं प्राप्तु

शक्यत्वात् तन्निग्रहात्पूर्वमागत्य च रामानुसरणाय स्वस्य ज्येष्ठरावणस्य मर्माणि प्रदर्श्य द्रोहाचरणमनुपपन्नमिति वाच्यम् । तथा सति , समुद्रतरणप्रभृति, रावणवधपर्यन्तं साहाय्य कृतवते यस्मै कस्मैचित् स्वकार्यनिर्वाहकाय रामो राज्यं दास्यामीति प्रतिज्ञा कुर्यात् । कृतायां च प्रतिज्ञाया विभीषणस्य लंकाराज्यप्राप्तिर्न स्यात् रावणवधात्पूर्वमागमने तु धार्मिको रामः रावणं निहत्य तत्कुलीनाय विभीषणायैव राज्यं दास्यति शत्रुहननोत्तरकालं तद्राज्ये तत्कुलीने प्रतिष्ठापनस्यैव धर्म्यत्वात् । तथा च मनुः—

जित्वा संपूजयेद्देवान् ब्राह्मणांश्चैव धार्मिकान् । प्रदध्यात्परिहारांश्च ख्यापयेदभयानि च ॥
सर्वेषा तु विदित्वैषां समासेन चिकीर्षितम् । स्थापयेत्तत्र तद्वश्य कुर्याच्च समयक्रियाम् ॥
इति ।

तस्माद्रावणवधात्पूर्वं विभीषणस्य रामसमीपागमनं युक्तम । अत एव रामोऽपि शत्रु-हननोत्तरकालं तद्राज्ये तत्कुलीनप्रतिष्ठापनं धर्म इति जानान ।

अह हत्वा दशग्रीव सप्रहस्त सबान्धवम् । राजानं त्वा करिष्यामि समेत्य तद्ब्रवीमि ते
इति । आगताय विभीषणाय राज्याभिषेकं प्रतिज्ञातवान् । तदनन्तरं स्वागमनप्रयोजने सिद्धे अव्याजपरोपकारनिरतस्य रामस्य समये साहाय्याकरणे कृतघ्नतादोष· स्यात् इति मत्वा ।

राक्षसाना वधे साह्यं लङ्कायाश्च प्रधर्षणम् ।
करिष्यामि यथाप्राण प्रवेक्ष्यामि च वाहिनीम् ॥ इति । रामकार्यसाहाय्यकं प्रति-श्रुतवान् ।

एव च क्षत्रियैः प्रतिज्ञायाः अवश्यपरिपालनीयत्वात् युद्धार्थमागते गुर्वादिभिस्सह युद्धाकरणे दोषश्रवणाच्च विभीषणकृतं रावणद्रोहाचरण युक्तमेव । अत एव गुर्वादिवधे-नाऽपि प्रतिज्ञा परिपालनीयेति प्रतिपादितम् । **कर्णपर्वणि**— कृष्णं प्रति अर्जुनेन—

अन्यस्मै देहि गाडीवमिति मां य. प्रचोदयेत् । छिन्द्यामह शिरस्तस्य इत्युपांशुव्रतं मम ।
तस्मादेनं वधिष्यामि राजानं धर्मचारिणम् ।
प्रतिज्ञा पालयिष्यामि हत्वैनं नरसत्तमम् ॥ इति ।

युद्धार्थमागतैः गुर्वादिभिस्सह युद्धाकरणे दोषश्च यज्ञीयाश्वसंरक्षणाय आगतेन स्वेन सह योद्धुमनागतं पुत्रं बभ्रुवाहन प्रति अर्जुनोक्तनिन्दावचनादवगम्यते । **आश्वमेधिके**-

धिक् त्वामस्तु सुदुर्बुद्धे क्षत्रधर्मबहिष्कृतम् ।
यो मा युद्धाय संप्राप्तं साम्नैव प्रत्यगृह्णथा. ॥ इति ।

एवं च रावणेनावमानितस्य ज्येष्ठसमीपे अवस्थानानौचित्येन ज्येष्ठानुवर्तनादिरूपमुख्य-धर्मानुष्ठाने अशक्तत्वात् ज्येष्ठद्रोहाचरणपूर्वक रामप्रसादलभ्य राज्यसंपादनलूपगौणधर्मानुष्ठानं युक्तमेव ॥ यच्चोक्तं धार्मिकस्य विभीषणस्य गौणधर्मे अभिरुचिरनुपपन्नेति तन्न राक्षसयोनावुत्पन्नस्य मातृदोषवशानुवृत्त्या अधार्मिकत्वस्य ब्रह्मणो वरमहिम्ना धार्मिकत्वस्य सत्त्वेन केवलधर्ममार्गं च परित्यज्य गौणधर्मे अभिरुचेरुपपत्तेः । प्रजासु मातृदोषानुवृत्तिश्च आरण्यकाण्डे रामं प्रति **लक्ष्मणवचनेन**—

न पित्र्यमनुवर्तन्ते मातृकं द्विपदा इति । **विष्णुपुराणे**—

सुनीथा नाम या कन्या मृत्योः प्रथमजाऽभवत् ।
अगस्त्यभार्या सा दत्ता तस्या वेनो व्यजायत ॥
स मातामहदोषेण तेन मृत्योस्सुतात्मजः । निसर्गादेव मैत्रेय दुष्टभावो व्यजायत ॥ इति ।

एव च मुख्यधर्मानुष्ठाने असमर्थस्य गौणधर्मानुष्ठान तत्राभिरुचिश्च उपपद्यत एव । प्रभुः प्रथमकल्पस्येति मनुवचनविरोधोऽपि न । तन प्रथमकल्पानुष्ठाने असमर्थस्य गौण धर्मानुष्ठान तत्राभिरुचिश्च उपपद्यत एव । एव च गौणधर्मानुष्ठाने अवश्यकर्तव्ये तदर्थ-तया राज्यसंपादने प्रसक्तानां गुर्वादिद्रोहजनिताना पापानां राज्यप्राप्त्यनन्तरं यज्ञादिना परिहारसंभवात् । गुर्वादिद्रोहेणापि राज्यसपादनं युक्तम् । तथा च **वनपर्वणि**—

यदेनः कुरुते किंचिद्राजा भूमिमवाप्नुवन् । सर्वं तन्नुदते पश्चाद्यज्ञैर्विपुलदक्षिणैः ॥
ब्राह्मणेभ्यो ददन् ग्रामान् गाश्च राजन् सहस्रशः ।
मुच्यते सर्वपापेभ्यस्तमोभ्य इव चन्द्रमाः ॥ इति—

अत एव राज्यप्राप्त्यनन्तरं गुर्वादिवधजनितपापेन सन्तप्यमानं युधिष्ठिरं प्रति यज्ञादिना परिहारं कुर्विति व्यासेनोक्तं **राजधर्मे**—

न विमुञ्चति मा शोको ज्ञातिघातिनमातुरम् । राज्यकामुकमत्युग्रं स्ववंशोच्छेदकारकम् ॥
यस्यांके क्रीडमानेन मया वै परिवर्तितम् । स मया राज्यलुब्धेन गांगेयो विनिपातितः ॥
येन संवर्धिता बाला येन स परिरक्षिताः । स मया राज्यलुब्धेन पापेन गुरुघातिना ॥
अल्पकालस्य राज्यस्य कृते मूढेन पातितः । आचार्यश्च महेष्वासः सर्वपार्थिवपूजित ॥
अभिगम्य रणे मिथ्या पापेनोक्तं सुतं प्रति । तन्मे दहति गात्राणि यन्मे गुरुरभाषत ॥
किं नु लोक गमिष्यामि कृत्वा कर्म सुदुष्करम् । अघातयं च यत्कर्णं समरेष्वपलायनम् ॥
ज्येष्ठ भ्रातरमत्युग्र कामतः पापकृत्तम । अभिमन्यु च यद्बालं जातं सिंहमिवाद्रिषु ॥
प्रावेशयमह युद्ध वाहिनी द्रोणपालिताम् । सोऽहमागस्करः पापः पृथिवीनाशकारक ॥
आसीन एवमेवेदं शोषयिष्ये कलेबरम् । [इति विलपमानं प्रति व्यास उवाच । ]

त्वं तु शुक्लाभिजातीयः परदोषेण कारितः । अतिमानः कर्मेद कृत्वा च परितप्यसे ॥
सोऽश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतम् । तमाहर महाराज विपाप्मैवं भविष्यसि ॥
इन्द्रो वै ब्रह्मणः पुत्रः क्षत्रियः कर्मणाऽभवत् । ज्ञातीनां पापवृत्तीनां जघान नवतीर्नवा ॥
तच्चास्य कर्म पूज्यं च प्रशस्तं च विशांपते । तेन चेन्द्रत्वमापेदे देवानामिति नः श्रुतम् ॥
जितारिः क्षत्रधर्मेण प्राप्य राज्यमकंटकम् । विनीतात्मा मनुष्येन्द्र यज्ञदानपरो भव ॥
स त्व यज्ञैर्बहुविधैर्यजस्व बहुदक्षिणैः । यथैवेन्द्रो मनुष्येन्द्र चिराय विगतज्वरः ॥ इति ।

एवं सति धार्मिकैर्युधिष्ठिरादिभिः गुर्वादिवधेनापि राज्य संपाद्य तज्जनितपापपरिहाराय अश्वमेधस्य कृतत्वात् धार्मिकस्य विभीषणस्यापि ज्येष्ठद्रोहादिना राज्यं संपाद्य तत्प्राप्तिभूतानां पापानां अनन्तरं यज्ञादिना पापपरिहारस्य कर्तुं शक्यत्वात् ।

आदौ राज्यार्थं रामसमीपागमनं युक्तमेव ।

**तमात्मपंचमं दृष्ट्वा सुग्रीवो वाहिनीपतिः ।**
**वानरैस्सह दुर्धर्षश्चिंतयामास बुद्धिमान् ॥**
**सालानुद्यम्य शैलांश्च इदं वचनमब्रुवन् ।**
**शीघ्रं व्यादिश नो राजन् वधायैषां दुरात्मनाम् ॥**
**निपतन्तु हताश्चैते धरण्यामल्पचेतसः ।**

अनेनापरिचितस्य विचारेण विना आश्रयो न देय इति सूचितम् ।

तथा च **प्राचीनाः**—

नत्वविज्ञातशीलाय गृहे दद्यात्प्रतिश्रयम् । इति ।

ततोऽयमस्मान् हंतु समागतो विभीषण इति विचारेण निश्चिन्वानं तपनतनयमन्वीक्ष्य वानरप्रमुखाः ।

अनेन राजाज्ञयैव युद्धे सैनिकैः प्रवर्तितव्यमिति सूचितम् ।

अत एव दुर्योधनाज्ञयैव तद्भृत्यानां युद्धे प्रवृत्तिः प्रतिपादिता । **भीष्मपर्वणि**—

समं व्यूढेष्वनीकेषु सन्नद्धा रुचिरध्वजाः । अपारमिव संदृश्य सागरप्रतिम बलम् ॥
तेषा मध्ये स्थितो राजा पुत्रो दुर्योधनस्तव । अब्रवीत्तावकान् सर्वान् युध्यध्वमिति दंशिताः
ते मनः क्रूरमास्थाय समभित्यक्तजीविताः । पाण्डवानभ्यवर्तंत सर्व एवोच्छ्रितध्वजाः ।
ततो युद्ध समभवत्तुमुल रोमहर्षणम् ॥ इति ।

**तेषां संभाषमाणानामन्योन्यं सविभीषण ।**
**उत्तरं तीरमासाद्य खस्थ एव व्यतिष्ठत ॥** इति ।

अत्र तेषु सुग्रीवप्रमुखेषु स्वस्मिन् शंकावशात् परस्परं संभाषमाणेषु अधुना झटिति

प्रवेशोऽस्माकमनुचित इति आकाश एव स्थितवानिति प्रतिपादनात् परेषां स्वस्मिन् अविश्वासकाले न गन्तव्यमिति सूचितम् । तथा च कामन्दके—

न विश्वासाज्जातु परस्य गेहं गच्छेन्नरश्चेतयानो विकाले ॥ इति ।

**उवाच च महाप्राज्ञः स्वरेण महता महान् ।**
**सुग्रीव तांश्च संप्रेक्ष्य सर्वान् वानरयूथपान् ॥**
**रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः ।**
**तस्याहमनुजो भ्राता विभीषण इति श्रुत ॥**
**तेन सीता जनस्थानाद्धृता हत्वा जटायुषम् ।**
**रुद्धा च विवशा दीना राक्षसीभिः सुरक्षिता ॥**
**तमहं हेतुभिर्वाक्यैर्विविधैश्च न्यदर्शयम् ।**
**साधु निर्यात्यतां सीता रामायेति पुनः पुनः ॥**
**स च न प्रतिजग्राह रावण कालचोदितः ।**
**उच्यमानं हितं वाक्यं विपरीत इवौषधम् ॥**
**सोऽहं परुषितस्तेन दासवच्चापमानितः ।**
**त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ।**
**सर्वलोकशरण्याय राघवाय महात्मने ।**
**निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् ॥**

अत्र विभीषणेन स्वस्मिन् सुग्रीवादीना विश्वासोत्पादनाय रावणनिन्दापूर्वकं रामस्तुतिकरणात् सर्वत्र चेष्टस्तुतिद्वेष्यनिन्दाभ्यामेव विश्वासो जायत इति सूचितम् ।

अत एव विश्वासोत्पादनायेष्टस्तुतिर्द्वेष्यनिन्दा च सीतां प्रति हनुमता कृतेति प्रतिपादितं सुन्दरकाण्डे—

इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः ।
श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन् गिरम् ॥
श्रद्धास्यति यथा सीता तथा सर्व समादधे । एवं बहुविधां चिन्ता चिन्तयित्वा महाकपिः
संश्रवे मधुरं वाक्यं वैदेह्या व्याजहारह । राजा दशरथो नाम रथकुञ्जरवाजिमान् ॥
इत्यादिना ।

कृत्वा मूर्ध्नि पदं न्यासं रावणस्य दुरात्मनः । त्वां द्रष्टुमुपयातोऽहं समाश्रित्य पराक्रमम् ॥
इत्यनेन चेति ।

तदनु तपनतनयः विभीषणवचनाकर्णनेन सञ्जाताशंकः स्वप्रतिभानुगुणतया रामभद्रमित्थमकथयत् ।

**रावणस्यानुजो भ्राता विभीषण इति श्रुत'।**
**चतुर्भिस्सह रक्षोभिर्भवन्तं शरणङ्गतः॥**
**मन्त्रे व्यूहे नये चारे युक्तो भवितुमर्हसि।**

अत्र विभीषणस्य शरणागतत्वेनाभयदानेन रक्षणीयत्वात् शत्रुपक्षीयस्य चाविश्वसनीयत्वेनासंग्राह्यत्वात् संग्राह्यत्वासग्राह्यत्वनिर्णयाय मन्त्रविचारः कर्तव्यः व्यूह्य बलस्थापनादिना राजापि रक्षणीय इति सूचितम्। तथाच **कामन्दके**—

परस्मादागतं यद्यत्तत्सर्वं परीक्षयेत्। सदा स्वेभ्यः परेभ्यश्च रक्ष्यो राजा हि रक्षिणा॥
इति।

**प्रणिधी राक्षसेन्द्रस्य रावणस्य भवेदयम्।**
**अनुप्रविश्य सोऽस्मासु भेदं कुर्यान्न संशय.॥**

अनेन भेदनं दूतकृत्यमिति सूचितम्॥ तथा च **कामन्दके**—

रिपो पक्षपरिच्छेदं सुहृद्बन्धुविभेदनम्। दूतः पक्षोपजातं च कुर्यादनभिलक्षित'॥
इति।

**अथवा स्वयमेवैषः छिद्रमासाद्य बुद्धिमान्।**
**अनुप्रविश्य विश्वस्ते कदाचित्प्रहरेदपि॥**

**अनेन** विश्वाससंपादनद्वारा परैर्हन्तव्या इति सूचितम्। तथा च **राजधर्मे**—

विश्वासेनैव संशाम्यो वशे कृत्वा रिपोः प्रभो।
अन्तरैर्भेदयित्वाऽरिं बिल्व बिल्वेन घातयेत्॥
परैर्वा संविदं कृत्वा बलमप्यस्य घातयेत्। इति। **कामन्दकेऽपि**—

बलीयमाऽभिसन्धाय तत्प्रविश्य प्रतापवान्। तथा साध्वनुगन्तव्यो यथा विस्रभमाप्नुयात्
विस्रंभी नित्यमुद्युक्तो निगूढाकारचेष्टितः। प्रियाण्येव हि भाषेत यत्कार्यं कार्यमेव तत्
विस्रम्भात्प्रियतामेति विस्रम्भात्कार्यमृच्छति। विस्रम्भेण हि देवेन्द्रो दितेर्गर्भमघातयत्॥
इति।

**मित्राटविबलं चैव मौलं भृत्यं बलं तथा।**
**सर्वमेतद्बलं ग्राह्य वर्जयित्वा द्विषद्बलम्॥**
**प्रकृत्या राक्षसेन्द्रस्य भ्राताऽमित्रास्यते विभो।**
**आगतश्च रिपोः पक्षात् कथमस्मिन् हि विश्वसेत्॥**
**रावणेन प्रणिहितं तमवेमि विभीषणम्।**
**तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर॥**

नन्वत्र द्विषद्बल वर्जयित्वेत्युक्तं तदयुक्तम्। उपगृह्यास्पदं चैव चरान् सम्यग्विधाय च।

सशोध्य विविधं मार्गं षड्विधं च बलं स्वकम् ॥
सांपरायिककल्पेन यायादरिपुरं प्रति ॥ इति **मनुवचनेन।**

" षड्विधं बलमादाय प्रतस्थे दिग्जिजीषया " इति **कालिदासवचनेन च—**

" मौलं भृतं सुहृच्छ्रेणिर्द्विषदाटविकं बलम् " **इत्यमरकोश** प्रसिद्ध षड्विध बलस्यापि संग्राह्यत्वावगमादिति चेन्न । शत्रोर्बलहान्यर्थतया द्विषद्बलं ग्राह्यमित्येतदभिप्रायत्वात् उदाहृतमन्वादिवचनाना वर्जयित्वा द्विषद्बलं— इति वचनं तु शत्रुबलहान्यर्थतया गृहीतमपि द्विषद्बलं बहिः संस्थाप्य कण्टकशोधनादिभिः क्लेशयेदित्यभिप्रायकं नत्वसंग्राह्यमेवेति । द्विषद्बलस्य बहिः स्थापनादिकं च **कामन्दके—**

अभ्युत्थितं कोपभयादभ्यासेन रिपोर्बलम् । वासयेत्कर्शयेच्चैतद्दुर्गकण्टकशोधनैः ॥
इति ।

अत एवाविश्वसनीयबलवर्जनेन पञ्चविधमेव संग्राह्यत्वेनोक्तम् । **आश्रमवासिके—**

आददीत बलं राजा मौलं भृत्यबलं तथा । अटवीबलं भृतं चैव तथा श्रेणीबलं प्रभो ॥
तत्र मित्रबलं राजन् मौलं चैव विशिष्यते ॥ इति ॥

**राक्षसो जिह्मया बुद्ध्या संदिष्टोऽयमिहागतः ।**
**प्रहर्तुं मायया छन्नो विश्वस्ते त्वयि राघव ॥**

अनेन प्रच्छन्नवैरेषु कुटिलबुद्धिषु विश्वासो न कर्तव्य इति सूचितम् ।
तथा **चापद्धर्मे—**

ब्रह्मदत्तपूजनीसंवादे—
उशना चैव गाथे द्वे प्रह्लादायाब्रवीत्पुरा । ये वैरिणश्श्रद्दधत्ते सत्ये सत्येतरेऽपि वा ॥
वध्यन्ते श्रद्दधानास्तु मधुशुष्कतृणैर्यथा । न हि वैराणि शाम्यन्ति कुले दुःखं गतानिच
आख्यातारश्च विद्यन्ते कुले वै ध्रियते पुमान् । उपगूह्यतु वैराणि सान्त्वयति नराधिपाः ॥
अथैनं प्रतिपिषन्ति पूर्णं घटमिवाश्मनि । स तान्न विश्वसेद्राजा पापं कृत्वेह कस्यचित्
अपकृत्य परेषां हि विश्वासाद्दुःखमश्नुते ॥ इति ।

कृतवैरेण विश्वासः कार्यस्त्विह सुहृद्यपि । छन्नं सन्तिष्ठते वैरं गूढोऽग्निरिव सागरे ॥
सान्त्वे प्रयुक्ते सततं कृतवैरे न विश्वसेत् । क्षिप्रं स वध्यते मूढो न हि वैरं प्रशाम्यति
अन्योन्यकृतवैराणां पुत्रपौत्रं नियच्छति । पुत्रपौत्रविनाशे च परलोकं नियच्छति ॥
परेषां कृतवैराणां अविश्वासः सुखोदयः । एकांततो न विश्वासः कार्यो विश्वासघातकैः
इति च—

**प्रविष्टश्शत्रुसैन्यं हि प्राप्तश्शत्रुरतर्कितः ।**
**निहन्यादन्तरं लब्ध्वा उलूक इव वायसान् ॥**

अत्र सहजशत्रोः काकोलूकस्य दृष्टान्तत्वेनोपादानान् निसर्गशत्रुः न कदाऽपि विश्वसनीय इत्युक्तम् । तथा **चापद्धर्मे—**

मूषिकमार्जार सवादे–त्वं हि नो जातित· शत्रु· सामर्थ्यान्मित्रतां गत· ।
तत्कृत्यमभिनिर्वृत्त प्रकृतिं शत्रुतां गतः ॥ नावयोर्विद्यते सन्धि. । इति ।

उलूकैर्वायसहननं च सौप्तिके—
क्रोधामर्षवशं प्राप्तो द्रोणपुत्रम्तु भारत । अपश्यत महाबाहुर्न्यग्रोधं वायसैर्युतम् ॥
तत्र काकसहस्राणि ता निशा पर्यणामयन् । सुखं स्वपन्ति कौरव्या पृथक् पृथगुपाश्रयः
तेषु सुप्तेषु काकेषु विस्रब्धेषु समन्ततः । सोऽपश्यत्सहसायान्तं उलूकं घोरदर्शनम् ॥
सोऽथ शब्दं मृदुं कृत्वा लीयमान इवाण्डजः । न्यग्रोधस्य ततश्शाखा प्रार्थयामास भारत॥
सन्निपत्य तु शाखाया न्यग्रोधम्य विहंगमः । सुप्तान् जघान सुबहून् वायसान् वायसांतकः
तास्तु हत्वा ततः काकान् कौशिको मुदितोऽभवत् ॥ इति ।

**अन्यत्र—**

काककुलप्रध्वंसिन उलूककुलस्य वधोपायं चिन्तयद्भिः काकैरेव पक्षौ प्रच्छिद्य (कोटरेव पक्षौ प्रच्छिद्य) कोटरे प्रक्षिप्तेन उलूकैस्सह विश्वासमुपगतेन वृद्धकाकेन कालात्पुनरुत्पन्नेषु पक्षेषु करीषेण गुहाद्वारं विधाय चञ्चूपुटाहृतेन वह्निना उलूका दग्धा इत्युक्तम् । **प्राचीनैः—**

न विश्वसेत्पूर्वविरोधितस्य शत्रोश्च मित्रत्वमुपागतस्य ।
दग्धां गुहा पश्य दिवाधपूर्णां काकप्रणीतेन हुताशनेन ॥
महताऽप्यर्थजातेन यो विश्वसति शत्रुषु ; विरक्तासु च भार्यासु तदन्त तस्य जीवितम्
इति च ।

**सुग्रीवस्य तद्वाक्यं श्रुत्वा रामो महाबलः ।**
**समीपस्थानुवाचेदं हनुमत्प्रमुखान् हरीन् ॥**

अत्र सुग्रीवमतपरिज्ञानानन्तरमितरमतपरिज्ञानाय प्रश्नकरणात् राज्ञा बहुभिरालोच्यैव कर्मारभणीय न त्वेकचिन्तनेनेति सूचितम् ।

अत एव चतुर्दशराजदोषेषु दोषत्वेन एकचिन्तनमपि परिगणितम् । **भारते—**
एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनम् ॥ इति बहुभिर्मन्त्रणं च । **कामन्दके—**
द्वादशेति मनुः प्राह षोडशेति बृहस्पतिः । उशना विंशतिरिति मन्त्रिणां मन्त्रिमंडलम्

यथा समूहमित्यन्ये तत्प्रविश्य यथाविधि । मन्त्रयेताहितमनाः कार्यसिद्धिविवर्धये ॥
इति । **मानवेऽपि**—

सचिवान् सप्त वाऽष्टौ वा कुर्वीत सुपरीक्षितान् । अपि यत्सुकरं कर्म तदप्येकेन दुष्करम्
विशेषतोऽसहायेन किमु राज्यं महोदयम् ।
तैस्सार्धं चिन्तयेन्नित्यं सामान्यं सन्धिविग्रहम् ॥
स्थानं समुदय गुप्तिं लब्धप्रशमनानि च ॥ इति ।

तथा हनुमत्प्रमुखानिति विशेषणेन हनुमत्पुरस्कारावगमाद्राज्ञा गुणविशिष्टो मन्त्री पुरस्कर्तव्य इति सूचितम् ॥ तथा **चोद्योगे** विदुर —

गुणैर्विशिष्टाश्च पुरो दधीत विपश्चितस्तस्य नयाः सुनीताः । इति ।

**सुहृदा ह्यर्थकृच्छ्रेषु युक्तं बुद्धिमता सता ।**
**समर्थेनापि संदेष्टुं शाश्वतीं भूतिमिच्छता ॥**

**इत्येवं परिपृष्टास्ते स्वं स्वं मतमतन्द्रिताः ।**
**सोपचारं तदा राममूचुर्हितचिकीर्षवः ॥**

**अज्ञातं नास्ति ते किंचित् त्रिषु लोकेषु राघव ।**
**आत्मानं पूजयन् राम पृच्छस्यस्मान् सुहृत्तया ॥**

**त्वं हि सत्यव्रतः शूरो धार्मिको दृढविक्रमः ।**
**परीक्ष्यकारी स्मृतिमान् निसृष्टात्मा सुहृत्सु च ॥**

अनेनाभिज्ञेनापि सचिवेन राज्ञा पृष्टेनैव सोपचारं वक्तव्यमिति सूचितत् ।

तथा च **कामन्दके**—

तन्नियोगेन च ब्रूयादर्थं सुपरिनिश्चितम् । जयाज्ञापय जीवेति नाथ देवेति चादरात् ॥
इति ।

**तस्मादेकैकशस्तावद्ब्रुवन्तु सचिवास्तव ।**

अत्र सचिवाः राजानं प्रति एकैकश एव ब्रुवन्त्वित्युक्त्या राज्ञाऽपि पृथक् पृथगेव मन्त्रिमत विज्ञाय स्वहितं कर्तव्यमिति सूचितम् ॥ तथा च **मनुः**-

तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक् । समस्तानां च कार्येषु विदध्याद्धितमात्मनः
इति । **कामन्दकेऽपि**—

अकत्थनेन कार्याणि सम्प्रधार्यः पुनः पुनः । प्रविशेत्स्वहितान्वेषी मतमेषां पृथक् पृथक्
इति ।

**इत्युक्ते राघवायाथ मतिमानंगदोऽग्रतः ।**
**विभीषणपरीक्षार्थमुवाच वचनं हरिः ॥**
**विश्वासयोग्यः सहसा न कर्तव्यो विभीषणः ।**
**छादयित्वाऽऽत्मभावं तु चरन्ति शठबुद्धयः ॥**
**प्रहरन्ति च रन्ध्रेषु सोऽनर्थस्सुमहान् भवेत् ।**

अनेन अविश्वसनीये विश्वासोऽनर्थाधायक इति सूचितम् । तथा च **राजधर्मे**—

पञ्चोपधव्यतीतांश्च कुर्याद्राजार्थकारिणः । देशकालविधानज्ञान् भर्तृकार्यहितैषिणः ॥
इति ।

**गुणतः संग्रहः कुर्याद्दोषतस्तु विवर्जयेत् ।**
**यदि दोषो महान् तस्मिंस्त्यज्यतामविशंकितम् ॥**
**गुणान्वापि बहून् ज्ञात्वा संग्रहः क्रियतां नृप ।**

अत्र केवलगुणवतः केवलदोषवतश्च असंभावितत्वात् । अल्पगुणो बहुदोषः परित्याज्यः अल्पदोषः बहुगुणे दोषाधायको न भवतीति सूचितम् ॥
तत्र बहुदोषविषये **कामन्दकः**—

अहिते वर्तमानानि मित्राण्यपि परित्यजेत् । मित्रं विचार्य बहुशो ज्ञातदोषं विवर्जयेत् ॥
अधार्मिकांश्च क्रूरांश्च दृष्टदोषा निराकृतान् । परेभ्योऽभ्यागतांश्चैव दूरतः परिवर्जयेत् ॥
इति । अल्पदोष विषये **कालिदासः**—

अनन्तरत्नप्रभवस्य तस्य हिमं न सौभाग्यविलोपिजातम् ।
एकोऽपि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ इति ।

**शरभस्त्वथ निश्चित्य सार्थं वचनमब्रवीत् ॥**
**क्षिप्रमस्मिन्नरव्याघ्र चारः प्रतिविधीयताम् ।**
**प्रणिधाय हि चारेण यथावत्सूक्ष्मबुद्धिना ।**
**परीक्ष्य च ततः कार्यो यथान्यायं परिग्रहः ॥**

अनेन तत्तद्देशकालोचिताभिज्ञेन सूक्ष्मबुद्धिना चारेण पराभिप्रायो विचार्य इति सूचितम् । तथा च **मानवे**—

वने वनचराः कार्याः श्रमणा आटविकादयः । परप्रवृत्तिज्ञानार्थं शीघ्राश्चारपरंपराः ॥
इति ।

परस्य चैते बोद्धव्यास्तादृशैरेव तादृशाः ॥ इति च । **कामन्दकेऽपि**—

सर्वसंपत्समुदयं सर्वावस्थाविचेष्टितम् । चारेण द्विषतां विद्याद्भूदेशप्रार्थनादिकम् ॥
इति ।

**जांबवांस्त्वथ संप्रेक्ष्य शास्त्रबुद्ध्या विचक्षणः ।**
**वाक्यं विज्ञापयामास गुणवद्दोषवर्जितम् ॥**

**बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः ।**
**अदेशकाले संप्राप्तः सर्वथा शक्यतामयम् ॥**

अनेन पापिष्ठस्य शत्रोस्सकाशात् स्वप्रयोजनरहिते देशे स्वामिपरित्यागानर्हे काले च समागतो विभीषणः सर्वथा न विश्वसनीय इत्युक्त्या दुष्टसेवा, प्रयोजनरहिते देशे वासः, आपदि स्वामिपरित्यागश्च न कर्तव्य इति सूचितम् । दुष्टसेवा न कर्तव्येत्येतत् **कामन्दके—**

द्रव्यप्रकृतिहीनोऽपि सेव्यः सेव्यो गुणान्वितः ।
भवत्युज्जीवनं तस्माच्छ्लाघ्यं कालांतरादपि ॥
अपि स्थाणुवदासीनः शुष्यन् परिगतक्षुधः ।
न त्वेवानात्मसंपन्नाद्वृत्तिमीहेत पण्डितः ॥ इति । प्रयोजनरहितदेशे वास विषये **प्राचीनाः—**

यत्र विद्यागमो नास्ति यत्र नास्ति धनागमः । यत्र चात्मसुखं नास्ति न तत्र दिवसं वसेत् इति ।

आपत्काले स्वामी न परित्याज्य इत्यत्र **कामन्दकः—**

निर्गुणं ह्यपि भर्तारं आपत्सु न परित्यजेत् । ततः परतरो नास्ति य आपत्सूपतिष्ठते ॥ इति ।

**ततो मैंदस्तु संप्रेक्ष्य नयापनयकोविदः ।**
**वाक्यं वचनसंपन्नो बभाषे हेतुमत्तरम् ॥**

**वचनं नाम तस्यैव रावणस्य विभीषणः ।**
**पृच्छतां मधुरेणाय शनैर्नरवरेश्वर ॥**

**भावमस्य तु विज्ञाय तत्त्वतस्तं करिष्यसि ।**
**यदि दुष्टो न दुष्टो वा बुद्धिपूर्वं नरर्षभम् ॥**

अनेन स्वस्मिन् परस्य द्वेषः स्नेहो वा तदीयैरिंगिताकारैर्ज्ञातव्य. इति सूचितम् । तथा च **मनुः—**

आकारैरिंगितैर्गत्या चेष्टया भाषितेन च । नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मतम् ॥ इति ।

**अथ संस्कारसंपन्नो हनुमान् सचिवोत्तमः ।**
**उवाच स्वचनं श्लक्ष्णं अर्थवन्मधुरं लघु ॥**

**न भवन्तं मतिश्रेष्ठं समर्थं वदतां वरम् ।**
**अतिशाययितुं शक्तो बृहस्पतिरपि ब्रुवन् ॥**

अनेन मन्त्रसमये स्वामिनं प्रति सविनयं स्तुतिं कृत्वैव वक्तव्यमिति सूचितम् । तच्च प्राक् प्रपंचितम् ।

**न वादान्नापि संघर्षान्नाधिक्यान्न च कामतः ।**
**वक्ष्यामि वचनं राजन् यथार्थं रामगौरवात् ॥**

अत्र तर्ककौशललक्षणाद्वादात् सचिवेषु स्पर्धालक्षणात्संघर्षादहं मतिमान् वाग्मी चेत्यभिमानलक्षणादाधिक्यात्स्वैरभाषणेच्छालक्षणाद्विभीषणानुरागलक्षणाद्वा रागान्न वदामि किंतु स्वामिकार्यगौरवाद्यथार्थमेव वदामीत्युक्त्या कामक्रोधादिरहितमन्त्रियुक्तस्य राष्ट्रं वर्धत इति सूचितम् । तथा च राजधर्मे—

सकलशास्त्रार्थतत्त्वज्ञं सहिष्णुं सहजं तथा । कृतज्ञं बलवन्तं च क्षान्तं दान्तं जितेन्द्रियम् ॥
सततं युक्तमनसं हितैषिणमतन्द्रितम् । अस्तब्धं प्रसृतं श्लक्ष्णं मृदुवादिनमेव च ॥
सचिवं यः प्रकुरुते न चैनमवमन्यते । तस्य विस्तीर्यते राष्ट्रं ज्योत्स्ना ग्रहपतेरिव ॥
इति ।

**अर्थानर्थनिमित्तं हि यदुक्तं सचिवैस्तव ।**
**तत्र दोषं प्रपश्यामि क्रिया न ह्युपपद्यते ॥**

**ऋते नियोगात्सामर्थ्यमुपयोक्तुं न शक्यते ।**
**सहसा विनियोगो हि दोषवत् प्रतिभाति माम् ॥**

अत्रापरिचितः सहसा कार्ये न विनियोक्तव्य इति हेतुना कार्ये विनियोगात्सामर्थ्यं दृष्टसंग्रहः कर्तव्य इत्यङ्गदमतदूषणेन अपरिचितः चिरकालव्यवहारादिना संशोध्य कार्ये विनियोक्तव्य इति सूचितम् । संशोधनप्रकारश्च कामन्दके—

परिकर्मिषु दाक्ष्यं च विज्ञानं धारयिष्णुताम् । गुणत्रयं परीक्षेत प्रागल्भ्यं प्रतिभा तथा ॥
उत्साहं च प्रभावं च तथा क्लेशसहिष्णुताम् । धृतिं चैवानुरागं च धैर्यं चापदि लक्षयेत् ॥
भक्तिं मैत्रीं च शौचं च जानीयाद्व्यवहारतः । संवासिभ्यो बलं सत्त्वमारोग्यं शीलमेव च
अस्तब्धतामचापल्यं वैराणां चाप्यकर्तृताम् । प्रत्यक्षतो विजानीयाद्भद्रतां क्षुद्रतामपि ॥

**चारप्रणिहितं युक्तं यदुक्तं सचिवैस्तव ।**
**अर्थस्यासंभवात्तत्र कारणं नोपपद्यते ॥**

अत्र व्यवहिते अप्रकटितवृत्तान्त एव चारप्रेषणं न तु पुरस्थिते प्रकटितवृत्तान्ते इति हेतुना चारमुखाद्विचारणीय इति शरभमतदूषणेन स्वच्छन्दवृत्तेर्व्यवहितस्य गूढाभिप्रायपरिज्ञानाय चारः प्रेषणीय इति सूचितम् । अत एवादिपर्वणि—

गूढचारिणां पाण्डवानां प्रवृत्तिपरिज्ञानाय भार्गवशालायां द्रुपदराजेन पुरोहितः प्रेषित इति प्रतिपादितम् ।

ततस्स राजा द्रुपदः प्रहृष्टः पुरोहितं प्रेषयामास तेषाम् ।
विद्यामायुष्मानिति भाष्यमाणो महात्मानः पाण्डुसुता स्थ कच्चित् ॥

इति । **कामन्दकेऽपि**—

दूरे सधानमायत्तं चरे चर्या प्रतिष्ठिता । चराश्चरेयुर्नृपतेश्चक्षुर्दूरतरं हिते ॥ इति ।

**अदेशकाले संप्राप्त इत्ययं यद्विभीषणः ।**
**विवक्षा तत्र मेऽस्तीति तान्निबोध यथामति ॥**

**स एव देश' कालश्च भवतीह यथा तथा ।**
**पुरुषात्पुरुषं प्राप्य यथा दोषगुणावपि ॥**

**दौरात्म्यं रावणे दृष्ट्वा विक्रम च तथा त्वयि ।**
**युक्तमागमनं तस्य सदृशं तस्य धीमतः ॥**

अत्र रावणस्य सीतापहरणदौरात्म्याद्विनाशकालं रामस्य पराक्रमातिशयादुद्भव कालं च ज्ञात्वा रामसमीपे श्रियः प्रार्थनया आगमनादयमेव देशः कालश्चेति जाबवन्मनदूषण प्रतिपादनाच्छ्रेयोर्थी क्षयिष्णुं परित्यज्य भूष्णु सेवेतेति सूचितम् । तथा च **प्राचीनाः**—

क्षयामपास्य महतींमपि वर्तमानामागामिनीं जगृहिरे च लतास्तरूणाम् ।
सर्वोहि नोपगतमप्यपहीयमानं वर्धिष्णुमाश्रयमनागतमित्युपैति ॥ इति ।

निरूपितं च परिमृष्टो [देशस्ते] नेत्येतद्व्याख्यानावसरे—

**अज्ञातरूपैः पुरुषै. स राजन् पृच्छयतामिति ।**
**यदुक्तं तत्र मे प्रेक्षा काचिदस्ति समीक्षिता ॥**
**पृच्छमानो विशंकेत सहसा बुद्धिमान् वच ।**
**तत्र मित्रं प्रदुष्येत मिथ्यापृष्टं सुखागतम् ॥**
**अशक्यस्सहसा राजन् भावो बोद्धुं परस्य वै ।**
**अन्तः स्वभावै स्तै स्तैश्च नैपुण्यं पश्यता भृशम् ॥**

अत्र साधुभावेन समागतस्य धीमतो अभिप्रायः सहसा प्रश्नादिभिर्ज्ञातुमशक्य· प्रश्ने च कृते मित्रमपि दूष्येत अतो ज्ञातरूपैः पुरुषैः पराभिप्रायो विचारणीय इति मैन्दमत निराकृतम् ।

---

* 'भिधैस्तै ' इति पाठान्तरम् ।

अत्र प्रथमश्लोके मिथ्याप्रश्नेन शंकया मित्र प्रदुष्येतेत्युक्त्या हृदयरञ्जनैर्वचनैर्मित्रं संगृह्णीयादिति सूचितम् । तथा च **कामन्दके**—

दूरादेवाभिगमनं स्पष्टार्थहृदयानुगा । वाक् सत्कृत्य प्रदानं च त्रिविधो मित्रसंग्रहः ॥
इति । **राजधर्मेऽपि**—

यस्तस्यार्थो न रोचेत न तत्तस्य प्रकाशयेत् । न हि राज्ञा प्रमादो वै कर्तव्यो मित्ररक्षणे ॥
इति ।

द्वितीयश्लोके पराभिप्राय· सहसा ज्ञातुमशक्य इत्युक्त्या गूढ· पराभिप्रायः उपायेनैव [ज्ञातव्य इति]सूचितम् । तदुपायाश्च **कामन्दके**—

कथायोगेन बुध्येत वाग्मित्वं स्पष्टवादिता । सुजनीयो विजानीयात्कुलं स्थानमवग्रहम् ॥
परिकर्मसु दाक्ष्यं च विज्ञानं धारयिष्णुताम् । गुणत्रयं परीक्षेत प्रागल्भ्य प्रतिभां तथा ॥
उत्साहं च प्रभावं च तथा क्लेशसहिष्णुताम् । धृतिं चैवानुरागं च स्थैर्यं चापदि लक्षयेत्
भक्तिं मैत्रीं च शौचं च जानीयाद्व्यवहारतः । प्रत्यक्षतो विजानीयाद्भद्रता क्षुद्रतामपि ॥
इति ।

**नत्वस्य ब्रुवतो जातु दृश्यते दुष्टभावता ।**
**प्रसन्नं वदनं चापि तस्मान्मे नास्ति संशयः ॥**
**अशंकितमतिः स्वस्थो न शठः परिसर्पति ।**
**न चास्य दुष्टावाक्चापि तस्मान्नास्तीह संशय· ॥**

अत्र सद्य· पराभिप्रायनिर्णयानुपयुक्तत्वेन अङ्गदादिमत निरसनपूर्वक सद्य एव पराभिप्राय निर्णायकमुखात् प्रसादादिप्रतिपादनात् झटिति पराभिप्रायनिर्णये मुखप्रसादादिकं मुख्यं साधनमित्युक्तम् । अत एव भरतस्य राज्यासक्तत्यनासक्ति झटिति परिज्ञातुं रामः आकारेंगितादिकमेवहेतुत्वेनोक्तवान्—

एतच्छ्रुत्वा यमाकारं भजते भरतस्तदा । स च ते वेदितव्य· स्यात् सर्वं यच्चापि मां प्रति ॥
ज्ञेयः सर्वे च वृत्तान्ता भरतस्येंगितानिच । तत्त्वेन मुखवर्णेन दृष्ट्याद्याभाषणेन च ॥
इति ।

**आकारः छाद्यमानोऽपि न शक्यो विनिगूहितुम् ।**
**बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ॥**

अनेन आकारगोपनमशक्यमित्युक्तम् । तथा च **द्रोणपर्वणि**—

नाकारो गूहितु शक्यो बृहस्पतिमतैरपि । इति ।

**देशकालोपपन्नं च कार्यं कार्यविदां वर ।**

**सफलं कुरुते क्षिप्रं प्रयोगेणाभिसंहितम् ॥**

अनेन देशकालानतिक्रमेण कृतं कार्यं सम्यक् फलतीति सूचितम् । तथा च **कामन्दके**—

न कार्यकालं मतिमानतिक्रामेत्कदाचन । कथंचिदेव भवति कार्ये योगस्सुदुर्लभः ॥

सता मार्गेण मतिमान् काले कर्म समाचरेत् । काले समाचरन् साधु रसवत्फलमश्नुते ॥

इति ।

**उद्योगं तव संप्रेक्ष्य मिथ्यावृत्तं च रावणे ।**
**वालिनश्च वधं श्रुत्वा सुग्रीवं चाभिषेचितम् ॥**

इत्यनेन च महापुरुषं बलवन्तं समाश्रयेन्नतु दुर्बलमिति सूचितम् ।

तथा च **कामन्दके**—

उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः । कुलोद्भूतं सत्यमार्गं आश्रयेत बलोत्कटम् ॥

इति ।

तथा स्वकार्यनिर्वहणे सामर्थ्यं परीक्ष्यैव समाश्रयेदिति सूचितम् । अत एव वालिहनन-सामर्थ्यं सालभञ्जनादिना परीक्ष्यैव रामभद्रमाश्रितवान्सुग्रीव इति प्रतिपादितं किष्किन्धा-काण्डे ।

अत्र उद्योगं संप्रेक्ष्येत्यादिना सद्वृत्तमुद्योगिनं त्वां मिथ्याप्रवृत्तं रावणं चावेक्ष्य वालिनो वधं सुग्रीवाभिषेकं च विचार्य बुद्धिपूर्वकं राज्याशया समागत अतोऽयं संग्राह्य इति प्रति-पादितम् । अनेन सद्वृत्तियुक्तस्योद्योगिनो मित्राण्यपि स्वत आगच्छन्ति असाध्यमपि सिद्ध्यति व्यसनिना तु सकलमपि कार्यं विनश्यतीति सूचितम् ।

सद्वृत्ताना कार्यसिद्धिर्व्यसनिना कार्यहानिरित्युभयमपि **कामन्दके**—

अन्वीक्षणं च विद्याना स्ववर्णाश्रमलक्षणम् । ग्रहणं शस्त्रशास्त्राणा युद्धमार्गोपशिक्षणम् ॥

व्यायामः शास्त्रविज्ञानं कर्मणां लक्षणानि च । गजाश्वरथपृष्ठेषु यथावत्सप्रवर्तनम् ॥

नियुद्धकुशलं माया परचित्तप्रवेदनम् । धूर्तताऽसाधुयुक्तेषु सत्सु सद्वृत्तदर्शनम् ॥

मन्त्रोद्योगौ तु मन्त्रित्वं तद्रक्ष्यास्वास्थ्यमेव च ।

उपेक्षा सामदानं च भेदो दण्डश्च साधनम् ॥

प्रशस्ताध्यक्ष सेनानी मन्त्र्यमात्यपुरोधनम् । सम्यक् प्रचारविज्ञान दुष्टानां चावरोधनम् ॥

गतागतपरिज्ञानं ततः संप्रेषणानि च । गुरूणामनुवृत्तिश्च पूज्याना चाभिपूजनम् ॥

धर्मासनप्रतिष्ठानं राज्यकण्टकशोधनम् । दूतादूतपरिज्ञानं कृताकृतपरीक्षणम् ॥

तुष्टातुष्टविवेकश्च सर्वेषामनुजीविनाम् । मध्योदासीनचरितज्ञान तत्सिद्धिपालनम् ॥

परिग्रहस्तु मित्राणाममित्राणां च निग्रहः । पुत्रदारादिगुप्तिश्च बन्धुवर्गपरिग्रहः ॥

स्ववृत्तियवनादीनां श्ववृत्तीना प्रवर्तनम् । असता च परिक्लेशः सतां च परिगूहनम् ॥
अहिंसा सर्वभूतानामधर्माणा च वर्जनम् । अकार्यप्रतिषेधश्च कार्याणा च प्रवर्तनम् ॥
प्रदान च प्रदेयानामादेयाना च संग्रहः । अदण्ड्यताप्यदण्ड्यानां दण्ड्याना चापिदण्डनम्
अग्राह्याग्रहणं चैव ग्राह्याणा ग्रहणं तथा । अर्थयुक्तस्य करणमनर्थस्य च वर्जनम् ॥
न्यायतश्च करादान स्वपक्षाप्रनिमोक्षणम् । संवर्धन प्रदानानां निरस्याना च निष्कृतिः ॥
वैषम्याणा प्रशमन भृत्याना चाविरोधनम् । अविज्ञातस्य विज्ञानं विज्ञातस्य च निश्चय. ॥
आरंभः कर्मणा शश्वदारब्धस्यांतदर्शनम् । अलब्धलिप्सान्यायेन लब्धस्य परिवर्धनम् ॥
परिवृद्धस्य विधिवत्पात्रे संप्रतिपादनम् । अधर्मप्रतिषेधश्च न्यायमार्गानुवर्तनम् ॥
उपकार्योपकारित्वमितिवृत्तं महीपतेः । एतत्सर्वममात्यादि राजामात्यपुरस्सरः ॥
नयत्युन्नतिमुद्युक्तो व्यसनी क्षयमेव तु ॥ इति ।

मित्राणि सिध्यन्तीत्यपि तत्रैव सद्भावेन हरेन्मित्रं सम्भ्रमेण च बान्धवान् । स्त्रीभृत्यान् प्रेमदानाभ्यां दाक्षिण्येनेतराञ्जनान् ॥ इति ।

इति पथि विनिवेशितात्मनो रिपुरपि गच्छति साधुमित्रताम् । इति च ।

**यथाशक्ति मयोक्तं तु राक्षसस्यार्जवं प्रति ।**
**त्वं प्रमाणं तु शेषस्य श्रुत्वा बुद्धिमतां वर ॥**

अनेन सचिवः राज्ञो हितं स्वयमुक्त्वा स्वस्मिन्नियंतृत्वशकापरिहाराय कार्ये स्वातन्त्र्यं स्वामिन एवेति निवेदयेदिति सूचितम् ।

अत उद्योगे दुर्योधन प्रति कर्तव्याभिधानानन्तर द्रोणस्य वचनम् ।
एतत्ते सर्वमाख्यातं यथेच्छसि तथा कुरु ॥ इति ।

नन्वत्र युवराजेनागदेन जांबवत्प्रभृतिभिर्मन्त्रिमुख्यैश्च अन्यमत निराकरणेन विना स्वस्वमतमुपन्यस्तम् । हनूमता तु इतरमतदूषणाभिधानपूर्वकं स्वमतमभिहितं तदसङ्गतम् । इतरदूषणाभिधानस्य परस्परभेदकत्वेन राजकार्यहानिकरत्वात् । भेदस्य कार्यहानिकरत्वं च **कामन्दके**—

अन्योन्यमेव निर्भिन्नं भिन्नगर्भं न युध्यते ॥ इति ।

प्रत्युत कार्यकाले प्रोत्साहनाय विद्यमानानपि दोषानाच्छाद्य अविद्यमानैरपि गुणैस्तोतव्या एव । एतदपि **कामन्दके**—

कार्यस्य हि गरीयस्त्वान्नीचानामपि कालवित् ।
सतोऽपि दोषानाच्छाद्य गुणानप्यसतो वदेत् ॥ इति ।

राज्ञाऽपि च सर्वसंमत एवार्थोऽनुसर्तव्य नत्वेकमात्राभिमतः। तत्र सर्वमन्त्रिसंमतार्थो अनुसर्तव्य इत्येतत्। **कामन्दके**–

यत्र मन्त्रिमनस्साम्यं यत्र चेतोऽनुशंकते।

यच्च सन्तो न निंदंति तत्परीयाच्चिकीर्षितमिति॥

एक मात्राभिमतोऽर्थो न ग्राह्य इत्येतत्। **राजधर्मे**—

नैकमिच्छेद्गणं हित्वा इति। **जैमिनि** मुनिरपि–

विप्रतिषिद्धधर्माणा समवाये भूयसा स्यात् स्वधर्मत्वम्। इति सूत्रेण भूयोनुग्रहो न्याय्य इत्याह—

तथा च हनुमत्कृतबहुजनतिरस्कारः रामकृततदङ्गीकारश्चायुक्त एवेति चेत् उच्यते। नात्र हनूमतः इतरमततिरस्करणे तात्पर्यमस्ति किंतु राजकार्यसिद्ध्यर्थतयैव इतर पक्षदूषणाभिधानम्। तथा च इतरकोपपरिहारपरं तस्यैव हनूमतो वाक्यम्।

न वादान्नापि सघर्षान्नाधिक्यान्न च कामतः।

वक्ष्यामि वचन राजन् यथार्थं रामगौरवात्॥ इति राजहितमिच्छता मन्त्रिणाऽपि कार्यकालात्यये प्राप्ते युक्तं वक्तव्यम्। तथा च **कामन्दके**—

आपद्युन्मार्गगमने कार्यकालात्ययेऽपि च।

अपृष्टोऽपि हितान्वेषी ब्रूयात्कल्याणभाषितम्॥ इति।

अत एव इतरेषा युक्तमेवानेनोक्तमिति न कोप परस्परभेदो वावगम्यते। तत्रापि च इतरमतगुणदोषानुद्धाटने न स्वमतमात्रोपन्यासे तद्वदिदमप्येकं मतमिति साधारणत्वबुद्ध्या स्वमतमप्रतिष्ठितं स्यात्। व्यवहरन्ति च शास्त्रकाराः। यावत्परमतं न निराक्रियते तावत्स्वमतमप्रतिष्ठितम् इति प्रत्युत बहुपक्षविरुद्धत्वादयमेव पक्षस्त्याज्यो भवेत् तथा च राज्ञः कार्यं हीयेत। राज्ञाऽपि च सर्वेषा मन्त्रिणा मतं विचार्य युक्तियुक्त मत ग्राह्यं परस्परविरोधे बहुपरित्यागेनापि बुद्धिमत एकस्यापि पक्षो ग्राह्यः। तथा च **राजधर्मे**—

यस्त्वेको बहुभिः श्रेयान् कामं तेन गणं त्यजेत्। इति।

सहस्रमपि मूर्खाणामेकं क्रीणाति पण्डितम्। पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निश्रेयसं महत्॥ इति च।

शतमप्यधानां न पश्यतीति न्यायादेकेनापि बहूना प्रतिबन्धसंभवाच्चेति।

तथा च स्वमतनिर्धारणेन राजकार्यसिद्ध्यर्थतया हनुमत्कृतमितरमतदूषण रामकृतं युक्तियुक्तहनुमत्पक्षस्याविचारेण परिग्रहणं चोपपन्नमेवेति॥

अष्टादशे ॥

**अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य ह ।**
**प्रत्यभाषत दुर्धर्षं श्रुतवानात्मसंस्थितम् ॥**

**ममापि तु विवक्षाऽस्ति काचित्प्रति विभीषणम् ।**
**श्रुतमिच्छामि तत्सर्वं भवद्भि श्रेयसि स्थितैः ॥**

अनेन मन्त्रिवाक्यश्रवणानन्तरं रामेण स्वकीयहृदयप्रतिपादनात् अन्यैरपि राजभिर्मन्त्रिणा मतं विज्ञाय स्वमतमपि गुणदोषज्ञानार्थं प्रकाशनीयमिति सूचितम् ।

अत एव कृष्ण· यादवाना मत विज्ञाय स्वमत तेभ्यो निवेदितवान् इति प्रतिपादित । **हरिवंशे**—

ब्रुवता वः श्रुतं वाक्यं हेतुतः क्रमशस्तथा । न्यायतश्शास्त्रतश्चैव दैव चानुपश्यत ॥
श्रूयतामुत्तरं वाक्य मम बुद्ध्या च गृह्यताम् ॥ इति ।

**मित्रभावेन संप्राप्तं न त्यजेयं कथचन ।**
**दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम् ॥**

अनेन मित्रभावेन संप्राप्तो दुष्टोऽपि सद्भिर्न परित्याज्य इत्युक्तम् ।
तथा **चानुशासनिके**—

अमित्रमपि चेद्दीन शरणैषिणमागतम् । व्यसने योऽनुगृह्णाति स वै पुरुषसत्तमः ॥
याचमान महादीनमनासक्तमकिचनम् । यो नार्चति यथाशक्ति स नृशंसो युधिष्ठिर ॥
इति । [तच्छ्रुत्वा सुग्रीव उवाच]

**सुदुष्टो वाऽप्यदुष्टो वा किमेष रजनीचरः ।**
**ईदृशं व्यसनं प्राप्तं भ्रातरं यः परित्यजेत् ॥**
**को नाम स भवेत्तस्य यमेष न परित्यजेत् ।**

अत्र आपदि ज्येष्ठ भ्रातरं परित्यज्य समागतो विभीषण. क वा न परित्यजेदिति सुग्रीवेण प्रतिपादनात् व्यसने स्वामिपरित्यागो न कर्तव्य इति सूचितम् ॥ तथा च **कामन्दके**—

निर्गुणं ह्यपि भर्तारमापत्सु न परित्यजेत् । तत. परतरो नास्ति य आपत्सूपतिष्ठते ॥
इति ।

**वानराधिपतेर्वाक्यं श्रुत्वा सर्वानुदीक्ष्य च ।**
**ईषदुत्स्मयमानस्तु लक्ष्मण पुण्यलक्षणम् ॥**
**इति होवाच काकुत्स्थो वाक्यं सत्यपराक्रमः ।**

अत्र ईषदुत्स्मयमान इत्यनेन इतरमन्त्रिभिर्निराकृतमपि पक्षं उपपत्त्या समर्थयत इति सुग्रीवे सन्तोषाविष्करणात् अन्येनापि समर्थे श्रेयस्करे मन्त्रिणि प्रीतिः कर्तव्येति सूचितम् । मन्त्रिणः श्रेयस्करत्व च उद्योगे—

एकोऽप्यमात्यो मेधावी शूरो दक्षः प्रियंवदः । राजानं राजमात्रं वा प्रापयेन्महतीं श्रियम् ॥ इति ।

अथवा हनूमता उपपत्त्या निराकृतमपि पक्ष तदाशयमविज्ञाय सुग्रीवो वदतीति रामेण हासकरणात् समर्थ पण्डित एव पराभिप्रायं जानातीति सूचितम् । तथा चाभियुक्ता —

उदीरितोऽर्थ पशुनापि गृह्यते हयाश्च नागाश्च वदन्ति चोदिताः ।
अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥ इति ।

ननु सुग्रीवस्य अनभिज्ञत्वेन परिहासकरणमयुक्तं अनधीत्य च शास्त्राणीत्यग्रिमश्लोकेन तस्यैवाभिज्ञत्वेन स्तुतिकरणादिति चेन्न ,

कार्यगौरवेण दोषाच्छादनपूर्वकं स्तुतिकरणसंभवात् । तथा च कामन्दके—

कार्यस्य गरीयस्त्वान्नीचानामपि तत्त्ववित् । सतोऽपि दोषान् प्रच्छाद्य गुणानप्यसतोवदेत् इति ।

तथा धार्मिकस्य मम शरणागतपरिपालन परमो धर्म शरणागतपरित्यागश्च गर्हित इति जानन्नपि सुग्रीवः धर्मविरोधेन केवलार्थपरा नीतिमवलंब्य वदतीति हासकरणात् धार्मिकस्य धर्मप्रधानैव नीतिः संमता भवतीति सूचितम् ।

अत एवार्थापेक्षया धर्म एव ममाभिमततरमित्युक्त मारण्यके भीम प्रति धर्मपुत्रेण—

मम प्रतिज्ञा च निबोध सत्या वृणेय धर्मममृताज्जीविताच्च ।
राज्य च पुत्राश्च यशोधनं च सर्व न सत्यस्य कलामुपैति ॥ इति ।

**अनधीत्य च शास्त्राणि वृद्धाननुपसेव्य च ।**
**न शक्यमीदृशं वक्तुं यदुवाच हरीश्वरः ॥**

अत्र अयुक्तमपि वदतः सुग्रीवस्य स्तुतिकरणात् युक्तिरहितमपि मन्त्रिणां मत न दूषयेत् अपि तु सादरमिव शृणुयादिति सूचितम् ॥ तथा च कामन्दके—

विदुषा शासने तिष्ठेन्नावमन्येत कंचन । सर्वस्य चोक्तं शृणुयात्सुभाषितजिघृक्षया ॥ इति। उद्योगे विदुरोऽपि—

न निह्नवं मन्त्रगतस्य गच्छेत् संसृष्टमन्त्रस्य कुसंगतस्य ।
न च ब्रूयान्नाश्वसिमि त्वयीति सकारणं व्यपदेश च कुर्यात् ॥ इति ।

अत एव सुग्रीवमुखभङ्गमकृत्वा तस्य स्तुतिपूर्वकं स्वमतेन तन्मतं पर्यायेण निराकरोति ।

**अस्ति सूक्ष्मतरं किंतु यदत्र प्रतिभाति मा ।**
**प्रत्यक्षं लौकिकं वापि विद्यते सर्वराजसु ॥**
**अमित्रास्तत्कुलीनाश्च प्रातिदेश्याश्च कीर्तिताः ।**
**व्यसनेषु प्रहर्तारस्तस्मादयमिहागतः ॥**

अत्र अमित्रा रिपव तत्कुलीना ज्ञातयः ।

अरिर्मित्रमरेर्मित्र मित्र मित्रमतः परम् । तथारिमित्र मित्रं च विजिगीषोः पुरस्सराः ॥

इति नीतिशास्त्र प्रसिद्ध द्वादश राजमण्डलान्तर्गत स्वदेश समीपवर्तिनो राजानः प्रातिदेश्याः । एते प्रबलतर रिपुकृतमवमानादिकं सोढ्वा कालकाङ्क्षिण. समागते काले रिपुं प्रहरेयुरित्युक्तम् ॥ तथा च **कामन्दके—**

कौर्मं संकोचमास्थाय प्रहारमभिरोचयेत् । काले प्राप्ते तु मतिमानुत्तिष्ठेत्क्रूरसर्पवत् ॥
वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः । ततः पर्यागते काले भिन्द्याद्धटमिवाश्मनि ॥

इति ।

तथा अरिः प्रातिदेश्यो ज्ञातयश्चेत्येते सहजशत्रवः समये प्रबलमाश्रित्य प्रहरंति । अतोऽस्य राज्यकामुकस्य रावणं प्रहर्तुमस्मत्समाश्रयपरस्य विभीषणस्य परिग्रहे रावणः सुखच्छेद्यो भवतीत्यवगमात् शत्रुसकाशात्प्राप्तेन सहायेन शत्रुः सुखच्छेद्यो भवतीति सूचितम् । तथा च **कामन्दके—**

विषं विषेण व्यथते वज्रं वज्रेण भिद्यते । गजेन्द्रो दृष्टसारेण गजेन्द्रेणैव बध्यते ॥
मत्स्यो मत्स्यं समादत्ते ज्ञाति ज्ञातिरसशयः । रावणोच्छित्तये रामो विभीषणमपूजयत् ॥

इति ।

**अपापास्तत्कुलीनाश्च मानयन्ति स्वकान् हितान् ।**
**एष प्रायो नरेन्द्राणां शङ्कनीयस्तु शोभनः ॥**

अत्र अपापा· परस्परानिष्टचिन्तारहितास्तत्कुलीना ज्ञातयः हितान् स्वकामान् नयत्येवेत्ययमर्थ· सर्वसाधारण· । राज्ञा तु राज्यैश्वर्यलोभवशादुपजापवशाद्वा शोभनोऽपि ज्ञातिः शङ्कनीय एव भवतीति प्रतिपादनात् राज्ञां ज्ञातिभ्यो भयं नियतमिति सूचितम् ।
तथा च **राजधर्मे—**

ज्ञातिभ्यश्चैव बुद्ध्येथा मृत्योरिव भय सदा । उपराजेव राजर्धिं ज्ञातिर्न सहते सदा ॥
ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः । नान्यैर्ज्ञातिर्महाबाहो विनाशमभिविन्दति ॥

इति ।

**यस्तु दोषस्त्वया प्रोक्तो ह्यादानेऽरिबलस्य च ।**
**तत्र ते कीर्तयिष्यामि यथा शास्त्रमिदं शृणु ॥**
**न वयं तत्कुलीनश्च राज्यकांक्षी च राक्षसः ।**
**पण्डिता हि भविष्यन्ति तस्माद्ग्राह्यो विभीषणः ॥**

अत्र वालिवधेन सुग्रीवराज्याभिषेक इव रावणवधेन स्वस्य राज्याभिषेको भविष्यतीति समागत. ।

स्थापयेत्तत्र तद्वश्यं कुर्याच्च समयक्रियाम् इति मनुवचनेन शत्रुवधानन्तरं तद्राज्ये तत्कुलीनस्थापनस्य धर्मत्वावगमात् अस्मासु तत्कुलीनत्वाभावेन स्वीयराज्याहरणशंकारहितः हिताहितविवेकश्चास्य संभाव्यते , अत· सग्राह्यो विभीषण इति प्रतिपादनात् । यदधीनं यस्य राज्यादिकं स तस्य द्रोह न करिष्यतीति तस्मिन् विश्वासं कुर्यादिति सूचितम् । तथा च **राजधर्मे**—

यं मन्येत ममाभावादस्याभावो भवेदिति । तस्मिन् कुर्वीत विश्वासं यथा पितरि वै तथा ॥
इति ।

तथा राज्यकांक्षी चेति चकाराद्रावणादुच्छेदशंकया तं परित्यज्य अस्मान् प्राप्त इत्यर्थातरस्याप्यवगमात् अन्योऽपि राजसकाशादुच्छेदशङ्काया तस्मादुत्थायान्यं बलोत्कटमाश्रयेदिति सूचितम् ॥ तथा च **कामन्दके**—

उच्छिद्यमानो बलिना निरुपायप्रतिक्रिय· । कुलोद्भतं सत्यमार्गमाश्रयेत बलोत्कटम् ॥
इति ।

ननु जात्या मूर्खेषु राक्षसेषु उत्पन्नस्य विभीषणस्य हिताहितविवेकसंभावना कथमिति चेन्न हिताहितविवेकस्य मूर्खजातिष्वपि क्वचिद्दर्शनात् । अत एवासुरपुत्रेष्वपि प्रह्लादस्यैव विवेक उक्तो **विष्णुपुराणे**—

हिरण्यकशिपोः पुत्राश्चत्वारः प्रथितौजसः । अनुह्लादश्च ह्लादश्च प्रह्लादश्चैव धर्मवान् ॥
संह्लादश्च महावीर्यो दैत्यवशविवर्धनाः । तेषां मध्ये महाभागः सर्वत्र समदृग्वशी ॥
प्रह्लादः परमां भक्तिं च उवाह जनार्दने । धर्मात्मा सत्यशौचादिगुणानामाकरस्तथा ॥
उपमानमशेषाणा साधूना यस्सदा भवेत् ॥ इति ।

एवं प्रभावो दैत्योऽसौ मैत्रेयासीन्महामतिः ॥ इति च । एवं बलेरपि ज्ञानमुक्तं **मोक्षधर्मे**—

न हीदृशमहभावमवशः प्राप केवलम् । यदेवमभिजानामि का व्यथा मे विजानतः ॥
इति ।

तथा चतुर्मुखजातावुत्पन्नस्यापि विभीषणस्य प्रह्लादादिवत् हिताहितविवेकः संभवतीत्यभिप्रायेण श्रीरामेणोक्तं "पण्डिता हि भविष्यन्तीति।"

**अव्यग्राश्च प्रहृष्टाश्च न भविष्यंति सङ्गताः।**
**प्रवादश्च महानेष ततोऽस्य भयमागतम्॥**

अत्र ज्ञातयः स्वीयेषु विभूति दृष्ट्वा अभ्यसूयया स्नेह न कुर्वन्तीत्युक्तम्।

अत एव धर्मपुत्रस्य प्रज्वलितां श्रियं दृष्ट्वा सन्तप्तो दुर्योधनः अभ्यसूयया धर्मपुत्रस्य राज्यापहरणाय वधकरणाय च यत्नं कृतवानिति प्रतिपादित **सभापर्वणि**—

दृष्ट्वेमां पृथिवी कृत्स्ना युधिष्ठिरवशानुगाम्। जितामस्त्रप्रतापेन श्वेताश्वस्य महात्मनः॥
तं च यज्ञं तथाभूतं दृष्ट्वा पार्थस्य मातुल। श्रिय तथाविधा दृष्ट्वा ज्वलन्तीमिव पाण्डवे
अमर्षवशमापन्नो दह्यामिति तथोचितः। कृतो यत्नो मया पूर्वं विनाशे तस्य सौबल॥
तच्च सर्वमतिक्रम्य संवृद्धोऽप्स्विव पंकजम्। इति।

**इति भेदं गमिष्यन्ति तस्माद्ग्राह्यो विभीषणः।**

इत्यनेन स्वतः संप्राप्तस्य विभीषणस्य अभयदानराज्याभिषेकादिना संग्रहे कृते अनेनैव न्यायेन श्रेयोर्थिनोऽन्येऽपि शत्रुपक्षीयास्तस्माद्भिन्नाः संतः स्ववशा भविष्यंति अतोऽस्य संग्रहः कर्तव्य इत्युक्त्या निखिलशत्रुबलभेदनाय मर्मज्ञो ज्ञातिः सग्राह्य इति सूचितम्।

आपदि भ्रातरं परित्यक्तवतः को वा न परित्याज्य इत्यस्येदमुत्तरम्।

**न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः।**
**मद्विधा वा पितुः पुत्राः सुहृदो वा भवद्विधाः॥**

अत्र राज्यलोभेन पितृभ्रात्रादीनवमत्यापि लोके तैस्तैः राज्यसुखस्य अनुभूयमानत्वात् प्राप्तमपि राज्यं परित्यज्य भ्रातृचित्तानुवृत्तिं कृतवतो भरतस्य पित्राज्ञया प्राप्तराज्यं परित्यज्य वने वसतो मम प्राप्तं राज्यसुखमननुभूय मित्रार्थे क्लेशमङ्गीकृतवतस्तव सदृशः कोऽपि नास्तीति प्रतिपादनात्।

केषाचिदेवाभिज्ञाना महापुरुषाणां राज्यसुख व्यामोहकरं न भवतीतरेषां भवत्येवेति सूचितम्। तथा च **मोक्षधर्मे**—

न पण्डितः क्रुध्यति नोपसज्जते न चापि संसीदति न प्रहृष्यति।
न चार्थकृच्छ्रव्यसनेषु शोचते स्थितः प्रकृत्या हिमवानिवाचलः॥
यमर्थसिद्धिः परमा न हर्षयेत्तथैव काले व्यसनं न मोहयेत्।
सुखं च दुःखं च तथैव मध्यमं निषेवते यः स धुरन्धरो नरः॥ इति।

ननु भ्रातरं विरुध्य समागतोऽयं विभीषणः संग्राह्य इति प्रतिपादनाय, न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः । इत्येतत्प्रतिपादनस्य सप्रयोजनत्वेऽपि इतरांशप्रतिपादनं निष्प्रयोजनमिति चेन्न भरतसदृशो भ्राता न भविष्यतीत्येतावन्मात्रप्रतिपादने भ्रातृद्रोहिण सुग्रीवस्य मर्मोद्धाटनेन मनसि वैषम्ये सति असमाधानेन कार्यं हीयेत तन्माभूदित्येवमर्थं सुहृदो वा भवद्विधा इति सुहृत्कार्यकरणे त्वादृशो विरल एवेत्युक्तं । एवमपि अकाण्डे स्वस्तुतिः किमर्थं कृतेति सुग्रीवस्य पुनरपि शङ्का भवेत्तन्माभूदित्येवमर्थतया स्वतुल्यताज्ञापनार्थं मद्विधा वा पितुः पुत्रा इत्युक्तम् । एवं च भ्रात्रनुवर्तने भरतस्य पित्राज्ञापरिपालने स्वस्य सुहृत्कार्यसाधने सुग्रीवस्य सदृशोऽन्यः कोऽपि नास्तीति तस्य तस्य विशेषगुणकथनं सफलम् । एवं च सति मद्विधा वा पितुः पुत्रा इत्येतस्य रामवचनस्य आत्मप्रशंसां परगर्हामिति च वर्जयेदिति धर्मशास्त्रप्रतिषिद्धात्मस्तुतिरूपत्वमपि परिहृतं भवति—मित्रमनस्समाधानार्थतया भूतार्थकथनरूपत्वात् भूतार्थकथने स्वगुणाविष्करणं न दोषाय । तथा च प्राचीनाः—

स्वगुणाविष्कृतो दोषो नात्र भूतार्थशंसिनः । इति ।

एवमुक्तस्तु रामेण सुग्रीवस्सहलक्ष्मणः ।
उत्थायेदं महाप्राज्ञः प्रणतो वाक्यमब्रवीत् ॥
रावणेन प्रणिहित तमवेहि विभीषणम् ।
तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥
राक्षसो जिह्मया बुद्ध्या सन्दिष्टोऽयमिहागतः ।
प्रहर्तुं त्वयि विश्वस्ते प्रच्छन्नो मयि वानघ ॥
लक्ष्मणे वा महाबाहो स वध्यः सचिवैस्सह ।
रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥
एवमुक्त्वा रघुश्रेष्ठं सुग्रीवो वाहिनीपतिः ।
वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥

अनेन क्रूरस्य वंचकस्य च नीतिमार्गानुसारेण अग्राह्यस्यापि विभीषणस्य संग्रहः कर्तव्य इति आग्रहेण वदन्तं श्रीरामभद्रं प्रति न संग्राह्य इति प्रणतिपूर्वकं सुग्रीवेण निषेधकरणात् प्रभोराग्रहे सति मन्त्रिभिः प्रणामादिभिरुपायैः परावृत्तिः कर्तव्येति सूचितम् ॥

तथा च कामन्दके—

बोधयेयुः प्रमाद्यन्तमुपायैर्नाडिकादिभिः । आपद्युन्मार्गगमने कार्यकालात्ययेषु च ॥
अपृष्टोऽपि हितान्वेषी ब्रूयात्कल्याणभाषितम् ॥ इति ।

सुग्रीवस्य च तद्वाक्यं रामः श्रुत्वा विमृश्य च ।
ततः शुभतरं वाक्यमुवाच हरिपुंगवम् ॥

अत्र, सुग्रीवोदीरितं वाक्यं नीतिप्रधानत्वाच्छुभं रामवाक्यं तु धर्मप्रधानत्वाच्छुभतरमिति प्रतिपादितम् ।

एवं च अर्थधर्मवाक्ययोः शुभशुभतरत्वप्रतिपादनेन मोक्षयुक्तवचनस्य शुभतरत्वप्रतिपादनेन मोक्षयुक्तवचनस्य शुभतरत्वं कामयुक्तवचनस्य तु अप्रशस्तत्वान्निकृष्टत्वमित्यर्थात्सिद्धम् । तथा च सर्वपुरुषार्थापेक्षया कामः अप्रशस्तत्वान्निकृष्टः तदपेक्षया अर्थो ज्यायान् अर्थकामाभ्यां धर्मो ज्यायान् धर्मार्थकामापेक्षया मोक्षो ज्यायानिति सूचितम् ॥

तत्र कामस्याप्रशस्तत्वं मूल एव स्फुटम्— "कामात्मता खल्वपि न प्रशस्ता" इति ।

भोक्तृविनाशकत्वादपि कामस्याप्रशस्तत्वम् । भोक्तृविनाशकत्वं च **कठवल्ल्यां**—

श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणाजरयन्ति तेज अपि सर्वं जीवितमल्पमेव ।

इति । **वनपर्वणि**— धर्मपुत्रं प्रति भीमोऽपि—

तस्य धर्मार्थहीनस्य कामार्थे निधनं ध्रुवम् । कामतो रममाणस्य मीनस्येवाम्भसः क्षये ॥

इति ।

अर्थस्य कामापेक्षया प्राबल्यं च कामजनकत्वात् । तथा **चारण्यके** द्रौपदीवाक्ये—

अर्थमिच्छति कामार्थी न कामादन्यमिच्छति ॥ इति ।

अर्थकामाभ्यां च धर्मस्य प्राबल्यं **राजधर्मे**—

धर्मस्त्वर्थाच्च कामाच्च धर्म एवोत्तरो भवेत् । अस्मिन् लोके परे चैव धर्मात्मा सुखमेधते ॥

इति ।

अर्थसिद्धेः परं धर्मं मन्यते यो महीपतिः । ऋद्ध्या च कुरुते वृद्धिं स धर्मेण विराजते ॥

इति च ।

धर्मार्थकामापेक्षया मुक्तिप्राबल्यं च **मोक्षधर्मे**—

मोक्षो वा परमं श्रेय इति राजन् सुखार्थिनाम् ॥ इति ।

अत एव तत्साधनस्यात्मतत्त्वज्ञानस्य सर्वापेक्षया उत्कृष्टत्वमुक्तं **मानवे**—

वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च निग्रहः । अहिंसा गुरुसेवा च नैश्रेयसकरं परम् ॥
सर्वेषामपि चैतेषां शुभानामिह कर्मणाम् । किं स्याच्छ्रेयस्करतरं कर्मोक्तं पुरुषं प्रति ॥
सर्वेषामिह चैतेषामात्मज्ञानं परं स्मृतम् । तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः ॥

इति । **विष्णुपुराणेऽपि**—

धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता ।
समस्तजगतां मूले यस्य भक्तिः स्थिता त्वयि ॥ इति ।

सुग्रीवप्रतिपादितनीतिप्रधानार्थशास्त्रस्य रामेणाङ्गीकृतधर्मशास्त्रस्य च विरोधे सति अर्थ-प्रधानशास्त्र दुर्बलविषयं धर्मप्रधानशास्त्रं बलवद्विषयमिति शास्त्रयोर्विषयव्यवस्थां प्रतिपाद-यितुं स्वस्य बलवत्ता प्रतिपादयन्नाह—

**सुदुष्टो वाऽप्यदुष्टो वा किमेष रजनीचरः।**
**सूक्ष्ममप्यहितं कर्तुं ममाशक्तः कथंचन॥**

**पिशाचान् दानवान् यक्षान् पृथिव्यां ये च राक्षसाः।**
**अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर॥**

अनेन इच्छामात्रेण शत्रुसंहारसमर्थे बलवति महापुरुषैरितरैः कापट्येन प्रयुक्तं वध-साधनं निष्फलं भवतीति सूचितम्।

अत एव प्रबलतरे प्रह्लादे दुष्टेन हिरण्यकशिपुना वधार्थं प्रयुक्तं विषाग्न्यायुधादिकं निष्फलमिति प्रतिपादितं। **विष्णुपुराणे—**

यस्त्वेतद्भगवानाह प्रह्लादं प्रति सत्तमम्। धर्मात्मा सत्यशौचादिगुणानामाकरस्तथा॥
उपमानमशेषाणां साधूनां य. सदाऽभवत्। ददाह नाग्निर्नास्त्रैश्च क्षुण्णस्तत्याज जीवितम्
जगाम वसुधा क्षोभं यत्राब्धिसलिलस्थिते। दृढबन्धोऽपि चलितो विक्षिप्तांगस्समाहित·॥
शैलैराक्रान्तदेहोऽपि न ममार च यः पुरा। त्वयैवेतीह माहात्म्यं कथितं यस्य धीमतः॥
श्रोतुमिच्छामि तस्यैतच्चरितं चामितौजसः॥ इति।

अङ्गुल्यग्रेण तान् हन्यां इत्येतस्य प्रतिज्ञारूपत्वभ्रमो माभूदित्येतदर्थं इच्छन्निति पदं दत्तं इति।

**श्रूयते हि कपोतेन शत्रुश्शरणमागतः।**
**अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः॥**

**स हि तं प्रतिजग्राह भार्याहर्तारमागतम्।**
**कपोतो वानरश्रेष्ठाः किंपुनर्मद्विधो जनः॥**

अत्र आर्त अभयप्रदानेन संरक्षणीय इति। अस्मिन्नर्थे आतिथ्यप्रधानस्य लुब्ध-कपोतीयोपाख्यानस्योदाहरणेन आतिथ्यकरणाकरणयोर्ये गुणदोषास्ते सर्वे अभयप्रधानविषये भवन्तीति सूचितम्।

अत एवापद्धर्मे लुब्धकपोतीये— आतिथ्यशरणागतसरक्षणयो· सङ्कलनेन प्रतिपादनं कृतम्।

कश्चिदस्ति समस्तजीवघातको दुरासदपराक्रमः किरातनेता स एक एव गंभीरमटवी-तटमवगाह्य गतागतपथिकजननिवहान्निहत्य तदीयस्कन्ध लम्बमान वसनांतरितपाथेयान्

सत्वरमेव हृत्वा भक्षयन्ननुक्षणं संवर्धमानदुर्वारगर्वभरपरवशशरीरश्चिरं संचरन् सकल-बन्धुजनैरतीवदुराचार इति निरस्तो बभूव ।

नरः पापसमाचारस्त्यक्तव्यो दूरतो बुधैः । आत्मानं योऽभिसन्धत्ते सोऽन्यस्य स्यात् कथं हितः ॥

ये नृशंसा दुरात्मानः प्राणिप्राणहरा नरा· । उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥

अनन्तरमनन्तसीम्नि सगर्भनिर्भेदन पटुतररवाभिः सतटिल्लताभिराविर्भूय घनघटाभिर्युग-पदेव विमुच्यमानाभिः जलशिलावर्षधाराभिः भुवनभौंतराल दशदिशास्वंधीकृतासु आर्तः स्वमपि अश्रुं धारावर्षं वर्षयन्नंतर्धृत कुटिलभावं बहिरङ्गेष्वखिलेषु प्रकटयन्निव शैत्यातिशयेन कुटिलीभवदवयवः साक्षादंध इव दीनभावं पुरोधाय पुरः पश्चात्पार्श्वयोरपि मुहुर्मुहुरालोक-मालोकं कयाचिद्वर्तन्या शनैश्शनैर्गच्छन् मध्येमार्गमार्द्रगरुत्तिं वसुमतीतलगतपतत्रियुवतिं किमिदमिति पदांगुष्ठेन परामृश्य पक्षिजातिरिति निश्चित्य रयेण शयेन गृहीत्वा पञ्जरे निवेशयामास ।

अथ सकलेषु बलाहककुलेषु विनिर्गलित जलेषु दुरात्मनः किरातस्य वासभुवि वर्षितु-मस्यां न युक्तमिति निश्चित्येव दिशि दिशि पलायमानेषु विरहजन विषादकरैः तुहिनकर-करनिकरै· सितीकृतासु दिक्षु विदिक्षु तत्क्षणमयमप्यक्षीणहर्षः क्वचिद्वनवृक्षमूलमुपाविक्षत् ।

साजलिं प्रणतिं कृत्वा वाक्यमाह वनस्पतिम् ।
शरणं यामि यान्यस्मिन् दैवतानि वनस्पतौ ॥

इत्यभिधाय,

सशिलाया शिरः कृत्वा पर्णान्यास्तीर्य भूतले । दुःखेन महताविष्ट. ततस्सुष्वाप पक्षिहा ॥

तत्र तन्महीरुहशाखायां जायावियोगजायमानतापातिरेकपरीतः कपोत इत्थं विललाप—

अपि स्वस्ति भवेत्तस्या. प्रियाया मम कानने । तया विरहितं हीद शून्यमद्य गृह मम ॥
पुत्रपौत्र वधूभृत्यैराकीर्णं मयि सर्वतः । भार्याहीनं गृहस्थस्य शून्यमेव गृहं भवेत् ॥
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते । गृहं तु गृहिणीहीनं अरण्यसदृशं भवेत् ॥
न भुंक्ते मय्यभुंक्ते सा नास्नाते स्नाति सुव्रता । न तिष्ठत्युपतिष्ठेत शेते च शयिते मयि ॥
हृष्टे भवति सा हृष्टा दुःखिते मयि दुःखिता । प्रोषिते दीनवदना क्रुद्धा च प्रियवादिनी ॥
यस्य स्यात्तादृशी भार्या धन्यस्स पुरुषो भुवि ॥
एवं विलपतस्तस्य श्रुत्वा तु करुण वचः । गृहीता शकुनिघ्नेन कपोता वाक्यमब्रवीत् ॥
अहोऽतीव सुभाग्याऽहं यस्या मे दयितः पतिः । असतो वा सतो वाऽपि गुणानेवं प्रभाषते
न सा स्त्री ह्यभिमन्तव्या यस्यां भर्ता न तुष्यति ।

तुष्टे भर्तारि नारीणां तुष्टा स्युस्सर्वदेवताः ॥
अग्निसाक्षिकमित्येव भर्ता वै दैवत परम् । दावाग्निनेव निर्दग्धा सपुष्पस्तबका लता ॥
भस्मीभवतु सा नारी यस्यां भर्ता न तुष्यति ।

इति विचिंत्य शरणागतसंरक्षणलक्षणधर्मसरक्षणाय वनाटकरकलित पञ्जरांतर्लीना सती कपोतीयं स्वपतिमेवमुवाच— "हे कांत ! किमर्थमेकांतत· शाखांतर्नीडांतरालनिषण्णो नितांतचिन्तातातस्वातोऽत्यतश्रांतिमतोऽस्य वनेचरस्य पूजां समाचर—

यो हि कश्चिद्द्विजं हन्याद्वा च लोकस्य मातरम् ।
शरणागतं च यो हन्यात्तुल्यं तेषां च पातकम् ॥
यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्तते । स प्रेत्य लभते लोकानक्षय्यानिति शुश्रुम ॥
स त्वं सन्तानवानद्य पुत्रवानसि च द्विज । यस्त्वदेहे दयां त्यक्त्वा धर्मार्थी परिगृह्य च ॥
पूजामस्मै प्रयुंक्ष्व त्वं प्रीयेतास्य मनो यथा । शरीरे मा च संतापं कुर्वीथास्त्वं विहङ्गम ॥
शरीरयात्राकृत्यार्थमन्यान्दारानुपेष्यति ।

सोऽपि तदाकर्ण्य विकृतपक्षपातोऽप्यविकृतपक्षपातः कपोतः यो मदीयमन्दिरं प्रत्यागतः समित्रजनो वा भवत्वमित्रजनो वा भवत्वातिथ्यं दातुं तस्मै युक्तमस्माकमिति सस्मितमेव विस्मयवदन्यानि फलानि जलान्यादाय शाखिशाखाशिखावसतिमपहाय धरातले किरातस्य पुरस्तादवतीर्य तमेवमुवाच—

अरावप्युचितं कार्यमातिथ्यं गृहमागते । छेत्तुमप्यागते छाया नोपसंहरते द्रुमः ॥
शरणागतस्य कर्तव्यमातिथ्यमिह यत्नत. । पञ्चयज्ञप्रवृत्तेन गृहस्थेन विशेषतः ॥
पञ्चयज्ञांस्तु यो मोहान्नकरोति गृहाश्रमे । तस्य नायं च परो लोको भवति धर्मतः ।

अतो भवतो मनोवाञ्छाभिपूरणे किं करोमीत्यालपंतं वियच्चरकुलपं तं शैत्यगरिमामतीव पीडयत्येतदपनोदनाय कञ्चिदुपायनोपायं चिन्तयेत्यकथयत्— तदनु गगनचरोऽपि अनेकवनेभ्यो लोहकारगेहाच्च शुष्कपत्राणि वीतिहोत्रमपि पद्भ्यां चंचुपुटमुखादादाय प्रतिष्ठाप्य तदुच्छ्रिताभिर्ज्वालामालाभिः शाबरतनुसञ्जातशैत्यजातमुत्सार्य पुनःपुनः किं तनवानीत्युदीर्य क्षुत्समुत्क्षेपणकारणपारणामादिशेति तेनैव याचितः कपोतः अहो महीतलेऽहमहन्यहनि जीवनमेव तन्वन् कथमतिथिपूजानियमानुबन्ध इति चिन्तातरङ्गिणी तरङ्गसङ्गतातरङ्गः चिरमालोच्य सर्वथा परित्यज्य प्राणानपि अतिथिसन्तर्पणं कर्तव्यमिति निश्चित्य हे महाभाग ! मामेव भक्षयेति स्वेन कल्पिते तस्मिन् जाज्वल्यमानतनूनपाति तनूनपातयत्— कपोती च मदीयजठरलुठत्क्षुधमुत्सारयितुं किल चकार कार्यमेतादृक्षपक्षीति बहुधा

पश्चात्तापसनाथेन व्याधेन विसृष्टा अनुभूतपरपुरुषकरस्पर्शेनामुना देहेन सह भर्तारमाप्तु-मनुचितमितीव निश्चिन्वंती स्वकीयमङ्गं कृपीटयोनौ निपात्य गृहीतदिव्यस्वरूपा स्वपति-समीपमवाप—पश्चाद्देवताभिरानीयमानेपि नवरत्नखचित शातकुम्भस्तंभसभासमाने विमाने उभयपार्श्वगताप्सरस्त्रीकरतलकलितचामरमारुत किंचिच्चलितकनकोत्तरीयौ विलोकनीयौ धार्यमाणदेवताकृती कपोतदंपती समीक्ष्य अतिथिपूजामाहात्म्यं स्मरन् स्वयमतिथि पूजा-नियममाहर्तुमनाः स्वयं लुब्धकोऽप्यलुब्धकः सततमतिथिपूजानिरतः सुखमास इति ।

उक्तार्थे सर्वेषा विश्वासोत्पादनाय ऋषिर्गाथामुदाहरति—

**ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा ।**
**शृणु गाथां पुरा गीतां धर्मिष्ठां सत्यवादिनीम् ॥**
**बद्धांजलिपुट दीनं याचन्तं शरणागतम् ।**
**न हन्यादानृशंस्यार्थमपि शत्रुं परंतप ॥**
**आर्तो वा यदि वा दृप्तः परेषां शरणागतः ।**
**अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ॥**
**स चेद्भयाद्वा मोहाद्वा कामाद्वा यो न रक्ष्यति ।**
**स्वया शक्त्या यथातत्त्वं तत्पाप लोकगर्हितम् ॥**

अनेन शक्तौ सत्यां शरणागतस्यारक्षणे पापं भवतीति सूचितम् । तथा च **गौतमः**—

ब्राह्मणाभिशंसने दोषस्तावान् द्विरनेनसि दुर्बलहिंसायां चाविमोचने शक्तश्चेत् ॥

इति। **श्येनकपोतीयेऽपि**—

योहि कश्चिद्द्विजान् हन्याद्गा वा लोकस्य मातरम् ।
शरणागतं च त्यजते तुल्यं तेषा हि पातकम् ॥ इति ।

**विनष्ट पश्यतस्तस्यारक्षिण शरणागत ।**
**आदाय सुकृतं तस्य सर्व गच्छेदरक्षितः ॥**
**एवं दोषो महानत्र प्रपन्नानामरक्षणे ।**
**अस्वर्ग्यं चायशस्य च बलवीर्यविनाशनम् ॥**

अनेन विनाशं गच्छन् शरणागतः अरक्षकस्य यावज्जीवं समार्जितं सर्वमपि सुकृत-मादाय गच्छतीत्युक्तम् ।

अनेनापि शरणागतसंरक्षण आतिथ्ययोस्तुल्यत्वमवगम्यते अस्यैव फलस्य आतिथ्या-करणेऽपि स्मरणात् । तथाचानुशासनिके—

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते । स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥ इति ।

एवमकरणे प्रत्यवायमुक्त्वा करणे फलाधिक्यमाह—

**करिष्यामि यथार्थं तु कण्डोर्वचनमुत्तमम् ।**
**धर्मिष्ठं च यशस्यं च स्वर्ग्यं स्यात्तु फलोदयम् ॥**

अनेन शरणागतसंरक्षणं महाफलं स्वर्ग्यं चेत्युक्तम् ।

अत एव शरणागतरक्षणं स्वर्ग्यं महाफलमित्युक्तमानुशासनिके । भीष्मः—

इदं शृणु महाप्राज्ञ धर्मपुत्र महायशाः । इतिहासं पुरावृत्तं शरणार्थं महाफलम् ॥
काशीनामीश्वरः ख्यातस्त्रिषु लोकेषु कर्मणा । स राजर्षिर्गतः स्वर्गं कर्मणा तेन शाश्वतम् ॥
शरणागतेषु चैव त्वं कुरु सर्वं युधिष्ठिर ॥ इति । **आरण्यकेऽपि—**

एकतः क्रतवस्सर्वे एकतः परिवासराः । एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥
इति ।

एवं शरणागतसंरक्षणं सर्वसाधारण धर्ममुक्त्वा स्वकीयव्रतमप्याह—

**सकृदेव प्रपन्नाय तवास्मीति च याचते ।**
**अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥**

अत्र प्रपन्नाय तवास्मीति मनसा निश्चितवते वाचापि तवास्मीति याचमानाय अभयं ददामि सर्वेभ्यो भूतेभ्यो अभयदानं मम व्रतमिति च श्रीरामभद्रेण प्रतिपादनात् सर्वदानेष्वभयदानमत्युत्कृष्टमिति सूचितम् ॥ तथा च **मनुः—**

अभयस्य हि यो दाता स पूज्यस्सततं नृपः ।
सत्रं हि वर्तते तस्य सदैवाभयदक्षिणम् ॥ इति । **आनुशासनिकेऽपि—**

अभयं सर्वभूतेभ्यो यो ददाति दयापरः । अभयं तस्य भूतानि ददातीत्यनुशुश्रुम ॥
क्षतं च स्खलितं चैव पतितं क्लिष्टमाहितम् । सर्वभूतानि रक्षन्ति समेषु विषमेषु च ॥
नैनं व्यालमृगा घ्नन्ति न पिशाचा न राक्षसाः ।
मुच्यते सर्वकालेषु मोक्षयेद्यो भये नरान् ॥

प्राणदानात्परं दानं न भूतं न भविष्यति । न ह्यात्मनः प्रियतरं किंचिदस्तीति निश्चितम्
अनिष्टं सर्वभूताना मरणं नाम भारत ॥ इति । **अभियुक्ताऽपि—**

न गोप्रदानं न महीप्रदानं न चान्नदानं न तथात्मदानम् ।
यथा वदन्तीह महाप्रदानं सर्वप्रदानेष्वभयप्रदानम् ॥ इति ।

**आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया ।**
**विभीषणो वा सुग्रीव यदि वा रावणः स्वयम् ॥**

अत्र सुग्रीवेण पूर्वं प्रतिषिद्धस्य विभीषणसंग्रहस्य पुनः सुग्रीवसमाधानपूर्वकं तन्मुखेनैव करणात् परस्परवैमत्येन कार्यहानिपरिहाराय पुरातनाधिकारिणां संमत्यैव नूतनमनुष्यसंग्रहः कर्तव्यः अन्यथा कार्यहानिरिति सूचितम् । तथा च **कामन्दके—**

मूलभृत्यविरोधेन नागंतून् प्रतिमानयेत् । नात परतोऽन्योऽस्ति राजभेदकरोऽगदः ॥
इति ।

अत एव पुरातनानां भीष्मादीनां संमतिं विना संगृहीतस्य कर्णस्य सर्वदा भीष्मेण सह स्पर्धमानस्य युद्धसमये उपेक्षया भर्तृकार्यहानिर्दृष्टा । **उद्योगे भीष्मः—**

सेनापतिस्त्वहं राजन् समयेनापरेण ते । भविष्यामि यथाकामं तन्मे श्रोतुमिहार्हसि ॥
कर्णो वा युध्यता पूर्वमहं वा पृथिवीपते । स्पर्धते हि सदाऽत्यर्थं सूतपुत्रो मया रणे ॥
इति । **कर्णः—**

नाहं जीवति गागेये योत्स्ये राजन् कथंचन । हते तु भीष्मे योत्स्यामि सह गाण्डीवधन्वना
इति ।

तथा साक्षादपकारिणोऽपि रावणस्याप्यभयदातुर्मम तदनुजस्य विभीषणस्याभयदाने कः संशय इति प्रतिपादनात् साक्षादपकारिणोऽपि शरणागतस्य शत्रोरभयप्रदानं कर्तव्यमिति सूचितम् ॥ **तथाचानुशासनिके—**

अमित्रमपि चेद्दीनं शरणैषिणमागतम् । व्यसने योऽनुगृह्णाति स वै पुरुषसत्तमः ॥
इति ।

> **रामस्य तु वचः श्रुत्वा सुग्रीवः प्लवगेश्वरः ।**
> **प्रत्यभाषत काकुत्स्थं सौहार्देनाभिचोदितः ॥**
> **किमत्र चित्र धर्मज्ञ ! लोकनाथ सुखावह ।**
> **यत् त्वमार्यं प्रभाषेथाः सत्त्ववान् सत्पथे स्थितः ॥**

अत्र सत्त्ववान् बलवान् सत्पथे धर्ममार्गे स्थितः आर्यं धर्मप्रधानं वाक्यं वदसीत्युक्तं बलवता अर्थप्रधानं कार्यं परित्यज्य धर्मप्रधानमेव कार्यं कर्तव्यमित्ययमर्थः प्राक् प्रपंचितः ॥

> **मम चाप्यन्तरात्माऽयं शुद्धं वेत्ति विभीषणम् ।**
> **अनुमानाच्च भावाच्च सर्वतः सुपरीक्षितः ॥**

अत्र नीतिशास्त्रपर्यालोचनया विभीषणसंग्रहस्य सदोषत्वप्रतिभानेऽपि स्वकीयचित्तप्रसादो निर्णयहेतुरिति सूचितम् ॥ तथा च **कालिदासः—**

सता हि सदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ इति ।

तस्मात् क्षिप्रं सहास्माभिस्तुल्यो भवतु राघव ।
विभीषणो महाप्राज्ञ सखित्वं चाभ्युपैतु नः ॥

अनेन शरणागतोऽपि प्रबलो नीचपदे न स्थापनीयः किंतु स्वरूपानुरूपे पदे स्थापनीय इति सूचितम् ।

अत एव गुणजात्यनुसारेणैव मनुष्यास्तत्तत्स्थाने स्थापनीया इत्युक्तमानुशासनिके—

स्वजातिगुणसपन्नाः स्वेषु कर्मस्ववस्थिताः । प्रकर्तव्या बुधा भृत्या नानास्थाने क्रियाक्षमाः॥

शरभः शरभस्थाने सिंहः सिंह इवोर्जितः । व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथा तथा ॥ इति ॥

ततस्तु सुग्रीववचो निशम्य तद्धरीश्वरेणाभिहितं नरेश्वरः ।
विभीषणेनाशु जगाम सङ्गतं पतत्रिराजेन यथा पुरन्दरः ॥

एकोनविंशे ॥

राघवेणाभये दत्ते सन्नतो रावणानुजः ।
विभीषणो महाप्राज्ञो भूमि समवलोकयन् ॥
खात्पपातावनि हृष्टो भक्तैरनुचरैस्सह ।

अनेन अपरिचितो अभयं गृहीत्वैव प्रबलेन व्यवहरेदिति सूचितम् । तथाचोद्योगे—

गृहीताभयएव उलूकः पाण्डवैर्व्यवजहारेति प्रतिपादितम् ।

उलूकाद्याभयंतेऽस्ति ब्रूहि त्वं विगतज्वरः । इत्यादिना ।

स तु रामस्य धर्मात्मा निपपात विभीषणः ।
पादयोः शरणान्वेषी चतुर्भी राक्षसैस्सह ॥
परित्यक्ता मया लङ्का मित्राणि च धनानि च ।
भवद्गतं च मे राज्यं जीवितं च सुखानि च ॥

इति शरण प्रार्थयमानस्य विभीषणस्य-

तस्य तद्वचनं श्रुत्वा रामो वचनमब्रवीत् ।
वचसा सांत्वयित्वैनं लोचनाभ्यां पिबन्निव ॥

अनेन सात्वयित्वैव पराभिप्रायः प्रष्टव्य इति सूचितम् ॥

अत एव हंसेन वज्रनाभसुताभिप्रायः सांत्वेनैव हृष्ट इति प्रतिपादितं । हरिवंशे—

ता कदाचित्पप्रच्छ वज्रनाभसुतां सखीम् । विस्रंभयित्वा ता सूक्तैराख्यानकशतैर्वराम् ॥

त्रैलोक्यसुन्दरीं वेद्मी त्वामहं हि प्रभावति । रूपशीलगुणैर्देवि किंचित्त्वा प्रष्टुमुत्सहे ॥ इति ।

आख्याहि मम तत्त्वेन राक्षसानां बलाबलम् ।
रावणस्य बलं सर्वमाख्यातुमुपचक्रमे ।

तप. प्रसादित पितामह वर प्रसादादवध्यो देवादीनां उच्छेत्ता निखिलमर्यादानां विजेता पुरन्दरप्रमुखाणां देवानां उद्वेगकरो निखिलजनाना रावणाभिधो राक्षस राज.। तदनुजोऽपि कुम्भकर्णनामा कृतान्तस्यापि विजेता तदात्मजश्च मेघनादनामा पाकशासनस्यापि शासिता प्रहस्ताभिधानः सेनापतिरपि संग्रामविद्रावितमाणिभद्रः अन्येऽपि यूथपा स्तिरस्कृतगीर्वाण-गणाः ।

आनीकस्थास्तु तस्यैते लोकपालसमा युधि ।
दशकोटि सहस्राणि रक्षसां कामरूपिणाम् ॥
मांसशोणित भक्ष्याणां लङ्कापुरनिवासिनाम् ।

इति ।

तदनु रामः विभीषणभाषणमाकर्ण्य ।

अन्वीक्ष्य मनसा सर्वमिदं वचनमब्रवीत् ।
यानि कर्मापदानानि रावणस्य विभीषण ॥
आख्यातानि च तत्त्वेन ह्यवगच्छामि तान्यहम् ।
अहं हत्वा दशग्रीवं सप्रहस्त सबान्धवम् ॥
राजानं त्वां करिष्यामि सत्यमेतद्ब्रवीमिते ।
रसातलं वा प्रविशेत् पातालं वापि रावणः ॥
पितामहसकाशं वा न मे जीवन् विमोक्ष्यते ।
अहत्वा रावणं संख्ये सपुत्रजनबान्धवम् ॥
अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैर्भ्रातृभिः शपे ।

इति ।

अत्र रामसमीपे विभीषणेन रावणस्य पराक्रमे बहुधा प्रतिपादिते सुग्रीवप्रभृतीना रामः कथमेतादृशं रावणं हन्यात् अस्माभिर्वा कथमेतस्य साहाय्यमाचरितव्यं प्रबलविरोधश्चास्मकं कथं न भवेदित्येवमाशङ्का भवेत् ततो विभीषणस्यापि संशयः स्यात् कार्यहानिरपि भवेदिति विचिन्त्य तत्संशयनिराकरणाय रामेण शत्रुवधे प्रतिज्ञाशपथपूर्वकं प्रतिज्ञाकरणादितैररपि इत्थं संशयितस्थले सर्वेषां प्रत्ययोत्पादनाय शत्रुवधे प्रतिज्ञा कर्तव्येति सूचितम् ।

अत एवार्जुनेन जयद्रथवधे संदिहानान् कृष्णयुधिष्ठिरादीन् प्रति संशयनिवृत्तये शपथ-पूर्वकं प्रतिज्ञा कृतेति प्रतिपादितं द्रोणपर्वणि—

प्रतिज्ञाते तु पार्थेन सिन्धुराजवधे तदा । वासुदेवो महाबाहुर्धनंजयमभाषत ॥
भ्रातॄणां मतमाज्ञाय त्वया चापि प्रतिश्रुतम् । सैधवंश्वोऽस्मिहंतेति तत्साहसमिदं कृतम् ॥
असंमन्त्र्य मया सार्धं अतिभारोऽयमुद्यतः । कथंनु सर्वलोकस्य नापहास्या भवेमहि ॥
कर्णो भूरिश्रवाद्रौणि र्वृषसेनश्चदुर्जयः । कृपश्च मद्रराजश्च षडेतेस्युः पुरोगमाः ॥
अविषह्यतमाह्येते निश्चिताः पार्थषड्रथाः । एतानजित्वा षड्रथान् नैव प्राप्यो जयद्रथ ॥
तेषामेकैकशो वीर्यं षण्णां त्वमनुचिन्तय । सहितानि नरव्याघ्र नशक्या जेतुमञ्जसा ॥
इति कृष्णवचनमाकर्ण्य— अर्जुनः समभाषत ।

षड्रथान् धार्तराष्ट्रस्य मन्यसेयान् बलाधिकान् । तेषांवीर्यं ममार्धेन नतुल्यमिति मे मतिः
अस्त्रमस्त्रेण सर्वेषामेतेषा मधुसूदन । मयाद्रक्ष्यसि निर्भिण्ण जयद्रथ वधैषिणा ॥
द्रोणस्य मिषतश्चाहं स बाणस्य विलप्यत. । मूर्धानं सिन्धुराजस्य पातयिष्यामिभूतले ॥
यदि साध्याश्च रुद्राश्च वसवश्च सहाश्विनाः । मरुतश्च सहेन्द्रेण विश्वेदेवाः सहेश्वराः ॥
पितरस्सह गन्धर्वा सुपर्णास्सागरादयः । ग्राम्यारण्यानि भूतानि स्थावराणिचराणिच ॥
त्रातारः सिन्धुराजस्य भवन्ति मधुसूदन । तथापि बाणैर्निहतं श्वोद्रष्टासि जयद्रथम् ॥
सत्येन ते शपे कृष्ण तथैवायुधमालभे । इति— रामवचनमाकर्ण्य विभीषणः ।

**राक्षसानां वधेसाह्यं लङ्कायाश्च प्रधर्षणम् ।**
**करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम् ॥**

इत्यवदत् ।

अत्र रामे शत्रुनिग्रह सामर्थ्यावगमानंतरमेव स्वयमपि साह्यं करोमीतिविभीषणेनाभिधानात् प्रबलस्यैव यः कश्चित्सहायो भवति दुर्बलस्य तु न कोऽपि सहायो भवतीति सूचितम् । तथा च **प्राचीनाः**—

वनानि दहतो वह्नेः सखा भवति मारुतः । स एव दीपनाशाय कृशे कस्याऽस्ति सौहृदम् ॥

**इति ब्रुवाणं रामस्तु परिष्वज्य विभीषणम् ।**
**अब्रवील्लक्ष्मणं प्रीतः समुद्राज्जलमानय ॥**
**तेन चात्र महाप्राज्ञं अभिषिंच विभीषणम् ।**
**राजानं रक्षसां क्षिप्रं प्रसन्ने मयि मानद ॥**
**एवमुक्तस्तु सौमित्रि रभ्यषिंचद्विभीषणम् ।**
**मध्ये वानरमुख्यानां राजानं रामशासनात् ॥**

अत्र रामेण विभीषणस्य राज्यप्राप्तये विश्वासोत्पादनाय शत्रुवध प्रतिज्ञापूर्वकं तदभि-

लषित राज्याभिषेक करणात् विभीषणेन रामप्रसाद संपादनाय साहाय्याचरण प्रतिज्ञानाच्च अन्येनापि महापुरुषेणानुरूप मित्रलाभे तदभिलषित पूर्तिः कर्तव्येति सूचितम् ।

अत एवादिपर्वणि कर्णदुर्योधनसख्ये स्वाभिलषित कर्णकृतार्जुन द्वन्द्व युद्ध प्रतिज्ञया संतुष्टेन दुर्योधनेनांगराज्याभिषेकः कर्णस्य कृत इति प्रतिपादितम्—

स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मानद । अहं च कुरुराज्यं च यथेष्टमुपभुज्यताम् । कर्ण·—

कृतं सर्वंच मन्येऽह सखित्वं च त्वयावृणे । द्वन्द्वयुद्धं च पार्थेन कर्तुमिच्छाम्यहं प्रियम्

**दुर्योधनः—**

भुंक्ष्व भोगान् मयासार्धं बन्धूनां प्रियकृद्भव । दुर्हृदां कुरु सर्वेषां मूर्ध्निपादमरिंदम ॥
ततस्तस्मिन् क्षणे कर्णः सलाजकुसुमैर्घटैः । काञ्चनैः काञ्चने पीठे मन्त्रविद्भिर्महारथः ॥
अभिषिक्तोऽङ्गराज्येतु श्रिया युक्तो महाबलः । इति ।

तथा मयि प्रसन्ने क्षिप्रं राजानमभिषिंचेति स्वप्रसादसमकालमेव विभीषणस्य राज्याभिषेक प्रतिपादनात् महापुरुष प्रसादः ॥

अमोघफलयुक्त एव जायते इति च सूचितम् । अमोघ प्रसाद इत्यत्र आरण्यपर्वणि धर्मंप्रति सावित्री ।

न च प्रसादस्सत्पुरुषेण मोघो न चाप्यर्थो नश्यति नाभिमान· ।
यस्मादेतं नियतं सत्सु नित्यं तस्मात्संतो रक्षितारो भवन्ति ॥ इति ।

फलयुक्त इत्यत्र **कालिदासः—**

उदेति पूर्वं कुसुमं ततः फलं घनोदय. प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रमः तव प्रसादस्य पुरस्तु संपद· ॥ इति ।

**तत्प्रसादं तु रामस्य दृष्ट्वा सद्यः प्लवङ्गमाः ।**
**चुक्रुशुश्च महात्मानः साधु साध्विति चाब्रुवन् ॥**

अनेन राज्ञा कृत न्याय्यं कर्म सर्वे प्रशंसन्तीति सूचितम् ।

अत एव सुग्रीवकृत अङ्गदाभिषेकं न्याय्यमिति वानरास्तुष्टुवुरिति प्रतिपादितं—

**किष्किन्धाकाण्डे—**

अङ्गदेचाभिषिक्तेतु सानुक्रोशा· प्लवङ्गमाः । साधु साध्विति सुग्रीवं महात्मानोऽभ्यपूजयन्
रामचैव महात्मानं लक्ष्मणं च पुनःपुनः । प्रीतांश्च तुष्टुवुस्सर्वे तादृशे तत्रवर्तति ॥

**भीष्मपर्वणि—**

युद्धसन्नद्धेषु युद्धाभ्यनुज्ञार्थं भीष्मादिगुरुजननमस्कारे प्रवृत्तान् पाण्डवान् सैनिकास्तुष्टुवुरिति प्रतिपादितम् साधुसाध्विति सर्वत्र निश्चेरुस्तुति संहिताः । वाच पुण्याः कीर्तिमन्ता मनोहृदयहर्षणाः ॥ इति ।

नन्वत्र शत्रुवधानन्तरं तत्कुलीनस्यैव तद्राज्यं दातव्यं शरणागत संरक्षणं च कर्तव्यमिति धर्मशास्त्रं जानता रामेण शत्रुसकाशादागतस्य विभीषणस्य शत्रुपक्षप्रयुक्त संभावित भयनिवृत्तिद्वारा सन्तोषजननार्थं रावणं हत्वा तव राज्यं दास्यामीति यत्प्रतिज्ञातं तद्युक्तं यत्तु-रावणहननात्पूर्वं तदीये लंकाराज्ये विभीषणस्य पट्टाभिषेककरणं तदयुक्तं रावणहननानन्तरं तदीये स्वाधीन एव राज्ये तदभिषेककरणस्योचितत्वात् एवमेव बहुषु स्थलेषु उपलम्भात् श्रीरामेणाऽपि रावणवधानन्तरं विभीषणस्याभिषेककरणाच्च इति चेत् उच्यते ।

इदानीमेव विभीषणस्य राज्याभिषेकः कर्तव्यः अन्यथा विभीषणः ।

जित्वा संपूजयेद्देवान् ब्राह्मणांश्चैव धार्मिकान् । प्रदद्यात्परिहारांश्च ख्यापयेदभयानि च ॥
सर्वेषांतु विदित्वैषां समासेन चिकीर्षतम् । स्थापयेत्तत्र तद्वंश्यं कुर्याच्च समयक्रियाम् ॥

इति मनुवचनार्थं जानतः राजानं त्वा करिष्यामीति रामस्य वचनं शत्रुजय तदनन्तर देवब्राह्मणपूजन तद्राज्यस्थजनाभयख्यापन तदीय चिकीर्षित परिज्ञानानन्तर भावि राज्यप्रदानपरतया गृह्णीयात् ।

एवं च स्वस्य राज्यप्राप्तिः एवं विलम्बितेति कृत्वा विभीषणः शिथिलितादरः सन् रावणवधकार्ये सम्यग्व्यापृतिं न कुर्यात् इदानीमेव अभिषेके कृते अद्यैव अविलम्बेन स्वस्यैव राज्यं प्राप्तमिति मत्वा इतःपरं अस्मत्साहाय्य विलम्बे स्वस्यैव कार्या सिद्धिरिति बुध्या आदरेण त्वरया साहाय्याचारणे व्यापृतिं कुर्यात् । रावणेन अस्मद्द्रोहाचरणाय प्रेषितश्चेदपि अस्मद्धितकरणे स्वस्य हितं हिताकरणे स्वस्य राज्याभाव विनिश्चित्य रावणवचनं परित्यज्य रावणवधे अस्मत्साहाय्यमेव करिष्यतीति इदानीमेव रामेण विभीषणस्य अभिषेक. कृतः—

अत एव वनगतान् पाण्डवान् हन्तु हिडिंबेन प्रेषिताऽपि हिडिंबा भीमसेने जातकामा भीमात्स्वाभिलषित प्राप्तिं निश्चित्य स्वेष्टसिध्यर्थं हिडिंबमतमकृत्वा तस्य मर्माण्यभिधाय पाण्डवानुकूल्याचरणपूर्वकं तद्वधं कांक्षितवतीति प्रतिपादितं । **आदिपर्वणि—**

तथा हि पाण्डवाः पृथया सह निशायां जतुगृहान्निर्गत्य महता श्रमेण हिडिंबवने सुषुपुः । तत्र तेषु शयानेषु हिडिंबो नाम राक्षसः,

आघ्राय मानुषं गन्धं भगिनीमिदमब्रवीत् ।

हत्वैनान् मानुषान् सर्वान् आनयस्व ममान्तिकम् ॥

भक्षयिष्याव सहितौ कुरु तूर्णं वचो मम । एवमुक्ता हिडिंबेन हिडिंबा तु तदा वने ॥

ददर्श तत्र गत्वा सा पाण्डवान् पृथया सह । शयानान् भीमसेनंच जाग्रतं त्वपराजितम् ॥

दृष्ट्वैव भीमसेनं सा शालपोतमिवोद्गतम् । राक्षसी कामयामास रूपेणाप्रतिम भुवि ॥

अयं श्यामो महाबाहुः सिंहस्कन्धो महाभुजः । कंबुग्रीवो पुष्कराक्षो भर्ता युक्तो भवेन्मम॥

नाहं भ्रातृवचो जातु कुर्यां क्रूरोपसंहितम् । पतिस्नेहो हि बलवान् न तथा भ्रातृसौहृदम्

मुहूर्तमिव तृप्तिश्च भवेद्भ्रातुर्ममैव च । हतैरेतैरहत्त्वा तु मोदिष्ये शाश्वतीस्समाः ॥

इति विचिन्त्य तत्क्षणमेव मानुषवचनमवलंब्य भीमसेनं सस्मितमिदमवादीत् ।

कुतस्त्वमसि संप्राप्तः कश्चासि पुरुषर्षभ । वसतिह्यत्र पापात्मा हिडिंबो नाम राक्षसः ॥

तेनाहं प्रेषिता भ्रात्रा दुष्टभावेन रक्षसा । साहं त्वामभिसंप्रेक्ष्य देवगर्भसमप्रभम् ॥

नान्यं भर्तारमिच्छामि सत्यमेतद्ब्रवीमि ते । त्रास्यामि त्वा महाबाहो राक्षसात्पुरुषादकात्

वत्स्यामो गिरिदुर्गेषु भर्ता भव ममानघ ।

भीमसेन उवाच ।

को हि सुप्तानिमान् भ्रातॄन् दत्त्वा राक्षसभोजनम् ।

मातरं च नरो गच्छेत्कामार्त इव मद्विधः ॥

तदनु प्रबोधय सत्वरमेतानेतैस्सह राक्षसाद्विमोच्य अन्यत्र समेष्यामीति वदन्तीं तां सुख-सुप्तानिमान् राक्षसभयान्न प्रबोधयामीत्यवदत् ।

अत्रान्तरे चिरगतां स्वसारमभिज्ञाय सत्वरमभियान्तं भ्रातरमवलोक्य

हिडिंबोवाच विलस्ता भीमसेनमिदं वचः । अहं कामगमा वीर रक्षोबलसमन्विता ॥

प्रबोधैनान् सुखं सुप्तान् मातरं च परन्तप । सर्वानेव ग्रहीष्यामि गमिष्यावो नभः प्रति ॥

तदाकर्ण्य शक्रसमपराक्रमस्य मम राक्षसापशदहननमकिंचित्करमिति वदतो भीमसेनस्य पुरतो मानुषवेषमतिमनोहरमवलंब्य ममवस्थितां हिडिबां पुस्कामा शंकमानश्च चुक्रोध पुरुषादकः ।

तदनु क्रोधेन समापतन्तं त राक्षस भुजाभ्यामवलंब्य भ्रातॄणां निद्रोपरोधशंकया सुदूर-मपयाते भीमसेने तत्रैवावस्थिता हिडिंबा भीमराक्षसनिनादेन सहसा पुत्रैस्सह प्रबुद्धया कुन्त्या का त्वमसि किं निमित्तमिहागमनं इति पृष्टा हिडिंबा निखिलमप्युदन्तं कथयामास—

तदाकर्ण्य तूर्णमेव भीमसेनसमीपमुपगतेषु युधिष्ठिरार्जुननकुलसहदेवेषु अर्जुनेन राक्षसवधाय प्रोत्साहितो भीमसेनः,

बाहुभ्यां योक्त्रयित्वा तु बलवान् पाण्डुनन्दनः ।
मध्ये भंक्त्वा महाबाहुं हर्षयामास पाण्डवान् ॥

तदनु कुन्त्या समाज्ञप्तेन भीमसेनेन सङ्गता हिडिंबाऽपि घटोत्कचनामानं पुत्रं लेभे इति ॥

तस्मात् विभीषणः उक्तरीत्या स्वस्मिन् द्रोहबुद्धिं परित्यज्य आदरविशेषेण सत्वरं कार्यसिद्धिर्यथा भवति तथा साहाय्याचरणे व्यापृतिं कुर्यादित्येतदर्थं इदानीमेव तस्य रामेणाभिषेकः कृतो युक्त एव ।

कथमेनमपारमकूपारं एभिर्वानरपरीवारैः सह सन्तराम इति तपनपवन तनयाभ्यामभिपृष्टः परिमृष्टसकलदूरदृष्टो विभीषणः ।

**समुद्रं राघवो राजा शरणं गन्तुमर्हति ।**
**खानितः सगरेणायमप्रमेयो महोदधिः ॥**
**कर्तुमर्हति रामस्य ज्ञातेः कार्यं महोदधिः ।**
**एवं विभीषणेनोक्तो राक्षसेन विपश्चिता ॥**
**आजगामाथ सुग्रीवो यत्र रामः सलक्ष्मणः ।**
**ततश्चाख्यातुमारेभे विभीषणवचः शुभम् ॥**
**सुग्रीवो विपुलग्रीवो राघवस्योपवेशनम् ।**
**प्रकृत्या धर्मशीलस्य राघवस्याप्यरोचत ॥**

अत्र सगरतनयैः संवर्धितः समुद्रः तद्वंश्यस्य रामस्य कृतज्ञतासंरक्षणाय साहाय्य करिष्यति अतस्तच्छरणगमनमुचितमित्यभिप्रायेण विभीषणेनोक्तोऽर्थः प्रकृत्या धर्मशीलेन रामेणाङ्गीकृत इत्युक्त्या निग्रहसमर्थेनापि धर्मिष्ठेन पुरुषेण स्वकार्यसाधनाय पूज्येषु सान्त्वमेव प्रयोक्तव्यमिति सूचितम् ।

अत एव निग्रहसमर्थोऽपि धर्मपुत्रः पूज्यत्वाच्छल्यस्य प्रणतिमेव कृतवानिति प्रतिपादितम् । **भीष्मपर्वणि—**

सशल्यमभिवाद्याथ कृत्वा चापि प्रदक्षिणम् । उवाच राजा दुर्धर्षं आत्मनिश्श्रेयसं वचः ॥ इति ।

तदनु युवयोः किमेतद्रोचत इति रामेण पृष्टौ मित्रसुमित्रापुत्रावेवमवोचताम् ।

**किमर्थं नौ नरव्याघ्र न रोचिष्यति राघव ।**
**विभीषणेन यत्तूक्तमस्मिन् काले सुखावहम् ॥**
**अबध्वा सागरे सेतुं घोरे तु वरुणालये ।**

लङ्का नासादितुं शक्या सेन्द्रैरपि सुरासुरैः ॥
विभीषणस्य शूरस्य यथार्थं क्रियतां वचः ।
अलं कालात्ययं कृत्वा समुद्रोऽयं नियुज्यताम् ॥
यथा सैन्येन गच्छामः पुरीं रावणपालिताम् ।

अनेन विभीषणोक्तमन्त्रः सकृच्छ्रवणमात्रेण सर्वैरङ्गीकृतत्वात् उद्यममन्त्र इति सूचितम् ।

सर्वैरङ्गीकृतो मन्त्रः उत्तम इत्येतच्चात्रैव ।

ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा । मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम् ॥
इति ।

विंशे ॥

तदनु जलनिधितीरनिविष्टां वानरसेनां शार्दूलः सत्वरमभ्येत्य ;

चारो राक्षसराजस्य रावणस्य दुरात्मनः ।
तां दृष्ट्वा सर्वतोव्यग्रां प्रतिगृह्य सराक्षसः ॥
प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत् ।

अनेन राज्ञा चारमुखेन परसेनावृत्तातो ज्ञातव्य इति सूचितम् ॥

तच्च प्राक् प्रपंचितम्—

जय महाराज दशकन्धर दशदिशोऽप्याच्छाद्याच्छभल्लगोपुच्छादयः पुरस्कृत्य दशरथापत्यमायाहितमादिशन्तो लङ्कायास्तदभिमुखमभिवर्तन्ते ।

तव दूता महाराज क्षिप्रमर्हत्यवेक्षितुम् ।
उपप्रदानं सांत्वं वा भेदो वाऽत्र प्रयुज्यताम् ॥

अत्र सामदानभेदानां त्रयाणामेव प्रयोक्तव्यत्वप्रतिपादनाद्दण्ड सर्वजघन्य उपायो हठान्न प्रयोक्तव्य इति सूचितम् । तथा च नीतिशास्त्रे—

सामादिदण्डपर्यंतो नयो दृष्टश्चतुर्विधः । तेषां दण्डस्तु पापीयांस्तस्मात्त परिवर्जयेत् ॥
इति ।

शार्दूलस्य वचः श्रुत्वा रावणो राक्षसाधिपः ।
उवाच सहसा व्यग्रः संप्रधार्यार्थमात्मनः ॥

शुकं नाम तदा रक्षो वाक्यमर्थविदां वरम् ।
सुग्रीवं ब्रूहि गत्वा त्वं राजानं वचनान्मम ॥

त्वं वै महाराजकुले प्रसूतो महाबलश्चर्क्षरजस्सुतश्च ।
न कश्चिदर्थस्तव नास्त्यनर्थस्तथापि मे भ्रातृसमो हरीश ॥
अहं यद्यहरं भार्यां राजपुत्रस्य धीमतः ।
किं तत्र तव सुग्रीव किष्किन्धां प्रति गम्यताम् ॥
न हीयं हरिभिर्लङ्का प्राप्तुं शक्या कथंचन ।
देवैरपि सगन्धर्वैः किंपुनर्नरवानरैः ॥

अत्र अशक्यो लङ्काप्रवेशः प्रवेशेऽपि न किंचित्प्रयोजनं भ्रातृस्नेहोऽपि च स्मरणीयः । अतः किष्किन्धां प्रति गम्यतामिति रावणेन सुग्रीवभेदाचरणाद्भीतिप्रदर्शनसामवचनादिभिर्भेदः प्रयोक्तव्य इति सूचितम् । तथा च **कामन्दके**—

स्नेहरागापनयनं सङ्घर्षोत्पादनं तथा । संतर्जनं च भेदज्ञैर्भेदस्तु त्रिविधस्स्मृतः ॥ इति ।

तदनु शुकः परित्यज्य राक्षसवेषं अङ्गीकृतविहङ्गाकृतिः उत्प्लुत्य गगनतलं वानरवाहिन्यभिमुखो दशास्यसन्देशमाचचक्षे । तत्समसमयमेव विहायसमुत्प्लवमानैः प्लवङ्गैः परिगृह्य हस्तपादादिभिर्निष्पीड्यमाणः ।

न दूतान् घ्नन्ति काकुत्स्थ वार्यतां साधु वानराः ।
यस्तु हित्वा मतं भर्तुः स्वमतं संप्रभाषते ॥
अनुक्तवादी दूतस्सन् स दूतो वधमर्हति ।

अनेन भर्तुर्मतं परित्यज्य स्वमतं यो वदति स दूतो वध्य इत्युक्त्या यथोक्तवादी न वध्य इति सूचितम् ।

अत एव यथोक्तवादिदूतहनने दोष प्रतिपादितो **राजधर्मे**—

यथोक्तवादिनं दूतं क्षत्रधर्मरतो नृपः । यो हन्यात्पितरस्तस्य भ्रूणहत्यामवाप्नुयुः ॥ इति ।

ततस्तत्परिदेवनश्रवणजनितकारुण्येन श्रीरामचन्द्रेण मोचितः पुनरुत्प्लुत्य,

सुग्रीव सत्त्वसंपन्न महाबलपराक्रमः ।
कि मया खलु वक्तव्यो रावणो लोकरावणः ॥

इति सुग्रीवमपृच्छत्—

अनेन दूतेन प्रत्युत्तरं गृहीत्वैव गन्तव्यमिति सूचितम्—

अत एव दूतभावेन समागत उलूकः प्रत्युत्तरं गृहीत्वा गतवानिति प्रतिपादितम् । **उद्योगे**—

कैतव्य गत्वा भरतान् समेत्य च सुयोधनम् ।
वदस्व धार्तराष्ट्रं च मयोक्तानि च यानि वै ॥ इत्यर्जुनोक्तः,

उपावृत्य तु कैतव्यः पाण्डुभ्यो धृतराष्ट्रजम् ।
केशवार्जुनयोर्वाक्यं यथोक्तं सर्वमब्रवीत् ॥ इति ।

ततः,

**न मेऽसि मित्रं न तथानुकंप्यो न चोपकर्ताऽसि न मे प्रियोऽसि ।**
**अरिश्च रामस्य सहानुबन्ध समोऽसि वालीव वधार्ह वध्यः ॥**

अनेन मित्रशत्रौ स्नेहं न कुर्यात् किं तु शत्रुभावेन वर्तयेदिति सूचितम् ।
अत स्वमित्रपाण्डवशत्रौ स्वशत्रुत्वमाह **भगवान्**—

अकस्माच्चैव पार्थानां द्वेषणं नोपपद्यते । धर्मे स्थिताः पाण्डवेया कस्तान् किं वक्तुमर्हति
यस्तान् द्वेष्टि स मां द्वेष्टि यस्ताननु स मामनु ।
एकात्मता गतं विद्धि पाण्डवैर्धर्मचारिभिः ॥ इति ।

**निहन्म्यहं त्वां ससुतं सबान्धवं सज्ञातिवर्ग रजनीचरेश ।**
**लङ्कां च सर्वां महता बलेन क्षिप्रं करिष्यामि समेत्य भस्म ॥**

इति सुग्रीवेणाभिहितः अङ्गदप्रेरितैर्वानरैश्च पुनःपुनरभिपीड्यमानः शुकः सर्वलोकशरण्यं राममेवेत्थं प्राक्रोशत् ।

**लुप्येते मे बलात्पक्षौ भिद्येते च तथाऽक्षिणी ।**
**यां च रात्रिं मरिष्यामि जाये रात्रिं च यामहम् ॥**
**एतस्मिन्नन्तरे काले यन्मया ह्यशुभं कृतम् ।**
**सर्वं तदुपपद्येथा जह्यां चेद्यदि जीवितम् ॥**

अत्र यां च रात्रिं मरिष्यामीत्यादिना जन्मप्रभृति मरणपर्यन्तं पाप दूतस्य च वर्तते तत्पापं तद्धंतुर्भवतीति प्रतिपादितम् तदसङ्गतम् ।

यथा गवा सहस्रेषु वत्सो विन्दति मातरम् । एवं पूर्वकृतं कर्म कर्तारमनुगच्छति ॥
इति **मोक्षधर्मवचनेन**—

ददाति यत्पार्थिव यत्करोति यद्वा तपस्तप्यति यज्जुहोति ।
न तस्य नाशोऽस्ति न चापकर्षो नान्यस्तदाप्नोति स एव कर्ता ॥ इति ।

उद्योगपर्ववचनेन च सुकृतदुष्कृतयोः तत्कर्तृमात्रानुभाव्यत्वावगमादिति चेन्न– एतद्वचनबलादेव कर्तुः तत्फलानुपभोगस्याकर्तु तत्फलोपभोगप्राप्तेश्चागीकर्तव्यत्वादागामिकार्थस्य यथागमं प्रतिपत्तव्यात् । अत एव स्वकीयस्तेयदोषं निवेदयत. स्तेनस्यादण्डनाद्राज्ञस्तत्पापप्राप्तिस्तेनस्य तत्पापनिवृत्तिश्च प्रतिपादिता धर्मशास्त्रे— तथा **चापस्तंबः**—

स्तेनः प्रकीर्णकेशोंऽसे मुसलमादाय राजानं गत्वा कर्माचक्षीत तेनैनं हन्याद्वधे मोक्षेऽनुज्ञातेऽनुज्ञातारमेन. स्पृशतीति । **गौतमोऽपि**—

स्तेनः प्रकीर्णकेशो राजानमियात्कर्माचक्षाणः पूतो वधमोक्षाभ्यामघ्नन्नेनःस्वी राजेति । तथा च **धर्मशास्त्रे**—

अज्ञानेन प्रायश्चित्तोपदेष्टु अन्यदीयपापप्राप्तिरुक्ता । **मानवे**—

यद्वदन्ति तमो मूढा मूर्खा धर्ममतद्विदः । तत्पापं शतता भूत्वा वक्तॄन् समधिगच्छति ॥ इति ।

एष एव न्यायो धर्मेऽपि तथा च पुण्यकर्तुर्नश्यतीत्यै**तरेयब्राह्मणे**—

स य इच्छेदेवंवित् क्षत्रियमय सर्वाजितीर्जयेताय सर्वान् ल्लोकान् विंदेतायं सर्वेषा राज्ञा श्रैष्ठ्यमतिष्ठा परमता गच्छेत साम्राज्यं भौज्यं स्वाराज्यं वैराज्य पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमय समतपर्यायी स्यात्सार्वभौमः सार्वायुष आन्तादपरार्धात् पृथिव्यैसमुद्रपर्यताया एकराडिति तमेते नैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वाभिषिंचेद्या च रात्रीं मजेयाथा या च प्रेतासि तदुभयमन्तरेणेष्टापूर्तं ते लोक सुकृतमायु प्रजा वृजीयं यदिमे द्रुह्येयुरिति स य इच्छेदेवविरक्षत्रियोहं सर्वाजितीर्जयेयमह सर्वान् लोकान् विन्देयमहं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठा परमता गच्छेयं साम्राज्यं इति स न विचिकित्सेत स ब्रूयात् सह श्रद्धया या च रात्रीमजायेह या च प्रेतास्मि तदुभयमन्तरेणेष्टापूर्तं मे लोक सुकृतमायुः प्रजा वृञ्जीथा यदि ते द्रुह्येयं इति—

अन्यस्य गच्छतीत्येतत् । **कौषीतकीब्राह्मणे**—

तस्य पुत्रा दायमुपयंति सुहृदः साधुकृत्या द्विषन्त पापकृत्या इति । तत्सुकृतदुष्कृते विधूननस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतमिति च । **यमोऽपि**—

प्रतिश्रुताप्रदानेन दत्तस्य हरणेन च । जन्मप्रभृति यत् पुण्यं तत्सर्वं हि प्रणश्यति ॥ इति । तथा च शास्त्रैकममधिगम्ययोर्धर्माधर्मयोः कर्तरि फलाजनकत्वमन्यत्र फलजनकत्वं च शास्त्रप्रामाण्यादेव सिद्धमिति निरवद्यम् । ततः,

**नाघातयत्तदा रामः श्रुत्वा तत्परिदेवनम् ।**
**वानरानब्रवीद्रामो मुच्यतां दूत आगतः ॥**

**एकत्रिंशे ।**

**ततस्सागरवेलायां दर्भानास्तीर्य राघवः ।**
**अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ॥**

अनेन प्राङ्मुखतया दैवं कर्म कर्तव्यमिति सूचितम् । तथा च **बोधायनः**—

प्राङ्मुखः प्रदक्षिण यज्ञोपवीती दैवानि कर्माणि कुर्वीत इति । **द्राह्यायणोऽपि**—

प्राङ्मुखः करण चानादेशः । इति ॥

ततः मणिमयकेयूरपरिष्कृत सकलसुहृज्जनानंदसवर्धनं दक्षिणं बाहुमुपधाय,

> **अद्य मे तरणं वाऽथ मरणं सागरस्य वा ।**
> **इति रामो मति कृत्वा महाबाहुर्महोदधिम् ॥**
> **अधिशिश्ये च विधिवत्प्रयतो नियतो मुनिः ।**

अनेन महाकार्य साधयता नियमवता स्थेयमिति सूचितम् । तथा च **प्राचीनाः**—

बलिनियमनहेतोर्वामनः काननेऽस्मिन् बलिनियमपरस्सन् ब्रह्मचारी चचार ॥ इति ।

नियमेनावस्थाने फलप्राप्तिरित्येतत् । **बालकाण्डे** दितिं प्रति कश्यपः—

पूर्णे वर्षसहस्रे तु शुचिर्यदि भविष्यसि । पुत्रं त्रैलोक्यभर्तार मत्तस्त्वं जनयिष्यसि ॥ इति ।

ततश्च दिनत्रयमधिशयनेऽपि अनागतं महोदधिमवलोक्य कुपितहृदय पार्श्ववर्तिनं लक्ष्मणमित्थमभाषत—

> **प्रशमश्च क्षमा चैव ह्यार्जवं प्रियवादिता ।**
> **असामर्थ्यं फलस्यैते निर्गुणेषु सतां गुणाः ॥**
> **आत्मप्रशंसिन धृष्टं दुष्ट विपरिधावकम् ।**
> **सर्वतोत्सृष्टदण्डं च लोकः सत्कुरुते नरम् ॥**

अनेन प्रशमनप्रियवचनादय सत्पुरुषाणा गुणाः दुष्टेषु दोषा भवन्ति सता पुरुषाणा आत्मप्रशसादयो दोषाश्च दुष्टेषु गुणायन्ते इत्युक्तम् । तथा च **प्राचीनाः**—

गुणा गुणज्ञेषु गुणी भवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः ।
सुस्वादुतोयप्रभवा हि नद्य समुद्रमासाद्य भवन्त्यपेयाः ॥ इति ।

सर्वतोत्सृष्टदण्डं च लोक सत्कुरुते नरं इत्युक्त्या च लोका प्रहर्तुरेव वश्या भवन्ति न तु प्रियवक्तुरिति सूचितम् । तथा च **कामन्दके**—

अरयोऽपि हि मित्रत्वं यांति दण्डवतो ध्रुवम् । दण्डप्रायो हि नृपतिर्भुंक्ते चाक्रम्य मेदिनीम्
संस्तम्भयति मित्राणि अमित्रान्नाशयत्यपि ॥ इति । **प्राचीना अपि**—

रामेण सांत्वनशतैरभियाच्यमानः पाथोनिधि प्रथममास वशे न तस्य ।
पश्चादगाद्धशमसावभितर्ज्यमानः सर्वः प्रहर्तृवचने स्थित एव लोकः ॥ इति ।

**न साम्ना शक्यते कीर्तिर्न साम्ना शक्यते यशः।**
**प्राप्तुं लक्ष्मण लोकेऽस्मिन् जयो वा रणमूर्धनि॥**

अत्र क्षमायाः गुणत्वेऽपि समुद्र परिभूतेन रामेण क्षमायाः निन्दितत्वात् परिभवकाले क्षमां परित्यज्य पराक्रम एव कर्तव्य इति सूचितम्। अत एव **प्राचीनाः**—

अन्यदा भूषणं पुंसः शमो लज्जेव योषितः। पराक्रमः परिभवे वैयात्यं सुरतेष्विव॥ इति।

अत एव च सार्वकालिकी क्षमा निन्दिता। **वनपर्वणि**—

तत्र बलिं प्रति प्रह्लाद,

यो नित्यं क्षमते तात बहून् दोषान् स विन्दति।

भृत्याः परिभवन्त्येनमुदासीनास्तथा रयः॥

सर्वभूतानि चाप्यस्य न नमंते कदाचन। तस्मान्नित्यं क्षमा तात पण्डितैरपि वारिता॥ इति।

**क्षमया हि समायुक्तं मामयं मकरालय।**
**असमर्थं विजानाति धिक् क्षमामीदृशे जने॥**

अनेन दण्ड्येषु सामप्रयोगे विपरीतफल भवतीति सूचितम्। तथा च **प्राचीनाः**—

चतुर्थोपायसाध्ये तु शत्रौ सान्त्वमपक्रिया। स्वेद्यमामज्वरं प्राप्य कोऽम्भसा परिषिञ्चति॥ इति।

**न दर्शयति साम्ना मे सागरो रूपमात्मनः।**
**चापमानय सौमित्रे शरांश्चाशीविषोपमान्॥**
**सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः।**

इत्युदीर्य रामः बहुलगरलकल्यकल्पानलवर्षैर्महेषुभि तूर्णमर्णवमाघूर्णिततरङ्गौघ अतिचकितकमठमकरग्राहपर्याकुलं विदलितनिखिलसत्त्वं विधातुमुद्युक्तो बभूव।

**ततस्तु तं राघवमुग्रवेग विकर्षमाणं धनुरप्रमेयम्।**
**सौमित्रिरुत्पत्य विनिश्श्वसन्तं मामेति चोक्त्वा धनुराललम्बे॥**

अनेन दण्डेन विनाऽपि सिध्यतोऽर्थस्य हठाद्दण्डेन साधनमनुचितमित्यभिप्रायवता लक्ष्मणेन निवारणात् हठाद्दण्डादौ प्रवृत्तस्य राज्ञो निवर्तनं सुहृद्भिः कर्तव्यमिति सूचितम्। तथा च **कामन्दके**—

अकार्यात्प्रतिषेधं च कार्ये चैवानुवर्तयन्। सक्षेपादिति सद्वृत्त बन्धुमित्रानुजीविनाम्॥ इति।

द्वाविंशे ।

एतावताऽपि च अदर्शित स्वस्वरूपं समुद्रमवलोक्य कुपितहृदयो रामः विकलयन्निव त्रिलोकीं ।

**ब्राह्मेणास्त्रेण संयोज्य ब्रह्मदण्डनिभं शरम् ।**
**संयोज्य धनुषि श्रेष्ठे विचकर्ष महाबलः ॥**

तेन च ज्याघोषेण समाकुलो जलनिधिः ससंभ्रमं रामसमीपमागत्य,

**अब्रवीत्प्रांजलिर्वाक्यं राघवं शरपाणिनम् ।**
**पृथिवी वायुराकाशमापो ज्योतिश्च राघव ॥**
**स्वभावे सौम्य तिष्ठन्ति शाश्वत मार्गमाश्रिताः ।**

अत्र शाश्वतं परमेश्वरकल्पितं अनादिसिद्ध मार्गमाश्रित्य स्वभावे तिष्ठन्ति भूतानीत्युक्त्या सकलभूतव्यवस्था परमेश्वरायत्तेति सूचितम्। तथा च श्रुतिः—

एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषा लोकानामसभेदायेति भीषास्माद्वातः पवते भीषोदेति सूर्यः । इति च ।

**तत्स्वभावो ममाप्येष यदगाधो महार्णव ।**
**विकारस्तु भवेद्बाधः एतत्ते प्रवदाम्यहम् ॥**

अनेन महात स्वभावतो अविकारिण एव भवन्ति क्षुद्राश्च स्वभावत एव विकारिणो भवन्तीति सूचितम् । तथा च प्राचीनाः—

गवादीना पयोऽन्येद्युः सद्यो वा विकरिष्यति । क्षीरार्णवस्तु नाद्यापि महतां विकृतिः कुतः इति ।

संपत्तौ च विपत्तौ च महतामेकरूपता । उदेति सविता ताम्रः तथैवास्तमुपैति च ॥

विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः । इति च ।

**न कामान्न च लोभाद्वा न भयात्पार्थिवात्मज ।**
**ग्राहनक्राकुलजलं स्तंभयेयं कथंचन ॥**

अत्र जलं न स्तम्भयेयमित्युक्त्या वस्तुस्वभावं नातिक्रामेदिति सूचितम् ।

अत एव स्वाभावातिक्रमणे दोष उक्तो आनुशासनिके— जमदग्निः,

ब्राह्मणेष्वार्जवं यच्च स्थैर्यं च धरणीतले । सौम्यता चैव सोमस्य गाभीर्यं वरुणस्य च ॥

दीप्तिमग्नेः प्रभा मेरोः प्रतापं तपनस्य च । एतानतिक्रमेद्यो वै स हन्याच्छरणागतम् ॥
इति ।

यथेयं सेना भवता सह सन्तरिष्यति तमुपायमहं प्रदर्शयामि कोपोऽयं निगृह्यतामिति ॥

तदनु तद्वचनश्रवणमुदितमानसेन रामेण

**अमोघोऽय महावाण' कस्मिन् देशे निपात्यताम् ।**

इत्यभिहितो महोदधिरेवमुवाच– द्रुमकुल्याभिध, कश्चिददूरत एव उत्तरो देशः तद्देशस्थिताः ।

**आभीरप्रमुखाः पापाः पिबन्ति सलिलं मम ।**
**तैस्तु संस्पर्शनं पापं मम क्लेशकरं महत् ॥**
**अमोघः क्रियतां राम शितस्तत्र शरोत्तमः ।**

इति ।

अत्र सकलजनपावनममर्थस्यापि समुद्रस्य पापिष्ठस्पर्शनं क्लेशावहमित्युक्त्या महद्भिः पापिष्ठसङ्गति सर्वथा परित्याज्येति सूचितम् । तथा **चापद्धर्मे–**

नरः पापसमाचारः त्यक्तव्यो दूरतो बुधैः । आत्मानं योऽतिसधत्ते सोऽन्यस्य स्यात्कथ हितः इति ।

अमोघः क्रियतामित्यनेन च महास्त्राणां निवर्तनं अशक्यमिति सूचितम् । तथा च **बालकाण्डे—**

परशुरामं प्रति रामभद्र वैष्णवबाणस्य अमोघतामाह–

न ह्यय वैष्णवो दिव्य शर' परपुरञ्जयः । मोघ. पतति वीर्येण परदर्पविनाशनः ॥

इति । ततः प्रदीप्तशरमोक्षणेन,

**शोषयित्वा तु तं कुक्षिं रामो दशरथात्मज. ।**
**वरं तस्मै ददौ विद्वान् मखेऽमरविक्रमः ॥**
**पशव्यश्चाप्यरोगश्च फलमूलरसायुतः ।**
**बहुस्नेहो बहुक्षीरः सुगन्धिर्विविधौषधः ॥**
**एवमेतैश्च संयुक्तो बहुभिस्सततं मरुः ।**
**रामस्य वरदानाच्च शिव' पन्था बभूव ह ॥**

अत्र मखे अनपराधिने बाणपातनादिना पीडाचरणानन्तरं वरदानचरणात् अनपराधिषु निग्रहे कृते अनुग्रहोऽपि अवश्यकर्तव्य इति सूचितम् ॥

अत एवानपराधिनो भूरिश्रवसो हस्तच्छेदानन्तरं तस्योत्तमलोकप्रार्थनमर्जुनेन कृतमिति प्रतिपादितं **द्रोणपर्वणि—**

मया त्वं समनुज्ञातः कृष्णेन च महात्मना। गच्छ पुण्यकृतान् लोकान् शिबिरौशीनरो यथा ॥ इति ।

इत्थमनुगृहीतवन्तं रामं जलनिधिः—

**अयं सौम्य नलो नाम तनूजो विश्वकर्मणः ।**
**एष सेतुं महोत्साहः करोतु मयि वानरः ॥**
**तदहं धारयिष्यामि तथा ह्येष यथा पिता ।**

इत्युदीर्यांतरधात् । ततो नलः उदधिवचनेन विश्वकर्मवरप्रदानलब्धं आत्मनः सेतु-बन्धनसामर्थ्यं संस्मृत्य ;

**समर्थश्चाप्यहं सेतुं कर्तुं वै वरुणालये ।**

इति राममभिधाय वानरयूथपसमानीतैर्गिरितरुपाषाणैः प्रथमदिवसे योजनानि चतुर्दश, द्वितीये विंशति, रेकविंशति स्तृतीये चतुर्थे द्वाविंशतिः पञ्चमे त्रयोविंशतिरिति क्रमेण सुवेलमधिकृत्य योजनशतायामं दशयोजनविस्तीर्णं सेतुमतनोत् ॥

**ददृशुर्देवगन्धर्वा नलसेतुं सुदुष्करम् ।**
**तमचिन्त्यमसह्यं च ह्यद्भुतं रोमहर्षणम् ॥**
**ददृशुः सर्वभूतानि सागरे सेतुबन्धनम् ।**
**जयस्व शत्रून्नरदेव मेदिनीं ससागरां पालय शाश्वतीस्समाः ।**
**इतीव रामं नरदेवसत्कृतं शुभैर्वचोभिर्विविधैरपूजयन् ॥**

अनेन लोकहितकर इतरासाध्यं आश्चर्यकरं कर्म कृतवतः देवा अपि पूजां कुर्वंत इति सूचितम् ॥

अत एव निखिलगोकुलरक्षणाय विरचितगोवर्धनोद्धरणं कृष्णं अभिषेकेण पूजितवानिंद्र इति प्रतिपादितम् ॥ **विष्णुपुराणे**–

त्रातास्ताश्च त्वया गावः समुत्पाट्य महागिरिम् । तेनाहं तोषितो वीर कर्मणात्यद्भुतेन ते ॥
स त्वां कृष्णाभिषेक्ष्यामि गवा वाक्यप्रचोदितः ।
साधितं कृष्ण देवानामहं मन्ये प्रयोजनम् ॥
त्वयायमद्रिप्रवरः करेणैकेन यद्धृत ॥ इति ।

**सुग्रीवस्तु ततः प्राह रामं सत्यपराक्रमम् ।**
**हनूमन्तं त्वमारोहमङ्गदं चापि लक्ष्मणः ॥**
**अयं हि विपुलो वीर सागरो मकरालयः ।**
**वैहायसौ युवामेतौ वानरौ तारयिष्यतः ॥**

अत्र सेतुबन्धनानन्तरमपि तेनैव मार्गेण गमनसंभवेऽपि वैहायसौ युवां तारयिष्यत इति प्रतिपादनात्, यद्वाहनं सुखेन अभिलषितदेशं प्रापयेत् तादृशेन सुपरीक्षितेन गच्छेत् सङ्कटप्रदेशेष्वपरिचितदेशेष्वरिभूमिषु च उपद्रवेण विना यथा सौख्यं भवति तथा गन्तव्यमिति सूचितम् ॥ तथा **कामन्दके—**

यान वाहनमारोहेत् ज्ञातं ज्ञातोपपादितम् । अविज्ञाते न हि यथा सङ्कटेषु न संव्रजेत् ॥
तत्रैव,

विशुद्धपृष्ठः पुरतो विचिन्वन्भयप्रदेशान् परकर्मवेदी ।
सुशोधितासारविशुद्धमार्गो विशेद्धरित्रीं द्विषतोऽप्रमत्तः ॥
समे प्रदेशे विषमे च भूमेर्मिश्रस्थले वा सुसुखेन यायात् ।
अनातुरस्सन्नभयो हि विद्वान् सन्नद्धगुल्मो विहितान्नपेयः ॥ इति ।

**अग्रतस्तस्य सैन्यस्य श्रीमान् रामः सलक्ष्मणः ।**
**जगाम धन्वी धर्मात्मा सुग्रीवेण समन्वितः ॥**

अनेन अभियाने बलवता पुरतो गन्तव्यमिति सूचितम् । **कामन्दके—**

सेनापतिं चाप्यथवा कुमार बलैकदेशेन पुरो निदध्यात् ॥ इति ।

त्रयोविंशे ।

**निमित्तानि निमित्तज्ञो दृष्ट्वा लक्ष्मणपूर्वजः ।**
**सौमित्रिं संपरिष्वज्य इदं वचनमब्रवीत् ॥**

**परिगृह्योदकं शीतं वनानि फलवंति च ।**
**बलौघं च विभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ॥**

अनेन सेनायाः यथासुखं संरक्षण च भवति तथा सेनानिवेशः कर्तव्य इति सूचितम् । अत एव धर्मपुत्रेणापि उक्तरीत्या सेनानिवेशः कृत इति प्रतिपादितं । **उद्योगे—**

मधुरेऽनूषरे देशे शुचौ पुण्ये महामतिः । निवेशं कारयामास कुन्तीपुत्रो युधिष्ठिरः ॥
इत्यादि ।

**लोकक्षयकरं घोरं भयं पश्याम्युपस्थितम् ।**
**निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥**
**वाताश्च कलुषा वांति कम्पते च वसुन्धरा ।**
**पर्वताग्राणि वेपन्ते पतन्ति च महीरुहाः ॥**
**मेघाः क्रव्यादसंकाशाः परुषाः परुषस्वनाः ।**

क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥
ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषैः सुलोहितः ।
आदित्ये विमले नीलं लक्ष्म लक्ष्मण दृश्यते ॥
काका श्येनाश्च गृध्राश्च नीचैः परिपतन्त्युत ।
शिवाश्चाप्यशिवान्नादान् नदन्ति सुमहाभयान् ॥
शैलैः शूलैश्च खड्गैश्च विसृष्टैः कपिराक्षसैः ।
भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ॥

अनेन संग्रामसूचकानि निमित्तान्युक्तानि तानि चारण्यकाण्डे खरवधप्रकरणे प्रपंचितानि इत्यभिधाय लङ्काभिमुखो रामचन्द्रः प्रतस्थे । तदनु रिपुबलप्रहरणे कृतोद्योगानाम्

हरीणां कर्मचेष्टाभिस्तुतोष हरिपुङ्गवः ।

चतुर्विंशे ।

दशवदननिषूदनाय कृतोद्योगा लङ्काभिमुखाः

ततः शुश्रुवुराकृष्टं लङ्कायाः काननौकसः ।
भेरीमृदङ्गसंघुष्टं तुमुलं रोमहर्षणम् ॥
बभूवुस्तेन घोषेण संहृष्टा हरियूथपाः ।
अमृष्यमाणास्ते घोषं विनेदुर्घोषवत्तरम् ॥

अनेन हर्षतः शत्रुकृतं गर्जनं वीरा न सहंत इति सूचितम् ।
तथा च तारां प्रति वालिवचनम्—

गर्जतोऽस्य हि संरम्भं भ्रातुः शत्रोर्विशेषतः । मर्षयिष्याम्यहं केन कारणेन वरानने ॥ इति ।

ततो दाशरथिरपि नगाग्रनिविष्टां चैत्ररथसन्निभोपवनशोभितपरिसरां मधुपानजनितमदपरवशविहङ्गमाकीर्णां लंकापुरीमभिवीक्ष्य विस्मयाविष्टहृदय इदमाह—

बलौघं संविभज्येममूह्य तिष्ठेम लक्ष्मण ।
बलं च तद्वै विभजन् शास्त्रदृष्टेन कर्मणा ॥
शशास कपिसेनायां बलमादाय वीर्यवान् ।
अङ्गदः सह नीलेन तिष्ठेदुरसि दुर्जयः ॥
तिष्ठेद्वानरवाहिन्यां वानरौघसमावृतः ।
आस्थितो दक्षिणं पार्श्वं ऋषभो वानरर्षभः ॥
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ।

**तिष्ठेद्वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः ॥**
**मूर्ध्नि स्थास्याम्यहं यत्तो लक्ष्मणेन च संयुतः ।**
**जांबवांश्च सुषेणश्च वेगदर्शी च वानरः ॥**
**ऋक्षमुख्या महात्मानः कुक्षिं रक्षंतु ते त्रयः ।**
**जघनं कपिसेनायाः कपिराजोऽभिरक्षतु ॥**
**पश्चार्धमिव लोकस्य प्रचेतास्तेजसा वृतः ।**
**संविभक्तमहाव्यूहा महावानररक्षिता ॥**
**अनीकिनी साऽतिबभौ यथा द्यौः साभ्रमण्डला ।**

अनेन युद्धकाले यथाशास्त्रं बलं व्यूह्य स्थापनीयमिति सूचितम् । तथा च **राजधर्मे—**

गजानां रथिनो मध्ये रथानामनुवाजिनः । वाजिनामन्तरा स्थाप्यं पादातमपि दंशितम् ॥
य एवं व्यूहते राजा स नित्यं जयते द्विषः । तस्मादेवं विधातव्यं नित्यमेव युधिष्ठिर ॥

इति । **कामन्दके—**

धनुः सूची दण्डकश्च शकटो मकरध्वजः । इत्यादयो महाव्यूहाः तदाकारान् प्रकल्पयेत् ॥

इति । **मनुरपि—**

दण्डव्यूहेन तं मार्गं यायात्तु शकटेन वा । वराहसूकराभ्यां वा सूच्या वा गरुडेन वा ॥
पद्मेन चैवं व्यूहेन विनिशिश्येत्तदा स्वयम् । सूच्या वज्रेण चैवैनान् व्यूहेन व्यूह्य योधयेत् ॥

इति ।

यथानिर्देशं व्यूढां सेनामवलोक्य,

**ततो रामो महातेजाः सुग्रीवमिदमब्रवीत् ।**
**सुविभक्तानि सैन्यानि शुक एष विमुच्यताम् ॥**

अत्र स्वसेनासन्नाहानन्तरं परचारो विमोक्तव्य इत्युक्त्वा स्वस्य छिद्रसमयं यथा परो न जानीयात्तथा गोपयेदिति सूचितम् । तथा च **राजधर्मे—**

नास्य छिद्रं परः पश्येत्परस्य छिद्रमन्वियात् । एतद्वृत्तं वासवस्य यमस्य वरुणस्य च ॥
राजर्षीणां च सर्वेषां तत्त्वमप्यनुपालय । इति ।

तदनु मोचनसमनन्तरमेव वेपमानहृदयः रावणसमीपं गतः शुकः,

**कच्चिन्नानेकचित्तानां तेषां त्वं वशमागतः ।**

किं वान्यत्तव भीतिहेतुरिति पृष्टः, तत्रत्यवृत्तान्तमित्थमाचचक्षे ।

**नैव संभाषितुं शक्याः संप्रश्नोऽत्र न लभ्यते ।**
**प्रकृत्या कोपनास्तीक्ष्णाः वानरा राक्षसाधिप ॥**

अनेन तीक्ष्णैः कोपनैः संभाषणमशक्यमिति सूचितम् । तथा च **द्रोणपर्वणि—**

तमन्तकमिव क्रुद्धं निःश्वसन्तं मुहुर्मुहुः । न भाषितुं शक्नुवन्ति द्रष्टुं वा सुहृदोऽर्जुनम्
इति ।

तदिदानीं, अपारसागरमुत्तीर्य वानरवाहिनी

पुरा प्राकारमायाति क्षिप्रमेकतरं कुरु ।
सीतां वाऽस्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् ।

इति ।

पञ्चविंशे ॥

अमात्यौ रावणः श्रीमान् अब्रवीच्छुकसारणौ ।
समग्रं सागरं तीर्णं दुस्तरं वानरं बलम् ॥
अभूतपूर्वं रामेण सागरे सेतुबन्धनम् ।
सागरे सेतुबन्धं तु न श्रद्दध्यां कथंचन ॥
अवश्यं चापि संख्येयं तन्मया वानरं बलम् ।
भवन्तौ वानरं सैन्यं प्रविश्यानुपलक्षितौ ॥
परिमाणं च वीर्यं च ये च मुख्याः प्लवङ्गमाः ।
स च सेतुर्यथा बद्धः सागरे सलिलाशये ॥
निवेशश्च यथा तेषां वानराणां महात्मनाम् ।
रामस्य व्यवसायं च वीर्यं प्रहरणानि च ॥
लक्ष्मणस्य च वीर्यं च तत्त्वतो ज्ञातुमर्हथः ।
कश्च सेनापतिस्तेषां वानराणां महौजसाम् ॥
एतत् ज्ञात्वा यथातत्त्वं शीघ्रमागन्तुमर्हथः ।

इति ।

अनेन राजा परस्य बलं अभिप्रायः बलं स्थानं मन्त्रिणः इत्येतदखिलं चारमुखेन विचारयेदिति सूचितम् । तथा च कामन्दके—

सर्वसंपत्समुदयं सर्वावस्थाविचेष्टितम् । चारेण द्विषतां विद्यात् ॥ इति ।

चारेण प्रचरेद्राजा शास्त्रेणर्त्विगिवाध्वरे । दूरे सन्धानमायत्त चरे चर्या प्रतिष्ठिता ॥
तीक्ष्णप्रकृतिता चैव शत्रोरस्वास्थ्यमेव च । इति ।

ततो यथानिदेशं अपारमर्णवं तरन्तं तर्तुकामं तीर्णं च बलार्णवं प्रविश्य प्रच्छन्नतया चरन्तौ विभीषणेन च गृहीत्वा रावणप्रहिताविमौ चारौ बलविचारणाय संप्राप्ताविति रामसमीपमानीतौ रामेणाप्यभयदानपूर्वकं यथेच्छं समग्राऽपि सेना सम्यग्विचारणीया प्रदर्श-

यिष्यति च सर्वानज्ञातप्रदेशान् विभीषणः । मद्वचनाच्च रावण. सीतापहरणजनितक्रोधेन निसृष्टशिलीमुखनिर्भिन्नहृदयोऽस्मत्पराक्रमं द्रष्टाऽसीति वक्तव्यः इति समादिष्टौ शुकसारणौ निर्भयमखिलमपि वानरबलं सम्यगभिवीक्ष्य लङ्कां प्रविष्टौ रावणमित्थमूचतु — महेन्द्रसमविक्रमाः रामलक्ष्मणसुग्रीवाः विनैव सेना लङ्कामुन्मूलयितुं शक्ताः किं पुनः सेनया सहिताः । अत·,

**अलं विरोधेन शमो विधीयतां प्रदीयतां दाशरथाय मैथिली ।**

इति ।

## षड्विंशप्रभृति अष्टाविंशपर्यन्तम् ।

ततस्तद्वचनजनितामर्षो दशवदन·,

**को हि नाम सपत्नो मां समरे जेतुमर्हति ।**
**त्वं तु सौम्य परित्रस्तो हरिभिस्तर्जितो भृशम् ॥**

इति परुषमभिधाय ताभ्या सहैव हिमवत्पाण्डरमत्युच्छ्रितं प्रासादमारुह्य समालोक्य वानरानीकम्,

**सारणाचक्ष्व मे सर्वं के प्रधानाः प्लवङ्गमाः ॥**

इति दशाननसमाज्ञप्त सारणः अहमहमिकया मर्दितुं लङ्कां आगतान् क्ष्वेलनगर्जनास्फोटनादिभिस्त्रिभुवनमापूरयत· स्वस्वसेनापरिवृतान् नीलाङ्गदगजगवयगवाक्षगन्धमादननलहनूमत्प्रमुखान् वानरप्रमुखानयमेतावतामधिकारी एतस्मिश्च कार्ये नियुक्त एतस्य च तनयोऽयमिति तत्तद्वैभवं रामलक्ष्मणसुग्रीवविभीषणान् तेषां पराक्रममुद्योगं चाभिहितवान् । शुकोऽपि च सेनानायकस्य नीलस्य सेनापरिमाणं हनूमतो जननप्रभृत्याचरितानि वरलाभं लङ्कादाहादिप्रभावं च विज्ञाप्य ;

**इमां महाराज समीक्ष्य वाहिनीमुपस्थितां प्रज्वलितग्रहोपमाम् ।**
**ततः प्रयत्नः प्रथमो विधीयतां यथा जयः स्यान्नपरैः पराजयः ॥**

इत्यभिहितवान् ।

अत्र शुकसारणाभ्या परबलाधिक्यप्रतिपादनपूर्वकं पराजयो यथा न स्यात्तथा यतितव्यमिति प्रतिपादनाद्राजा स्वहिते यथा प्रवृत्तो भवेत् तथा परकीयवृत्तान्तो यथार्थतया दूतैर्वक्तव्य इति सूचितम् । अत **एवोद्योगे धृतराष्ट्रं प्रति सञ्जयः**—

भूयो भूयो हि यद्राजन् पृच्छसे पाण्डवान् प्रति। सारासारबलं ज्ञातु तत्समासेन मे शृणु
मुख्यमन्धकवृष्णीनामपश्यं कृष्णमागतम् । चेकितानं च तत्रैव युयुधानं च सात्यकीम् ॥

पृथगक्षौहिणीभ्यां तौ पाण्डवानभिसंश्रितौ । महारथौ समाख्यातावुभौ परुषमानिनौ ॥
अक्षौहिण्याऽथ पांचाल्यो दशभिस्तनयैर्वृतः । सत्यजित्प्रमुखैर्वीरै धृष्टद्युम्नपुरोगमैः ॥
द्रुपदो वर्धयन्मान शिखण्डी परिपालित. । विराटः सह पुत्राभ्यां शंखेनैवोत्तरेण च ॥
सूर्यदत्तादिभिर्वीरैर्मदिराजपुरोगमैः । सहितः पृथिवीपालो भ्रातृभिस्तनयैस्तथा ॥
अक्षौहिण्यैव सैन्यानां वृतः पार्श्वं समाश्रितः । जारासन्धिर्मागधश्च धृष्टकेतुश्च चेदिराट्
पृथक् पृथगनुप्राप्तौ पृथगक्षौहिणीवृतौ । केकया भ्रातरः पंच सर्वे लोहितकध्वजाः ॥
अक्षौहिणीपरिवृताः पाण्डवानभिसंश्रिताः । एतानेतावतस्तत्र तानपश्यं स्वमागतान् ॥
ये पाण्डवार्थे योत्स्यति धार्तराष्ट्रस्य वाहिनीम् । प्रवर्षतः शरव्रातानर्जुनस्य शितान् बहून्
अप्यर्णवा विशुष्येयुः किपुनर्मासयोनयः । अस्यतां फाल्गुनः श्रेष्ठो गाण्डीवं धनुषां वरम्
केशवः सर्वभूतानामायुधाना सुदर्शनम् । वानरो रोचमानश्च केतु· केतुमतां वर· ॥
एवमेतानि सरथो वहन् श्वेतहयो रणे । क्षपयिष्यन्ति नो राजन् कालचक्रमिवोद्यतम् ॥
तस्याद्य वसुधा राजन् निखिला भरतर्षभ । यस्य भीमार्जुनौ योधौ स राजा राजसत्तमः
तथा भीमहतप्रायां मज्जन्तीं तव वाहिनीम् । दुर्योधनमुखा दृष्ट्वा क्षयं यास्यन्ति कौरवाः
एकतोऽवा जगत्कृत्स्नमेकतो वा जनार्दन· । सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः॥
भस्म कुर्याज्जगदिदं मनसैव जनार्दनः । न तु कृत्स्नं जगच्छक्तं भस्म कर्तुं जनार्दनम् ॥
यतस्सत्य यतो धर्मः यतो ह्रीरार्जवं यतः । यतो भवति गोविन्दो यतः कृष्णस्ततो जयः
एवमेषामनीकानि प्रविभक्तानि भागश· । यत्ते कार्यं सपुत्रस्य क्रियतां तदकालिकम् ॥
इति ।

**एकोनत्रिंशे ।**

तश्चारनिर्दिष्टरामसेनावैभवश्रवणेन किंचिदाविग्नहृदयो जातक्रोधश्च रावणः—

**भर्त्सयामास तौ वीरौ कथांते शुकसारणौ ।**
**किंनु मृत्योर्भयं नास्ति मां वक्तुं परुषं वचः ॥**
**अपि वा दहनं स्पृष्ट्वा वने तिष्ठन्ति पादपाः ।**
**राजदोषपरामृष्टास्तिष्ठन्ते नापराधिनः ॥**

अनेन राजनि परुषं ब्रुवता जीवितं न भवेदिति सूचितम् । तथा च **कामन्दके—**

पर्जन्य इव भूतानामाधार. पृथिवीपतिः । विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥
इति । **राजधर्मे—**

न ब्रूयादप्रियं किंचित्परुषं स्वामिकिंकरः । कदाचित् स्खलिते राजा स्खलिते नास्ति
जीवितम् ॥ इति ।

**हन्यामहं त्विमौ पापौ शत्रुपक्षप्रशंसकौ ।**
**यदि पूर्वोपकारैस्तु न क्रोधो मृदुतां व्रजेत् ॥**
**न हि त्वां हन्तुमिच्छामि स्मराम्युपकृतं युवाम् ।**
**हतावेव कृतघ्नौ तु मयि स्नेहपराङ्मुखौ ॥**

अनेन पूर्वोपकारिभिरनुजीविभि· कृतोऽपराधः स्वामिना क्षन्तव्य इति सूचितम् । तथा **चारण्यके पर्वणि—**

पूर्वोपकारी यस्ते स्यादपराधे गरीयसि । उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥ इति ।

ततश्च जयशब्देन राजानमभिनन्द्यान्यतो गतयोः शुकसारणयो रावणो महोदरमित्थमाचक्षे परबलपरिज्ञानाय चारान् समानय ।

**युद्धेष्वल्पेन यत्नेन समासाद्य निरस्यते ॥**

अनेन राज्ञां अनायासेन श्रेयस्सिद्धिश्चाराधीनेत्युक्तम् । तथा च **कामन्दके—**

चारश्चक्षुर्नरेन्द्रस्य संपत्तिस्तेन भूयसी ॥ इति ।

तदनु महोदरसमानीताः शार्दूलप्रमुखाश्चारा परबलपरिज्ञानाय रावणेन प्रेषिताः आगत्य सुवेलाभिधं शैलं सेनामभिवीक्षमाणाः स्वग्रहणाय सन्नद्धान् वानरानभिवीक्ष्य शार्दूलातिरिक्ता· सर्वे भीत्या पलायिता बभूवु । शार्दूलस्तु विभीषणगृहीतः । वानरैश्च बहुविधमुष्टितलप्रहारादिभिरभिहन्यमानः दयानिधिना रामेण विमोचितो दीनवदनो दशवदन निकटमाजगाम ।

तदनु तन्मुखेन सुवेलनिविष्टं ससैन्य राममवगत्य जातोद्वेगो राक्षसशार्दूलः शार्दूलमित्थमभाषत ।

**अयथा वर्तते वर्णो दीनश्चासि निशाचर ।**
**नासिकच्चिदमित्राणां क्रुद्धानां वशमागत· ॥**

अनेन परै परिभूतस्य विवर्णता भवतीति सूचितम् ।

अत एव दस्युपराभूतस्यार्जुनस्य मुखवैवर्ण्यमुक्तम् । **विष्णुपुराणे व्यासः—**

उवाच पार्थं विच्छायं कथमद्य त्वमीदृशः । अगम्ययातु गमनं ब्रह्महत्याऽथवा कृता ॥
दृढाशाभंगदु खीव भ्रष्टच्छायोऽसि साम्प्रतम् । सातानिकादयो वा ते याचमाना निराकृताः
अगम्यस्त्रीरतिर्वा त्वं केनासि विगतप्रभः । भुङ्क्तेऽप्रदाय विप्रेभ्य एको मृष्टमथो भवान्
किं वा कृपण वित्तानि हृतानि भवतार्जुन । कच्चिन्न शूर्पवातस्य गोचरत्व गतो ह्यसि ॥
दुष्टदृष्टिहतो वाऽपि (कः)[ह्य]श्रीकः कथमन्यथा ।
स्पृष्टो नखाम्भसा वाऽथ घटवार्युक्षितोऽपि वा ॥

केनातीव विच्छायो न्यूनैर्वा युधि निर्जितः । इति ।

तदनु कंपमानसर्वावयवः शार्दूलः—

सर्वतो रक्ष्यते पंथा वानरैः पर्वतोपमैः ।
प्रविष्टमात्रे ज्ञातोऽहं बले तस्मिन्नचारिते ॥
बलाद्गृहीतो ऋक्षोभि बंहुधाऽस्मि विदारितः ।
जानुभिर्मुष्टिभिर्दन्तै स्तलैश्चाभिहतो भृशम् ॥
परिणीतोऽस्मि हरिभिर्बलवद्भिरमर्षणैः ।

अनेन सेनारक्षणार्थं स्वेन स्थापितैश्चारैरागताश्चारा· भीत्या पुनर्यथा नागच्छन्ति तथा शिक्षणं कर्तव्यमिति सूचितम् ॥ तथा च राजधर्मे—

चारांश्च विद्यात्प्रहितान् परेण भरतर्षभ । आपानेषु विवाहेषु समवायेषु वीथिषु ॥
आरामेषु तथोद्याने पण्डिताना समागमे । देशेषु चत्वरे चैव सभास्वावसथेषु च ॥
एवं विहन्याच्चारेण परचारं विचक्षणः । चारे च विहते सर्वे गतं भरतसत्तम ॥
इति ।

तदनु मया च परित्रायस्वेति याचितो रामः मां मोचयित्वा लङ्कांद्वारमभिवर्तते ।

पुरा प्राकारमायाति क्षिप्रमेकतरं कुरु ।
सीतां वास्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् ॥

इत्यवदत् ।

**त्रिंशे ।**

ततः कीदृशा वानरा· किंप्रभावास्तदाचक्ष्व ।

अवश्यं बलसंख्यानं कर्तव्यं युद्धमिच्छता ।
तथात्र प्रतिपत्स्यामि ज्ञात्वा तेषां बलाबलम् ॥

अनेन युद्धसमये चारमुखेन शत्रुबले सारासारविचारः कर्तव्य इत्युक्तम् ॥

अत एवोद्योगे भीष्म प्रति दुर्योधनो बलसंख्यां पृष्टवानिति प्रतिपादितम्—
रथसंख्या तु कार्त्स्न्येन परेषामात्मनस्तथा ।
तथैवातिरथानां च वेत्तुमिच्छामि कौरव ॥ भीष्म उवाच—

समेताः पाण्डवस्यार्थे वासुदेवपुरोगमा· । एते प्राधान्यतो राजन् पाण्डवस्य महात्मन·॥
रथा वाऽतिरथाश्चैव येचाप्यर्धरथा नृपम् । जेष्यंति समरे सेना भीमा दौर्योधनीं नृप ॥
महेंद्रेणैव वीरेण पाल्यमाना. किरीटिना ॥ इति ।

एवं दशवदनेन पृष्ट शार्दूल ऋक्ष राजतनयं सुग्रीवं गद्गदक्षेत्रजौ जाम्बवत्तारौ धर्मपुत्रं सुषेणं सुमुखदुर्मुखवेगदर्शि दधिमुखान् मृत्युतुल्यान् ब्रह्मसृष्टाननलात्मजन्नीलमनिलसुतं हनूमन्तमङ्गदं वालितनयमश्विसुतौ मैन्दद्विविदौ गजगवाक्षगवयशरभगन्धमादनान् वैवस्वतसंभवान् श्वेतज्योतिर्मुखौ भास्करात्मजौ वरुणसुतं हेमकूटं विश्वकर्मसुतं नल दुर्धरं वसुपुत्रं राक्षसराज्येऽभिषिक्त विभीषण असंख्येयगुणानन्यानपि वानरान् अप्रमेयान् रामलक्ष्मणगुणाश्चाभिधाय विरराम ।

## एकत्रिंशे ॥

ततश्चारमुखादसंख्यवानरयूथपरिवृतमप्रमेयबलशालिनं सुवेलाभिधं शैलमधिष्ठितं रघुनन्दनमुपश्रुत्य जातोद्वेगो मन्त्रिभिः संमन्त्र्य रामभद्रस्य सशरं धनुः तदीय शरश्च कृत्तमिव मायया निर्मायाऽऽनीयतामिति मायाविनं विद्युज्जिह्वं समादिश्य प्रविश्य चाऽशोकवनिका दीनवदना जानकीमित्थमाचक्षत ।

भद्रे ! यमाश्रित्य गर्वितासि स रामः अपारं सागरमप्युत्तीर्य सुवेलवनप्रदेशे अध्वश्रमेण सुख सुष्वाप ।

**अथाध्वनि परिश्रांतमर्धरात्रे स्थितं बलम् ।**
**सुखसुप्तं समासाद्य चारितं प्रथमं चरैः ॥**
**तत्प्रहस्तप्रणीतेन बलेन महता मम ।**
**बलमस्य हतं रात्रौ यत्र रामः सलक्ष्मणः ॥**
**अथ सुप्तस्य रामस्य प्रहस्तेन प्रमाथिना ।**
**असक्तं कृतहस्तेन शिरश्छिन्नं महासिना ॥**

तथैव निषूदिताश्च सुग्रीवहनुमत्प्रमुखा वानरप्रमुखाः ।

अनेन परस्याध्वश्रमादिसमयं विचार्य तस्मिन् समये कूटयोधिना प्रहर्तव्यमिति सूचितम् । तथा च सौप्तिके—

अस्मिन्नर्थे पुरा गीता श्रूयंते धर्मचिन्तकैः ।
श्लोका न्यायमवेक्षद्भिः तत्त्वार्थास्तत्त्वदर्शिभिः ॥
परिश्रांते विदीर्णे वा भुञ्जानेवाऽपि शत्रुभिः । प्रस्थाने वा प्रवेशे वा प्रहर्तव्यं रिपोर्बलम्
निद्रार्तमर्धरात्रे वा तथा नष्टप्रनायकम् । हीनयोधबलं यच्च द्विधा मुक्तं च यद्भवेत् ॥
इत्येवं बहुशश्चक्रे सुप्तानां युधि मारणम् । इति ।

तदिदानीं विद्युज्जिह्वसमानीतं इदं रामस्य शिर एतत् सशरं धनुश्चावलोक्य परित्यज्य रामप्राप्त्याशां मम वशगा भवेति पुनः पुनरकथयत् ।

सीताऽपि मायारचित तत्तच्चिह्नविशेषैः रामस्येदं शिर इति निश्चिन्वती गर्हयन्ती च कैकेयीं तच्छिरः पुनः पुनरादरेण समाघ्राय इत्थं विललाप—

द्वात्रिंशे ।

**प्रथमं मरणं नार्या भर्तुर्वैगुण्यमुच्यते ।**
**सुवृत्तस्साधुवृत्तायास्संवृत्तस्त्व ममाग्रत' ॥**

अनेन पतिव्रतायाः भर्तृमरणात्प्रागेव मरणं श्रेयस्करमिति सूचितम् ।

तथा चाऽऽदिपर्वणि बकवधे–मदीयं शरीरमेव बकबलिर्भवत्विति वदन्तं ब्राह्मणं प्रति ब्राह्मणी— व्युष्टिरेषा परा स्त्रीणा पूर्वं भर्तु' परा गतिम् । ब्रह्मन् गन्तु सपुत्राणामिति धर्मविदो विदु' ॥ इति ।

**अर्चितं सततं यत्नाद्गन्धमाल्यैर्मया तव ।**
**इदं ते यत्प्रियं वीर धनुः कांचनभूषणम् ॥**

अनेन भर्तुर्यस्मिन्प्रीतिस्तत् तद्भार्यया पूजनीयमिति सूचितम् । तथा च **वनपर्वणि-द्रौपदीसत्यभामासंवादे—**

प्रियांश्च रक्तांश्च भर्तुस्तान् पूजयेथा विविधैरुपायैः ॥ इति ।

**अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः ।**
**अग्निहोत्रेण सस्कारं केन त्वं तु न लप्स्यसे ॥**

अत्र सत्यप्यधिकारे राज्याभिषेकेण ऐहिकं राज्यसुखमननुभवतस्तव समृद्धदक्षिणावत्त्वेनानुष्ठितैरतिशायिताऽऽमुष्मिकसुखसाधनैरग्निष्टोमादिभिर्यज्ञैरिष्टवतस्तत्फलानुभवप्रतिबन्धकीभूतदुरितनिवर्तकत्वेनावश्यकर्तव्यस्त्रेताग्निभिरन्त्यसम्स्कारः किमर्थं तव न प्राप्त इत्युक्तम् ।

अनेन समृद्धदक्षिणावत्त्वेनानुष्ठित एव यज्ञ फलसाधको भवति नान्यथेति यज्ञदक्षिणाप्रशसाऽवगम्यते । सा च यज्ञस्यायुष्य संपादकत्वेन तदभावे दोषश्रवणेन प्रायश्चित्तोपदेशेन बीजवधादिहिसाप्रयुक्तयज्ञवैकल्यसमाधानार्थत्वेन सोमाभिषवाज्जनिनदेववीरहत्यानिर्हरणार्थत्वेन प्राणात्मनिष्क्रयणरूपत्वेन यज्ञप्रतिष्ठारूपत्वेनाऽभिलषितसकलफलसाधकत्वेन च तत्र तत्रावगम्यते ।

यज्ञायुष्यसंपादकत्वं च दक्षिणायास्तैत्तिरीयश्रुताववगम्यते । यज्ञ आयुष्मान् सदक्षिणाभिरायुष्मानिति दक्षिणाया अदाने दोषश्चापस्तंबेन दर्शितः यो दक्षिणेन यज्ञेन यजेत स यज्ञः प्रक्षामो नायुरिति । **मात्स्येऽपि—**

अन्नहीनोदये राष्ट्रं मन्त्रहीनस्तथर्त्विजः । आत्मान दक्षिणाहीनो नास्ति यज्ञसमो रिपुः ॥ इति ।

दक्षिणाया अभावे प्रायश्चित्तमप्याश्वलायनेनोक्तम् । दक्षिणादान उर्वरां दद्यादिति । आपस्तंबेनाऽपि—

यद्यादिष्टा दक्षिणामन्तरीया दुर्वरा प्रतिष्ठिता देया सा प्रायश्चित्तिरिति । बीजवधादि-प्रयुक्तयज्ञवैकल्यपरिहारार्थत्वमपि तैत्तिरीयश्रुतौ— अथो दक्षिणैवास्यैषाथो यज्ञस्यैव छिद्रमपि-दधाति । यद्वै यज्ञस्य क्रूरं यद्विलिष्ट तदन्वाहार्यस्यान्वाहार्यत्वं इति । दक्षिणायाः सोमा-भिषवजनितदेववीरहत्यापरिहारार्थत्वं प्राणात्मनिष्क्रयणरूपत्व चाह बोधायनः— द्वादशशतं दक्षिणानां विज्ञायते छन्दोगब्राह्मणं वीरहा वा एष देवाना य. सोममाभिषुणोतीति शतेन वीर निखदयते दशभिर्दश प्राणान् ऐकादशीतयात्मानं सा द्वादशी दक्षिणेति । यज्ञप्रतिष्ठा-रूपत्वमपि दक्षिणाया उक्तं— बृहदारण्यकश्रुतौ— कस्मिन् यज्ञः प्रतिष्ठित इति दक्षिणा-यामिति कस्मिन् दक्षिणा प्रतिष्ठितेति श्रद्धायामिति । श्रद्धा नाम दित्सूनामास्तिक्यबुद्धिः भक्तिसहिता कथ तस्या प्रतिष्ठिता दक्षिणा यदा ह्येव श्रद्दधते थ दक्षिणां ददाति ना-श्रद्दधानो हि दक्षिणा ददाति तस्माच्छ्रद्धायामेव दक्षिणा प्रतिष्ठितेति । दक्षिणाया अभि-लषितसकलसाधनत्वमपि छांदोग्ये—

एवमेतेन दक्षिणावता यं कामं कामयते तमभ्यश्नुते शुभा वा एता यज्ञस्य यद्दक्षिणा यद्दक्षिणावता यजते शुभमेवास्मिन् ददातीति—

आहिताग्नेस्त्रेताग्निभि. सस्कारः कर्तव्य इत्यत्र बोधायनः— आहिताग्निमग्निभि-र्दहन्ति यज्ञपात्रैश्चेति विज्ञायते पुरुषाहुतिर्यस्य प्रियतमेत्येतामनुख्या दहनस्य ब्रुवते तथा-प्युदाहरन्ति शरीरदायादा ह वा अग्नयो भवन्ति । तदपि दाशतये विज्ञायते शतमिन्नु शरदो अन्ति देवा यत्रानश्चक्राजरस तनूनां यत्र पितरो भवन्ति मा नो मध्यारीषतायु-र्गन्तोः— इति । तथा— अथैनमुपोषति पुरस्तादाहवनीयेन दक्षिणतोन्वाहार्यपचनेन पश्चाद्गार्हपत्येनोत्तरत सभ्यावसथ्याभ्यामत्राप्यपेक्षा भवन्ति यद्याहवनीयः प्रथममभ्यज्वलेत् देवलोकमभ्युज्जिहीर्षेदित्येन जानीयादथ यदन्वाहार्यपचनः पितृलोकमथ यदि गार्हपत्यो गन्धर्वलोकमथ सभ्यावसथ्यौ सप्तर्षीणा लोकमथ यदि सर्व एव सहाभ्युज्वलेयुर्ब्रह्मलोक-मभ्युज्जिहीर्षेदित्येनं जानीयादिति । तस्य सस्कारस्य कर्मसाध्यस्वर्गादिसुखानुभवप्रतिबन्ध-निवर्तकत्वं च छान्दोग्यभाष्ये—

अथ यदुचैवास्मिन् शर्म कुर्वंति यदु च नार्चिषमेवाभिसंभवन्ति इत्येतद्व्याख्यानावसरे— उक्तं यत् यदि उ च एव यस्मिन् एवविदि शव्यं शवकर्ममृते कुर्वंति यदु च न कुर्वन्ति ऋत्विजः सर्वथाप्येवंवित् तेन शवकर्मणा कृतेनापि प्रतिबद्धो न ब्रह्म प्राप्नोतीति नोनच कृतेन कर्मणा कश्चिदभ्यधिको लाभः न कर्मणा वर्धते नो कनीयानिति श्रुत्यतरात् शव-कर्मण्यनादरं दर्शयन् विद्यां स्तौति । न पुनः शवकर्म एवंविदो न कर्तव्यमिति । अक्रिय-

माणे तु शवकर्मणि कर्मणां फलारंभे प्रतिबन्धः कश्चिदनुमीयतेऽन्यत्र इह विद्याफलारंभ-
काले शवकर्म स्याद्वा नेति विद्यावतो प्रतिबन्धेन फलारभं दर्शयतीति । तथा **परिमलेऽपि**
उपकोसल विद्यायां अथ यदुचैवास्मिन् शव्यं कुर्वन्ति यदुच नेत्यारभ्य मार्गकथनं अक्षि
पुरुषोपासकस्य पुत्रैर्दहनकर्मणोक्तत्वेपि त्वरितमेवार्चिरादिप्राप्तिरस्ति न विद्यान्तरशालि-
नामिव तत्प्राप्तौ विलंबोऽस्तीति विशेषप्रदर्शनार्थत्वेन सफलमिति— **आपस्तंबोऽपि**—
स एष यज्ञायुधी यजमानोंजसा स्वर्गं लोकमेतीति विज्ञायत इति—

**अहं दाशरथेनोढा मोहात्स्वकुलपांसनी ।**
**आर्यपुत्रस्य रामस्य भार्या मृत्युरजायत ॥**

आर्यपुत्रस्य धार्मिकस्यापि रामस्य मदीयदुष्कृतवशेन इयमवस्था प्राप्तेति प्रतिपादनात्
भार्याकृतं दुष्कृतं भर्ता प्राप्नोतीति सूचितम् । तथा च **माधवीये**—

भर्ता भार्याकृतं पापं पिता पुत्रकृतं तथा । गुरुः शिष्यकृत पापं लभते कामतश्चरन् ॥

**नूनं मन्ये मया जातु वारितं दानमुत्तमम् ।**
**याहमद्यैव शोचामि भार्या सर्वातिथेरपि ॥**

अनेन सत्पात्रे दानविघ्नकर्ता शोकमाप्नोतीति सूचितम् । तथा च **माधवीये**—
उपस्थिते विवाहे च यज्ञे दाने महोत्सवे ।

मोहात् करोति यो विघ्नं स मृतो जायते क्रिमिः ॥ इति ।

मत्कृतलेशाभावेऽपि भवदीयसुकृतवशान् मम शोकेन न भवितव्य इत्यभिप्रायकेण
सर्वातिथेरपीति विशेषणेन भर्तृकृतं सुकृतं भार्याया अप्यागच्छतीति सूचितम् । तथा च
**निर्णयसिन्धौ**—

यद्देयेभ्य यच्च पित्रादिकेभ्यः कुर्याद्भर्ताऽभ्यर्चनसत्क्रियां च । तस्यै ह्यर्धं लभ्यते
नान्यचित्ता नारी पुण्यं भर्तृशुश्रूषयैव ॥ इति ।

**साधु पातय मां क्षिप्रं रामस्योपरि रावण ।**
**समानय पतिं पत्न्या कुरु कल्याणमुत्तमम् ॥**

अनेन भर्तृभार्यासंयोजनं सुकृताधायकमिति सूचितम् । तथा च **किष्किन्धाकाण्डे**
रामं प्रति तारा—

दारप्रदानाद्धि न दानमन्यत् प्रदृश्यते ज्ञानवतां हि लोके ।
त्वं चापि मा तस्य मम प्रियस्य प्रदास्यसे धर्ममवेक्ष्य वीर ॥ इति ।

**शिरसा मे शिरश्चास्य कायं कायेन योजये ।**
**रावणानुगमिष्यामि गतिं भर्तुर्महात्मनः ॥**

अनेन भर्त्रनुगमनेन भार्याया उत्तमगतिर्भवतीति सूचितम् । तथा च **पराशरः**—

तिस्रः कोट्योऽर्धकोटिश्च यानि रोमाणि मानुषे ।
तावत्काल वसेत्स्वर्गे भर्तारं याऽनुगच्छति ॥ **हारीतोऽपि**—

मातृकं पितृकं चैव यत्र कन्या प्रदीयते । कुलत्रयं पुनात्येषा भर्तारं यानुगच्छति ॥ इति ।

ततो वानरयूथपाना अट्टहाससिंहनादादिभिः परिकंपितां लङ्कापुरीमभिवीक्ष्य चकित-हृदयेन प्रहस्तेन प्रेषितादात्ययिकं कार्यमुपस्थितमचिरादेव भवतो बहिरागमनमुचितमुपश्रुत्य बहिर्निर्गतो रावणः ।

**शीघ्रं भेरीनिनादेन स्फुटकोणाहतेन मे ।**
**समानयध्वं सैन्यानि वक्तव्यं च न कारणम् ॥**

इत्यभिहितवान् ।

अत्र भेरीनिनादेन सैन्यानि समानयतेति प्रतिपादनाद्राज्ञा सेनासन्नाहे सेनानिवेशे वा प्रतिपुरुषं मनुष्य प्रेरणस्याशक्यत्वात् तज्ज्ञापने साधारणो भेरीशब्दः कर्तव्य इति सूचितम् । तथा **चादिपर्वणि**—

सुभद्राहरणे— ह्रियमाणां तु दृष्ट्वा सुभद्रां सैनिका जनाः ।
सभापालाय तत्सर्वं आचख्युः पार्थविक्रमम् ॥
तेषां श्रुत्वा सभापालो भेरीं सान्नाहिकीं ततः । स्फुटकोणाहतांश्चक्रे इति ।

## त्रयस्त्रिंशे ।

तदनु रावणकृतमायया संमोहितां शोचन्तीं जनकनन्दिनीं रावणवृत्तांता ।

**आश्वासयामास सरमा मृदुभाषिणी ।**
**सा हि तत्र कृतं मित्रं सीतया रक्ष्यमाणया ॥**

अनेन विपदि मित्रमेव प्रयोजनं साधयतीति सूचितम् । तथा च **कामन्दके**—

न तत्र तिष्ठति भ्राता न पिताऽन्योऽपि वा जनः ।
पुंसामापत्प्रतीकारे सन्मित्रं यत्र तिष्ठति ॥ इति ।

अये जनकनन्दिनि त्रिविक्रमपराक्रमस्ते भर्ता सराक्षसलंकोत्सादनाय कृतोद्योगो धनु-र्विष्फारयन्निखिलबलीमुखबलसंवलितो लक्ष्मणेन भ्रात्रा सह लङ्कां पुरीं निरुध्य कुशली वर्तते । अयं तु दशवदनो राघवागमसंत्रस्तहृदयः सचिवैः कर्तव्यजातं विचारयन् सभा-मध्यास्ते । एष राक्षससैन्योद्योगकरः सन्नाहभेरीशब्दः इमानि च गजानां बृंहितानि तुरगहेषितानि च एते च प्रासतोमरचर्मवर्मणां शब्दाः रथनेमिघोषाश्च दिवमापूरयन्निव ।

अयुक्तबुद्धिकृत्येन सर्वभूतविरोधिना ।
इयं प्रकृत्या रौद्रेण माया मायाविना त्वयि ॥
सखिस्नेहेन तद्भीरु मया सर्वं प्रतिश्रुतम् ।
लीनया गगने शून्ये भ्रममुत्सृज्य रावणात् ॥
तव हेतोर्विशालाक्षी न हि मे जीवितं प्रियम् ।

अनेन उत्तममित्रकार्ये प्राणानविगणय्यापि साधनीयमिति सूचितम् । तथा च कामन्दके—

अधर्मद्रोहसंयुक्ते मित्रजात उपेक्षितम् ।
आत्मवान् मित्रवर्गे तु प्राणानपि परित्यजेत् । प्राणैरप्युपकारित्वं मित्रायाऽव्यभिचारिणे इति ।

न शक्यं सौप्तिकं कर्तुं रामस्य विदितात्मनः ।
वधश्च पुरुषव्याघ्रे तस्मिन्नैवोपपद्यते ॥
आगतस्य हि रामस्य क्षिप्रमंकगतां सतीम् ।
अहं द्रक्ष्यामि सिद्धार्थां त्वां शत्रौ विनिपातिते ॥
अश्रूण्यानंदजानि त्वं वर्तयिष्यसि शोभने ।
तस्य दृष्ट्वा मुखं देवि पूर्णचन्द्रमिवोदितम् ॥
मोक्ष्यसे शोकजं वारि निर्मोकमिव पन्नगी ।
रावणं समरे हत्वा नचिरादेव मैथिलि ॥
त्वया समग्रं प्रियया सुखार्हो लप्स्यसे सुखम् ।
गिरिवरमभितोऽनुवर्तमानो हय इव मण्डलमाशु य' करोति ।
तमिह शरणमभ्युपेहि देवि दिवसकरं प्रभवो ह्यय प्रजानाम् ॥ इति ।

अत्रावध्यो रामः शत्रु विनिपातयिष्यति त्वमानन्दजान्यश्रूणि मोक्ष्यसे त्वया सह रामः सुखी भविष्यति इत्यादि फलमभिधाय दिनकरं शरणं व्रजेति प्रतिपादनात् स्त्रीणा सूर्योपासन भर्तुरायुष्यादिबहुफलप्रदमिति सूचितम् । तथा च **स्मृतिः**—

प्रातःकाले च या नारी दद्यादर्घ्यं विवस्वते । सप्तजन्मनि वैधव्यं सा नारी नैव पश्यति ॥
आदित्यस्य नमस्कारं ये कुर्वन्ति दिनेदिने । जन्मांतरसहस्रेषु दारिद्र्यं नोपजायते ॥

अत एव विराटपर्वणि कीचकोपद्रुता द्रौपदी राक्षसप्रेषणेन कीचकं निवार्य आपदि सूर्येण संरक्षितेति प्रतिपादनादापन्निवर्तकत्वमुक्तम्—

तस्यायोऽसौ तदार्केण राक्षसः सन्नियोजितः । स कीचकमपोवाहवातवेगेन भारत ।

स पपात ततो भूमौ रक्षोबलसमन्वितः । विघूर्णमानो निश्चेतश्छिन्नमूल इव द्रुमः ॥
इति । सूर्यः सर्वाभीष्टप्रद इत्यत्र धर्मं प्रति **सूर्यवचनमपि**—

यत्तेऽभिलषितं किंचित्तत्त्वं सर्वमवाप्स्यसि । इतश्चतुर्दशे वर्षे भूयो राज्यमवाप्स्यसि ॥
इति ।

संग्रामे च जयेन्नित्यं विपुलं चाप्नुयाद्वसु । मुच्यते सर्वपापेभ्य. सूर्यलोकं स गच्छति ॥
इति च । प्रजाना प्रभवत्वेन शरण्यत्वं च **भारते**—

एवं भानुमयं ह्यन्नं भूतानां प्राणधारणम् । पितैष सर्वभूतानां तस्मात्तं शरणं व्रज ॥
इति ।

## चतुस्त्रिंशे ॥

ततस्तद्वचनसमाश्वासितया सीतया क्रूरतरराक्षसाभिप्रायमखिलमपि प्रच्छन्नया त्वया विचारितमिच्छामीत्यभिहिता सरमा गगनमार्गेण प्रच्छन्नतयैव रावणसभां प्रविश्य विचार्य च तदभिप्राय पुनरागत्य सीतामित्थमभाषत ।

खरदूषणप्रमुखराक्षसनिषूदनेन सागरसेतुबन्धनेन च परिचितपराक्रमे राघवे विरोधोऽस्माकमयुक्ततरस्तदिदानीं सत्कृत्य मैथिलीप्रदानमेवोचितमस्माकमिति मन्त्रिवृद्धैर्बहुप्रकारमुद्बोधितोऽपि ।

**न त्वामुत्सहते मोक्तुमर्थमर्थपरो यथा ।**

अत्र मन्त्रिवृद्धैस्सीताया अविमोचने महाननर्थो भवेदिति संबोधितोऽपि अवश्यं मोक्तव्या त्वामर्थपरोऽर्थमिव लोभान्न मुंचतीत्युक्त्या उचितव्ययमकृत्वाऽर्थसंचयकर्ता लुब्धः पुरुषः ऐहिकामुष्मिकमनर्थं चावाप्नोतीति सूचितम्— आदाने **स्मृतिः**—

सीदते द्विजमुख्याय योऽर्थिने न प्रयच्छति । सामर्थ्ये सति दुर्बुद्धिर्नरकायोपपद्यते ॥
इति । **कामन्दकेपि**—

कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा । षड्वर्गमुत्सृजेदेनं यस्मिन्त्यक्ते सुखी भवेत् ।
दण्डको नृपतिः कामात् क्रोधाच्च जनमेजयः । लोभादैलस्तु राजर्षिर्वातापी हर्षतोऽसुरः ॥
पौलस्त्यो राक्षसोमानान्मदाद्भोद्भवो नृपः । प्रयाता निधन ह्येते शत्रुषड्वर्गमाश्रिताः ॥
इति **भारतेऽपि**—

लोभः प्रतिष्ठा पापस्य प्रसूतिर्लोभ एव च । अत्र ते संशयो माभूल्लोभः पापस्य कारणम् ॥
लोभात्क्रोधः प्रभवति लोभाद्द्रोहः प्रवर्तते । लोभान्मोहश्च माया च मानो मत्सर एव च ॥
नार्थैः पूरयितुं शक्यो लोभो बहुविधैरपि । नित्यं गंभीरतोयाभिरापगाभिरिवार्णवः ॥

अष्टादश समुद्रस्य द्वीपानश्नन्पुरूरवाः । तुतोष नैव रत्नानां लोभादिति हि न. श्रुतम् ॥
सर्वभूतेष्वविश्वस्तः सर्वभूतेषु हिंसकः । सर्वभूतेषु जिह्मश्च लुब्धो भवति भारत ॥
उत्पद्यते यथा भक्तिर्विष्णुपादांबुजाश्रया । तदा लोभः क्षयं याति स हि पुंसां सुदुर्लभा ॥
सुमहांत्यपि शास्त्राणि धारयन्तो बहुश्रुताः । च्छेत्तारः संशयानां च लोभग्रस्ता व्रजंत्यधः ॥
लोभक्षये क्षय यान्ति सर्वपापानि देहिनाम् । लोभवृद्धौ च वर्धन्ते नृपते नात्र संशयः ॥
यदा लोभः क्षयं याति यान्ति नाशमुपद्रवाः । तदातु जायते पुसां धर्मे बुद्धिः सुदुर्लभा ॥
धर्मार्थकाममोक्षाणां चतुर्णामिह साधनम् । धर्ममेव परं प्राहुर्मुनयस्तत्त्वदर्शिन· ॥
न चास्ति धर्मसंबन्धो लोभाक्रान्तस्य देहिनः । स एव धर्मविध्वसी लोभः परमदारुणः ॥
तस्मात् सर्वप्रयत्नेन त्यजेल्लोभं युधिष्ठिर । यदीच्छसि महाराज शाश्वतीं गतिमात्मनः ॥

इति । **प्राचीना अपि—**

कृपणः खलु जीवांते ऋतौ भार्यां न गच्छति । कदाचिदस्यां सञ्जातो धनं मे भक्षयिष्यति इति ।

इत्येतावानेव तत्रत्यो वृत्तातः— रामोऽपि सपरीवारं रावणमभिहत्य विजयलक्ष्म्या सह त्वामचिरादेष्यतीति ।

**एतस्मिन्नन्तरे शब्दो भेरीशब्दसमाकुलः ।**
**श्रुतो वानरसैन्यानां कंपयन् धरणीतलम् ॥**
**श्रुत्वा तु तद्वानरसैन्यशब्दं लङ्कां गता राक्षसराजभृत्याः ।**
**नष्टौजसो दैन्यपरीतचेष्टाः श्रेयो न पश्यन्ति नृपस्य दोषैः ॥**

अनेन प्रबलशत्रुकृतभेरीताडन शङ्खध्वन्यट्टहासादि श्रवणमात्रेण दुर्बला नष्टचेष्टा भीताश्च भवन्तीति सूचितम् । अत एव **गीतायां—**

माधवः पाण्डवश्चैव दिव्यौ शंखौ प्रदध्मतुः । स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ॥
इति ।

नृपस्य दोषैरित्यनेन राजदोषात् सर्वविनाशः तद्गुणाच्च सर्वेषां श्रेयो भवतीति सूचितम् । **कामन्दके—**

न्यायप्रवृत्तौ नृपतिरात्मानमथ च प्रजाः । त्रिवर्गेणोपसंधत्ते निहन्ति ध्रुवमन्यथा ॥
इति । **राजधर्मेऽपि—**

चातुर्वर्ण्यं यथा वेदाश्चातुराश्रममेव च । सर्वं प्रमुह्यते ह्येतद्यदा राजा प्रमुह्यति ॥
अग्निर्त्रेता त्रयी विद्या यज्ञाश्च सहदक्षिणाः । सर्व एव प्रमाद्यन्ति यदि राजा प्रमाद्यति ॥
राजैव कर्ता भूतानां राजैव च विनाशकः । धर्मात्मा यः स कर्ता स्यादधर्मात्मा विनाशकः

राज्ञो भार्याश्च पुत्राश्च बान्धवास्सुहृदस्तथा । समेत्य सर्वे शोचन्ति यदि राजा प्रमाद्यति
हस्तिनोऽश्वाश्च गावश्चाप्युष्ट्राश्वतरगर्दभाः । धर्मप्रवृत्ते नृपतौ सर्वे जीवन्ति जन्तवः ॥
अधर्मस्थे हि नृपतौ सर्वे शोचन्ति पार्थिव ॥ इति ।

## पंचत्रिंशे ।

ततो मन्त्रिजनाभिहितसीताप्रतिपादनमसहमानेन रावणेन पराक्रमहीनाः कातरा इव च शत्रुमेव पुनः पुनः किं प्रशंसथ तदिदानीं सन्निहते शत्रौ कश्चन वीरजनोचित एव मार्गश्चिन्तनीयो भवद्भिरप्रमेयबलशालिभिरित्यभिहितेषु मन्त्रिमुख्येषु तन्मातुः पिता माल्यवान् रावणमित्थमुवाच ।

**विद्यास्वभिविनीतो यो राजा राष्ट्रं नयानुगः ।**
**स शास्ति चिरमैश्वर्यं अरींश्च कुरुते वशम् ॥**

अनेन नीतिमार्गानुसारी स्थिरमैश्वर्यं प्राप्नोतीति सूचितम् । तथा च **कामन्दके**—

जितेन्द्रियस्य नृपतेर्नीतिमार्गानुसारिणः । भवन्त्युज्ज्वलिता लक्ष्म्यः कीर्तयश्च नभस्पृशः इति । तत्रैव—

इति परिगणितार्थः शास्त्रमार्गानुसारी नियमयति यतात्मा यः प्रजा दण्डनीत्या । अपुनरपगमाय प्राप्तमार्गप्रचाराः सरित इव समुद्रं संपदस्तं विशन्ति ॥ इति—

नयस्य विनयो मूलं विनयश्शास्त्रनिश्चयः । विनयो हीन्द्रियजयस्तद्युक्तश्शास्त्रमृच्छति ॥
तन्निष्ठस्य हि शास्त्रार्थाः प्रसीदंति ततश्श्रियः ।

इति च । **उद्योगेऽपि**— गान्धारीवचनम्—

वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु । परीक्ष्य कारिणं वीरं अत्यन्तं श्रीर्निषेवते ॥ इति ।

**सदधानो हि कालेन विगृह्णंश्चारिभिस्सह ।**
**स्वपक्षवर्धनं कुर्वन् महदैश्वर्यमश्नुते ॥**

अनेन उचितकाले कृतमेव कर्म सम्यक् फलतीति सूचितम् । तथा **चापद्धर्मे**—

अकाले कृत्यमारब्धं कर्तुर्नार्थाय कल्पते । तदेव काल आरब्धं महतेऽर्थाय कल्पते ॥
इति । **कामन्दके**—

सतां मार्गेण मतिमान् काले कर्म समाचरेत् । काले समाचरन् साधु रसवत्फलमश्नुते इति ॥

अकालबुद्धिसैन्यस्तु हन्यते कालयोधिना । कौशिकेन हतज्योतिर्निशीथ इव वायसः ॥
इति च ।

स्वपक्षवर्धनं कुर्वन्नित्यमेव स्वज्ञातिसेनापोषकस्य श्रीर्भवतीति सूचितम् ।
**तथा च राजधर्मे—**

निकृतस्य परैरन्यैर्ज्ञातिरेव परायणम् । उभयं ज्ञातिवर्गेषु दृश्यते साध्वसाधु वा ॥
तन्मानयेत्पूजयेच्च वाचा नित्यं च कर्मणा । कुर्याच्च प्रियमेतेभ्यो नाप्रियं किंचिदाचरेत्
य एवं वर्तते नित्यं ज्ञातिसबन्धमण्डले । मित्रेष्वमित्रमध्यस्थे चिरं यशसि तिष्ठति ॥
इति ।

गुणैरुदारैः संयुक्तान् प्रोन्नयेन्मध्यमाधमान् । महत्त्वं प्राप्नुवन्ततस्ते वर्धयन्ति नरेश्वरम् ॥
इति च ।

**तन्मह्य रोचते सन्धिः सह रामेण रावण ।**
**यदर्थमभियुक्ताः स्मः सीता तस्मै प्रदीयताम् ॥**

अनेन क्लेशनिमित्तं यत् तत्परित्यजेदिति सूचितम् । तथा च **मोक्षधर्मे—**

यन्निमित्त भवेच्छोकस्तापो वा दु खमेव वा ।
आयासो वा यतो मूलमेकाङ्गमपि तत्त्यजेत् ॥ इति ।

**हीयमानेन कर्तव्यो राज्ञा सन्धिः समेन च ।**
**न शत्रूनवमन्येत ज्यायान् कुर्वीत विग्रहम् ॥**

अनेन न्यूनः समो वा परेण सन्धिमेव कुर्यात् । विग्रहं तु अधिकबल एव कुर्यादिति सूचितम् । तथा च **राजधर्मे—**

दृढमूलस्त्वदुष्टात्मा विदित्वा बलमात्मनः । अबलानभियुञ्जीत न तु ये बलवत्तराः ॥
यदा तु हीनं नृपतिर्विद्यादात्मानमात्मना । अमात्यैस्सह संमन्त्र्य सधिं कुर्याद्बलीयसा ॥
इति ।

**असृजद्भगवान् पक्षौ द्वावेव हि पितामहः ।**
**सुराणामसुराणां च धर्माधर्मौ तदाश्रयौ ॥**
**धर्मो हि श्रूयते पक्षो देवानां च महात्मनाम् ।**
**अधर्मो रक्षसां पक्षो ह्यसुराणां च रावण ॥**

अत्र देवाः स्वभावतो धर्मप्रवृत्ताः असुराश्च स्वभावत एवाधर्मप्रयुक्ता इत्युक्त्या अद्यत्वेऽपि मनुष्येषु स्वतो धर्मप्रवृत्ता देववत् कृतकृत्या भवन्ति अधर्मप्रवृत्ताश्चासुखादेवाधोगच्छन्तीति सूचितम् । तथा च **गीतायाम्—**

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च । अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ।
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ॥
दयाभूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् । तेजः क्षमा धृतिः शौचमद्रोहानतिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत । दंभो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ॥
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् । प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः
न शौचं नापि चाचारो न सत्यं तेषु विद्यते । दैवी संपद्विमोक्षाय निबन्धायासुरी मता
इति ।

**यस्य देवर्षयः सर्वे गन्धर्वाश्च जयैषिणः ।**
**विरोधं मागमस्तेन सन्धिस्ते तेन रोचताम् ।**

अनेन देवानां ऋषीणां चानुग्रहो यस्मिन् तस्य जयो नियतः अतस्तेन संधिरेवोचित इत्युक्तम् ॥

अत एव देवाद्यनुग्रहवतोऽर्जुनस्य नियमेन जयः प्रतिपादितः । **कर्णपर्वणि—**
देवाश्च पितृभिस्सार्धं सगणाः सपदानुगाः । यमो वैश्रवणश्चैव वरुणश्च यतोर्जुनः ॥
ब्रह्मक्षत्रे च यज्ञाश्च दक्षिणाश्चार्जुनं श्रिताः ॥
पार्थस्य विजये राजन् सर्व एवाभिसंभृताः । प्रेताश्चैव पिशाचाश्च क्रव्यादाश्च मृगांडजाः
राक्षसाः सह यादोभिः सृगालाश्चैव कर्णतः । दृष्ट्वा प्रजापतिं देवा स्वयंभुवमचोदयन् ॥
स्वयंभो ब्रूहि नस्तथ्य एतयोर्विजयं प्रति । ब्रह्मेशानावथो वाक्यमूचतुस्त्रिदशेश्वरम् ॥
विजयो ध्रुव एवास्य विजयस्य महात्मनः । खाडवे येन हुतभुक् तोषितः सव्यसाचिना
स्वर्गं च समनुप्राप्य साहाय्यं येन ते कृतम् । तोषितो भगवान् येन महात्मा स वृषध्वज
महात्मा फाल्गुनश्चापि सत्यधर्मरतस्सदा । विजयस्तस्य नियतं जायते नात्र संशयः ॥
कर्णस्य दानवः पक्षः अतः कर्णपराजयः ॥ इति ।

**धर्मो वै ग्रसतेऽधर्मं ततः कृतमभूद्युगम् ।**
**अधर्मो ग्रसते धर्मं ततस्तिष्यः प्रवर्तते ॥**

अत्र धर्मेणाधर्माभिभवे कृतयुगं अधर्मेण धर्माभिभवे कलिरित्युक्त्या कालस्य स्वतो अखण्डस्य न कृतत्वादिकं किं तु धर्माधर्मप्रवृत्त्यधीनम् । तथा च धर्मानुष्ठापनेन कृतप्रवर्तकस्य राज्ञः अभिवृद्धिः अधर्मानुष्ठापनेन कलिप्रवर्तकस्य राज्ञः क्षयश्च भवतीति सूचितम् ।

तथा च **राजधर्मे—**
कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते । कृतप्रवर्तनाद्राजा पुण्यमत्यन्तमश्नुते । इति ।

तत्त्वया चरता लोकान् धर्मो विनिहतो महान् ।
अधर्मः प्रगृहीतश्च तेनास्मद्बलिनः परे ॥

स प्रमादात्प्रवृद्धस्ते अधर्मो ग्रसते हि नः ।
विवर्धयति पक्षं च सुराणां सुरभावन ॥

अत्र लोकसंचारसमये धर्मपरित्यागेन, धर्मानुष्ठानेन च परे प्रबला जाता इत्युक्त्या तपोबलेन लब्धवरोऽपि नित्य धर्मप्रवृत्तश्चेदेव विजयी भवति । तथा च भारते—

अलर्कमाहुर्नरवर्यं सन्तं सत्यव्रतं काशकरूशराजम् ।
विहाय राज्यानि वसूनि चैव नेशे बलस्येति चरेद्धर्मम् ॥ इति । कामन्दकेऽपि—

धर्माद्वै जवनो राजा चिराय बुभुजे भुवम् । अधर्माच्चैव नहुषः प्रतिपेदे रसातलम् ॥ इति ।

विषयेषु प्रसक्तेन यत्किंचित्कारिणा त्वया ।
ऋषीणामग्निकल्पानामुद्वेगो जनितो महान् ॥

तेषां प्रभावो दुर्धर्षः प्रदीप्त इव पावक. ।
तपसा भावितात्मानो धर्मस्यानुग्रहे रताः ॥

अत्र विषयेषु प्रसक्तेन यत्किंचित्कारिणा त्वया इत्युक्त्या विषयलोलुपस्य अकृत्यप्रवृत्त्या आपदो भवन्तीति सूचितम् । तथा च कामन्दके—

सज्जमानो ह्यकार्येषु विषयान्धीकृतेक्षणः । आवहत्युग्रभयदां स्वयमेवापदं नृपः ॥ इति ।

स्निग्धस्य चेन्द्रियार्थेषु मोहान्मरणमप्रियम् ।
मुख्यैर्यज्ञैर्यजंत्येते नित्यं तैस्तैर्द्विजातयः ॥
जुह्वत्यग्नींश्च विधिवत् वेदांश्चोच्चैरधीयते ।
अभिभूय च रक्षांसि ब्रह्मघोषानुदीरयन् ॥
दिशो विप्रद्रुतास्सर्वे स्तनयित्नुरिवोष्णगे ।
ऋषीणामग्निकल्पानामग्निहोत्रसमुत्थितः ॥
आदत्ते रक्षसां तेजः धूमो व्याप्य दिशो दश ।

अनेन नित्यनैमित्तिककर्माणि तपः वेदाध्ययनं अग्निहोत्रधूमः इत्येवमादयः रक्षो-निवर्तका इति सूचितम् । तथा च तैत्तिरीयश्रुतिः—

यज्ञो वै विष्णुर्यज्ञादेव रक्षास्यपहंति । इति । पारक्षुद्रेऽपि—

यज्ञादेव तैर्यजमान. रक्षांस्यपहंतीति । वनपर्वणि कुमारोत्पत्तौ-

अप्रकीर्णेन्द्रियं दान्तं शुचिं नित्यमतन्द्रितम् ।

आस्तिकं शुद्धचारं च वर्जयन्ति सदा ग्रहाः ॥ इति देवरहस्येऽपि-

श्रूयतां प्रतिघाताश्च यैर्न शक्नुम हिंसितुम् ।
गोरोचना समालिप्त वचाहस्तश्च यो भवेत् ॥
घृताक्षतं च यो दद्यान्मस्तके तत्परायणः । ये च मांसं न खादन्ति तान्नशक्नुम हिंसितुम्
यस्य चाग्निर्गृहे नित्य दिवारात्रौ च दीप्यते । तरक्षोश्चर्मदंष्ट्राश्च तथैव गिरिकच्छपः
आज्यधूमो बिडालश्च छागः कृष्णोऽथ पिंगलः ।
येषामेतानि तिष्ठन्ति गृहेषु गृहमेधिनाम् ॥
तान्यधृष्याण्यगाराणि पिशिताशैः सुदारुणैः ।
लोकानस्मद्विधा ये च विचरन्ति यथासुखम् ॥
तस्मादेतानि गेहेषु रक्षोघ्नानि विशांपते । इति । ज्यौतिषिकेऽपि-

देवब्राह्मणवन्दनाद्गुरुवचः संपादनात्प्रत्यहं
साधूनामभिभाषणाच्छ्रुतिरव श्रेय कथाकर्णनात् ।
होमादध्वरदर्शनाच्छुचिमनोभावाज्जपाद्दानतो
नो कुर्वति कदाचिदेव पुरुषस्यैवं ग्रहाः पीडनम ॥ इति ।

ननु विषयेषु प्रसक्तेन यत्किंचित्कारिणा त्वया इत्यादिना आदत्ते रक्षसां तेजो धूमो व्याप्य दिशो दश इत्यन्तेन, पक्षयोर्मुखे प्रतिपदि उदगयनदक्षिणायनयोर्मुखे दक्षिणायनादौ च संवत्सरमुखे फाल्गुनपौर्णमास्या चैत्रपौर्णमास्यां वसन्ते वसन्ते च भवैस्तत्कालकर्तव्यैः दर्शपूर्णमास पशुचातुर्मास्यज्योतिष्टोमादिभिर्यज्ञैर्नित्यं फलकामनां विनाऽपि ये यजन्ति यथाविधि अग्निहोत्रादिकं च कर्म कुर्वति तेषामृषीणां विषयलोलुपेन त्वया महानुद्वेगो जनितः अतस्तेषामग्निहोत्रसमुत्थितो धूमः रक्षसां तेज आदत्ते इति प्रतिपाद्यते तदनुपपन्नं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत अग्निहोत्र तु जुहुयात्स्वर्गकामः सर्वान् लोकान्पशुबन्धयाज्यभियजति अक्षय्यं हवै चातुर्मास्य याजिनः सुकृतं भवति ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यादिवाक्यैस्तत्तत्फलसाधकत्वेनावगम्यमानानां दर्शपूर्णमासादिकर्मणां तत्कामना विना अनुष्ठानानुपपत्ते - न च फलसाधनत्वेऽपि तत्कामनां विना अनुष्ठान भवत्विति वाच्यं। मनसा त्रिः संकल्पयते त्रिरुच्चैः स्वर्गकामोऽग्नीनाधास्य इत्यग्न्याधेये स्वर्गकामो दर्शपूर्णमासाभ्यां यक्ष्य इति दर्शपूर्णमासयोः स्वर्गकामश्चातुर्मास्यैर्यक्ष्य इति चातुर्मास्येषु पशुकामः पशुना यक्ष्य इति पशुबन्धे स्वर्गकामः सोमेन यक्ष्य इति सोमे इत्यादि बोधायनाचार्यवचनेन तत्तत्फलोद्देशेनैव तत्तत्कर्मारंभानुसन्धानपूर्वकं तत्तत्कर्मणां कर्तव्यत्वावगमात् इति चेत् उच्यते—

उदाहृतवाक्यैर्दर्शपूर्णमासादिकर्मणां तत्तत्फलार्थत्वावगमेऽपि ते फलकामन विरहेऽपि अवश्यमनुष्ठेयाः ।

जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य· एष वा अनृणो यः पुत्री यज्वा इति श्रुत्या ऋणापकरणार्थत्वावगमात् अग्न्यादेयप्रभृत्यथैतान्यजस्राणि भवन्ति यथेदमग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ आग्रयणं उदगयनदक्षिणायनयो· पशुश्चातुर्मास्यानि ऋतुमुखे षड्ढोता वसुमते ज्योतिष्ठोम इत्येवं क्षेमप्रापणमित्याचार्यवचनात् अजस्राणि फलकामनायामसत्यामपि अवश्यानुष्ठेयानीत्यर्थः न तु पुन· पुनः कर्तव्यानीति । अग्न्याधेये अव्याप्तेः सोमांतान् यज्ञाननुक्रम्यनै[त्य]मिक ह्येतद्द णसस्तवादिति वशिष्ठवचनाच्च । यावज्जीवमग्निहोत्रं जुहोति धर्मो वा एषो शातः अहरहः प्रवृज्यते यदग्निहोत्रं तं सन्तमुत्तरेऽर्धमास आरभते तं काले काल आगते यजते अर्धमासेऽर्धमासे प्रवृज्यते षट्सु षट्सु मासेषु पशुना यष्टव्यं भवतीति तं ततोनीजानस्य पशुना सवत्सरो नातीयात् । वसन्ते वसन्ते ज्योतिषा यजेत अहरहर्यजमान· स्वयमग्निहोत्रं जुहुयात् ताभ्या यावज्जीवं यजेत तेन संवत्सरे संवत्सरे यजेत यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि स्यु·— वसन्ते वसन्ते ज्योतिष्टोमेन यजेत इत्यादिसूत्रैर्जीवमनिमित्तकत्वस्य अभ्यासस्य चावगम्यमानत्वाच्च । यस्याग्निहोत्रमदर्शपौर्णमासमनाग्रयणमतिथिवर्जितं च अहुतमवैश्वदेवमविधिनाहुतमासप्तमांस्तस्य लोकान् हिनस्ति इति । अग्निहोत्राद्यकरणे प्रत्य-वायश्रवणात् आदर्शं दर्शयागवर्जितं एवमपौर्णमासमनाग्रयणमित्यपि अतिथिवर्जितं आतिथ्यकर्मणा सत्क्रियमाणः सोमोऽतिथिः तद्वर्जितं सोमयागरहितमित्यर्थः श्रौत-प्रकरणात् अहुतं कस्मिंश्चित्काले आलस्यादिना अकृतं अवैश्वदेवं चातुर्मास्यप्रकृतिभूतं पर्व। तेन चातुर्मास्यानि लक्ष्यते तद्रहित अविधिना हुतं विधिमनपेक्ष्य हुतं आसप्तमान् त्रयः पितृपितामहप्रपितामहाः त्रयः पुत्रपौत्रप्रपौत्राः आत्मा सप्तमः एतावान् सप्तलोकान् भूरादींश्च हिनस्तीति श्रुत्यर्थः । यस्याग्निहोत्रं विच्छिद्येत तव्यहे त्र्यहे चतुरहे वा अग्नये ततुमते पुरोडाशमष्टादशकपालं निर्वपेत् अग्नये पथि कृते पुरोडाशमष्टाकपालं निर्वपेत् यो दर्शपूर्णमासयाजी सन्नमावास्यां पौर्णमासीं वातिपातयेत् वैश्वानरं द्वादशकपाल निर्वपेदमावास्या पौर्णमास्या वातिपात्याग्नये पथि कृते पुरोडाशमष्टाकपालं निर्वपेद्यो-दर्शपूर्णमासयाजीत्युक्त । यद्यमावास्या पौर्णमासीं वातीयादिष्टिरग्निः पथिकृत् सप्तहोत्रा यज्ञ विभ्रष्टं याजयेत् ज्योतिष्टोमेनाग्निष्टुता यज्ञविभ्रष्टोयजेत इत्यादि श्रुतिसूत्रैरकरणे प्रायश्चित्त-विधानाच्च तस्माद्दर्शपूर्णमासादीना दर्शपूर्णमासाभ्यामित्यादिवचनैः फलसाधनत्वावगमेऽपि उक्तरीत्या फलकामना विना अनुष्ठेयत्व सिद्धमेव ।

ननु अवश्यकर्तव्येषु दर्शपूर्णमासादिषु सत्सु अग्निहोत्रस्य विशिष्य रक्षोनिवर्तकत्व-प्रतिपादनं कुत विशेषाभावादितिचेदुच्यते । अवश्यकर्तव्यत्वाविशेषेऽपि सर्वापेक्षया अग्निहोत्रस्य उत्कृष्टत्वेन विशिष्य रक्षोनिवर्तकत्वं प्रतिपादितम् । तथा हि ।

दर्शपूर्णमासादिकर्मापेक्षया अग्निहोत्रमुत्कृष्टं स भूरिति व्याहरत् स भूमिमसृजताग्निहोत्रं दर्शपूर्णमासौ यजूंषि सद्वितीयमतप्यत सो ताम्यत् स भुव इति व्याहरत् सोंऽतरिक्षमसृजत चातुर्मास्यानि सामानि तृतीयमतप्यत सो ताम्यत् स सुवरिति व्याहरत् स दिवमसृजत अग्निष्टोममुकथ्यमतिरात्रमृच इति । **पारक्षुद्र श्रुतौ—**

प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यंचामावास्यां चातिरात्रं चेति । **तैत्तिरीयश्रुतौ च–**

दर्शपूर्णमासाद्यपेक्षया तस्य प्रथमं सृष्टत्वावगमात् ।

ब्रह्मवादिनो वदन्ति अग्निहोत्रप्रायणा यज्ञा· किं प्रायणमग्निहोत्रमिति वत्सो वा अग्निहोत्रस्य प्रायणं अग्निहोत्र यज्ञानामिति श्रुत्या इतरापेक्षया प्रथम कर्तव्यत्वावगमात् । निवेशे वृते नैयमिकानि श्रूयन्ते अग्निहोत्रमतिथयो यच्चान्यदेवं युक्तमिति । आपस्तंबसूत्रे– कर्तव्येषु नैय्यमिक कर्मसु तस्य प्रथमतः उपादानात् ।

नाग्निहोत्रात्परो धर्मो नाग्निहोत्रात्परं तपः ।
नाग्निहोत्रात् परं श्रेयो नाग्निहोत्रात् परं यशः ॥
नाग्निहोत्रात्परासिद्धिर्नाग्निहोत्रात्परा गतिः ॥
नाग्निहोत्रात्परं स्थानं नाग्निहोत्रात् परं व्रतम् । इति **हारीतवचनेन—**

अग्निहोत्रफलो वेदः षडङ्गपदक्रमः । अग्निहोत्रसमो धर्मो न भूतो न भविष्यति ॥ इति । **प्रजापतिवचनेन च–**

उत्कृष्टधर्मांतरप्रतिषेधात् यस्याग्निहोत्रमदर्शमित्याद्युदाहृताथर्वणश्रुतौ दर्शपूर्णमासाद्यपेक्षया तस्य प्राधान्यावगमात् यावज्जीवं नियमेन कर्तव्यत्वाच्च । न च यावज्जीवकर्तव्यत्वस्य दर्शपूर्णमासपशुचातुर्मास्यज्योतिष्टोमादिसाधारण्यात् कथ तावता अग्निहोत्रस्य उत्कृष्टत्वमिति वाच्यम् । त्रिंशतं वा वर्षाणि जीर्णो वा विरमेत् सोमः खलु वै सान्नाय्यं य एवं विद्वान् सान्नाय्य पिबति अपुनर्भक्षोऽस्य सोमपीथो भवतीति श्रुतिकल्पसूत्राभ्यां दर्शपूर्णमासयोर्ज्योतिष्टोमस्य च पक्षांतरावगमात वल्सप्ताना पशुसोमाना निष्कृत्यर्थमसंभवे इष्टिं वैश्वानरी.. निर्वपेदब्दपर्यंत इति । पशुज्योतिष्टोमयोर्मानवे पक्षान्तरोपन्यासात् । समाप्य सोमेन यजेताशक्तौ पशुनेत्यश्वालायनवचने इति वै खल्वत्सजमानस्याथ पुनरालभमानस्येत्यापस्तंब वचने चातुर्मास्यानामपि सकृत्प्रयोगावगमात् अग्निहोत्रस्य तथा पक्षांतरानवगमात् ।

तथा च दर्शपूर्णमासादिवत् पक्षान्तराभावात् अग्निहोत्रं तदपेक्षया उत्कृष्टमिति सिद्धम्।

**तेषु तेषु च देशेषु पुण्येष्वेवदृढव्रतैः।**
**चर्यमाणं तपस्तीव्रं सन्तापयति राक्षसान्॥**

अनेन पुण्यदेश एव तपः कर्तव्यमिति सूचितम्। तथा च **गौतमः**—

जपस्तप इत्युपक्रम्य तेषां देशमाह— सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः पुण्यह्रदाः तीर्थानृषि निवासो गोष्ठः परिस्कन्द इति देशः।

**देवदानवयक्षेभ्यो गृहीतश्च वरस्त्वया।**
**मानुषा वानरा ऋक्षा गोलांगूला महाबलाः॥**

**बलवन्त इहागत्य गर्जंति दृढविक्रमाः।**
**विनाशमनुपश्यामि सर्वेषां रक्षसामहम्॥**

अत्र वरग्रहणसमये मानुषा दुर्बला इत्यवहेलनया तेभ्योऽवध्यत्व प्रार्थनाकरणेन तेभ्य-एव वधः प्राप्त इत्युक्त्या स्वल्पेऽपि अवहेलना न कर्तव्येति सूचितम्।

**उत्पातान् विविधान् दृष्ट्वा घोरान् बहुविधांस्तथा।**
**खराभिस्तनिता घोरा मेघाः प्रतिभयंकराः॥**
**शोणितेनाभिवर्षन्ति लङ्कामुष्णेन सर्वतः।**
**रुदतां वाहनानां च प्रपतन्त्यास्रबिन्दवः॥**
**ध्वजा ध्वस्ता विवर्णाश्च न प्रभान्ति यथापुरम्।**
**व्याला गोमायवो गृध्राः वाश्यन्ति च सुभैरवम्॥**
**प्रविश्य लङ्कामनिशं समवायांश्च कुर्वते।**
**ज्ञात्वा प्रधार्य कर्माणि क्रियतामायतिक्षमम्॥**

एतानि च दुर्निमित्तानि प्रागेव व्याख्यातानि।

**इदं वचस्तत्र निगद्य माल्यवान्**
**परीक्ष्य रक्षोऽधिपतेर्मनः पुनः।**
**अनुत्तमेषूत्तमपौरुषो बली**
**बभूव तूष्णीं समवेक्ष्य रावणम्॥**

अनेन युक्तवादी पुरुषः यत्र युक्तायुक्तविवेको नास्ति तादृशस्थले भूयो न ब्रूयादिति सूचितम्। **तथाचोद्योगे**- कृष्णं प्रति विदुरः—

यत्र सूक्तं दुरुक्तं च समं स्यान्मधुसूदन। न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायकः।

अविजानत्सु मूढेषु निर्मर्यादेषु माधव। न त्वं वाक्यं क्षमं वक्तुं चण्डालेषु द्विजो यथा तेष्वेवमुपपन्नेषु कामक्रोधानुसारिषु । समर्थमपि ते वाक्यमसमर्थं भविष्यति ॥ इति ।

**षट्त्रिंशे ।**

हितकरमपि माल्यवद्वचनं दैवविपर्ययेणाहितं मन्यमानो दशवदनः तमित्थमभाषत। निर्जितनिखिलदिगीश्वरं अचिन्त्यपराक्रमं राक्षसराजं मामप्यवमत्य किमिति कृपणं परित्यक्तनिखिलबन्धुमित्रजनं नष्टराज्यं राममेव मानुषं पुनः पुनः प्रशंससि ।

**वीरद्वेषेण वा शंके पक्षपातेन वा रिपोः ।**
**त्वयाऽहं परुषाण्युक्तः परप्रोत्साहनेन वा ॥**
**प्रभवन्तं पदस्थं हि परुषं कोऽभिधास्यति ।**
**पंडितः शास्त्रतत्त्वज्ञो विना प्रोत्साहनाद्रिपोः ॥**

अत्र वीरद्वेषेण पक्षपातेन परप्रोत्साहनेन वा परुषाण्युक्तः इत्युक्त्या वीरपुरुषेषु कातराणां द्वेषो भवति पक्षपातेन परप्रोत्साहनेन वा वीरान्निंदतीति सूचितम् ।

तथा च **राजधर्मे**—

लुब्धानां शुचयो द्वेष्याः कातराणां तरस्विनः ।
मूर्खाणां पण्डिता द्वेष्याः दरिद्राणां महाधनाः ॥
अधार्मिकाणां धर्मिष्ठाः कुरूपाणां सुरूपिणः ।
बह[वः]वोऽपण्डिता मूर्खा लुब्धा मायोपजीविनः ॥
कुर्युर्दोषमदोषस्य बृहस्पतिमतेरपि ॥ इति ।

अत एव **द्रोणपर्वणि**— पाण्डवेषु पक्षपातेन कर्णविषये कृपवचनम्— बाहुभिः क्षत्रियाः शूरा वाग्भिश्शूरा द्विजातय । धनुषा फाल्गुनः शूरः कर्णश्शूरो मनोरथैः ॥ इति ।

तावद्गर्जसि राधेय यावत्पार्थं न पश्यसि । आरात्पार्थमिमं दृष्ट्वा दुर्लभं तव गर्जितम् ॥ इति च ।

स एव मे वरः शल्य उद्योगे यस्त्वया कृत । सूतपुत्रस्य संग्रामे कार्यस्तेजोवधस्त्वया ॥ इति युधिष्ठिरप्रोत्साहनेन कर्णंप्रति शल्यवचनम्—

विरम विरम कर्ण कत्थनादतिरभसाप्यति वाक्यमुक्तवान् ।
क्व च हि नरो धनञ्जयः क्व च पुनरहो पुरुषधर्मो भगवान् ॥
इदमप्यपरमुपस्थितं पुनस्तव निधनाय सुयुद्धमद्य वै।
न यदि रिपुभयात्पलायसे समरगतोऽद्य हतोऽसि सूतज ॥ इति ।

अत्र हितोपदेष्टुः माल्यवतो राज्ञा रावणेनाधिक्षेपणाभिधानात् दुष्टे राजनि हितोपदेष्टा वार्यते न तु बहुमतिर्भवतीति सूचितम्—

तथा च **कामन्दके**—

मदोद्रिक्तस्य नृपतेः संकीर्णस्येव दन्तिनः। गच्छंत्यनावृतस्यास्य नेतारः खलु वाच्यताम् इति।

निखिलसुरनिकरविजेतुर्मम मानुषेण रामेण कथ भय स्यात्।

**द्वन्द्वे यस्य न तिष्ठन्ति दैवतान्यपि संयुगे।**
**स कस्माद्रावणो युद्धे भयमाहारयिष्यति॥**

वनादाहृताया. सीतायाः प्रदानं बाहुबल इव कथमह कुर्याम्।

**द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित्।**
**एष मे सहजो दोषः स्वभावो दुरतिक्रमः।**

अनेन बलीयसि प्रणामं देवताप्रणामात्मकः श्रेयस्करः तादृशेऽपि बलवनि प्रणामे विनश्वराणां बुद्धिर्न भवतीति सूचितम्।

देवता प्रणामरूपत्वं **चोद्योगे**-

यदा तत्त्वं प्रणमति न तत्संतापमर्हति। यच्च स्वयं नतं दारु न तत्सम्पातयत्यपि॥
एतयोपमया वीर सन्नमेत बलीयसे। इन्द्राय स प्रणमते नमते यो बलीयसे॥ इति।

श्रेयस्करत्वं च **कामन्दकेऽपि**—

समाक्रान्तस्य बलिना सर्वयत्नवतोऽपि हि। हरिणस्येव सिंह्येन शरण्यो वै न दृश्यते॥
ईषदायस्यमानोऽपि सिंह्यो मत्तानिव द्विपान्।
हिनस्ति बलवान् तस्मात् सन्धेयः शिवमिच्छता॥
बलिना सह योद्धव्यमिति नास्ति निदर्शितम्।
प्रतिवातं न हि घनः कदाचिदुपसर्पति॥
बलीयसि प्रणमतां काले विक्रमतामपि। संपदो नापगच्छन्ति प्रतीपमिव पन्नगाः॥
इति।

अत एव विनश्वरस्य दुर्योधनस्य बलीयसि प्रणामे बुद्धिर्न जायते इत्युक्तं। **उद्योगे**-

ते वयं वीरशयनं प्राप्स्याम यदि संयुगे। अप्रणम्यैव शत्रूणां न नमस्यामि माधव॥
कश्चिज्जातु कुले जातः क्षत्रधर्मेण वर्तयन्। भयाद्वृत्तिं समीक्ष्यैवं प्रणमेदिह कस्यचित्
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम। अप्यपर्वणि भज्येयं न नमेयं हि कस्यचित्॥
इति मातङ्गवचनं परीप्सन्तो हितेप्सवः। इति। **प्राचीना अपि**—

शिलास्तंभसमां वृत्ति भजते मूढधीर्नरः । भाराक्रान्तशरीरोऽपि भिद्यते नैव नम्यते ॥
इति ।

नलविरचितसेना च तीर्णार्णवोऽपि रामः जीवन्न प्रतिनिवर्तिष्यते इति वदन्तं दुष्टं-
नोत्तरमब्रवीन् माल्यवान्

**रावणस्तु सहामात्यो मन्त्रयित्वा विमृश्य च ।**
**लङ्कायामतुलां गुप्तिं कारयामास राक्षसः ॥**
**सव्यादिदेश पूर्वस्यां प्रहस्तं द्वारि राक्षसम् ।**
**दक्षिणस्यां महवीर्यौ महापार्श्वमहोदरौ ॥**
**पश्चिमायामथो द्वारि पुत्रमिन्द्रजितं तथा ।**
**व्यादिदेश महामायं बहुभी राक्षसैर्वृतम् ॥**
**उत्तरस्यां पुरद्वारि तावुभौ शुकसारणौ ।**
**स्वय चात्र भविष्यामि मन्त्रिणस्तानुवाच ह ॥**
**राक्षस तु विरूपाक्षं महावीर्यपराक्रमम् ।**
**मध्यं मे स्थापयद्गुल्मे बहुभिस्सह राक्षसैः ॥**

अनेन शत्रौ सन्निहिते सति प्रमादपरिहाराय राज्ञा पुरगुप्तिः कर्तव्येति सूचितम् ।
तथा च **वनपर्वणि सौभवधे—**

प्रमादं परिरक्षद्भिः उग्रसेनोद्धवादिभिः । आनर्ताश्च तथा सर्वे तथा नर्तकगायकाः ॥
बहिर्निःसारिता क्षिप्रं रक्षद्भिर्वित्तसंचयम् । सक्रमा भेदितास्सर्वे नावश्च प्रतिषेधिताः ॥
परिधाश्चापि कौरव्या कीलैः सुरचिताः कृताः । उपायानाः कुरुश्रेष्ठ तथैवाप्यंबरीषकाः ॥
समन्तात्क्रोशमात्रं च कारिता विषमा चमूः । प्रकृत्या विषमं दुर्गं प्रकृत्या च सुरक्षितम्
प्रकृत्या चायुधोपेतं विशेषेण तदानघ । सुरक्षितं सुगुप्त च सर्वायुधसमन्वितम् ॥
न चामुद्रोऽभिनीयेत न चामुद्रः प्रवेश्यते । वृष्ण्यन्धकपुरो राजन् तदा सौभसमागमे ॥
अनुरथ्यासु सर्वासु चत्वरेषु च कौरव । अलंबभूव राजेन्द्र प्रभूतगजवाजिमत् ॥
दत्तवेतनभक्तं च दत्तायुधपरिच्छदम् । कृतोपधानं च तदा बलमासीन्महाभुज ॥
न कुप्य वेतनी कश्चिन्न चातिक्रान्तवेतनी । नानुग्रहभृतः कश्चिन्नचादृष्टपराक्रमः ॥
एवं सुविहिता राजन् द्वारका भूरिदक्षिणाः । आहुकेन सुगुप्ता च राज्ञा राजीवलोचन ॥
इति । तथा च **राजधर्मे—**

यदा तु पीडितो राजा भवेद्राज्ञा बलीयसा । त्रिधा वा कृष्य मित्राणि निधानमुपकल्पयेत्
घोषाभ्यसेत मार्गेषु ग्रामानुत्थापयेदपि । प्रवेशयेच्च तान् राजा शाखानगरकेष्वपि ॥
ये दुर्गाश्चैव गुप्ताश्च देशास्तेषु प्रवेशयेत् । बलिनो बलमुख्यांश्च सान्त्वयित्वा पुनः पुनः

सर्वोपहार कुर्वीत स्वयमेव नराधिपः । असंभवे प्रवेशस्य दाहयेदग्निना भृशम् ॥
क्षेत्रस्थेषु च सस्येषु शत्रोरुपजपेन्नरान् । विनाशयेद्वा तत्सर्वं बलेनाथ स्वकेन वै ॥
नदीमार्गेषु च तथा सक्रमानवसादयेत् । जलं निस्रावयेत्सर्वमनिस्राव्यं च दूषयेत् ॥
तदात्वेनायतीभिश्च चैत्यवृक्षान् विवर्जयेत् । प्रावृद्धाना द्रुमाणां च शाखान् प्रच्छेदयेत्तथा
प्रगण्डी· कारयेत्सम्यक् आकाश चानयीत्तथा । आपूरयेच्च परिखाः स्थाणुन झषाकुलाः ॥
कुलिगद्वारिकाणि स्युरुच्छ्वासार्थे पुरस्य च । तेषां च द्वारिगुप्तिश्च कार्या सर्वात्मना भवेत्
द्वारेषु च पुरस्यैव यन्त्राणि स्थापयेत्सदा । आरोपयेच्छतघ्नीश्च स्वाधीनाश्चैवोकारयेत् ॥
सशोधयेत्तथा कूपान् कृतात्सर्वान्पयोर्थिभिः । तृणच्छिन्नानि वेश्मानि पंकेनाथ प्रलेपयेत्
निर्वपेच्च तृणान् मासे चैत्रे वह्निभयात्पुन· । नक्तमेव च भक्तानि पाचयीत नराधिपः ॥
न दिवाग्निर्ज्वलेद्गेहे वर्जयित्वाऽग्निहोत्रिणाम् ।
यथा संभवे शैलानि चेष्टकानि च कारयेत । मृण्मयानि च कुर्वीत ज्ञात्वा देशबलाबलम्
कर्मादेरिष्टशालासु ज्वलेदग्नि· सुरक्षितः । गृहाणि च प्रविश्याथ बिचेय स्याद्धुताशनः
महादण्डश्च तस्या स्यादग्निर्वै दिवा भवेत् । प्रघोषयेदथैवं च रक्षणार्थं पुरस्य वै ।
भिक्षुकान्यजकाश्चैव क्लीबोन्मत्तकुशीलवान् । बाह्यान् कुर्युर्नरश्रेष्ठ दोषाय स्युर्हितेशठाः
चत्वरेषु च तीर्थेषु सभास्वावसथेषु च । यथार्थवर्णति पणिधि कुर्यात्सर्वत्र पार्थिवः ॥
विशालान् राजमार्गाश्च कारयेत नराधिपः । प्रपांश्च विपणींश्चैव यथादेशं समादिशेत् ॥
भाण्डगारायुधागारान् धान्यागाराश्च सर्वशः । अश्वागारान् गजागारान् बलाधिकरणानि च
परिघाश्चैव कौरव्य प्रतोलीसंकटानि च । न जातु कश्चित्पश्येत गुह्यमेव युधिष्ठिर ॥
अर्किंच अर्थसं निचयं कुर्याद्राजा परबलार्दितः । तैलं मधु घृत सस्यमौषधानि च सर्वशः
अङ्गारकुशमुञ्जाना पलाशरपर्णिनाम् । यवसेन्धनदिग्धाना कारयेत च संचयान् ॥
आयुधाना च सर्वेषा शक्त्युष्टिप्रासचर्मणाम् । औषधानि च सर्वाणि मूलानि च फलानि च
चतुर्विधाश्च वेद्यान्वै संगृह्णीयाद्विशेषत. । नराश्च नर्तकांश्चैव मल्लान् मायाविनस्तथा ।
संचयानेवमादीनां कारयेत नराधिप· । शोभयेयु· पुरवरान् मोदयेयुश्च सर्वश ॥
यतः सक्ता भवेच्चापि भृत्यतोथापि मन्त्रिण । पौरेभ्यो नृपतेर्वापि स्वाधीनान्कारयीन तान्
कृते कर्मणि राजेन्द्र पूरयेद्धनसंचयैः । मानेन च यथार्हेण सात्वेन विविधेन च ॥
निर्वेदयित्वा च परं हत्त्वा वा कुरुनन्दन । ततो नृणो भवेद्राजा यथा शास्त्र निदर्शनम् ॥
राज्ञा सदैव रक्ष्याणि तानि चैव निबोध मे ।
आत्मामात्याश्चकोशाश्च दण्डो मित्राणि चैवह ॥
तथा जपदाश्चैव पुरं च कुरुनन्दनम् । एतत्सत्यात्मकं राज्यं परिपाल्यं प्रयत्नतः ॥
इति ।

**एवंविधानं लङ्कायाः कृत्वा राक्षसपुङ्गवः ।**
**कृतकृत्यमिवात्मानं मन्यते कालचोदितः ॥**

अत्र कालचोदितः अप्रयोजकं यत्किंचिद्विधाय कृतकृत्यं मन्यत इत्युक्त्या विनाशसमये शत्रुनिरसनासमर्थं स्वल्पमपि यत्नं कृत्वा आत्मानं कृतकृत्यं मन्यत इति सूचितम् ॥ तथाचोद्योगे विदुरः—

मध्ये तिष्ठन् हस्त्यनीकस्य मन्दो रथाश्वयुक्तस्य बलस्य मूढः ।
दुर्योधनो मन्यते वीतमन्युः कृत्स्नामयेयं पृथिवी जितेति ॥
सेनासमुच्चयं दृष्ट्वा पार्थिवं मधुसूदन । कृतार्थं मन्यते बाल आत्मानं चाविचक्षणः ॥
इति ।

सप्तत्रिंशे ॥

तदनु तारतारेयतपनतनयहनूमज्जांबवत्प्रमुखा बलीमुखा यूथपा. शत्रुविषयमागताः संत. नगाग्रनिविष्टेयं लङ्का कथं निरोद्धव्या कथं कार्यसिद्धिरस्माकमिति चिन्ताकुलितहृदयाः परस्परमभिवीक्ष्य,

**कार्यसिद्धिं पुरस्कृत्य मन्त्रयध्वं विनिर्णये ।**

इत्यवोचत् ।

**तथा तेषु ब्रुवाणेषु रावणस्यावरजोऽब्रवीत् ।**
**वाक्यमग्राम्यपदवत् पुष्कलार्थं विभीषणः ॥**
**अनलश्चानिलश्चैव हरः संपातिरेव च ।**
**गत्वा लंकां ममामात्याः पुरीं पुनरिहागताः ॥**
**भूत्वा शकुनयस्सर्वे प्रविष्टाश्च रिपोर्बलम् ।**
**विधानं विहितं यच्च तद्दृष्ट्वा समुपस्थिताः ॥**
**संविधानं यदाहुस्ते रावणस्य दुरात्मनः ।**
**राम तत् ब्रुवतस्सर्वं याथातथ्येन मे शृणु ॥**

अत्र दूतमुखेन शत्रोस्सर्ववृत्तान्तं सममर्मकमभिज्ञाय याथातथ्येन वदतो विभीषणस्य मतमनुसृत्य रामेण कार्यप्रवर्तनाद्राज्ञा परकीयवृत्तान्तपरिज्ञानाय शत्रुमर्मज्ञ एवाहृत्य इति सूचितम् । तथा च कामन्दके—

छिद्रं मर्म च वीर्यं च विजानाति निजो रिपुः ।
दहत्यंतर्गतश्चैव शुष्कं वृक्षमिवानलः ॥
रावणोच्छित्तये रामो विभीषणमपूजयत् । इति ।

प्राक्पश्चिमद्वारयोः प्रहस्तमेघनादौ दक्षिणद्वारि महापार्श्वमहोदरौ मध्यमे च गुल्मे विरूपाक्षं पुरगुप्त्यै सन्निवेश्य निखिलबलपरिवृतो दशवदन स्वयमुत्तरद्वारमध्यास्ते ॥

**अत्र मन्युर्न कर्तव्यो रोषये त्वां न भीषये ।**
**समर्थो ह्यसि वीर्येण सुराणामपि निग्रहे ॥**

अत्र वीर्येण समर्थोऽसि अतस्त्वां रोषये इति प्रतिपादनाच्छत्रूणां पराक्रमश्रवणे वीर्यवतां रोषो भवति दुर्बलानां भीतिर्भवतीति सूचितम् ।

अत एव राजसूयक्रत्वनुष्ठानाय सर्वे राजानो विजेतव्यास्तत्र जरासन्धो महापराक्रमशाली विजेतुमशक्य इति कृष्णवचनात् जरासन्धपराक्रम विज्ञाय भीत्या कर्मन्यास एवास्माकमुचित इति भीतेन धर्मराजेनाभिहितं भीमार्जुनाभ्यां तु भीति परित्यज्यैव उत्साहेनैव युद्धारभ एवाभिहित इति प्रतिपादितम् । **सभापर्वणि—**

तत्रैवमनुरुध्यते कुलान्येकशतं नृपाः । तस्मादिह बलादेव साम्राज्यं कुरुते हि मः ॥
रत्नभाजो हि राजानो जरासन्धमुपासते । एवं सर्वान् वशे चक्रे जरासन्धः प्रतापवान्॥
तं दुर्बलतरो राजा कथं पार्थ उपैष्यसि । ततो धर्मराजः ।
यथाहं विमृशाम्येकस्तत्तावच्छ्रूयतां मम । सन्यासं रोचते साधु कार्यस्यास्य जनार्दन ॥
अतिहन्ति मनो मेऽद्य राजसूयो दुराहरः ।
उत्साहवानर्जुनस्तु आह—
जरासन्धविनाशं च राज्ञा च परिमोक्षणम् । यदि कुर्याम यज्ञार्थं किं ततः परमं भवेत्
साम्राज्यं तु भवेच्छक्यं वय योत्स्यामहे परान् । इति । भीमोऽपि,
कृष्णे नयो मयि बल जयाः पार्थे धनञ्जये । मागधं साधयिष्याम इष्टि त्रय इवाग्नयः ॥
नयो जयो बलं चैव विक्रमः सिद्धिमेष्यति ॥ इति ।

अष्टत्रिंशे ।

तदनु विभीषणवचनमाकर्ण्य श्रीरामभद्रः शत्रुप्रतिघाताय—

**पूर्वद्वारे तु लङ्काया नीलो वानरपुङ्गवः ।**
**प्रहस्तप्रतियोद्धा स्याद्वानरैः परिवारितः ॥**

**अङ्गदो वालिपुत्रस्तु बलेन महता वृतः ।**
**दक्षिणे बाधतां द्वारे महापार्श्वमहोदरौ ॥**

**हनूमान् पश्चिमद्वारं निपीड्य पवनात्मजः ।**
**प्रविशत्वप्रमेयात्मा बहुभिः कपिभिर्वृतः ॥**
**दैत्यदानवसन्धानां ऋषीणां च महात्मनाम् ।**

**विप्रकारप्रियः क्षुद्रो वरदानबलान्वितः ।**
**परिक्रामति यः सर्वान् लोकान् सन्तापयन् प्रजाः ॥**
**तस्याहं राक्षसेन्द्रस्य स्वयमेव वधे धृतः ।**
**उत्तरं नगरद्वारमहं सौमित्रिणा सह ।**
**निपीड्याभिप्रवेक्ष्यामि सबलो यत्र रावणः ॥**

अत्र यथायोग्य तत्रतत्र बल सस्थाप्य शत्रो रावणस्य वधे अहमेव तिष्ठामीति प्रतिपादनाद्राज्ञा सह राजा युद्धं कुर्यान्न भट इति सूचितम् ॥ तथा च **राजधर्मे**—

राज्ञा राजैव योद्धव्य तथा धर्मो न हीयते ।
नान्यो राजानमभ्यस्येदराजन्य कदाचन ॥ इति । द्रोणपर्वण्यपि धर्मपुत्रं प्रति वासुदेवः ।

परिवर्ज्य गुरुं याहि यत्र राजा सुयोधनः । राज्ञा राजैव योद्धव्यो नाराज्ञा युद्धमिष्यते ॥ इति ।

**वानरेन्द्रश्च बलवान् ऋक्षराजश्च वीर्यवान् ।**
**राक्षसेन्द्रानुजश्चैव गुल्मे भवतु मध्यमे ॥**

अनेन यायिना स्थायिनः पुरीनिरोधनाय सर्वतोऽपि सेना निवेशनीयेति सूचितम् ।

तथा च रामकृष्णवासभूतगोमन्तपर्वतनिरोधनं चतुर्दिक्षु जरासन्धेन कृतमिति प्रतिपादितम् । **हरिवंशे**—

मयानुशिष्टास्तिष्ठन्तु गिरिभूमिषु भूमिपाः । तेषु तेष्ववकाशेषु शीघ्रमध्यास्यता गिरिः ॥
मद्रः कलिङ्गाधिपतिश्चेकितानः सबाह्लिकः । काश्मीरराजो गोनर्दः करूशाधिपतिस्तथा ॥
द्रुमः किंपुरुषश्चैव पार्वतीयाश्च पार्थिवाः । पर्वतस्यापरं पार्श्वं क्षिप्रमारोहयंत्विति ॥
पौरवो वेणुधारश्च वैदर्भस्सोमकस्तथा । रुक्मी च भोजाधिपतिः सूर्याक्षश्चैव पावनः ॥
पांचालानामधिपति द्रुपदश्च महीपति. । विंदानुविन्दावावंत्यौ दन्तवक्त्रश्च वीर्यवान् ॥
छागलः पुरुमित्रश्च विराट. पृथिवीपतिः । कौशांब्यो मालवश्चैव शतधन्वा विदूरथ ॥
भूरिश्रवास्त्रिगर्तश्च शक्र पञ्चजनस्तथा । उत्तरं पार्श्वमारोहंत्वेते दुर्गसहा नृपाः ॥
आरोहन्ता विनर्दन्ता वज्रप्रतिमगौरवः । उलूकः कैतवेयश्च वीरश्चांशुमतः सुत ॥
एकलव्यो बृहत्क्षत्रो धर्मवर्मा जयद्रथ. । उत्तमौजा. तथा साल्वः कौरव शैबनस्तथा ॥
वैदिशो वामदेवश्च सुकेतुश्चापि वीर्यवान् । पूर्वं पर्वतनिर्व्यूहं ये ते स्वायत्तरोधिनः ॥
वारयन्तोऽभिधावन्तु वाता इव बलाहकान् । अहं च दरदश्चैव चेदिराजश्च सङ्गताः ॥
दक्षिणं शैलनिचयं छादयिष्याम दंशितः । एवमेष गिरिः क्षिप्रं समन्ताद्रुक्ष्यता बलैः ॥

तद्बलं पृथिवीशानां हृष्टयोधमनाकुलम् । क्ष्वेलितास्फोटितरवैर्मेघैः सैन्यमिवाभभौ ॥
रथैः पर्वतसंकाशैः गजैश्च जलदोपमैः । तुरगैश्च महावेगैः पत्तिभिश्चाभिदंशितैः ॥
आमिश्रं तद्बलं भाति मत्तद्विपरथाकुलम् । घर्मान्ते सागरगतं यथैवाभ्रबल तथा ॥
सबलास्ते महीपाला जरासन्धपुरोगमाः । परिवार्य गिरिं सर्वे निवेशाय प्रचक्रिरे ॥

इति ।

न चैवं मानुषं रूपं कार्यं हरिभिराहवे ।
एषा भवतु सञ्ज्ञा नो युद्धेऽस्मिन् वानरे बले ॥
वानरा एव निश्चिह्न स्वजनेऽस्मिन् भविष्यति ।
वयं तु मानुषेणैव सप्त योत्स्यामहे परान् ॥
अहमेव सह भ्रात्रा लक्ष्मणेन महौजसा ।
आत्मना पञ्चमश्चायं सखा मम विभीषणः ॥

अनेन स्वपरबलविवेकार्थतया चिह्नं कर्तव्यमिति सूचितम् । अत एव भीष्मपर्वणि—
अभिज्ञानानि सर्वेषां संज्ञाश्चाभरणानि च । योजयामास कौरव्यो युद्धकाल उपस्थिते ॥

इति ।

## एकोनचत्वारिंशे ॥

तदनु सुवेलारोहणे कृतत्वरो राघवः सुग्रीवविभीषणावित्थमाचचक्षे ।

लङ्कामालोकयिष्यामो निलयं तस्य रक्षस. ।
येन मे मरणान्ताय हृता भार्या दुरात्मना ॥
येन धर्मो न विज्ञातो न वृत्तं न कुलं तथा ।
राक्षस्या नीचया बुद्ध्या येन तद्गर्हितं कृतम् ॥

अत्र राक्षसानां पापकर्मणि प्रवृत्ति. स्वाभाविकीत्युक्तम् । तच्च सुन्दरकाण्डे प्रतिपादितम् ।

तस्मिन् मे वर्धिता रोषो कीर्तिते राक्षसाधमे ।
यस्यापराधान्नीचस्य वधं द्रक्ष्यामि रक्षसाम् ॥

अत्र यस्यापराधाद्रक्षसां बाधो भवति तादृशस्य श्रवणमात्रेण मम कोपो वर्धत इत्युक्त्या बहूना वधे निमित्तभूतोऽवश्यं निग्राह्य इति सूचितम् । तच्च प्राक् प्रतिपादितम्—

नन्वत्र श्रीरामभद्रस्य तत्कीर्तनमात्रेण कोपाभिवृद्धिरुक्ता सा चानुपपन्ना मैत्रीकरुणामुदितोपेक्षाणां सुखदु खपुण्यापुण्यविषयाणां भावना तच्चित्तप्रसाधनं " इति पातञ्जलसूत्रेण सुखिषु मैत्र्या· दु.खिषु करुणायाः धर्मिष्ठेषु मुदितायाः पापिष्ठेषु उपेक्षायाः भावना

कर्तव्येत्यवगमेन रामेण पापिष्ठे रावणे कथं कोपः कृत इति चेन्न । तस्य सूक्तस्य राज्यं परित्यज्य वने वसतां वानप्रस्थानां क्षत्रियाणां ब्राह्मणादीनां च मैत्र्यादयो धर्मा इत्येतत्परत्वात् येषां तु राज्यपरिपालनं कर्तव्यं तेषां तु दण्ड्यादण्डने रक्ष्यारक्षणे च प्रत्यवायो भवेदेव । तथा च **मानवे**—

अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चाधिगच्छति ॥ इति ।

अतो रामस्य निग्राह्ये रावणे क्रोधाचरणं युक्तमेव ।

एको हि कुरुते पापं कालपाशवशङ्गतः । नीचेनात्मापचारेण कुलं तेन विनश्यति ॥
इत्युक्तम् ।

तथा च सभापर्वणि धृतराष्ट्रं प्रति विदुरः—

प्रातिपेयाः शातनवाः शूरसेनाः सबाह्लिकाः ।
दुर्योधनापराधेन कृत्स्नं प्राप्स्यन्ति सर्वशः ॥ इति ।

तदनु रामः पवनजवनैर्वानरयूथपैः सह सुवेलं गिरिवरमारुह्य अस्तंगते भगवति सवितरि तत्रैव सुखमुवास ।

ततः प्रभाते परितो विलोक्य उन्मदकलरवकोकिलालापमनोहरोद्यानपरिष्कृतपरिवारं बहुविधमणिगणमयूखमण्डलद्योतितचामीकरनिकरपरिष्कृताम्बरचुंबीसौधपंक्तीसमलंकृतवीथिकाशोभितां लङ्कापुरीं तद्गोपुराग्रनिविष्टं रक्तचन्दनवसनादिसमलंकृतं राजोपचारयुक्तं सकलमर्यादातिवर्तिनं दशवदनं च पश्यत्सु वानरेषु,

**दर्शनाद्राक्षसेन्द्रस्य सुग्रीवस्सहसोत्थितः ।**
**क्रोधवेगेन संतप्तः सत्त्वेन च बलेन च ॥**
**अचलाग्रादथोत्थाय पुप्लुवे गोपुरस्थले ।**

अनेन शूराः समृद्धं सन्निहितं शत्रुं दृष्ट्वामऽर्षवशेन झटिति तमभिद्रवन्तीति सूचितम् । तथा च वनपर्वणि युधिष्ठिरं प्रति कृष्णः—

दृष्ट्वा साल्वं महाबाहो सौभस्थं नृपतेस्तदा । ततस्तूर्णं विनिष्पत्य प्रद्युम्नः शत्रुकर्शनः ।
साल्वमेवाभिदुद्राव विधित्सुः कलहं नृप ॥ इति ।

अन्यत्रापि,

तमापतन्तं सम्प्रेक्ष्य सात्वतं युद्धदुर्मदम् । क्रोधाद्भूरिश्रवा राजन् सहसा समुपाद्रवत् ॥
इति ॥

चत्वारिंशे ।

**तृणीकृत्य च तद्रक्षः सोऽब्रवीत्परुषं वचः ।**
**लोकनाथस्य रामस्य सखा दासोऽस्मि राक्षस ॥**
**न मया मोक्ष्यसेऽद्य त्वं पार्थिवेन्द्रस्य तेजसा ।**

इत्यभिधाय,

**आकृष्य मकुटं चित्रं पातयित्वाऽपतद्भुवि ।**

अत्र प्रथमतो राज्ञो साधारणचिह्नस्य मकुटस्य भङ्गेन रावणस्य विनाशदर्शनादन्येषामप्येवं प्रथमयुद्ध एव मकुटभङ्गः पराजयज्ञापक इति सूचितम् ।

अत एव विनशिष्यतो दुर्योधनस्य मकुटभङ्गो विराटपर्वण्युत्तरगोग्रहणे "दुर्योधनस्योत्तमरत्नचित्रं चिच्छेद पार्थो मकुटं शरेण इति ।

तदनु तपनतनयः विरचितमकुटभङ्गजनितसन्तापकलुषितस्वान्तेन दशग्रीवेण सुग्रीवं पुरस्थितमवलोक्य,

**सुग्रीवोऽपि महान् हीनग्रीवोद्य भविष्यसि ।**

इति वदता बाहुभ्यामाकृष्टः सुग्रीवः कन्दुकवदेव सहसोत्प्लुत्य दशग्रीवमताडयत् । ततश्च मुष्टितलारत्निकराग्रघातादिभिरन्योन्यं युध्यमानयोः,

**मण्डलानि विचित्राणि स्थानानि विविधानि च ।**
**गोमूत्रकाणि चित्राणि गतप्रत्यागतानि च ॥**
**तिरश्चीनगतान्येव तथा वक्रगतानि च ।**
**परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ॥**
**अभिद्रवणमाप्लावमास्थानं च सविग्रहम् ।**
**परावृतमपावृत्तमवद्रुतमवप्लुतम् ॥**
**उपन्यस्तमपन्यस्तं युद्धमार्गविशारदौ ।**
**तौ सञ्चेरतुरन्योन्य वानरेन्द्रश्च रावणः ॥**

अनेन युद्धशास्त्रोक्तगतप्रत्यागतादिविधानेनैव नियुद्धं कर्तव्यमिति सूचितम् ।

अनेनैव प्रकारेण नियुद्धं सभापर्वणि भीमजरासन्धयुद्धे प्रतिपादितम् ।

ततस्तौ नरशार्दूलौ बाहुयुद्धं समीयतुः । करग्रहणपूर्वं तु कृत्वा पादाभिवन्दनम् ॥
कक्षे कक्षाविधून्वाना बाहुस्फोटं च चक्रतुः । स्कन्धे दोर्भ्यां समाहत्य निहत्य च मुहुर्मुहुः
अङ्गमङ्गैस्समाश्लिष्य पुनरास्फालनं विभो । चित्रहस्तादिकं कृत्वा पादाहतशिरावुभौ ॥
उरोहस्तं ततश्चक्रे पूर्णकुम्भौ प्रयुज्य तौ । करसपीडनं कृत्वा गर्जंतौ वारणाविव ॥

नर्दंतौ मेघसंकाशौ मोघप्रहरणावुभौ । तलेनाहन्यमानौ तावन्योन्यकृतवीक्षणौ ॥
सिह्माविव सुसङ्क्रुद्धावाकृष्याकृष्य युध्यताम् । अङ्गेनाङ्गं समापीडय बाहुभ्यामुभयोरपि ॥
आवृत्त्य बाहुभिश्चापि उदरं च प्रजघ्नतुः । उभौ कट्यसपार्श्वे तु तक्षन्तौ च सुशिक्षितौ
अधोहस्तं स्वकण्ठे तु देहस्योरसि चाक्षिपत् । सर्वातिक्रान्तमर्याद पृष्ठसङ्गं च चक्रतुः ॥
संपूर्णमुत्थां बाहुभ्या पूर्णपुंजं प्रचक्रतुः । तृणपीडं यथाकामं पूर्णयोधं समुष्टिकम् ।
एवमादीनि युद्धानि प्रकुर्वतौ परस्परम् ॥ इति । **हरिवंशे** कृष्णचाणूरयुद्धेऽपि—

कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सुसङ्कटैः । सन्निपातावधूतैश्च प्रहृष्टोन्मथनैस्तथा ॥
क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिस्वनैः । कीलैर्वज्रनिपातैश्च प्रहृष्टाभिस्तथैव च ॥
शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः । जानुभिश्चाश्मभिश्चैव शिरोभिश्चावघट्टितैः ॥
तद्युद्धमभवद्घोरमशस्त्रं बाहुतेजसा । इति ।

**एतस्मिन्नन्तरे रक्षो मायाबलमथात्मनः ।**
**आरब्धुमुपसंपेदे ज्ञात्वा तं वानराधिप ॥**
**उत्पपात तदाकाशं जितकाशी जितक्लमः ।**
**रावणः स्थित एवात्र हरिराजेन वंचितः ॥**

अत्र बाहुयुद्धेन अजय्यं सुग्रीव मत्वा मायामार्गमाश्रितवति दशवदने सुग्रीवोऽपि तं वञ्चयित्वा गत इति प्रतिपादनेन मायाविनं प्रति मायाप्रयोगो न दोष इति सूचितम् ।

तथा च **गदापर्वणि** युधिष्ठिरं प्रति वासुदेवः—

मायाविन इमां मायां मायया जहि भारत । मायावी मायया बाध्यः सत्यमेतद्ब्रवीमिते ॥
**राजधर्मेऽपि**—

मायाचारो मायया बाधितव्यः साध्वाचारः साधुनैवाभ्युपेयः । इति ।

**अथ हरिवरनाथः प्राप्य संग्रामकीर्तिम्**
**निशिचरपतिमाजौ योजयित्वा श्रमेण ।**
**गगनमतिविशालं लंघयित्वार्कसूनुः**
**हरिवरगणमध्ये रामपार्श्वं जगाम ॥**

## एकचत्वारिंशे ।

तदनु विजयलक्ष्म्या समागतं सुग्रीवमादरेण समालिंग्य,

**असंमन्त्र्य मया सार्धं तदिदं साहसं कृतम् ।**
**एवं साहसकर्माणि न कुर्वन्ति जनेश्वराः ॥**
**संशये स्थाप्य मां चेदं बलं च सविभीषणम् ।**

**कष्टं कृतमिदं वीर साहसं साहसप्रिय ॥**

**इदानीं मा कृथा वीर एवंविधमचिन्तितम् ।**

इत्यवोचत् ॥

अनेन राज्ञा नीतिमार्गानुसारिणा विचार्यैव संग्राम आरंभणीयः एकाकिनापि राज्ञा युद्धं न कर्तव्यमिति सूचितम् । तथा च **सभापर्वणि**—

एतावदेव पुरुषैः कार्यं हृदयतोषणम् । नयेन विधिदृष्टेन यदुपक्रमते परान् ।

अनयस्यानुपायस्य संयुगे परमक्षयः । संशयो जायते साम्ये साम्यं च न भवेद्द्वयोः ॥

इति । **कामन्दकेऽपि**—

सहसैव तु कार्याणामारंभो न प्रशस्यते । हितानुबन्धसहितं कार्यं ज्ञेयं सुरेश्वर ॥

विपरीतं च तद्बुद्ध्वा नित्यं बुद्धिमता वर । यस्मात्तापकरं पश्चादारब्धं कार्यमीदृशम् ॥

आरम्भेन्नैव तज्जह्यादेष बुद्धिमता नयः ॥ इति ।

एकाकिना युद्धं न कर्तव्यमित्येतत् **द्रोणपर्वणि**—

अयुक्तमिव पश्यामि तिष्ठत्स्वस्मासु भारत । स्वयं युद्धापयद्राजा रणे यात्यसहायवान् ॥

इति ।

**त्वयि किंचित्समापन्ने किं कार्यं सीतया मम ।**

**भरतेन महाबाहो लक्ष्मणेन यवीयसा ॥**

**शत्रुघ्नेन च शत्रुघ्न स्वशरीरेण वा पुनः ।**

अनेन भ्रात्राद्यपेक्षया मित्रमन्तरङ्गमिति सूचितम् । तथा च **द्रोणपर्वणि**—

स्वमित्रमर्जुन अधिकृत्योक्तं सात्यकिं प्रति भगवता—

न पिता न च मे माता न यूयं भ्रातरस्तथा ।

न च प्राणास्तथा रक्ष्या यथा बीभत्सुराहवे ॥ इति ।

**कामन्दकेऽपि**—

न तत्र तिष्ठति भ्राता न पिताऽन्योऽपि वा जनः ।

पुंसामापत्प्रतीकारे सन्मित्रं यत्र तिष्ठति ॥ इति ।

**त्वयि चानागते पूर्वमिति मे निश्चिता मतिः ।**

**जानतश्चापि ते वीर्यं महेन्द्रवरुणोपम ॥**

**हत्वाहं रावणं युद्धे सपुत्रबलवाहनम् ।**

**अभिषिच्य च लङ्कायां विभीषणमथापि वा ॥**

**भरते राज्यमावेश्य त्यक्ष्ये देहं महाबल ।**

अत्र सुग्रीवविपत्तौ अहमपि देहं त्यक्ष्य इत्यात्मपरित्यागप्रतिपादनात् मित्रं समानसुखदुःखं भवतीति सूचितम्। तथा च **प्राचीनाः**—

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सता मैत्री पुनस्तादृशी ॥

इति परिसाल्य बलव्यूहेन लक्ष्मणमादिश्य तच्छिखरादवतीर्णः नलजांबवत्सुग्रीवहनुमन्नीलप्रभृतीन् करधृतगुरुतरगिरिवरशिखराननुनयन् सुरासुरैरपि दुराधर्षां लङ्कामासाद्य विविधायुधयातुधानयूथपाभिगुप्तामुत्तरद्वारं स्वयमाक्रम्य पूर्वस्यां मैदद्विविदादिभिः परिवृतं नीलं वृषभगवाक्षपुरोगमैस्सहितमंगदं दक्षिणतः प्रमाथिप्रघसप्रभृतिभिः परिवृतं विपश्चितं पश्चिमतः पवनतनयं च षट्त्रिंशत्कोटिवानरयूथपरिवृतं सुग्रीवं च मध्यमगुल्मे समादिश्य,

**आनन्तर्यमभिप्रेप्सुः क्रमयोगार्थतत्त्ववित् ।**
**विभीषणस्यानुमते राजधर्ममनुस्मरन् ॥**
**अङ्गदं वालितनयं समाहूयेदमब्रवीत् ।**
**गत्वा सौम्य दशग्रीवं ब्रूहि मद्वचनात्कपे ॥**

अनेन युद्धसन्नाहानन्तरं दुरभिमानी रावणः सन्धिं न करिष्यतीति निश्चयेऽपि क्रमयोगार्थतत्त्वविद्राजधर्ममनुस्मरन् रामः विभीषणसंमत्या सन्ध्यर्थमङ्गदं प्रेषितवानिति प्रतिपादनात् नीतिशास्त्राविरोधाय लोकनिन्दापरिहाराय च युद्धनिश्चये सत्यपि दूतः प्रेषणीय इति सूचितम् । तथा च **कामन्दके**—

कृतमन्त्रस्तु मन्त्रज्ञो मन्त्रिणां मन्त्रसम्मतम् ।
यातव्याय प्रहिणुयात् दूतं दूत्याभिमानिनाम् ॥ इति ।

अत एव दुर्योधनः सन्धिं न करिष्यतीति निश्चयेपि सन्ध्यर्थं भगवान् प्रेषितो दूतभावेनेति प्रतिपादितम् । **उद्योगे**—

कृष्णं प्रति युधिष्ठिरः,

न चैतन्मम मतं यत्त्वं यायाः कुरून् प्रति । सुयोधनः सूक्ष्ममपि न करिष्यति ते वचः ॥

कृष्णः—

जानाम्येतां महाभाग धार्तराष्ट्रस्य पापताम् । अवाच्यास्तु भविष्यामः सर्वलोकमहीक्षिताम् ॥
न जातु गमनं तत्र भवेत्पार्थ निरर्थकम् । अर्थप्राप्तिः कदाचित्स्यात्स्यात्ततोवाप्यवाच्यता ॥

इति ।

**लंघयित्वा पुरीं लङ्कां भयं त्यक्त्वा गतव्यथः ।**

अनेन भार्यादिदोषवर्जितक्लेशसहिष्णुर्दूतो राज्ञा प्रशस्त इति सूचितम् । तथा च मनुः—
वपुष्मान्वीतभिर्वाग्मी दूतो राज्ञः प्रशस्यते इति । कामन्दकेऽपि—
क्लेशायाससहो दक्षश्चारस्यात्प्रतिपत्तिमान् । इति ।

**भ्रष्टश्रीक गतैश्वर्य मुमूर्षो नष्टचेतन ।**
**ऋषीणां देवतानां च महर्षीणां च कण्टक ॥**
**नूनमद्य हतो दर्पः स्वयंभूवरदानजः ।**
**यस्य दण्डधरस्तेऽहं दाराहरणकर्शित ॥**
**दण्डं धारयमाणस्तु लङ्काद्वारे व्यवस्थितः ।**

अनेन देवब्राह्मण धर्ममर्यादोच्छेदक पापिष्ठमप्रमेयपराक्रमशाली परमेश्वरांशभूतो महा-पुरुषः कश्चिदवतीर्य तदीयतपःसपादितसुकृतावसानसमये हनिष्यतीति सूचितम् ।
तथा च **भगवद्वचनम्**—
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगेयुगे ॥ इति ।
निग्राह्योऽपि तत्प्रारब्धभोगावसानकाले एव निग्राह्य इत्येतदुत्तररामायणे—
नैवाहं प्रतियोत्स्यामि रावणं राक्षसाधिपम् । न तावदेव दुर्वृत्तः शक्यो दैवतदानवैः ॥
हंतुं युधि समासाद्य वरदानेन दुर्जयः । अहमेन वधिष्यामि रावणं ससुतं युधि ॥
देवतास्तोषयिष्यामि ज्ञात्वा कालमुपस्थितम् ॥ इति ।

**पदवीं देवतानां च महर्षीणां च राक्षस ।**
**राजर्षीणां च सर्वेषां गमिष्यसि मया हत ॥**

अनेन युद्धे हतस्य उत्तमलोकावाप्तिर्भवतीति सूचितम् । तथा च पराशरः—
ये यज्ञसन्धैस्तपसा च विप्राः स्वर्गेषु शीघ्रेण यथैव यान्ति ।
क्षणेन यांत्येव हि तत्र वीराः प्राणान् सुयुद्धेन परित्यजन्तः ॥ इति ।
यस्य शोणितवेगेन नदी स्यात्संपरिप्लुता । केशमांसास्थिसंपूर्णा स गच्छेत्परमां गतिम् ॥
स संख्ये निधनं प्राप्य प्रशस्तं लोकपूजितम् । स धर्मविपुलं प्राप्य शक्रस्यैति सलोकताम्
वराप्सरस्सहस्राणि शूरमायोधने हतम् । त्वरमाणानि धावन्ति मम भर्ता भवेदिति ॥
**स्त्रीपर्वणि च** – धृतराष्ट्रं प्रति युधिष्ठिरः—
यैर्हुतानि शरीराणि हृष्टैः परमसंयुगे । देवराजसमान् लोकान् गतास्ते सत्यविक्रमाः ॥
**राजधर्मेऽपि**—

तस्य यावन्ति शस्त्राणि त्वचं भिन्दन्ति संयुगे ।
तावतः सोऽस्तु ते लोकान् सर्वकामदुघोऽक्षयान् ॥ इति ।

**युध्यस्व वा धृतिं कृत्वा शौर्यमालंब्य राक्षस ।**
**मच्छरैस्त्वं रणे शान्तो ततः पूतो भविष्यसि ॥**

अनेन च युद्धे मृतस्य पापपरिहारो भवतीति सूचितम् । तथा च **राजधर्मे—**

यदस्य रुधिरं गात्रादाहवे संप्रवर्तते । सहतेनैव पापेन सर्वपापैः प्रमुच्यते ॥ इति ।

नन्वत्र श्लोकद्वयेन युद्धे मृतस्य रावणस्य पापक्षयः स्वर्गलोकावाप्तिश्चेति फलद्वयमुक्तं तदेतदयुक्तम् । एकस्योभयार्थत्वानुपपत्तेः न चैकस्य तूभयार्थत्वे संयोग पृथक्त्वमिति न्यायेन । खादिरो यूपो भवति खादिरो वीर्यकामस्य यूपं कुर्वीतेति वाक्यद्वयेन खादिरत्वस्य क्रत्वर्थपुरुषार्थत्ववदेकस्यापि फलद्वयं किं न स्यादिति वाच्यं । वैषम्यात् । तत्र यो हि खादिरः क्रत्वर्थमुपादीयते न स पुरुषार्थः । यश्च पुरुषार्थो न स क्रत्वर्थ इति व्यक्तिभेदोऽस्ति । अत्र युद्धे मृतस्य रावणस्य एकत्वेन व्यक्तिभेदाभावे फलद्वयानुपपत्तेः इति चेत् सत्य एकप्रयोगे फलद्वयबोधकप्रमाणं यत्र नास्ति तत्र तथाऽस्तु यत्र तु प्रमाणमस्ति तत्र एकव्यक्तावपि फलद्वयसंभवात् । यथा कपालेषु श्रपयति पुरोडाशं कपालेन तुषानुपवतीतिप्रमाणद्वयसत्त्वे एकस्या एव कपालव्यक्ते श्रपणं तुषोपव लक्षण कार्यद्वयार्थत्वं यथा वा ।

सन्ध्यामुपासते ये तु सततं संशितव्रताः । विधूतपापास्ते याति ब्रह्मलोकं सनातनम् ॥ इति वचनेन सन्ध्योपासनस्य पापनिवृत्ति ब्रह्मलोकावाप्तिलक्षणं फलद्वयं यथा वा ।

शंभोर्जटाकलापाच्च विनिष्क्रान्तास्थिशर्करात् ।
प्लावयित्वा दिवं मन्ये यापापान् सगरात्मजान् ॥ इति **विष्णुपुराण** वचनेन । गङ्गास्नानस्योभयार्थत्वं । यथा वा,

यदि प्रविष्टो नरकं पतिः पापैः सुदारुणैः । संप्राप्तो यातना स्थान गृहीतो यमकिंकरैः ॥
तिष्ठतीह्यवशो दीनो वेष्ट्यमानो स्वकर्मभिः । व्यालग्राही यथाव्यालं बलादुद्गृह्णात्यशंकितः॥
तद्वद्भर्तारमादाय दिवंयाति च सा बलात् । या भर्तृपरमा नित्यं स्तूयमानाप्सरोगणैः ॥
क्रीडते पतिनासार्धं यावदिन्द्राश्चतुर्दश । ब्रह्मघ्नो वा कृतघ्नो वा भवेत्पतिः ॥
पुनात्यविधवा नारी तमादाय मृता तु या । इति **व्यासवचनैः—**

सतीनां भर्त्रा सह मरणमपि पापिनां नरकयातनामनुभवतां भर्तॄणां तदुद्धारणपूर्वकं स्वर्गप्राप्ति हेतु । यथा वा । अथाप्युदाहरन्ति यथा हि तूलमैशिकमग्नौ प्रोतं प्रदीयते । तद्वत्सर्वाणि पापानि दह्यते ह्यात्मयाजिनः ॥ इत्युपक्रम्य स एव मेवाहरहः सायंप्रात-

जुहुयात् अद्भिः सर्वासामेवमेवाचरन् ब्रह्मभूयाय कल्पत इति बोधायनसूत्रेण प्राणाग्निहोत्रस्योभयार्थत्वं । यथा वा । य पुनरेत त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विमुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकमिति प्रश्नोपनिषद्वचनेन त्रिमात्रप्रणवोपासनस्योभयार्थत्वं। यथा वा । स्तेनो हिरण्यस्य सुरा पिबश्च गुरोस्तल्पमावसन् ब्रह्महा चैते पतंति चत्वारः पञ्चमश्चत्वारः पञ्चमश्चाचरं स्तैरित्यथो ह य एतान् पञ्चाग्नीन् वेद न सह तैरप्याचरन् पाप्मना लिप्यते शुद्धः पूतो पुण्यलोको भवति य एवं वेद य एव वेदेति छान्दोग्यवचनबलेन पञ्चाग्निविद्याया उभयार्थत्वम् । तद्वद्रावणवधस्याप्युभयार्थत्व संभवात् । किं हि वचन न कुर्यान्नास्तिवचनस्यातिभार इति न्यायात् । अत एव च यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति तं यथोपासते तथैव भवतीति श्रुतिबलेन न्यायेन च ब्रह्मोपासकानामेव ब्रह्मलोकप्राप्तिरिति स्थितेऽपि तद्य इत्थं विदुर्येचेमेरण्ये श्रद्धातप इत्युपासत इत्यादिना अथैनान् ब्रह्मगमयतीत्यंतेन वचनेन अब्रह्मविदोऽपि पञ्चाग्निविद्योपासकस्य ब्रह्मविद इव ब्रह्मलोकावाप्तिः फलं भवतीत्युक्तमुत्तरमीमांसायां– तस्मादेकस्यापि रावणवधस्य वचनबलात् फलद्वयार्थमुपपन्नमेव ॥

प्रतिपादितम् च युद्धे मृतानां फलद्वयं देवीमाहात्म्ये

एभिर्हतैर्जगदुपैति सुखं तथैते
कुर्वंतु नाम नरकाय चिराय पापं ।
संग्राममृत्युमधिगम्यदिवं प्रयांति
मत्वेति नून महितान् विनिहंसि देवि ॥

दृष्ट्वैव किं न भवती प्रकरोति सर्वा
सर्वासुरानरिषु यत्प्रहिणोषि शस्त्रम् ।
लोकान्प्रयातिरिपवोऽपि हि शस्त्रपूता
इत्थं मतिर्भवति तेष्वहितेषु साध्वी ॥ इति ।

**राजधर्मे षोडशराजकीयेऽपि–**

गतास्ते क्षत्रधर्मेण शस्त्रपूताः परा गतिम् ॥ इति । **राजधर्मे वाजिग्रीवोपाख्यानेऽपि–**

हुत्वा तस्मिन् यज्ञे वह्नावथारीन् पापान्मुक्तो राजसिंहस्तरस्वी ।
प्राणान् हुत्वा चावभृदे रणेषु वाजीग्रीवो मोदते स्वर्गलोके ॥ इति ।

युद्धमरणं राज्ञा सर्वधर्मापेक्षया उत्कृष्टम । तथाचोद्योगे—

निधन क्षत्रियस्याजौ वरमेवाहुरुत्तमम् । इति ।

अत एव उद्योगपर्वणि भगवन्तं प्रति दुर्योधनः—

स्वधर्ममनुपश्यन्तो यदि माधव सयुगे । शस्त्रेण निधन काले प्राप्स्याम स्वर्गमेव तत्॥
मुख्यश्चैवैष नो धर्मः क्षत्रियाणा जनार्दन । यच्छयीमहिं सग्रामे शरतल्पगता वयम् ॥
इति ।

अत एव च अविकलया सकल धर्मानुष्ठातु रंबरीषादपि तादृशधर्मरहितस्याहवे मृतस्य तत्सेनानायकस्य सुदेवस्य ततोऽप्युत्कृष्टस्थानं प्रतिपादितम् । **राजधर्मे इन्द्रांबरीषसंवादे**—

अम्बरीषो हि नाभागि. स्वर्गं गत्वा सुदुर्लभम् । ददर्शसुरलोकस्थं शक्रेण सचिवं सह ॥
सर्वतेजोमयं दिव्यं विमानवरमास्थितम् । उपर्युपरि गच्छन्त स्थाने सेनापतिं शुभे ॥
स दृष्ट्वोपरि गच्छन्तं सेनापतिमुदारधीः । ऋद्धिं दृष्ट्वा सुदेवस्य विस्मितः प्राह वासवम् ॥
अंबरीष उवाच—

सागराता महीं कृत्स्नामनुशिष्य यथाविधि । चातुर्वर्ण्ये यथाशास्त्रं प्रवृत्तो वृत्तकाम्यया ॥
ब्रह्मचर्येण घोरेण गुर्वाचारेण सेवया । वेदावधीत्य धर्मेण राजशास्त्रं च केवलम् ॥
अतिथीनन्नपानैश्च पितॄश्च स्वधया तथा । ऋषीन् स्वाध्यायदीक्षाभिः देवान् यज्ञैरनुत्तमैः
क्षत्रधर्मे स्थितो भूत्वा यथाशास्त्रं यथाविधि । उदीक्षमाणः पृतनां जयामि युधि वासव
देवराज सुदेवोऽयं मम सेनापति पुरा । आसीद्योधः प्रशान्तात्मा सोऽयं कस्मादतीव माम्
अनेन क्रतुभिर्मुख्यैरिष्टं नैव द्विजा नच । तर्पिता विधिवच्छक्र सोऽयं कस्मादतीव माम्
इन्द्रः—

एतस्य विततस्तात सुदेवस्य बभूवह । संग्रामयज्ञः सुमहान् यश्चान्यो युध्यते नरः ॥
सन्नद्धोदीक्षितस्सर्वो योधः प्राप्य चमूमुखम् । युद्धयज्ञाधिकारस्थो भवतीति विनिश्चयः
इत्येतच्छक्रवचनं निशम्य प्रतिपूज्य च । योधानामात्मनः सिद्धिमम्बरीषोऽभिपन्नवान् ॥
इति ।

अत एव च पापिष्ठस्यापि दुर्योधनस्याहवमरणयुक्ततया पापक्षयः स्वर्गावाप्तिर्धार्मिकस्यापि धर्मपुत्रस्याहव मरणाभावेन, व्याजेन नरकदर्शन पूर्वकतया स्वर्गप्राप्तिरिति प्रतिपादितं **स्वर्गारोहणिके** धर्मपुत्रं प्रतीन्द्रः—

धृतराष्ट्रात्मजास्सर्वे यातुधाना बलोत्कटाः । ऋद्धिमन्तो महात्मान. शस्त्रपूता दिवं गताः
व्याजेन हि त्वया द्रोणः उपचीर्ण सुतं प्रति । व्याजेनैव ततो राजन् दर्शितो नरकस्तव
अवश्य नरकस्तात द्रष्टव्यः सर्वराजभिः । कृच्छ्रं पूर्वंचानुभूया इतः प्रभृति कौरव ॥
विहरस्व मया सार्धं गतशोको निरामयः । कर्मणां तात पुण्यानां जितानां तपसा स्वयम्
दानाना च महाबाहो फलं प्राप्तुं हि पार्थिव ॥ इति ।

युद्धे कथंचिन्मृतानां पुण्यलोकश्रवणात् प्रशस्तं राज्ञां युद्धे मरणम् । तथा च स्त्रीपर्वणि—

ये च संग्रामभूयिष्ठाः ये च मानापराङ्मुखाः ।
शस्त्रेण निधनं प्राप्ता. गतास्तेगुह्यकान् प्रति ॥
तैस्तुहृष्टेन मनसा गन्तव्यमिति भारत । युध्यमाना हता स्संख्ये गन्धर्वैस्ते समागताः ॥
ये तत्र निहता राजन् अन्तरा योधन प्रति ।
यथा कथंचित्त राजन् संप्राप्ता स्तूरान् कुरून् ॥
तत्रतत्र हतः शूरः शत्रुभिः परिवारित· । अक्षय्यान् लभते लोकान् यदि क्लैब्यं न भाषते इति ।

यथा कथंचियुद्धे मृतानां पुण्यलोक इत्येतच्छस्त्रहतानामेव पशुवद्धतानां तु न कथंचिल्लोकावाप्तिः शस्त्रपूता दिवं गता इति वचनात् ।

निश्चेष्टानां वधो राजन् कुत्सितो जगतीपते । क्रतुमध्योपनीतानां पशूनामिव राघव ॥

इत्यारण्यकाण्डे लक्ष्मणवचनाच्च—

अत एव गुरुद्रोहिणः आचार्यघातिनः दृष्टद्युम्नस्य शस्त्रेण वधे पुण्यलोको भवेत् तन्माभूदिति पशुवन्मारण कृतवानश्वत्थामेति प्रतिपादितं सौप्तिके— अश्वत्थामा द्रोणहतारं धृष्टद्युम्नं सुप्तं पादाघातेनापि बोध्य ।

केशेष्वालंब्य पाणिभ्या निष्पपेष महीतले । तमाक्रम्य पदा राजन् कण्ठे चोरसि चोभयोः
नर्दतं विस्फुरन्तं च पशुमारममारयत् । रुदन् स्वैश्च सह द्रौणिं नातिव्यक्तमुदाहरत् ॥
आचार्यपुत्र शस्त्रेण जहि मा माचिरं कृथाः । त्वत्कृते सुकृतान् गच्छेयं द्विपदां वर ॥
तस्याव्यक्ता तु ता वाणीं सश्रुत्य द्रौणिरब्रवीत् ।
नाचार्यघातिनो लोकाः भवन्ति कुलपांसन ॥
तस्माच्छस्त्रेण निधन नत्वमर्हसि दुर्मते ॥ इति ।

तथा च आचार्यघातादिपातकगिवर्तकत्वादपि राज्ञा शस्त्रेण युद्धे मरणमित्याभिप्रायेणोक्तं । राजधर्मे—

ब्राह्मणाना यथा धर्मो दानमध्ययन तपः । क्षत्रियाणां च तथा कृष्ण समरे देहपातनम् ॥
एतत्तपश्च पुण्य च धर्मश्चैव सनातनः । चत्वारश्चाश्रमास्तस्य यो युद्धे न पलायते ॥

अपि च, अवश्यकर्तव्यान्त्यसंस्कारनैरपेक्ष्येणापि पुण्यलोकावाप्तिहेतुत्वाद्ब्रह्मोपासनवद्युद्धे मरणं राज्ञामतिप्रशस्तं । तत्र ब्रह्मविद्याया. संस्कारनिरपेक्षत्व छान्दोग्ये— यया पुष्करपलाश आपो न श्लिष्यं त एवमेवं विदि पापं कर्म न श्लिष्यत इत्युपक्रम्य अथ-

यदुचैवास्मिन् च्छवा कुर्वन्ति यदुवचन अर्चिषमेवाभिसंभवतीति । अत्र भाष्यम् । अक्रियमाणे तु शव कर्मणि कर्मणां फलारम्भे प्रतिबन्धः कश्चिदनुमीयतेऽन्यत्र यत इह फलारंभकाले विद्यावतो प्रतिबन्धेन फलारंभं दर्शयतीति एवमेव युद्धमरणस्य फलोत्पादने अन्तिमसंस्कार निरपेक्षत्वम् । **राजधर्मे—**

आहवे तु हतं शूरं न शोचेत कदाचन । अशोच्यो हि हत· शूरः स्वर्गलोके महीयते
न ह्यन्नमुदकं तस्य न स्नानं नाप्यशौचकम् । हतस्य कर्तुमिच्छन्ति तस्य लोकान् शृणुष्वमे
वराप्सरस्सहस्राणि शूरमायोधने हतम् । त्वरमाणानि धावन्ति मम भर्ता भवेदिति ॥

अत एव युद्धे मृतस्य ब्रह्मवित्समानगतिरुक्ता । **धर्मशास्त्रे-**

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखे हत· ॥

इति । **द्रोणपर्वणि—**

युद्धे मृतमभिमन्युमधिकृत्य धर्मराजं प्रति व्यासवचनम्—

शूरो वीरः कृतार्थश्च प्रताप्यारीन् सहस्रश· । अभिमन्युर्गतो वीरः पृतनाभिमुखो हतः ॥
या योगिनो ध्यानविविक्तदर्शना प्रयाति यां चोत्तमथज्वनो जनाः ।
तपोभिरिद्धैरनुयान्ति यां तथा तामक्षया ते तनयोऽगमद्गतिम् ॥ इति ।

तस्माद्युद्धे मया हतस्य रावणस्य पापक्षय उत्तमलोकावाप्तिश्चेत्युभयमपि भवतीति यद्भगवता रामेणोक्त तद्युक्तमेव ।

**बलेन येन वै सीतां मायया राक्षसाधम ।**
**मामतिक्रामयित्वा त्वं हृतवांस्तन्निदर्शय ॥**
**अराक्षस मिमं लोकं कर्ताऽस्मि निशितैश्शरैः ।**
**न चेच्छरणमभ्यैषि मामुपादाय मैथिलीम् ॥**
**धर्मात्मा रक्षसां श्रेष्ठः संप्राप्तोऽयं विभीषणः ।**
**लंकैश्वर्यं ध्रुवं श्रीमान्नयं प्राप्स्यत्यकण्टकम् ॥**
**न हि राज्यमधर्मेण भोक्तुं क्षणमपि त्वया ।**
**शक्यं मूर्खसहायेन पापेनाविदितात्मना ॥**

अनेन अधर्मिष्ठस्य दुष्टामात्यसहायस्य राज्य न तिष्ठति धर्मात्मनस्तु ऐश्वर्यमागच्छति स्थिरं च भवतीनि सूचितम् ॥

तथा **उद्योगे—** धृतराष्ट्रं प्रति गान्धारी—

नहि राज्यमशिष्टेन शक्यं धर्मार्थलंघिनः । असुग्राह्यं तथापीदमविनीतेन सर्वथा ॥
राज्यप्रदानमूढस्य बालिशस्य दुरात्मनः । दु.सहायस्य लुब्धस्य धृतराष्ट्रोऽश्नुते फलम् ॥

तत्रैव गान्धारीं प्रति धृतराष्ट्रः—

एष गान्धारिपुत्रस्ते दुरात्मा शासनातिगः। ऐश्वर्यलोभादैश्वर्यं जीवितं च प्रहास्यति ॥

अशिष्टवदमर्यादः पापैस्सह दुरात्मवान्। इति। तत्रैव धृताराष्ट्रं प्रति विदुरः—

दुर्योधने च शकुनौ मूढे दुःशासने तथा। कर्णे चैश्वर्यमादाय कथं त्वं भूतिमिच्छसि ॥
इति। तत्रैव दुर्योधनं प्रतिभीष्मः—

इमा श्रियं प्रज्वलिता भारतीं सर्वराजसु। जीवतो धृतराष्ट्रस्य दौरात्म्याद्भ्रंशयिष्यसि ॥

आत्मानं च सहामात्यं सपुत्रज्ञातिबान्धवम्। सह मित्रममदबुद्ध्या जीवितादभ्रशयिष्यसि इति। धर्मिष्ठस्य चिरं राज्यमित्येतत्। कामन्दके—

धर्माद्धैजवनो राजा चिराय बुभुजे श्रियम्। अधर्माच्चैव नहुषः प्रतिपेदे रसातलम् ॥
इति।

**यद्या विशसि लोकांस्त्रीन् पक्षीभूतो मनोजव।**
**मम चक्षुष्पथं प्राप्य न जीवन् प्रतियास्यसि ॥**
**ब्रवीमि त्वां हितं वाक्यं क्रियतामौर्ध्वदैहिकम्।**
**सुदृष्टा क्रियतां लङ्का जीवितं ते मयि स्थितम् ॥**

अनेन बलवद्विरोधिनः शरणांतराभावेन मरणस्य निश्चिततत्वात् ऐहिकं आमुष्मिकं च झटिति कर्तव्यमित्युक्तम्। तथा **चोद्योगे**— सञ्जयं प्रति वासुदेवः।

सञ्जयेदं वचो ब्रूया धृतराष्ट्रं मनीषितम्। कुरुमुख्यस्य भीष्मस्य द्रोणस्यापि हि शृण्वतः
यजध्वं विविधैर्यज्ञैर्विप्रेभ्यो दत्तदक्षिणाः। पुत्रैर्दारैश्च मोदध्वं महद्वो भयमागतम् ॥
अर्थानुत्सृजताऽर्थिभ्यो सुतान् प्राप्नुत कामजान्।
प्रिय प्रियेभ्यश्चरत राजा हि त्वरत जये ॥ इति।

इति रामवचः प्रचोदितो वालिसुतः तत्क्षणादुत्प्लुत्य दशग्रीवाग्रतः सधैर्यमास्थितः—

**तद्रामवचनं सर्वमन्यूनाधिकमुत्तमम्।**
**सामात्यं श्रावयामास निवेद्यात्मानमात्मना ॥**

अनेन स्वामिवचनं अन्यूनातिरिक्तं दूतेन वक्तव्यमिति सूचितम्। तदुक्तं **राजधर्मे**—
उद्यतेष्वपि शस्त्रेषु यथोक्तं शासनं वदेत् ॥ इति।

तदनु दशवदनेन को नाम कपिश्चारोऽयं गृह्यतां बध्यतामित्याज्ञप्ताश्चतुरो निशाचरान् पक्षिराडिव कक्षाभ्यामधिक्षिप्य गृह्णन् सत्वरमेव गगनतलमुत्पत्यावधूय च तान् शिलातले पादताडनेन च चूर्णीकृत्य प्रासादं विजयलक्ष्मीसहितो यथापूर्वं रामातिकमाससाद—

द्विचत्वारिंश त्रिचत्मारिंशयोः ।

ततो वानरप्रमुखकृतपुरीनिरोध श्रवणजनित चिन्ताविष्टहृदये दशमुखे रामसमाज्ञप्तः बलीमुखा सिह्मनादाट्टहासैर्लङ्का कंपयन्तो वृक्षपाषाणैः प्रमथितैः प्रासादगोपुराग्रैः तृण-काष्ठगुल्मसंचयैश्च परिघामापूरयन्तः ।

जगत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥

इत्येवं घोषयन्तश्च गर्जतश्च प्लवङ्गमाः ।
अभ्यधावन्त लङ्कायाः प्राकारं कामरूपिणः ॥

ततः कामरूपिभिर्वानरैराक्रान्ता लङ्कापुरीमभिवीक्ष्य कुपितहृदयेन रावणेन समाज्ञप्ता राक्षसयूथपाः तान् वानरान् ।

भिण्डिपालैश्च खड्गैश्च शूलैश्चैव व्यदारयन् ।

ते च वानराः नखदन्तवृक्षपाषाणघातै राक्षसान् ममन्थुः ।

ततः परस्परममर्षवशेन प्रवृत्ते द्वन्द्वयुद्धे सपातिना प्रजङ्घः हनूमता जम्बुमाली विभी-षणेनामित्रघ्नः गजेन तपनः सुग्रीवेण प्रघस. लक्ष्मणेन विरूपाक्षः अग्निकेतुरश्मिकेतु-सुप्तघ्नयज्ञकोपनाश्चत्वारो निशाचरा रामेण निषूदिता. । अङ्गदनीलाभ्यां इन्द्रजिन्निकुम्भौ पराजितौ इत्थमेवान्येषामिति ।

बभूव योधनं घोरं गोमायुबलसंकुलम् ।
कबन्धानि समुत्पेतुर्दिक्षु वानररक्षसाम् ॥

विदार्यमाणा हरिपुङ्गवैस्तदा
निशाचराः शोणितदिग्धगात्राः ।
पुनः सुयुद्ध टरसा समास्थिता
दिवाकरस्थास्तमयाभिकांक्षिणः ॥

अत्र युद्धायास्तमयाभिकाक्षिण इति प्रतिपादनात् रात्रौ बलाभिवृद्धिर्भवतीति सूचितम् । तथा च तैत्तिरीयश्रुतिः—

निशितायां निर्वपेत निशितायाऽ रक्षांसि प्रेरते संप्रेर्णान्नोवैनिहन्त इति ।
द्रोणपर्वण्यपिघटोत्कचं प्रति कृष्णः—

रात्रौ हि राक्षसा भूयो भवन्त्यमितविक्रमाः । बलवंतः सुदुर्धर्षाः शूरा विक्रान्तयोधिनः ॥ इति । अत एव बालकाण्डे—

वध्यतां तावदेवैषा पुरा सन्ध्या प्रवर्तते । रक्षांसि सन्ध्याकालेषु दुर्धर्षाणि भवन्ति वै ॥

चतुश्चत्वारिंशे ।

तदनु समरसमय समुद्भूत रजःपुंजपिहित लोचनाना अत एव परबलविवेकविधुराणा खड्गशूलपरश्वधैः तरुगिरिशिखर शृङ्गादिभिश्च परस्परमभिनिघ्नतां राक्षसवानराणां परस्परं युद्धे प्रवृत्ते रामभद्रः स्वाभिमुखमापततो महारथान् महोदरमहापार्श्व प्रमुखान् जीवनमात्रावशिष्टान् विधाय अन्यानपि निशाचरान् नाशयामास ।

तदनु मेघनादः अङ्गदनिषूदित रथाश्वसारथिर्बभूव ।

**सोऽन्तर्धानगतः पापी रावणी रणकर्कशः ।**
**अदृश्यो निशितान् बाणान् मुमोचाशनिवर्चसः ॥**

**मायया संवृतस्तत्र मोहयन् राघवं युधि ।**
**अदृश्यः सर्वयोधानां कूटयोधी निशाचरः ॥**
**बबन्ध शरवर्षेण भ्रातरौ रामलक्ष्मणौ ।**

अत्र पापिष्ठो मेघनादः निशि मायया कूटयुद्ध कृतवानिति प्रतिपादनात् प्रच्छन्नतया कूटयुद्धं पापाधायकमिति सूचितम् । तथा च **मनुः**—

अमाययैव वर्तेत न कथंचन मायया । युध्येताप्रयुक्तैश्चमाया नित्यं हि संवृता ॥
न कूटैरायुधैर्हन्यात् युद्ध्यमानो रणे रिपून् । नाकर्णिभिर्नाभिदिग्धैर्नाग्निलिगिततेजनैः ॥
इति । **बोधायनोऽपि**— नकर्णिभिर्नदिग्धैः प्रहरेदिति ।

पञ्चचत्वारिंशे ।

तदनु अम्बरमाप्लुत्य आत्मानं गृहीतुमितस्ततः प्लवतः प्लवङ्गमान् शिलीमुखैरभिहत्य नागपाशबद्धौ रामलक्ष्मणो अपि नाराचार्धनाराचवत्स दन्तफलसिह्मदंष्ट्रक्षुरप्रैर्निर्भिद्य विसंज्ञौ चकार ।

**बद्धौ तु वीरौ पतितौ शयानौ**
**तौ वानराः संपरिवार्य तस्थुः ।**
**समागता वायुसुतप्रमुख्या**
**विषादमार्ताः परमं च जग्मुः ॥**

षट्चत्वारिंशे ।

ततो विभीषणः मायाबलेन प्रच्छन्नमिन्द्रजितं तन्माययैव निश्चेष्टौ च रामलक्ष्मणावभीवीक्ष्य रुदन्तं सुग्रीवमित्थमभाषत ।

**मोहमेतौ प्रहास्येते महात्मानौ महाबलौ ।**

**पर्यवस्थापयात्मानमनाथं मां च वानर ॥**
**सत्यधर्माभिरक्तानां नास्ति मृत्युकृतं भयम् ॥**

अनेन सत्यधर्मे च निरतानां मृत्युकृता भीतिर्नास्तीत्युक्तम । तथा च **वनपर्वणि—**

सत्यमेवानुजानीम नानृते कुर्महे मनः । स्वधर्ममनुतिष्ठामः तस्मान्मृत्युभयं न नः ॥
अतिथीनन्नपानेन भृत्यानप्यशनेन च । संभोज्य शेषमश्नीमः तस्मान्मृत्युभयं न नः ॥
इति ।

**न कालः कपिराजेन्द्र वैक्लब्यमनुवर्तितुम् ।**
**अतिस्नेहोऽप्यकालेऽस्मिन् मरणायोपपद्यते ॥**

अन्यत्रातिस्नेहो मरणायेत्युक्तम् । तथाच **प्राचीनाः**—

अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्रापि दह्यते ॥ इति ।

**तस्मादुत्सृज्य वैक्लब्यं सर्वकार्यविनाशनम् ।**
**हितं रामपुरोगाणां सैन्यानामपि चिन्त्यताम् ॥**

अनेन कार्यनाशकं वैक्लब्य परिहर्तव्यमिति सूचितम् ।
तथा च **गीतायाम्**—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् । अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥
वैक्लब्य मा गमः पार्थ नैतत्त्वय्युपपद्यते । क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥
इति । **द्रोणपर्वण्यपि**—

घटोत्कचवधेन विक्लबं धर्मपुत्रं प्रति **श्रीकृष्णः**—

मा व्यथां कुरु कौन्तेय नैतत्त्वय्युपपद्यते । वैक्लब्य भरतश्रेष्ठ यथा प्राकृतपूरुषे ॥
उत्तिष्ठ राजन् युध्यस्व वह गुर्वीं धुरं विभो । त्वयि वैक्लब्यमापन्ने सशयो विजयो भवेत्
इति

**अथवा रक्ष्यतां रामो यावत्संज्ञाविपर्ययः ।**
**लब्धसंज्ञौ हि काकुत्स्थौ भयं नो व्यपनेष्यतः ॥**

**नैतत्किंचन रामस्य न च रामो मुमूर्षति ।**
**न ह्येनं हास्यते लक्ष्मीर्दुर्लभा या गतायुषाम् ॥**
**समाश्वास्य च सुग्रीवं राक्षसेन्द्रो विभीषणः ।**
**विद्रुतं वानरानीकं तत्समाश्वासयत्पुनः ॥**

अनेन भीताना सैन्यानामाश्वसनं कर्तव्यमिति सूचितम् । अत एव **सौभवधे**—

भीतानां यादवानां प्रद्युम्नेन समाश्वासनं कृतमिति प्रतिपादितम् । **वनपर्वणि—**

आश्वासध्वं न भीः कार्या सौभराडद्य नश्यति ।

मयाभिपन्नो दुष्टात्मा स सौभो विनशिष्यति ॥ इति ।

मेघनादोऽपि राक्षसप्रमुखैस्स्तूयमानो लंकामागत्य निखिलं वृत्तांत पित्रे निवेद्य तेन सह सन्तुष्टो बभूव ॥

सप्तचत्वारिंशाष्टचत्वारिंशयोः ।

**प्रतिप्रविष्टे लङ्कां तु कृतार्थे रावणात्मजे ।**
**राघवं परिवार्यार्ता ररक्षुर्वानरर्षभा ॥**

अनेनापदि राजा रक्षणीय इति सूचितम् । तथा च **द्रोणपर्वणि—**

सैन्यान् प्रति द्रोण ।

पुराभिमन्युर्लक्ष्यं नः पश्यतां हन्ति वीर्यवान् । तमाद्रवत माभैष्ट क्षिप्र रक्षत कौरवम् ॥

ततः कृतज्ञा बलिनस्सुहृदो जितकाशिनः । त्रायमाणभयाद्वीरं परिवव्रुस्तवात्मजम् ॥

इति ।

तदनु रावणाज्ञया त्रिजटाप्रभृतिभि राक्षसीभिः पुष्पक समारोप्य युद्धभूमिमानीता मूर्छितौ रांमलक्ष्मणाववलोक्य ।

**विललाप भृशं सीता करुणं शोककर्शिता ।**
**ऊचुर्लक्षणिनो ये मां पुत्रिण्यविधवेति च ॥**

**तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ।**
**ऊचुः संश्रवणे ये मां द्विजाः कार्तान्तिकाः शुभा. ॥**

**तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ।**
**वीरपार्थिवपत्नीत्व ये धन्येति च मां विदुः ॥**

**तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ।**
**इमानि खलु पद्मानि पादयोर्यै कुलस्त्रियः ।**
**आधिराज्येऽभिषिच्यंते नरेन्द्रैः पतिभिस्सह ॥**
**वैधव्यं यान्ति यैर्नार्यो लक्षणैर्भाग्यदुर्लभाः ।**
**नात्मनस्तानि पश्यामि पश्यन्ती हतलक्षणा ॥**

अत्र सीतायाः वैधव्यलक्षणानि न सन्तीत्युक्तम् ।

वैधव्यलक्षणानि च तत्र तत्र प्रतिपादितानि । तत्र **काशीखण्डे-**

विधवा विपुलेन स्याद्दीर्घागुष्ठेन दुर्भगा। त्रिरोमा रोमकूपेषु भवेद्वैधव्यदुःखभाक् ॥
विनता चिपिटा दीर्घा निर्मांसा संकटाकटी। ह्रस्वारोमयुता नार्या दुःखवैधव्यसूचिका ॥
उद्भिन्नरोमहृदया पतिं हन्ति विनिश्चयम। मूले स्थूलौ क्रमकृशौ अग्रे तीक्ष्णौ पयोधरौ ॥
सुखदो बाल्यकाले तु पश्चादत्यन्तदु खदौ। वक्रौस्थूलौच रोमाढ्यौ प्रेष्यवैधव्यसूचकौ ॥
परिक्लेशाय नारीणां परिदृश्य शिरौ भुजौ। पृष्ठेन रोमयुक्तेन वैधव्य लभते ध्रुवम् ॥
स्थूलग्रीवा च विधवा वक्रग्रीवा च किंकरी। श्यामस्थूलोऽरोष्ठःस्याद्वैधव्य कलहप्रद. ॥
अधस्तादधिकैर्दन्तैर्मातरंधभक्षयेत्स्फुटम्। पतिहीना च विकटे. कुलटा विरलैर्भवेत् ॥
सिते तालुनि वैधव्यं पीते प्रव्रजिना भवेत्।

नासा

आकुंचितारुणाग्रा च वैधव्यक्लेशदायिनी। पारानताक्षी दुश्शीला रक्ताक्षी भर्तृघातिनी
स्थूलमूर्धा च बिधवा दीर्घशीर्षा च बन्धकी ॥ इति। विवाहवृन्दावनेऽपि—
यास्फिक्कूलललाटोदरलंबिनी स्यात् सा कातकातानुजतातहन्त्री।
नितंबिनी ह्यल्पनितंबगुह्या जह्यात्पति दीर्घगला कुलघ्नी ॥

काशीखण्डे जघनमधिकृत्य—

वामावर्तं च निर्मांस भुग्न वैधव्यसूचिकम्। कपिला कुटिला स्थूला सुच्छिन्ना रोमराजिका
चौर्यवैधव्यदौर्भाग्यं विदध्यादिह योषिताम् ॥ इति। ऊरू अधिकृत्य—
वैधव्य रोमशैरुक्तं दौर्भाग्यं चिपिटैरपि। मध्यच्छिद्रैर्महादु ख दारिद्र्यं करिणत्वचै ॥
परस्परं समारूढा यदङ्गुल्यो भवन्ति हि। हत्वा बहूनपि पतीन् परप्रेष्या तदा भवेत् ॥
दुःखायाऽगुलयस्त्रीणा बहुपर्वसमन्विता। इति। **काशीखण्डे—**
विधवा बहुरेखेण द्विरेखेण दरिद्रिणी। भिक्षुकी सुशिराढ्येन नारी करतलेन वै ॥
अङ्गुष्ठमूला निर्गत्य रेखा याति कनिष्ठिकाम। यदि सा पतिहन्त्री स्यात् दूरतस्तां त्यजेत्सुधीः

इति। तत्रैव—

तिलकं लाछनं शोण यस्या वामे कुचे भवेत्। एकपुत्रं प्रसूयादौ तत स विधवा भवेत् ॥

इति।

कण्ठगोदक्षिणावर्तो दु खवैधव्यहेतुक। सीमन्ते वा ललाटे वा त्याज्यो दूरात्प्रयत्नतः ॥
सा पति हन्ति वर्षेण यस्या मध्ये कृकाटिका।
प्रदक्षिणो वा वामो वा रोम्णा आवर्तकस्त्रिया· ॥
एको वा मूर्धनि द्वौ वा वामे वामगती अपि।
आदशाहं पतिघ्न्यौ तौ त्याज्यौ दूरात्सुबुद्धिना ॥

कण्ठावर्ता च कुलटा नाभावर्ता पतिव्रता । पृष्ठावर्ता च कुलटा नाभावर्ता पतिव्रता ॥
पृष्ठावर्ता च भर्तृघ्नी कुलटा वाथ जायते । इति ।

सत्य नामानि पद्मानि स्त्रीणामुक्तानि लक्षणैः ।
तान्यद्य निहते रामे वितथानि भवन्ति मे ॥
केशास्सूक्ष्मास्समा नीला' भ्रुवौ चासङ्गते मम ।
वृत्ते चारोमशे जंघे दन्ताश्चाविरला मम ॥
शखे नेत्रे करौ पादौ गुल्फा ऊरू च मेचितौ ।
अनुवृत्तनखा.स्निग्धाः समाश्चांगुलयो मम ॥
स्तनौ चाविरलौ पीनौ ममेमौ मग्नचूचुकौ ।
मग्नाचोत्सङ्गिनी नाभि. पार्श्वो रक्ताश्च मेचिता. ॥
मम वर्णो मणिनिभो मृदून्यंगरुहाणि च ।
प्रतिष्ठितां द्वादशभि मामूचुः शुभलक्षणाम् ॥
समग्रयवमच्छिद्रं पाणिपादं च वर्णवत् ।
मन्दस्मितेत्येव च मां कन्यालक्षणिनो विदुः ॥

अत्र पद्मरेखादिलक्षणानि आधिराज्यसौभाग्यादि सूचकानीत्युक्तम् । तानि च ।
काशीखण्डादौ—

चक्रस्वस्तिकशङ्खाब्ज ध्वजमीनातपत्रवत् । यस्याः पादतले रेखाः सा भवेत्क्षितिपागना ।
अङ्गुष्ठमूले प्रसवस्य रेखा ।

पुत्रा बृहत्यः प्रमदाश्च तन्व्यः इति ।

यस्याश्शिखरिणो दन्ता दीर्घ जीवति सप्ततिः । फालः शिराविरहितो निर्लोमार्धेन्दुसन्निभः
अनिम्नः स्व्यगुलो नार्यः सौभाग्यारोग्यकारणम् ।

यस्यास्समतलौ पादौ समहीनांगुलिक्रमात् । सर्वं प्रतिष्ठितं भूमौ सा नारी सुखमेधते ।
इति ।

एवमन्यान्यपि शुभलक्षणानि सुन्दरकाण्डे प्रपचितानि—

अधिराज्याभिषेको मे ब्राह्मणैः पतिना सह ।
कृतांतकुशलैरुक्तं तत्सर्वं वितथीकृतम् ॥
यज्वनो महिषीं ये मामूचु' पत्नीं च सत्रिणः ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥

इति परिदेवयमानां सीता त्रिजटा समाश्वासयामास ॥

मा विषादं कृथा देवि भर्ताऽयं तव जीवति ।
कारणानि च लक्ष्यामि महान्ति सदृशानि च ॥
न हि कोपपरीतानि हर्षपर्युत्सुकानि च ।
भवन्ति युधि योधानां न मुखानि हते पतौ ॥
हतवीरप्रधाना हि हतोत्साहा निरुद्यमा ॥
सेना भ्रमति संघेषु हतकर्णेव नौर्जले ।

अनेन नायके हते सेना विवर्णवदना अस्थिरा च भवतीत्युक्तम् ॥
तथा च द्रोणपर्वणि—

एते द्रोणे हते राजन् कुरवश्शस्त्रपीडिताः । हतप्रवीराविध्वस्ता भृशं शोकपरायणाः ॥
अश्रुपूर्वेक्षणास्त्रस्ता दीनाश्चासन् विशांपते । विचेतसो हतोत्साहा कश्मलाभिहतौजसः
रजस्वला वेपमाना वीक्षमाणा दिशोदश । त्रस्तरूपधरा राजन् कौरवाः प्राद्रवन् भयात् ॥
इति ।

इयं पुनरसम्भ्रांता निरुद्विग्ना तरस्विनाम् ।
सेना रक्षति काकुत्स्थौ मया प्रीत्या निवेदितम् ॥

अनेन सेनाया असम्भ्रमादिकं जयलक्षणमित्युक्तम् ॥ तथा च राजधर्मे—
शस्त्रैः पत्रैः कवचैः केतुभिश्च स्वभानुभिर्मुखवर्णैश्च यूनाम् ।
भ्राजिष्मती दुष्प्रतिवीक्षणीया येषा चमूस्तेऽभिभवन्ति शत्रून् ॥ इति ।
भीष्मपर्वण्यपि—
हर्षो योधगणस्यैको जयलक्षणमुच्यते । इति । कामन्दकेऽपि—
मुखः प्रसादः श्रद्धा च तथा करणपाटवम् ।
सत्वायोत्थानसंपच्च कर्मणां सिद्धिलक्षणम् ॥ इति ।

इदं विमानं वैदेहि पुष्पकं नाम नामत. ।
दिव्यं त्वां धारयेन्नेदं यद्येतौ गतजीवितौ ॥
इदं च सुमहच्चिह्नं शनैः पश्यस्व मैथिली ।
निःसंज्ञावप्युभावेतौ नैव लक्ष्मीर्वियुज्यते ॥
प्रायेण गतसत्त्वानां पुरुषाणां गतायुषाम् ।
दृश्यमानेषु वक्त्रेषु परं भवति वैकृतम् ॥

अनेन मृताना मुखे वैवर्ण्य जीवता च यथापूर्व कातिश्च भवतीत्युक्तम् ।
मृतस्य वैवर्ण्य सावित्र्युपाख्याने—
ततस्समुद्गतप्राणं गतश्वासं हतप्रभम् । निर्विचेष्टं शरीर तद्बभूवाप्रियदर्शनम् ॥ इति ।

जीवतो मुखकातिश्च बृहत्कथायाम्—

भक्ष्यमाणस्य यस्यागे जायते पुलकांकुरः । प्रसन्नवदनः क्षिप्रं शेषजीवोऽपि वर्तते ॥
इति ।

श्रुत्वा तु वचनं तस्याः सीता सुरसुतोपमा ।
कृतांजलिरुवाचेदं एवमस्त्विति चाब्रवीत् ॥
ततस्त्रिजटया सार्धं पुष्पकादवरुह्य सा ।
अशोकवनिकामेव राक्षसीभिः प्रवेशिता ॥

एकोनपञ्चाशे ।

घोरेण शरबन्धेन बद्धौ दशरथात्मजौ ।
निःश्वसंतौ यथा नागौ शयानौ रुधिरोक्षितौ ॥
सर्वतो वानरश्रेष्ठः ससुग्रीवा महाबला ।
परिवार्य महात्मानौ तस्थुः शोकपरिप्लुताः ॥
एतस्मिन्नन्तरे राम प्रत्यबुद्ध्यत वीर्यवान् ।
स्थिरत्वात् सत्त्वयोगाच्च शरैस्सधानितोपि सन् ॥
ततो दृष्ट्वा सुरुधिरं विषण्ण गाढमर्पितम् ।
भ्रातरं दीनवदन पर्यदेवयदातुरः ॥
किंनु मे सीतया कार्यं कि कार्यं जीवितेन वा ।
शयानं योऽद्य पश्यामि भ्रातरं युधि निर्जितम् ॥
शक्या सीता मया नारी मर्त्यलोके विचिन्वता ।
न लक्ष्मणसमो भ्राता सचिवः सांपरायिकः ॥
परित्यक्ष्याम्ह प्राणान् वानराणां तु पश्यताम् ।
यदि पञ्चत्वमापन्नस्सुमित्रानन्दवर्धन. ॥

अत्र शक्या सीता मया नारीत्यादिना भार्यापेक्षया भ्रातुराधिक्यमुक्तम् ॥

अयमर्थो बहुषु स्थलेषु अवगम्यते ।

तथा चास्मिन्नेव काण्डे रावणप्रयुक्तशक्त्या मूर्च्छासमये—

न हि युद्धेन मे कार्यं न च प्राणैर्न सीतया ।
किं मे राज्येन किं प्राणैर्युद्धे कार्यं न विद्यते ॥
यत्रायं निहतः शेते रणमूर्धनि लक्ष्मणः । इति ।

मूर्च्छापगमानन्तरमपि—

अब्रवीच्च परिष्वज्य सौमित्रिं राघवस्तदा । दिष्ट्या त्वा वीर पश्यामि रणात्पुनरुपागतम्
न हि मे जीवितेनार्थः सीतया चापि लक्ष्मण । को हि मे विजयेनार्थः त्वयि पञ्चत्वमागते
अयोध्याकाण्डेऽपि—

अहं हि सीतां राज्यं च प्राणानिष्टान् धनानि च । हृष्टो भ्रात्रे स्वयं दद्यां भरतायाप्रचोदितः
उत्तरकाण्डेऽपि—

अप्यहं जीवितं जह्यां युष्मान्वा पुरुषर्षभाः । अपवादभयाद्भीतः किं पुनर्जनकात्मजाम् ॥
इति ॥

नन्विदमनुपपन्नं सकलधर्मसाधनभूतप्राणसमसीतापेक्षया भ्रातुर्लक्ष्मणस्यानुपपत्तेः ।

श्रूयते च अर्धशरीरत्वेनान्तरङ्गत्वेन भार्याया एव सकलेष्वपि आधिक्यम् । अर्धो वा एष आत्मनो यत्पत्नी । इति । तथा आदिपर्वणि शाकुन्तलोपाख्यानेऽपि—

अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमा सखा । भार्यामूलं त्रिवर्गस्य भार्यामूलं मरिष्यतः ॥
भार्यावन्तः क्रियावन्तः सभार्या गृहमेधिनः ।
भार्यावन्तः प्रमोदन्ते भार्यावन्तः श्रियान्विताः ॥
सभार्याः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः । पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ॥
कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य वै ।
यः सदारः स विश्वास्यः तस्माद्दाराः परा गतिः ॥
इति । लुब्धकपोतीयेऽपि कपोतवाक्यम्—

तया विरहितं हीदं शून्यमद्य गृहं मम । पुत्रपौत्रैर्बन्धुभृत्यैराकीर्णमपि सर्वतः ॥
भार्याहीनं गृहस्थस्य शून्यमेव गृहं भवेत् । न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ॥
गृहं तु गृहिणीहीनमरण्यसदृशं मम । वृक्षमूलोऽपि दयिता यत्र तिष्ठति तद्गृहम् ॥
प्रासादोऽपि तया हीनः कान्तारमिति निश्चयः ।
धर्मार्थकामकालेषु भार्या पुंसः सहायिनी ॥
तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च । नास्ति भार्यासमं किंचिन्नरस्यार्तस्य भेषजम्
नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः । नास्ति भार्यासमो लोके सहायो धर्मसंग्रहे
इति । स्कान्देऽपि—

भार्या धर्मफलावाप्त्यै भार्या सन्तानवृद्धये । परलोकस्त्वयं लोको जीयते भार्यया द्वयम् ॥
देवपित्रतिथीज्यादौ नाभार्यः कर्म चार्हति ॥ इति ।

एवं चोदाहृतवचने भार्याया एव सर्वापेक्षया अन्तरङ्गतया आधिक्यप्रतिपादनात् न लक्ष्मणसमो भ्रातेत्यादिवचनानि भ्रातृषु प्रीतिस्फोरणाय तेषां संतोषातिशयार्थं वा रामेणोक्तानीत्यभिप्रायकतया व्याख्येयानि ।

तथा च भार्याया एवांतरङ्गत्वात् भ्रातॄणामाधिक्यं कथमिति चेदुच्यते ।

अर्धात्मत्वेनावगतभार्यापेक्षया सर्वांशेन स्वात्मत्वेनावगतत्वात्—

भ्राता अधिक. तस्य स्वात्मत्वं च **मानवे**—

आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः ।

माता पृथिव्या मूर्तिस्तु भ्राता स्वा मूर्तिरात्मनः ॥ इति । **स्त्रीपर्वणि**—

गाधारीं प्रति भीमवचनम— यथैवात्मा तथा भ्राता विशेषो नास्ति कश्चन ॥

इति । **अयोध्याकाण्डे राम**—

कथं पुत्राः पितरं हन्युः कस्यांचिदापदि । भ्राता वा भ्रातरं हन्यात् सौमित्रे प्राणमात्मनः॥

अत एव पितृभ्रातरि पितृशब्दप्रयोगः भ्रातृपुत्रैश्च पुत्रशब्दप्रयोगश्च तत्रतत्रावगम्यते । तत्र पितृभ्रातरि पितृशब्दप्रयोगः इहैव **किष्किन्धाकाण्डे** तारावचने—

न चाहं हरिराजस्य प्रभवाम्यंगदस्य च । पितृव्यस्तस्य सुग्रीवः सर्वकार्येष्वनन्तरः ॥

पिता हि बन्धुः पुत्रस्य न माता हरिसत्तम । इति । तथा **आश्रमवासिके**-

युधिष्ठिरं प्रति धृतराष्ट्रं प्रस्तुत्य व्यासवचनम्—

अनुजानीहि पितरं समयोऽस्य तपोविधौ । न मन्युर्विद्यते चास्य सुसूक्ष्मोऽपि युधिष्ठिर ॥

इति । तत्रैव—

गते भगवति व्यासे राजा पाण्डुसुतस्तदा । प्रोवाच पितर वृद्धं मन्दमन्दमिवानतः ॥

इति । **उद्योगेऽपि** कृष्ण प्रति धर्मपुत्र —

पिता राजा च वृद्धश्च सर्वथा मानमर्हति ॥ इति ।

भ्रातृपुत्रैः पुत्रशब्दव्यवहारोऽपि अत्रैवाग्रे बिभीषणं प्रति इन्द्रजिद्वचने-

कथं द्रुह्यसि पुत्रस्य पितृव्यो राक्षसो मम । तथाश्रमवासिकेऽपि धर्मराज प्रति धृतराष्ट्रवचने—

सुखमस्म्युषितः पुत्र त्वया सुपरिपालितः । प्रकृष्ट च मया पुत्र पुण्यं चीर्णं यथाबलम् ॥

इति । तथा च **वनपर्वणि**—

विदुरं प्रति पाण्डवान् प्रस्तुत्य धृतराष्ट्रवचनम् ।

असंशयं तेऽपि ममैव पुत्राः । इति

एवं बहुवचनानि सन्ति विस्तरभयान्न लिख्यन्ते । किच यथेच्छं संपादयितुं शक्यां भार्यामपेक्ष्य संपादयितुमशक्यत्वाद् भ्राता अधिकः । तथा **पुराणवाक्यम्**—

देशे देशे कलत्राणि देशेदेशे च बांधवाः ।

तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥

इति । भार्यापेक्षया भ्रातुराधिक्यम् हरिवंशे पारिजातहरणे कण्ठरवेण नारदं प्रति इन्द्रवाक्ये प्रतिपादितम् ॥

न दृष्टं काश्यपकुलं व्यपदिष्ट महामुने । नैव दक्षकुलं दृष्टं मातुर्मे यत्र सम्भवः ॥
न ज्येष्ठता न राजत्वं देवानां प्रतिमाननम् । कामरागाभिभूतेन कृष्णेन खलु नारद ॥
पुत्रदारसहस्रैर्हि भ्राता न ह्यविशिष्यते । सद्वृत्तो ज्ञानसम्पन्न इति ब्रह्मा पुराऽब्रवीत् ॥
नास्ति भ्रातृसमो बन्धुराहार्य इतरो जनः । इति मामब्रवीन्माता पिता चैव प्रजापतिः ॥
सोदरेषु विशेषन्तु पिता मे काश्यपोऽब्रवीत् ॥ इति ।

आहार्यः संपादयितुं शक्य इत्यर्थः एवं च भार्यापेक्षया भ्रातॄणामाधिक्य-प्रतिपादकतयोदाहृतमूलवचनानि स्वार्थपराण्येव न तन्नीत्यादिपराणि । अत **एवोत्तरकाण्डे** सीतापरित्यागानन्तरमपि श्रीरामः भ्रातृभिस्सह राज्यं परिपालयन् अश्वमेधादिक्रतून् **पत्नीसाध्यानपि** कृतवान् । लक्ष्मणस्य वियोगानन्तरन्तु तदैव पुत्रयो राज्ये अभिषेकं कृत्वा स्वयं स्वर्गाय गतवान् इति प्रतिपादितम् ॥

विसृज्य लक्ष्मणं रामो दुःखशोकसमन्वितः । पुरोधसं मन्त्रिगणान् नैगमांश्चैवमब्रवीत् ॥
अद्यैवाहं गमिष्यामि लक्ष्मणेन गतां गतिम् । अभिषिच्य सुतौ वीरौ सुप्रतिष्ठाप्य वै पुरे ॥
रामः कमलपत्राक्षः पुरोधसमथाब्रवीत् । अग्निहोत्रं व्रजत्वग्रे सप्रज्वलितपावकम् ॥
ततो वसिष्ठस्तेजस्वी सर्वं निरवशेषतः । चकार विधिवद्धर्मं महाप्रस्थानिकं विधिम् ॥
ततः क्षौमाम्बरधरो ब्रह्म चावर्तयन् पथि । कुशान् गृहीत्वा पाणिभ्यां प्रसज्य प्रययावथ ॥
इति ।

**मुसलपर्वण्यपि** — बलरामं प्रायोपवेशनार्थं गतं दृष्ट्वा श्रीकृष्णः स्वयमपि सकलस्त्रीजनं परित्यज्य तदैव गत इति प्रतिपादितम् —

ततो ययुर्दारुकः केशवश्च बभ्रुश्च रामस्य पदं पदन्तः ।
अथापश्यन् राममनन्तवीर्यं वृक्षे स्थितं चिन्तयानं विविक्ते ॥

ततो दृष्ट्वा निहतं बभ्रुमाह कृष्णोऽग्रजं भ्रातरमुग्रतेजाः ।
इहैव त्वं मां प्रतीक्षस्व राम यावत्स्त्रियो ज्ञातिवशाः करोमि ॥

ततः पुरीं द्वारवतीं प्रविश्य जनार्दनः पितरं प्राह वाक्यम् ।

स्त्रियो भवान् रक्षतु न. समग्राद्याः धनञ्जयस्यागमनं प्रतीक्षन् ॥

रामो वनान्ते प्रतिपालयन्मामास्तेऽद्याहं तेन समागमिष्ये ।
तपश्चरिष्यामि निबोध तन्मे रामेण सार्धं वनमभ्युपेत्य ॥

इतीदमुक्त्वा शिरसा च पादौ सस्पृश्य कृष्णस्त्वरितो जगाम ।
ततो गते भ्रातरि वासुदेवो जानन् सर्वा गतयो दिव्यदृष्टिः ॥

वनं शून्य विचरंश्चिन्तयानो भूमौ चाथ सविवेशाग्र्यतेजाः ॥ इति ॥

विष्णुपुराणेऽपि —

दृष्ट्वा बालस्य निर्याणं दारुकं प्राह केशव.। योगे स्थितोऽहमप्येतत् परित्यक्ष्ये कलेबरम् ॥
इति। तस्माद्भार्यापेक्षया भ्रातु' प्राबल्यं यदुक्तं तद्युक्तमेव।

सुरुष्टेनापि वीरेण लक्ष्मणेन च संस्मरे ।
परुषं विप्रियं वापि श्रावितं न कदाचन ॥

अनेन क्रोधितोऽपि गुरुजनेषु परुषं विप्रियं वा न ब्रूयादिति सूचितम् —
तच्चोक्तं विभीषणप्रकरणे —

तच्च मिथ्याप्रलपितं मां प्रधक्ष्यत्यसंशयम् ।
यन्मया न कृतो राजा राक्षसानां विभीषणः ॥

अनेन राज्ञा प्रतिज्ञातार्थोऽवश्यं निर्वहणीय इत्युक्तम्, तच्च बहुधोक्तम् ॥

कृतं हनुमता कार्यं यदन्यैर्दुष्करं रणे ।
ऋक्षराजेन तुष्यामि गोलांगूलाधिपेन च ॥

अंगदेन कृतं कर्म मैंदेन द्विविदेन च ।
युद्धं केसरिणा संख्ये घोरं संपातिना कृतम् ॥

गवयेन गवाक्षेण शरभेण गजेन च ।
यत्तु शक्यं वयस्येन सुहृदा च परंतप ॥

कृतं सुग्रीव तत्सर्वं भवता धर्मभीरुणा ।

अत्र हनूमत्प्रभृतीनां तत्तत्पराक्रमातिशयकथनेन संतोषकरणात् कृतकर्मणां शूराणां क्रमेण स्वस्य फलानवाप्तावपि तदीयमुपकारं स्मृत्वा राज्ञां स्वस्य कृतघ्नत्वपरिहाराय स्तुतिः

कर्तव्येति सूचितम् । अत एव घटोत्कचपराक्रमेण स्वस्य फलानवाप्तावपि तदीयपराक्रम-स्तुतिर्धर्मराजेन कृता **द्रोणपर्वणि** —

विदिता मे महाभाग धर्मणा परमा गतिः । ब्रह्महत्याफलं तस्य यः कृतं नावबुद्ध्यते ॥ इत्यादिना इति ।

**न चातिक्रमितुं शक्यं दैवं सुग्रीव मानुषैः ।**

अनेन पुरुषकारापेक्षया दैवं प्रबलमिति सूचितम् । तथा च **भीष्मपर्वणि** धृतराष्ट्रः —

दैवमेव पर मन्ये पौरुषादपि सञ्जय । इति ।

तत्रैव स्थलांतरे —

दैवमेव परं मन्ये धिक् पौरुषमनर्थकम् ॥ इति ।

**पंचाशे —**

अत्रांतरे विप्रकीर्णमखिलमपि बलं परिसांत्व्य यथास्थानं स्थापयित्वा —

**आजगाम गदापाणिस्त्वरितो यत्र राघवः ।**

ततः समागच्छन्तं विभीषणमवलोक्य रावणिरेवायं पुनरागत इति भ्रान्त्या संभ्रान्ता वानराः सुग्रीवसमाज्ञप्तेन जाम्बवता नायं रावणिरस्मदीयोऽयं विभीषण इति समाश्वासिता बभूवुः ।

तदनु यद्बलाद्राज्यमाकांक्षितं तावुभौ दुरात्मना रावणिना निषूदिताविति बहुविधं विलपन्तं विभीषणं परिसान्त्व्य सुग्रीवपार्श्ववर्तिनं सुषेणमवलोक्यैवमुवाच — इमौ दाशरथी बहुभिर्वानरयूथपैस्सह झटिति किष्किंधा प्रापय । अहं च सपुत्रबान्धवं रावणं हत्वा सीतामानेष्यामीति ।

ततः असुरनिषूदितानां देवतानामप्युज्जीवनकरं चन्द्रद्रोणनामकं ओषधीद्वयमानेतुं तदभिज्ञा हनुमत्प्रमुखा गच्छन्तु । तेन च रामलक्ष्मणौ नीरजौ भवेतामिति वदति सुषेणे पर्वतान् पक्षवातेन कम्पयन्तं गरुडम् —

**वानरा ददृशुस्सर्वे ज्वलंतमिव पर्वतम् ।**
**तमागतमभिप्रेक्ष्य नागास्ते विप्रदुद्रुवुः ॥**

**यैस्तौ तत्पुरुषौ बद्धौ शरभूतैर्महाबलौ ।**

अनेन गरुडदर्शने सर्पाः पलायंतीति सूचितम् । तथाच **हरिवंशे** —

ततो दृष्ट्वैव गरुडं येन रुद्धशरीरगा । शररूपा महासर्पा वेष्टयित्वा तनूं स्थिताः ॥

ते सर्वे सहसा देहात्तस्य निःसृत्य भोगिनः । क्षितिं समभिवर्तित्वात्प्रकृत्यावस्थिताश्शराः ॥

इति ।

**विष्णुपुराणेऽपि**—

इत्युक्त्वा प्रययौ कृष्णः प्रद्युम्नियत्र तिष्ठति । तद्बंधफणिनो नेशुर्गरुडानिलदूषिताः ॥ इति

ततः सुपर्णः काकुत्स्थं दृष्ट्वा प्रत्यभिनन्दितः ।
विममर्श च पाणिभ्यां मुखे चन्द्रमसप्रभे ॥

वैनतेयेन संस्पृष्टास्तयोः संरुरुहुर्व्रणाः ।
सुवर्णे च तनू स्निग्धे तयोराशु बभूवतुः ॥

तेजो वीर्यं बलं चैव उत्साहश्च महागुणः ।
प्रदर्शनं च बुद्धिश्च स्मृतिश्च द्विगुणं तयोः ॥

तावुत्थाप्य महावीर्यौ गरुडो वासवोपमौ ।
उभौ तौ सस्वजे हृष्टौ रामश्चैनमुवाच ह ॥

भवत्प्रभावाद्व्यसनं रावणिप्रभवं महत् ।
आवामिह व्यतिक्रान्तौ शीघ्रं च बलिनौ कृतौ ॥

यथा तातं दशरथं यथाजं च पितामहम् ।
तथा भवन्तमासाद्य हृदयं मे प्रसीदति ॥

अनेन महापुरुषस्य हस्तसंस्पर्शनसहवाससंल्लापादिना सकलक्लेशनिवृत्तिः वीर्यतेजोऽभिवृद्धिश्च जायत इति सूचितम् । अत एव धर्मराजस्य हस्तस्पर्शनेन धृतराष्ट्रस्य क्लेशनिवृत्तिः प्रतिपादिता **आश्रमवासिके** —

तं तु दृष्ट्वा समासीनं विसञ्ज्ञमिव कौरवम् । ततोऽस्य पाणिना राजन् जलशीतेन पाण्डवः ॥

उरो मुखं च शनकैः पर्यमार्जत धर्मवित् । तेन रत्नौषधिमता पुण्येन च सुगंधिना ॥

पाणिस्पर्शेन राज्ञस्स राजा सञ्ज्ञामवाप ह ।

धृतराष्ट्र उवाच —

स्पृश मा पाणिना भूयः परिष्वज्य च पाण्डव । जीवामि वांछा स्पर्शेन तव राजीवलोचन ॥

एवमुक्तस्तु कौन्तेयः पित्रा ज्येष्ठेन भारत। पस्पर्श सर्वगात्रेषु सौहार्दात्तं शनैस्तदा॥ उपलभ्य ततः प्राणान् धृतराष्ट्रो महीपति। बाहुभ्यां संपरिष्वज्य मूर्ध्न्यजिघ्रत पाण्डवम्॥इति

धर्मपुत्रसहवाससल्लापादीना क्लेशनिवृत्तिश्च प्रतिपादिता **स्वर्गारोहिणिके**—

भो भो धर्मज राजर्षे पुण्याभिजन पाण्डव। अनुग्रहार्थमस्माकं तिष्ठ तावन्मुहूर्तकम्॥ आयाति त्वयि दुर्धर्षे वाति पुण्यसमीरणः। तव गन्धानुगस्तात येनास्मान् सुखमागमत्॥ ते वयं पार्थ दीर्घस्य कालस्य पुरुषर्षभ। सुखमासादयिष्यामस्त्वा दृष्ट्वा राजसत्तम॥ संतिष्ठस्व महाबाहो मुहूर्तमपि भारत। त्वयि तिष्ठति कौरव्य यातनास्मान्न बाधते॥ इति।

**प्राचीना अपि**—

तमांसि ध्वंसन्ते परिणमति भूयानुपशमः सकृत्संवासोऽपि प्रथत इह चामुत्र च शुभम्। अथ प्रत्यासंगः कमपि महिमानं वितरति प्रसन्नाना वाचः फलमपरिमेयं प्रसुवते॥ इति।

को भवान् रूपसंपन्नो दिव्यस्रगनुलेपनः।
वसानो विरजे वस्त्रे दिव्याभरणभूषितः॥

तमुवाच महातेजा वैनतेयो महाबलः।
अहं सखा ते काकुत्स्थ प्रियः प्राणो बहिश्चरः॥

गरुत्मानिह संप्राप्तो युवाभ्यां साह्यकारणात्।
असुरा वा महावीर्या दानवा वा महाबलाः॥

सुराश्चापि सगन्धर्वाः पुरस्कृत्य शतक्रतुम्।
नेमं मोक्षयितुं शक्ताः शरबन्धं सुदारुणम्॥

मायाबलादिंद्रजिता निर्मितं क्रूरकर्मणा।
एते नागाः काद्रवेयास्तीक्ष्णदंष्ट्रा विषोल्बणाः॥

रक्षोमायाप्रभावेन शरा भूत्वा त्वदाश्रिताः।
सभाग्यश्चासि धर्मज्ञ राम सत्यपराक्रम॥

लक्ष्मणेन सह भ्रात्रा समरे रिपुघातिना।
इमं श्रुत्वा तु वृत्तान्तं त्वरमाणोऽहमागतः॥

सहसा युवयोस्स्नेहात् सखित्वमनुपालयन्।
मोक्षितौ च महाघोरादस्मात्सायकबन्धनात्॥

अनेन आपदि उपकारकत्वं मित्रस्य असाधारणो धर्म इति सूचितम् । तथाच **भारते —**

आपद्गतं कश्चन यो विमोक्षेत् स बान्धवः स्नेहयुक्तः सुहृच्च ।
एवं पुराणे ऋषयो वदन्ति धर्मस्तदा सद्भिरनुष्ठितश्च ॥ इति —

तथाच **कामंदकेऽपि —**

न तत्र तिष्ठति भ्राता न पिताऽन्योऽपि वा जनः । पुंसामापत्प्रतीकारे सन्मित्रं यत्र तिष्ठति ॥ इति ।

**अप्रमादश्च कर्तव्यो युवाभ्यां नित्यमेव हि ।**

अनेन वञ्चकसमागमे अप्रमादेन स्थातव्यमिति सूचितम् । उक्तं चाभियुक्तैः — विदुषि षष्ठी चाप्रमादिना भाव्यम् इति ।

**प्रकृत्या राक्षसास्सर्वे संग्रामे कूटयोधिनः ।**
**शूराणां शुद्धभावानां भवतामार्जवं बलम् ॥**

अनेन शुद्धभावानां धर्ममार्गे प्रवृत्तिर्जायत इति सूचितम् । तथा **चोद्योगे —** धर्मनित्यः प्रशांतात्मा कार्ययोगवहः सदा । नाधर्मे कुरुते बुद्धिं नच पापेषु वर्तते ॥ इति ।

**तन्न विश्वसितव्यं वो राक्षसानां रणाजिरे ।**
**एतेनैवोपमानेन राक्षसा जिह्मयोधिनः ॥**

अनेन राक्षसाः स्वभावत एवाधर्मयुद्धशीला भवन्तीति सूचितम् । अत एवाधर्मयुद्धं राक्षसधर्म इत्यत्र **द्रोणपर्वणि** कृष्णं प्रति घटोत्कचवचनम् —

न चात्र शूरान् मोक्ष्यामि नभीतांन्नकृतांजलीन् । सर्वमेव वधिष्यामि राक्षसं धर्ममास्थितः ॥ इति ।

**सखे राघव धर्मज्ञ रिपूणामपि वत्सल ।**
**अभ्यनुज्ञातुमिच्छामि गमिष्यामि यथागतम् ॥**

**नच कौतूहलं कार्यं सखित्वं प्रति राघव ।**
**कृतकर्मा रणे राम सखित्वमनुवेत्स्यसि ॥**

**बालवृद्धावशेषां तु लङ्कां कृत्वा शरोर्मिभिः ।**
**रावणं च रिपुं हत्वा सीतां समुपलप्स्यसे ॥**

अनेनाप्तेनापदि इष्टं साधयिष्यसीति प्रोत्साहनमपि कर्तव्यमिति सूचितम्। तथाच **द्रोणपर्वणि** घटोत्कचवधे व्यासेन धर्मपुत्रप्रोत्साहनं कृतमित्युक्तम्।

**शोको**पहतसकल्पं दह्यमानमिवाग्निना। अभिगम्याब्रवीद्व्यासो धर्मपुत्रं युधिष्ठिरम्॥

भ्रातृभिस्सहितस्सर्वैः पार्थिवैश्च महात्मभिः। कौरवान् समरे सर्वानभियुध्यस्व भारत।

पञ्चमे दिवसे चैव पृथिवी ते भविष्यति॥

नित्यं च पुरुषव्याघ्र धर्ममेव विचिन्तय। आनृशंस्यं तपो दानं क्षमा सत्यं च पाण्डव॥

सेवेथाः परमप्रीतो यतो धर्मस्ततो जय'। इति।

**प्रदक्षिणं ततः कृत्वा परिष्वज्य च वीर्यवान्॥**

**जगामाकाशमाविश्य सुपर्णः पवनो यथा।**

अनेन श्रेयसे विसृज्य गमनसमये तान् विज्ञाप्य प्रदक्षिणीकृत्य गन्तव्यमिति सूचितम्। अत एव कृष्णः पृथामामन्त्र्य प्रदक्षिणीकृत्य गत इति प्रतिपादितं **उद्योगे**—पृथामामन्त्र्य गोविन्दः कृत्वा चापि प्रदक्षिणम्। दुर्योधनगृहं शौरिरभ्यागच्छदरिंदमः॥ इति।

**ततस्तु भीमस्तुमुलो निनादो बभूव शाखामृगयूथपानाम्।**
**क्षये निदाघस्य यथा घनानां नादस्सुभीमो नदतां निशीथे॥ इति।**

**एकपञ्चाश द्विपञ्चाशयोः—**

तदनु किमिदानीं क्लेशसमये हर्षकारणं वानराणां तद्विचारय—इति दशवदन-समाज्ञप्ता राक्षसाः सत्वरं लङ्काप्राकारमधिरुह्य सुग्रीवपालितां प्रहृष्टां सेनां नागपाशविमुक्तौ **दाशरथी चावलोक्य** विस्मितमानसा रावणायेममर्थमाचख्यु'। ततः कोपारुणितलोचनेन **रावणेन रामजयाय** झटिति निर्याहीत्यभिहितः,

**कृत्वा प्रणामं संहृष्टो निर्जगाम नृपालयात्।**
**स निर्यातो महावीर्यो धूम्राक्षो राक्षसैर्वृतः॥**

**प्रययौ पश्चिमद्वारं हनुमान् यत्र यूथपः।**

अत्र युद्धाय निर्याहीति राज्ञा समाज्ञप्तः अविलम्बेनैव युद्धाय निर्गत इति प्रतिपादनेन राजाज्ञाऽविलम्बेन कर्तव्येति सूचितम्। तथाच **कामंदके**—

कोऽत्रेत्यहमिति ब्रूयात् सम्यगाज्ञापयेति च। आज्ञां चावितथा कुर्याद्यथाशक्त्य-विलम्बितम् ॥ इति।

ततः पट्टसभिण्डिपालप्रासासिधारिभिर्बलैः परिवृतं सखरयुक्तं रथमधिरुह्य कबन्धपात प्रतिपवाताद्युत्पातानविगणयन्नेव हनूमत्समरभूमिमवतीर्णः कुपितहनूमत्प्रहितशिलापोथितरथः बहुकण्टकाचिता गदामादायाप्लुत्य वेगेन वायुपुतमस्तके सताड्य अचिन्तितप्रहारेण च हनूमता शिरस्यभितो मथितमस्तकः सहसा भूमौ निपपात ॥

**त्रिपञ्चाशचतुःपञ्चाशयोः —**

ततश्च हनूमत्कृतधूम्राक्षहनन श्रवण सञ्जातकोपेन रावणेन शत्रु्वधाय निर्याहीति समाज्ञप्तो वज्रदंष्ट्र,

**पताकालंकृतं दीप्तं तप्तकांचनभूषणम्।**
**रथं प्रदक्षिणीकृत्य समारोहच्चमूपतिः ॥**

अत्र वज्रदंष्ट्र इत्याद्येन रथं प्रदक्षिणीकृत्य आरुह्य गच्छेदिति सूचितम्। अत एव **वनपर्वणि —**

निवातकवचवधाय प्रस्थितेन मायारथं प्रदक्षिणीकृत्य गतमित्युक्तं युधिष्ठिरं प्रत्यर्जुनेन।
अथापश्यं हरियुजं रथमैन्द्रमुपस्थितम्। दिव्यं मायामयं पुण्यं युतं मातलिना नृप ॥
प्रदक्षिणमुपावृत्य समारोहं रथोत्तमम् ॥ इति।

ततो निखिलबलपरिवृतः स्वबलरक्षणविचक्षणो दक्षिणद्वारान्निर्गत्य तत्कालसंभूता-नुत्पातानपि धैर्येणाविगणय्य अंगदपालितां वानरानीकिनीं शरवर्षेण विक्षोभ्य च बला-वलेपेन स्वाभिमुखमागतान् बलीमुखप्रमुखानपि एकैकेन शिलीमुखेन विव्याध।

तदनु प्रभग्नान्वानरगणानवलोक्य कुपितहृदयेनाङ्गदेन शैलशृङ्गप्रक्षेपात्प्रमथितं स-चक्रकूबरं साश्वं रथवरं परित्यज्य भूमाववस्थितो गिरिशिखरान्तरेण च शिरस्यभिहतो गदामालिङ्ग्य मुहूर्तमात्रमसज्ञो बभूव ॥

तदनु लब्धसंज्ञं वज्रदंष्ट्रं मुष्टियुद्धेन परिश्रान्तं विधाय —

**निर्मलेन सुधौतेन खड्गेनास्य महच्छिरः।**
**जघान वज्रदंष्ट्रस्य वालिसूनुर्महाबलः ॥**

ततो वानराः हतशेषान् पिशिताशनान् विद्राव्याङ्गदं पूजयामासुः ॥

**पञ्चपञ्चाशत् षट्पञ्चाशयोः —**

वालितनयेन हतो वज्रदंष्ट्र इति राक्षसैर्निवेदितवृत्तान्तो रावणः शत्रुविजयाय अकंपनं प्रेषयन्निदमुवाच —

**एष शास्ता च गोप्ता च नेता च युधि संमतः ।**
**भूतिकामश्च मे नित्यं नित्यं च समरप्रियः ॥**

**एष जेष्यति काकुत्स्थौ वानरांश्च हनिष्यति ।**

इति अकंपनस्य स्तुतिं कृत्वा प्रेषणात् प्रज्ञाविक्रमभक्तियुक्त एव भृत्यः राज्ञः कार्यसाधक इति सूचितम् । तथा **प्राचीनाः** –

अप्राज्ञेन च कातरेण च गुणस्यात्मानुरागेण कः
प्रज्ञाविक्रमशालिनोऽपि हि भवेत् किं भक्तिहीनात्फलम् ।
प्रज्ञाविक्रमभक्तयस्समुदिता येषां गुणा भूतये
ते भृत्या नृपतेः कलत्रमितरे सपत्सु चापत्सु च ॥ इति ॥

ततस्तदाज्ञया रथवरमारुह्य निखिलबलपरिवारेण बहिः प्रस्थितोऽकंपनः तत्काल-समुद्भूताशुभनिमित्तान्यविगणय्य संप्राप्य युद्धभूमिं वृक्षपाषाणनखदंष्ट्रायुधा सुसन्नद्धा वानरसेना विक्षोभयामास । तत्र रथनेमिगजतुरगवरखुरोद्धूतरजोऽन्धकारे वानरराक्षसप्राणहरे प्रवर्तमाने युद्धे कुमुदनलमैन्दद्विविदप्रमुखा वानरयूथपा राक्षससैन्यं ममंथुः । अकंपनेन वानरसैन्यैरभिहन्यमानं स्वसैन्यमवलोक्य विद्राविता वानरप्रमुखास्तत्प्रमुखे स्थातुमशक्नुवन्तः,

**अवस्थितं हनूमन्तं ते दृष्ट्वा हरियूथपाः ।**
**बभूवुर्बलवन्तो हि बलवन्तं समाश्रिताः ॥**

अनेन परैर्भग्ना अपि बलवदाश्रयेण योधाः पुनस्स्थिरा भवंतीति सूचितम् । **अत एव** भीष्मेण विद्राविता सेना पार्थमाश्रित्य पुनरावृत्तेति प्रतिपादितं **भीष्मपर्वणि** –

ततस्तत्पुनरावृत्तं युधिष्ठिरबलं महत् । दृष्ट्वा पार्थं महाबाहुं भीष्मायोद्यतमाहवे ॥ इति ।

तदनु हनूमान् अश्वकर्णेन सैन्यं विनिहत्यानेन च महीरुहेण शिरस्यभिहत्याकम्पनं अन्तकनिकेतनं प्रापयामास ।

**अपूजयन् देवगणास्तदा कपिं स्वयं च रामोऽतिबलश्च लक्ष्मणः ।**
**तथैव सुग्रीवमुखाः प्लवङ्गमा विभीषणश्चैव महाबलस्तदा ॥**

सप्तपञ्चाशाष्टपञ्चाशयोः —

ततः अकम्पनं हनूमता निषूदितं श्रुत्वा लङ्कापुरीरक्षणाय संस्थापितान् गुल्मानवलोकयितुं प्रस्थितो रावणः प्रहस्तमुपगम्यैवमुवाच—

> पुरस्योपनिविष्टस्य सहसा पीडितस्य च ।
> नान्यं युद्धात्प्रपश्यामि मोक्षं युद्धविशारद ॥
>
> आपत्संशयिता श्रेयो नात्र निःसंशयीकृता ।
> प्रतिलोमानुलोमं वा यद्वा नो मन्यसे हितम् ॥

अत्र वानरकृतपुरनिरोधनेन तत्कृतपीडनेन च संप्राप्ता आपत् युद्धकरणे संशयिता; तच्च श्रेयः । युद्धाकरणे तु निश्चितैवापत्; तच्च न श्रेयः । अतो युद्धमेव मम रोचते । त्वमप्यस्माकं प्रतिकूलं अनुकूलं वा तत् विचिन्तयेत्युक्त्या यत्र युद्धाकरणे मरणनिश्चयस्तत्रैव युद्धं कर्तव्यमिति सूचितम् । तथा च नीतिशास्त्रे —

यत्रायुद्धे ध्रुवो मृत्युर्युद्धे जीवितसंशयः । तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः ॥ इति ।

> रावणेनैवमुक्तस्तु प्रहस्तो वाहिनीपतिः ।
> राक्षसेन्द्रमुवाचेदमसुरेन्द्रमिवोशना ॥
>
> सोऽहं दानैश्च मानैश्च सततं पूजितस्त्वया ।
> सांत्वैश्च विविधैः काले किं न कुर्यां प्रियं तव ॥
>
> न हि मे जीवितं रक्ष्यं पुत्रदारधनानि च ।
> त्वं पश्य मां जिहीर्षंतं त्वदर्थे जीवितं युधि ॥

अनेन दानमानादिभिः पूजिता भृत्याः प्राणानपि स्वामिकार्यार्थे परित्यजन्तीति सूचितम् । तथा च भीष्मपर्वणि दुर्योधनं प्रति कर्णवचनम् —

त्यक्तप्राणं हि मा विद्धि तवार्थे राजसत्तम । इति ।

इत्येवं राक्षसराजं रावणमाभाष्य पुरस्तात्तिष्ठतो बलाध्यक्षान् बलं संत्वर्यतामित्याज्ञापयति सेनापतौ तैश्च सत्वर्यमाणानां राक्षसानाम्,

> हुताशनं तर्पयतां ब्राह्मणांश्च नमस्यताम् ।
> आज्यगन्धप्रतिवहः सुरभिर्मारुतो ववौ ॥
>
> स्रजश्च विविधाकारा जगृहुस्त्वभिमन्त्रिताः ।
> संग्रामसज्जाः संहृष्टाः धारयन् राक्षसास्तदा ॥

अनेन युद्धयात्रायां होमब्राह्मणभोजननमस्कारादिकं विजयाय कर्तव्यमिति सूचितम्। अत एव सौभवधाय प्रस्थितः कृष्णः द्विजपूजनादि कृत्वा गत इति प्रतिपादितम् वनपर्वणि —

वाचयित्वा द्विजश्रेष्ठान् पुण्याहं भरतर्षभ। तैः प्रहृष्टात्मभिर्वीरैराशीर्भिरभिनंदितः॥
नमस्कृत्य द्विजान् सर्वान् प्रणम्य शिरसा भवम्। शैब्यसुग्रीवयुक्तेन रथेनानादयन् दिशः॥
प्रयातोस्मि नरव्याघ्र बलेन महता वृतः। इति।

अथ सकलसेनापरिवृतः प्रहस्तो राजानमामन्त्र्य आरुह्य चोपकल्पितं महारथं महता सेनाघोषेण भेरीदुन्दुभिघोषेण च प्राग्द्वारान्निर्गत्य गच्छन्नेव पुरतः परुषतरखरस्वरशिवावाशनमभूमिहयस्खलनादीनुत्पातानविचिन्त्य सुसन्नद्धं गृहीतवृक्षपाषाणवानरसैन्यं विजयायाभिससार।

अथ रामेण कोसौ महासारः परिसरानुसारिभिः परिवृतो नगरान्निर्यातीति पृष्टो विभीषणः कुम्भहनुमहानादसमुन्नसनरान्तकैरात्मसचिवैः परिवृतः प्रहस्तो नाम प्रशस्तो रावणसेनापतिरिति संनिवेद्य रामाय स्वयमपि निशाचरैर्योद्धुं सन्नद्धो बभूव।

ततः प्रासपरिघपरश्वथादिविविधायुधकरेषु निशाचरेषु वानरैर्युद्ध्यमानेषु द्विविदेन नरान्तके दुर्मुखेन समुन्नसे जाम्बवता महानादे तारेण कुम्भहनौ अन्यैरपि बहुशो निशाचरेषु निहतेषु नीलेन सगतः प्रहस्तः तेनैव मथितरथहयसारथिर्भग्नधन्वा च मुसलेन नीलललाटमभिहत्य गर्जन् तत्कृतविपुलशिलानिपातेन शिथिलीकृतावयवो निपपात।

**ततः सुनीलो विजयी महाबलः प्रशस्यमानः स्वकृतेन कर्मणा।**
**समेत्य रामेण सलक्ष्मणेन प्रहृष्टरूपस्तु बभूव यूथपः॥**

**एकोनषष्टितमे —**

**तस्मिन् हते राक्षससैन्यपाले प्लवङ्गमानां वृषभेण युद्धे।**
**भीमायुधं सागरतुल्यवेगं विदुद्रुवे राक्षसराजसैन्यम्॥**

**गत्वाऽथ रक्षोऽधिपतेः शशंसु सेनापतिं पावकसूनुशस्तम्।**
**तच्चापि तेषां वचनं निशम्य रक्षोऽधिपः क्रोधवशं जगाम॥**

**संख्ये प्रहस्तं निहतं निशम्य शोकार्दितः क्रोधपरीतचेताः।**
**उवाच तान्नैर्ऋतयोधमुख्यानिन्द्रो यथा चामरयोधमुख्यान्॥**

नावज्ञा रिपवे कार्या यैरिन्द्रबलसूदनः ।
सूदितस्सैन्यपालो मे सानुयात्रः सकुञ्जरः ॥

अनेन शत्रुषु अवज्ञा न कर्तव्येत्युक्तम् । तथा चोद्योगे दारुकं प्रति कृष्णः—

नच शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा । इति ।

सोऽहं रिपुविनाशाय विजयायाविचारयन् ।
स्वयमेव गमिष्यामि रणशीर्षं तदद्भुतम् ॥

अद्य तं वानरानीकं रामं च सहलक्ष्मणम् ।
निर्दहिष्यामि बाणौघैर्वनं दीप्तैरिवाग्निभिः ॥

स एवमुक्त्वा ज्वलनप्रकाशो रथं तुरङ्गोत्तमराजयुक्तम् ।
प्रकाशमानं वपुषा ज्वलन्तं समारुरोहामरराजशत्रुः ॥

सशंखभेरीपणवप्रणादैरास्फोटितक्ष्वेलितसिंहनादैः ।
पुण्यैस्स्तवैश्चाप्यभिपूज्यमानस्तदा ययौ राक्षसराजमुख्यः ॥

स शैलजीमूतनिकाशरूपैः मांसादनैः पावकदीप्तनेत्रैः ।
बभौ वृतो राक्षसराजमुख्यो भूतैर्वृतो रुद्र इवामरेशः ॥

ततो नगर्याः सहसा महौजा निष्क्रम्य तद्वानरमुग्रसैन्यम् ।
महार्णवाभ्रस्तनितं ददर्श समुद्यतं पादपशैलहस्तम् ॥

तद्राक्षसानीकमतिप्रचण्डमालोक्य रामो भुजगेन्द्रबाहुः ।
विभीषणं शस्त्रभृतां वरिष्ठं उवाच सेनानुगतः पृथुश्रीः ॥

नानापताकाध्वजशस्त्रजुष्टं प्रासासिशूलायुधवज्रजुष्टम् ।
सैन्यं नगेन्द्रोपमनागजुष्टं कस्येदमक्षोभ्यमभीरुजुष्टम् ॥

ततस्तु रामस्य निशम्य वाक्यं विभीषणश्शक्रसमानवीर्यः ।
शशंस रामस्य बलप्रवेगं महात्मनां राक्षसपुङ्गवानाम् ॥

योऽसौ गजस्कन्धगतो महात्मा नवोदितार्कोपमताम्रवक्त्रः ।
प्रकम्पयन्नागशिरोऽभ्युपैति ह्यकम्पनं त्वेनमवेहि राजन् ॥

योऽसौ रथस्थो मृगराजकेतुर्धुन्वन्धनुः शक्रधनुःप्रकाशम् ।
करीव भात्युग्रविवृत्तदंष्ट्रः स इन्द्रजिन्नाम वरप्रधानः ॥

यश्चैष विंध्यास्तमहेन्द्रकल्पो धन्वी रथस्थोऽतिरथोऽतिवीरः ।

विस्फारयंश्चापमतुल्यमानं नाम्नातिकायोऽतिविवृद्धकायः ॥

योऽसौ नवार्कोपमताम्रचक्षुरारुह्य घंटानिनदप्रणादम् ।
गजं खरं गर्जति वै महात्मा महोदरो नाम स एष वीरः ॥

योऽसौ हयं कांचनचित्रभांडमारुह्य संध्याभ्रगिरिप्रकाशम् ।
प्रासं समुद्यम्य मरीचिनद्धं पिशाचरक्षोऽशनितुल्यवेगः ॥

यश्चैष शूलं निशितं प्रगृह्य विद्युत्प्रभं किंकरवज्रवेगम् ।
वृषेन्द्रमास्थाय गिरिप्रकाशं आयाति योऽसौ त्रिशिरा यशस्वी ॥

असौ च जीमूतनिकाशरूपः कुम्भः पृथूव्यूढसुजातवक्षाः ।
समाहितः पन्नगराजकेतुर्विस्फारयन् भाति धनुर्विधून्वन् ॥

यश्चैष जांबूनदवज्रजुष्टं दीप्तं सधूमं परिघं प्रगृह्य ।
आयाति रक्षोबलकेतुभूतः सोऽसौ निकुम्भोऽद्भुतघोरकर्मा ॥

यश्चैष चापासिशरौघजुष्टं पताकिनं पावकदीप्तरूपम् ।
रथं समास्थाय विभात्युदग्रो नरांतकोऽसौ नगशृङ्गयोधी ॥

अनेन युद्धाय निर्गते तदीयास्त परिवार्य गता इति प्रतिपादितं राज्ञा अनाहूतैरपि राज्ञा सह भृत्यैर्गतव्यमिति सूचितम् । अत एव युद्धाय निर्गते जरासंधे

**हरिवंशे—**

कृत्वा सर्वसमुद्योगं क्रोधादग्निरिव ज्वलन् । प्रतापालनतापे च जरासधस्य पार्थिवाः ॥

मित्राणि बांधवाश्चैव सयुक्तास्सुहृदस्तथा । तमेवानुययु सर्वे सैन्यैस्समुदितैर्वृताः ॥

महेष्वासा महावीर्या जरासंधहितैषिणः ॥ इति ।

यश्चैष नानाविधघोररूपैः व्याघ्रोष्ट्रनागेन्द्रमृगाश्ववक्त्रैः ।
भूतैर्वृतो भाति विवृत्तनेत्रैः सोऽसौ सुराणामपि दर्पहंता ॥

यत्रैतदिन्दुप्रतिमं प्रभाति च्छत्रं सितं सूक्ष्मशलाकमग्रयम् ।
अत्रैव रक्षोधिपतिर्महात्मा भूतैर्वृतो रुद्र इवावभाति ॥

असौ किरीटी चलकुण्डलास्यो नागेन्द्रविंध्योपमभीमकायः ।
महेन्द्रवैवस्वतदर्पहन्ता रक्षोऽधिपः सूर्य इवावभाति ॥

प्रत्युवाच ततो रामो विभीषणमरिंदमम् ।
अहो दीप्तो महातेजा रावणो राक्षसेश्वरः ॥

आदित्य इव दुष्प्रेक्ष्यो रश्मिभिर्भाति रावणः ।
सुव्यक्तं लक्षये ह्यस्य रूपं तेजस्समावृतम् ॥

अहो रूपमहो धैर्यमहो सत्त्वमहो द्युतिः ।
अहो राक्षसराजस्य सर्वलक्षणयुक्तता ॥

यद्यधर्मो न बलवान् स्यादयं राक्षसेश्वरः ।
स्यादयं सुरलोकस्य शक्रस्यापि च रक्षिता ॥

देवदानववीराणां वपुर्नैवंविधं भवेत् ।
यादृश राक्षसेन्द्रस्य वपुरेतत्प्रकाशते ॥

त्रैलोक्याधिपतिर्ह्येष यदि न स्याद्विकर्मकृत् ।

अत्र पापिष्ठस्य उत्कृष्टसुकृतफलं त्रैलोक्यराज्यं न भविष्यतीत्युक्तम् । तथा **चोद्योगे** विदुर.—

लोकत्रयप्रभुत्वं हि महदेवं दुरात्मभिः । राज्यं नामेप्सित स्थानं न शक्यमभिरक्षितुम् ॥
इति —

सर्वे पर्वतसंकाशाः सर्वे पर्वतयोधिनः ।
सर्वे दीप्तायुधधरा योधाश्चास्य महौजसः ॥

भाति राक्षसराजोऽसौ प्रदीप्तैर्भीमविक्रमैः ।
भूतैः परिवृतस्तीक्ष्णैर्देहवद्भिरिवांतकः ॥

दिष्ट्यायमद्य पापात्मा मम दृष्टिपथं गतः ।
अद्य क्रोध विमोक्ष्यामि सीताहरणसंभवम् ॥

एवमुक्त्वा ततो रामो धनुरादाय वीर्यवान् ।
लक्ष्मणानुचरस्तस्थौ समुद्धृत्य शरोत्तमम् ॥

ततः स रक्षोधिपतिर्महात्मा रक्षांसि तान्याह महाबलानि ।
द्वारेषु चर्यागृहगोपुरेषु सुनिर्वृतास्तिष्ठत निर्विशंकाः ॥

इहागतं मां सहितं भवद्भिर्वनौकस. छिद्रमिदं विदित्वा ।
शून्यां पुरीं दुष्प्रसहां प्रमथ्य प्रधर्षयेयुः सहसा समेताः ॥

विसर्जयित्वा सहसा समस्तान् गतेषु रक्षस्सु यथानियोगम् ।

अनेन बहिर्निर्गमनप्रसक्तौ विशिष्य पुरगुप्तिरवश्यं कर्तव्येति सूचितम् । अत एव सौभेन द्वारकानिरोधे कृते विशिष्य पुररक्षणं कृतमित्युक्त **वनपर्वणि** —

प्रकृत्या विषमं दुर्ग प्रकृत्या च सुरक्षितम् । प्रकृत्या चायुधोपेतं विशेषेण तथानघ ॥
सुरक्षितं सुगुप्तं च सर्वायुधसमन्वित ॥ इति ।

गतेषु रक्षस्सु यथानियोगमित्यनेन युद्धसमये अवश्यं रक्षणीयं राजानं विहाय तदाज्ञया गमनप्रतिपादनात् तद्रक्षणापेक्षया भृत्यानां तदाज्ञाकरणं उत्कृष्टमिति सूचितम् । अत एव जयद्रथवधार्थं गच्छता अर्जुनेन धर्मराजसरक्षणे नियुक्तोऽपि सात्यकिर्धर्मराजाज्ञया अर्जुनसहायार्थं गत इति प्रतिपादितं **द्रोणपर्वणि**—

स भवान् मयि निक्षिप्तो निक्षेपस्सव्यसाचिना । भारद्वाजाद्भयं नित्यं मन्यमानेन वै प्रभो ॥
कृता चेन्मन्यसे रक्षा स्वस्ति तेस्तु विशापते । अनुयास्यामि बीभत्सुं करिष्ये वचनं तव ॥
यथाहि मे गुरोर्वाक्यं विशिष्टं द्विपदावर ।
तथा तवापि वचनं विशिष्टतरमेव च ॥ इति ।

**व्यदारयद्वानरसागरौघं महाझषः पूर्णमिवार्णवौघम् ।**
**तमापतंतं सहसा समीक्ष्य दीप्तेषुचापं युधि राक्षसेन्द्रम् ॥**

**महत्समुत्पाट्य महीधराग्रं दुद्राव रक्षोऽधिपतिं हरीशः ।**
**तच्छैलशृङ्गं बहुवृक्षसानुं प्रगृह्य चिक्षेप निशाचराय ॥**

**तमापतन्तं सहसा समीक्ष्य बिभेद बाणैः तपनीयपुंखैः ।**
**तस्मिन्प्रवृद्धोन्नमसानुवृक्षे शृङ्गे विकीर्णे पतिते पृथिव्याम् ॥**

**महाहिकल्पं शरमन्तकाभं समादधे राक्षसलोकनाथः ।**
**स तं गृहीत्वाऽनलतुल्यवेगं सविस्फुलिङ्गज्वलनप्रकाशम् ॥**

**बाणं महेन्द्राशनितुल्यवेगं चिक्षेप सुग्रीववधाय रुष्टः ।**
**स सायको रावणबाहुमुक्तः शक्राशनिप्रख्यवपुः शिताग्रः ॥**

**सुग्रीवमासाद्य बिभेद वेगाद्गुहेरिता क्रौंचमिवोग्रशक्तिः ।**
**स सायकार्तो विपरीतचेताः कूजन् पृथिव्यां निपपात वीरः ॥**

**तं प्रेक्ष्य भूमौ पतितं विसंज्ञं नेदुः प्रहृष्टा युधि यातुधानाः ।**
**ततो गवाक्षो गवयः सुदंष्ट्रः स्त्वर्षभो ज्योतिमुखोऽनलश्च ॥**

शैलान् समुद्यम्य विवृद्धकाया प्रदुद्रुवुस्तं प्रति राक्षसेन्द्रम् ।
तेषां प्रहारान् स चकार मोघान् रक्षोऽधिपो बाणगणैः शिताग्रैः ।

तान् वानरेन्द्रानपि बाणजालैर्बिभेद जांबूनदचित्रपुङ्खैः ।
ते वानरेन्द्रास्त्रिदशारिबाणैर्भिन्ना निपेतुर्भुवि भीमरूपाः ॥

ततस्तु तद्वानरसैन्यमुग्रं प्रच्छादयामास स बाणजालैः ।
ते वध्यमानाः पतितोग्रवीरा नानद्यमाना भयशल्यविद्धाः ॥

शाखामृगा रावणसायकार्ता जग्मुः शरण्यं शरणं स्म रामम् ।
ततो महात्मा स धनुर्धनुष्मानादाय रामः सहसा जगाम ॥

तं लक्ष्मण प्रांजलिरभ्युपेत्य उवाच वाक्यं परमार्थरूपम् ।

काममार्य सुपर्याप्तो वधायास्य दुरात्मनः ।
विधमिष्याम्यहं नीचमनुजानीहि मां विभो ॥

तमब्रवीन्महातेजा रामः सत्यपराक्रमः ।
गच्छ यत्नपरश्चापि भव लक्ष्मण संयुगे ॥

रावणो हि महावीर्यो रणेऽद्भुतपराक्रमः ।
त्रैलोक्येनापि संक्रुद्धो दुष्प्रसह्यो न संशयः ॥

तस्य च्छिद्राणि मार्गस्व स्वस्य छिद्राणि गोपय ।
चक्षुषा धनुषा यत्नाद्रक्षात्मानं समाहित. ॥

अनेन परप्रमादं पश्येत् स्वप्रमादं गोपयेदिति सूचितम् । तथाच राजधर्मे —

नास्य छिद्रं परः पश्येत् छिद्रेषु परमन्वियात् । गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥
इति ।

राघवस्य वचः श्रुत्वा संपरिष्वज्य पूज्य च ।
अभिवाद्य ततो रामं ययौ सौमित्रिराहवम् ॥

स रावणं वारणहस्तबाहुर्ददर्श दीप्तोद्यतभीमचापम् ।
प्रच्छादयन्तं शरवृष्टिजालैस्तान् वानरान् भिन्नविकीर्णदेहान् ॥

तमालोक्य महातेजा हनूमान् मारुतात्मजः ।
निवार्य शरजालानि प्रदुद्राव स रावणम् ॥

रथं तस्य समासाद्य भुजमुद्यम्य दक्षिणम् ।

आसयन् रावणं धीमान् हनूमान् वाक्यमब्रवीत् ॥

देवदानवगन्धर्वा यक्षाश्च सह राक्षसैः ।
अवश्यं तु त्वया भग्ना वानरेभ्यस्तु ते भयम् ॥

एष मे दक्षिणो बाहुः पञ्चशाखस्समुद्यतः ।
विधमिष्यति ते देहात् भूतात्मानं चिरोषितम् ॥

श्रुत्वा हनूमतो वाक्यं रावणो भीमविक्रमः ।
संरक्तनयनः क्रोधादिद वचनमब्रवीत् ॥

क्षिप्रं प्रहर निश्शङ्कं स्थिरां कीर्तिमवाप्नुहि ।
ततस्त्वां ज्ञातविक्रान्तं नाशयिष्यामि वानर ॥

रावणस्य वचः श्रुत्वा वायुसूनुर्वचोऽब्रवीत् ।
प्रहतं हि मया पूर्वं अक्षं स्मर सुतं तव ॥

एवमुक्तो महातेजा रावणो राक्षसेश्वरः ।
आजघानानिलसुत तलेनोरसि वीर्यवान् ॥

स तलाभिहतस्तेन चचाल च मुहुर्मुहुः ।
स्थित्वा मुहूर्तं तेजस्वी स्थैर्यं कृत्वा महामतिः ॥

आजघानाभिसंक्रुद्धस्तलेनैवामरद्विषम् ।
ततस्तलेनाभिहतो वानरेण महात्मना ॥

दशग्रीवः समुद्धूतो यथा भूमिचलेऽचलः ।
संग्रामे तं तथा दृष्ट्वा रावणं तलताडितम् ॥

ऋषयो वानराः सिद्धाः नेदुर्देवास्सहासुराः ।
अथाश्वास्य महातेजा रावणो वाक्यमब्रवीत् ॥

साधु वानर वीर्येण श्लाघनीयोऽसि मे रिपुः ।

अनेन प्रतियोद्धारमपि बलाधिकं श्लाघयेदिति सूचितम् । अत एव पराक्रमातिशयवान् फाल्गुनः परमेश्वरेण श्लाघित इति प्रतिपादितं **वनपर्वणि** —

भोभो फाल्गुन तुष्टोऽस्मि कर्मणाऽप्रतिमेन ते ।
शौर्येणानेन धृत्या च क्षत्रियो नास्ति ते समः ॥

समं तेजश्च वीर्यं च मम चाद्य तवानघ ।
प्रीतस्तेहं महाबाहो पश्य मां भरतर्षभ ॥ इति ।

कालिदासोऽपि —

तथाच शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः ।
तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्विधीयते ॥ इति ।

रावणेनैवमुक्तस्तु मारुतिर्वाक्यमब्रवीत् ।
धिगस्तु मम वीर्यं हि यस्त्वं जीवसि रावण ॥

सकृत्तु प्रहरेदानीं दुर्बुद्धे किं विकत्थसे ।
ततस्त्वां मामको मुष्टिर्नयिष्यति यमक्षयम् ॥

ततो मारुतिवाक्येन क्रोधस्तस्य तदाऽज्वलत् ।
संवृत्तनयनो यत्नात् मुष्टिमुद्यम्य दक्षिणम् ॥

पातयामास वेगेन वानरोरसि वीर्यवान् ।
हनूमान् वक्षसि व्यूढे संचचाल हतः पुनः ॥

विह्वलं तं तथा दृष्ट्वा हनूमंतं महाबलः ।
रथेनातिरथः शीघ्रं नीलं प्रति समभ्यगात् ॥

राक्षसानामधिपतिर्दशग्रीवः प्रतापवान् ।
पन्नगप्रतिमैर्भीमैः परमर्मातिभेदिभिः ॥

शरैरादीपयामास नीलं हरिचमूपतिः ।
करेणैकेन शैलाग्रं रक्षोऽधिपतयेऽसृजत् ॥

हनूमानपि तेजस्वी समाश्वस्तो महामनाः ।
विप्रेक्षमाणो युद्धेप्सुः सरोषमिदमब्रवीत् ॥

नीलेन सह संयुक्तं रावणं राक्षसेश्वरम् ।
अन्येन युध्यमानस्य न युक्तमभिधावनम् ॥

अनेन अन्येन युध्यमानं युद्धे न हन्यादिति सूचितम् । **तथाच मनुः —**

नायुध्यमानं पश्यंतं न परेण समागतम् ॥ इति ।

**द्रोणपर्वणि —**

न च हन्यात्स्थलारूढं न क्लीबं न कृताञ्जलिम् । न भीतं न परावृत्तं न परेण समागतम् ॥
इति ।

रावणोऽपि महातेजास्तच्छृङ्गं सप्तभिश्शरैः ।
आजघान सुतीक्ष्णाग्रैस्तद्विकीर्णं पपात ह ॥

तद्विकीर्णं गिरेः शृङ्गं दृष्ट्वा हरिचमूपतिः ।
कालाग्निरिव जज्वाल क्रोधेन परवीरहा ॥

सोऽश्वकर्णान् धवान् सालान् चूतांश्चापि सुपुष्पितान् ।
अन्यांश्च विविधान् वृक्षान् नीलश्चिच्छेद संयुगे ॥

स तान् वृक्षान्समासाद्य प्रतिचिच्छेद रावणः ।
अभ्यवर्षत्सुघोरेण शरवर्षेण पावकिम् ॥

अभिवृष्टः शरौघेण मेघेनेव महाचलः ।
ह्रस्वं कृत्वा तदा रूपं ध्वजाग्रे निपपात ह ॥

पावकात्मजमालोक्य ध्वजाग्रे समवस्थितम् ।
जज्वाल रावणः क्रोधात् ततो नीलो ननाद च ॥

ध्वजाग्रे धनुषश्चाग्रे किरीटाग्रे च तं हरिम् ।
लक्ष्मणोऽथ हनूमांश्च दृष्ट्वा रामश्च विस्मिताः ॥

रावणोऽपि महातेजाः कपिलाघवविस्मितः ।
अस्त्रमाहारयामास दीप्तमाग्नेयमद्भुतम् ॥

ततस्ते चुक्रुशुर्हृष्टा लब्धलक्षाः प्लवङ्गमाः ।
नीललाघवसंभ्रान्तं दृष्ट्वा रावणमाहवे ॥

वानराणां च नादेन संरब्धो रावणस्तदा ।
संभ्रमाविष्टहृदयो न किंचित्प्रत्यपद्यत ॥

आग्नेयेनाथ संयुक्तं गृहीत्वा रावणः शरम् ।
ध्वजशीर्षस्थितं नीलमुदैक्षत निशाचरः ॥

ततोऽब्रवीन्महातेजा रावणो राक्षसेश्वरः ।
कपे लाघवसंयुक्तो मायया परयानया ॥

जीवितं खलु रक्षस्व यदि शक्नोषि वानर ।

तानि तान्यात्मरूपाणि सृजसि त्वमनेकशः ॥

तथापि त्वां मया मुक्तः सायकोऽस्त्रप्रयोजितः ।
जीवितं परिरक्षस्व जीविताङ्कंशयिष्यति ॥

एवमुक्त्वा महाबाहू रावणो राक्षसेश्वरः ।
संधाय बाणमस्त्रेण चमूपतिमताडयत् ॥

सोऽस्त्रयुक्तेन बाणेन नीलो वक्षसि ताडितः ।
निर्दह्यमान. सहसा निपपात महीतले ॥

पितृमाहात्म्यसंयोगादात्मनश्चापि तेजसा ।
जानुभ्यामपतद्भूमौ न च प्राणैर्वियुज्यते ॥

विसंज्ञं वानरं दृष्ट्वा दशग्रीवो रणोत्सुकः ।
रथेनांबुदनादेन सौमित्रिमभिदुद्रुवे ॥

आसाद्य रणमध्ये तु वारयित्वा स्थितो ज्वलन् ।
धनुर्विस्फारयामास कम्पयन्निव मेदिनीम् ॥

तमाह सौमित्रिरदीनसत्वो विस्फारयन्तं धनुरप्रमेयम् ।
अभ्येहि मामेव निशाचरेन्द्र न वानरांस्त्वं प्रतियोद्धुमर्हसि ॥

स तस्य वाक्यं प्रतिपूर्णघोषं ज्याशब्दमुग्रं च निशम्य राजा ।
आसाद्य सौमित्रिमवस्थितं तु कोपान्वितं वाक्यमुवाच रक्षः ॥

दिष्ट्यासि मे राघव दृष्टिमार्गं प्राप्तोंतगामी विपरीतबुद्धिः ।
अस्मिन् क्षणे यास्यसि मृत्युदेश संसाद्यमानो मम बाणजालैः ॥

तमाह सौमित्रिरविस्मयानो गर्जंतमुद्वृत्तसिताग्रदंष्ट्रम् ।
राजन्न गर्जंति महाप्रभावा विकत्थसे पापकृतां वरिष्ठ ॥

अनेन शूरा विकत्थनं न कुर्वतीति सूचितम् । तथाच राजधर्मे—

प्रियं ब्रूयादकृपणः शूरस्स्यादविकत्थनः । इति ।

जानामि वीर्यं तव राक्षसेन्द्र बलं प्रतापं च पराक्रमं च ।
अवस्थितोऽहं शरचापपाणिरागच्छ किं मोघविकत्थनेन ॥

स एवमुक्तः कुपित ससर्ज रक्षोऽधिपः सप्त शरान् सुपुंखान् ।
तान् लक्ष्मणः कांचनचित्रपुंखैः चिच्छेद बाणैर्निशिताग्रधारैः ॥

तान् प्रेक्षमाणः सहसा निकृत्तान् निकृत्तभोगानिव पन्नगेन्द्रान् ।
लंकेश्वरः क्रोधवशं जगाम ससर्ज चान्यान् निशितान् पृषत्कान् ॥

स बाणवर्षं तु ववर्ष तीव्रं रामानुजः कार्मुकसंप्रयुक्तम् ।
क्षुरार्धचन्द्रोत्तमकर्णिभल्लैः शरांश्च चिच्छेद न चुक्षुभे च ॥

स बाणजालान्यथ तानि तानि मोघानि पश्यंस्त्रिदशारिराजः ।
विसिष्मिये लक्ष्मणलाघवेन पुनश्च बाणान् निशितान् मुमोच ॥

स लक्ष्मणश्चाशु शरान् शिताग्रान् महेन्द्रवज्राशनितुल्यवेगान् ।
संधाय चापे ज्वलनप्रकाशान् ससर्ज रक्षोऽधिपतेर्वधाय ॥

स तान् प्रचिच्छेद हि राक्षसेन्द्रः छित्त्वा च तान् लक्ष्मणमाजघान ।
शरेण कालाग्निसमप्रभेण स्वयंभुदत्तेन ललाटदेशे ॥

स लक्ष्मणो रावणसायकार्तः चचाल चापं शिथिलं प्रगृह्य ।
पुनश्च संज्ञां प्रतिलभ्य कृच्छ्रात् चिच्छेद चापं त्रिदशेन्द्रशत्रोः ॥

निकृत्तचापं त्रिभिराजघान बाणैस्तदा दाशरथिः शिताग्रैः ।
स सायकार्तः विचचाल राजा कृच्छ्राच्च संज्ञां पुनराससाद ॥

स कृत्तचापः शरताडितश्च मेदार्द्रगात्रो रुधिरावसिक्तः ।
जग्राह शक्तिं समुदग्रशक्तिः स्वयभुदत्तां युधि देवशत्रुः ॥

स तां सधूमानलसंनिकाशां वित्रासनीं वानरराक्षसानाम् ।
चिक्षेप शक्तिं तरसा ज्वलन्तीं सौमित्रये राक्षसराष्ट्रनाथः ॥

तामापतन्तीं भरतानुजोऽस्त्रैर्जघान बाणैश्च हुताग्निकल्पैः ।
तथापि सा तस्य विवेश शक्तिः भुजान्तरं दाशरथेर्विशालम् ॥

स शक्तिमान् शक्तिसमाहतः सन् मुहुः प्रजज्वाल रघुप्रवीरः ।
तं विह्वलन्तं सहसाऽभ्युपेत्य जग्राह राजा तरसा भुजाभ्याम् ॥

हिमवान् मन्दरो मेरुः त्रैलोक्यं वामरैस्सह ।
शक्यं भुजाभ्यामुद्धर्तुं न संख्ये भरतानुजः ॥

शक्त्या ब्राह्मया हि सौमित्रिस्ताडितस्तु स्तनान्तरे ।
विष्णोरचिन्त्यं स्वं भागमात्मानं प्रत्यनुस्मरन् ॥

ततो दानवदर्पघ्नं सौमित्रिं देवकण्टकः ।
तं पीडयित्वा बाहुभ्यां न प्रभुर्लङ्घनेऽभवत् ॥

अथैनं वैष्णवं भागं मानुषं देहमास्थितम् ।
अथ वायुसुतः क्रोधात् रावणं समभिद्रवत् ।
आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना ॥

तेन मुष्टिप्रहारेण रावणो राक्षसेश्वरः ।
जानुभ्यामपतद्भूमौ चचाल च पपात च ॥

आस्यैः स नेत्रश्रवणैः ववाम रुधिरं बहु ।
विघूर्णमानो निश्चेष्टो रथोपस्थ उपाविशत् ॥

विसंज्ञो मूर्छितश्चासीत् नच स्थानं समालभत् ।
विसंज्ञं रावणं दृष्ट्वा समरे भीमविक्रमम् ॥

ऋषयो वानराश्चैव नेदुर्देवास्सहासुराः ।
हनूमानपि तेजस्वी लक्ष्मणं रावणार्दितम् ॥

आनयद्राघवाभ्याशं बाहुभ्यां परिगृह्य तम् ।
वायुसूनोस्सुहृत्त्वेन भक्त्या परमयाऽपि सः ॥

शत्रूणामप्रकंप्योऽपि लघुत्वमगमत् कपेः ।

अनेन भक्तानां सुलभः परमेश्वर इत्युक्तम् । तथा च **गीतायां —**

अनन्यचेताः सततं यो मां स्मरति नित्यशः । तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥

इति । विष्णुपुराणेऽपि —

भक्तानुकम्पी भगवान् आत्मसंस्थापरो विभुः ॥ इति ।

तं समुत्सृज्य सा शक्तिः सौमित्रिं युधि दुर्जयम् ।
रावणस्य रथे तस्मिन् स्थानं पुनरुपागता ॥

रावणोऽपि महातेजा प्राप्य संज्ञां महाहवे ।
आददे निशितान् बाणान् जग्राह च महद्धनुः ॥

आश्वस्तश्च विशल्यश्च लक्ष्मणः शत्रुसूदनः ।
विष्णोर्भागममीमांस्यमात्मानं प्रत्यनुस्मरन् ॥

निपातितमहावीरां वानराणां महाचमूम् ।
राघवस्तु रणे दृष्ट्वा रावणं समभिद्रवत् ॥

अथैनमुपसंगम्य हनुमान् वाक्यमब्रवीत् ।
मम पृष्ठं समारुह्य राक्षसं शास्तुमर्हसि ॥

तच्छ्रुत्वा राघवो वाक्यं वायुपुत्रेण भाषितम् ।
आरोहत् सहसा शूरो बलवन्तं महाकपिम् ॥

रथस्थं रावणं संख्ये ददर्श मनुजाधिपः ।
तमालोक्य महातेजाः प्रदुद्राव स राघवः ॥

वैरोचनिमिव क्रुद्धो विष्णुरभ्युद्यतायुधः ।
ज्याशब्दमकरोत्तीव्रं वज्रनिष्पेषनिस्वनम् ॥

गिरा गम्भीरया रामो राक्षसेन्द्रमुवाच ह ।
तिष्ठ तिष्ठ मम त्वं हि कृत्वा विप्रियमीदृशम् ॥

क्व नु राक्षसशार्दूल गतो मोक्षमवाप्स्यसि ।

अनेन बलवद्विरोधिनः शरणं क्वापि न भवतीति सूचितम् । अत एव धर्मराज-विरोधिनः जयद्रथस्य शरणप्रदाता कोऽपि नास्तीत्युक्तम् वनपर्वणि द्रौपदीप्रमाथे —

अहं तु मन्ये तव नास्ति कश्चित् एतादृशे क्षत्रियसन्निवेशे ।
यस्त्वद्य पातालमुखे पतन्तं पाणौ गृहीत्वा प्रतिसंहरेत्त्वाम् ॥ इति ।

यदीन्द्रवैवस्वतभास्करान् वा स्वयंभुवैश्वानरशंकरान् वा ।
गमिष्यसि त्वं दशधा दिशो वा तथापि मे नाद्य गतो विमोक्ष्यसे ॥

यश्चैष शक्त्याऽभिहतस्त्वयाद्य इच्छन् विषादं सहसाभ्युपेतः ।
स एष रक्षोगणराजमृत्युः सपुत्रदारस्य तवाद्य मृत्युः ॥

एतेन चात्यद्भुतदर्शनानि शरैर्जनस्थानकृतालयानि ।
चतुर्दशान्यात्तवरायुधानि रक्षःसहस्राणि निषूदितानि ॥

अत्र स्वकृतोऽपि जनस्थानवधः भ्रातृकृतप्रतिपादनं भ्रातुः स्वाभेदाभिप्रायेण। अभेदश्च 'भ्राता स्वा मूर्तिरात्मनः' इत्यादिनोक्तः।

राघवस्य वचः श्रुत्वा राक्षसेन्द्रो महाकपिम्।
वायुपुत्रं महावीर्यं वहन्तं राघवं रणे ॥

आजघान शरैस्तीक्ष्णैः कालानलशिखोपमैः।
राक्षसेनाहवे तस्य ताडितस्यापि सायकैः ॥

स्वभावतेजोयुक्तस्य भूयस्तेजो व्यवर्धत।
ततो रामो महातेजा रावणेन कृतव्रणम् ॥

दृष्ट्वा प्लवगशार्दूलं कोपस्य वशमेयिवान्।

अनेन स्वपीडनादपि स्वकीयस्य पीडनं महापुरुषाणा दुस्सहमिति सूचितम्। अत एवानुविदेन गदया ताडितं कृष्णमभिवीक्ष्य कुपितहृदयोऽर्जुनः अनुविंदं जघानेति प्रतिपादितं द्रोणपर्वणि—

गदया रथिना श्रेष्ठो नृत्यन्निव महारथः। अनुविदस्तु गदया ललाटे मधुसूदनम् ॥
स्पृष्ट्वा नाकंपयत्कृष्ण. मैनाकमिव पर्वतम्। तस्यार्जुन शरैष्षड्भिः ग्रीवापादौ शिरोभुजौ ॥
निचकर्त स सछिन्नः पपाताद्रिचयो यथा ॥ इति।

तस्याभिसंक्रम्य रथं सचक्रं साश्वध्वजछत्रमहापताकम्।
ससारथिं साशनितुल्यखड्गं रामः प्रचिच्छेद शरैः सुपुंखैः ॥

अथेन्द्रशत्रुं तरसा जघान बाणेन वज्राशनिसंनिभेन।
भुजान्तरे व्यूढसुजातरूपे वज्रेण मेरुं भगवानिवेन्द्रः ॥

यो वज्रपाताशनिसंनिपातान्न चुक्षुभे नापि चचाल राजा।
स रामबाणाभिहतो भृशार्तः चचाल चापं च मुमोच वीरः ॥

तं विह्वलंतं प्रसमीक्ष्य राम· समाददे दीप्तमथार्धचन्द्रम्।
तेनार्कवर्ण सहसा किरीटं चिच्छेद रक्षोऽधिपतेर्महात्मा ॥

तं निर्विषाशीविषसंनिकाश शीतार्चिषं सूर्यमिवाप्रकाशम्।
गतश्रियं कृत्तकिरीटकूटमुवाच रामो युधि राक्षसेन्द्रम् ॥

**कृतं त्वया कर्म महत्सुभीमं हतप्रवीरश्च कृतस्त्वयाऽहम्।**
**तस्मात्परिश्रान्त इव व्यवस्य न त्वां शरैर्मृत्युवशं नयामि॥**

अनेन परिश्रांतो न हंतव्य इति सूचितम्। तथा च **राजधर्मे**—

निष्प्राणो नाभिहन्तव्यो नानपत्यः कथंचन। भग्नशस्त्रो विपन्नश्च छिन्नज्यो हतवाहनः॥ इति

**गच्छानुजानामि रणार्दितस्त्वं प्रविश्य रात्रिंचरराज लङ्काम्।**
**आश्वास्य निर्याहि रथी च धन्वी ततो बलं द्रक्ष्यसि मे रथस्थः॥**

अनेन युद्धेन विह्वलो रिपुः समाश्वस्त एव हंतव्य इति सूचितम्। तथा च **कालिदासः**—

पूर्वं प्रहर्ता निजघान भूयः प्रतिप्रहाराक्षममश्वमादी।
तुरङ्गमस्कन्धनिषण्णदेहं प्रत्याश्वसतं रिपुमाचकांक्ष॥ इति।

अत्र पराजितस्यापि रावणस्य 'रात्रिचरराज कृतं त्वया कर्म महत्सुभीमम्' इति संमानकरणात् प्रहरणसमयेऽपि रिपोः प्रियमेव वक्तव्यमिति सूचितम्। तथाच **राजधर्मे**—

प्रहरिष्यन् प्रियं ब्रूयात्प्रहरन्नपि भारत। प्रहृत्य च प्रियं ब्रूयाच्छोचन्निव रुदन्निव॥ इति।

नन्वत्र रामेण किरीटभङ्गादिपूर्वकं पराजितं विधाय रावणो विमुक्त इति प्रतिपादितं, तदेतन्नोपपद्यते 'मम चक्षुष्पथं प्राप्य न जीवन् प्रतियास्यसि' इति स्ववचनविरोधात्। हंतव्यस्य हस्तगतस्य शत्रोः वधार्हस्य धर्म्यत्वेन उपेक्षायोगाच्च। तथा च **कर्णपर्वणि** अर्जुनं प्रति कृष्णः—

नैवाहितानां सततं विपश्चितः क्षणं प्रतीच्छंत्यपि दुर्बलीयसाम्।
विशेषतोऽरीन् व्यसनेषु पंडितो निहत्य धर्मं च यशश्च विन्दति॥ इति।

**राजधर्मेऽपि**—

न शत्रुरंकमापन्नो विमोक्तव्यः कथंचन। इति।
मंत्रिणा भोग्यतामेति दीर्घकार्याकुलो नृप।

इति नीत्यनुसारेण युद्धविलंबकरणस्य निंदितत्वाच्च। तस्माद्रामकृतं जीवतो रावणस्य मोक्षणमयुक्तमिवेति चेत् उच्यते—लक्ष्मणादिभिर्युद्धेन परिश्रांतस्य रावणस्य वधानर्हतया जीवतो मोक्षणमेवोचितं। श्रान्तस्य वधानर्हत्वं च **मानवे**—

न युद्धयेद्व्यसनं प्राप्तं नार्तं नतु परिक्षतम्। इति।

किं च एकाकिनस्समागतस्य रावणस्य इदानीमेव हनने अनंतरमवशिष्टानां तत्कुलीनानां हननं न स्यात्। तथा सति

हंतास्मि त्वां सहामात्यं सपुत्रज्ञातिबान्धवम्।

इति स्वोक्तिविरोधः। अपिच झटिति वधे पुत्रभ्रातृबन्ध्वादिवधप्रयुक्तदुःखानुभवोऽपि रावणस्य न स्यात्। भवितव्यं च तस्य मरणात्पूर्वं स्वकृतपापानुसारेण पुत्रज्ञातिबंधुमरण-प्रयुक्तक्लेशानुभवेन। अत एव तादृशस्य दुर्योधनस्य निखिलज्ञातिवधप्रयुक्तदुःखानुभवानं-तरमेव वधो जात इति प्रतिपादितम् गदापर्वणि—

भग्नसक्थो नृपो राजन् पांसुना सोवकुंठितः। केशान्नियम्य यत्नेन निःश्वसन्नुरगो यथा॥
संरब्धाश्रुपरीताभ्यां नेत्राभ्यामपि वीक्ष्य माम्। गर्हयन् पाण्डवश्रेष्ठं निःश्वस्येदमथाब्रवीत्॥
एकादशचमूभर्ता सोऽहमेतां दशां गतः। किंनु चित्रमतस्त्वद्य भग्नसक्थस्य यन्मम॥
क्रुद्धेन भीमसेनेन पादेन मृदितं शिरः। सोऽहं द्रोणं स्वर्गगतं कर्णं शल्यावुभौ तथा॥
वृषसेनं महावीर्यं भगदत्तं च पार्थिवम्। सौमदत्तिं महेष्वासं सैंधवं च जयद्रथम्॥
दुःशासनपुरोगांश्च भ्रातॄनात्मसमांस्तथा। दौश्शासनिं च विक्रान्तं लक्ष्मणं चात्मजावुभौ॥
एतांश्चान्यांश्च सुबहून् मदीयांश्च सहस्रशः। पृष्ठतोऽनुगमिष्यामि सार्थहीन इवाध्वगः॥

कथं भ्रातॄन् हतान् श्रुत्वा भर्तारं च स्वसा मम।
रोरूयमाणा दुःखार्ता दुश्शला सा भविष्यति॥

स्नुषाभिः प्रस्नुषाभिश्च वृद्धो राजा पिता मम। गांधारीसहितश्चैव कां गतिं प्रतिपत्स्यति॥
नूनं लक्ष्मणमाताऽपि हतपुत्रा हतेश्वरा। विलापं यास्यति क्षिप्रं कल्याणी पृथुलोचना॥
एतावदुक्त्वा वचनं बाष्पव्याकुललोचनः। तूष्णीं बभूव राजेन्द्र राजासौ विह्वलोऽभवत्॥
इति। सौप्तिकेऽपि—

तं भग्नसक्थं राजेन्द्र कृच्छ्रप्राणमचेतसम्। वमन्तं रुधिरं वक्त्रात्पतितं वसुधातले॥
वृत्तं समन्ताद्बहुभिः श्वापदैर्घोरदर्शनैः। सालावृकगणैश्चैव भक्षयिष्यद्भिरंतिकात्॥
निवारयन्तं कृच्छ्रात्तान् श्वापदांश्च चिखादिषून्। निर्वेष्टमानं मह्यां च सुभृशं सानुवेदनम्॥
तत्र तस्मिन् त्रयो वीराः शोकार्ताः पर्यवारयन्। घोरं मूर्धाभिषिक्तानामग्रेजातं परंतपः॥

स हतो ग्रसते पांसून् पश्य कालस्य पर्ययः। प्राणानुदसृजद्वीरः सुहृदा दुःखमुत्सृजन्॥

इति। नचैवं मम चक्षुष्पथं प्राप्येत्यादिवचनविरोध इति वाच्यम्। परिश्रान्तहननस्य धर्मशास्त्रनिषिद्धत्वेन पूर्वोक्तवचननिर्वाह्यतया मरणतुल्यस्य मकुटभङ्गादिना पराजयस्य कथनात्। मरणतुल्यत्वं च उद्योगे—

पराजयश्च मरणान्मन्ये नैव विशिष्यते॥ इति।

तथाच पूर्वोक्तं 'मम चक्षुष्पथं' इति वचनं निर्वोढुं 'श्रान्तो न हंतव्यः' इति शास्त्रं चानुवर्तितुं मकुटभङ्गादिना पराजयस्य मरणतुल्यत्वं जानता रामेण कृतं जीवतो रावणस्य मोक्षणं युक्तमेव।

तस्मिन् प्रविष्टे रजनीचरेन्द्रे महाबले दानवदेवशत्रौ।
हरीन् विशल्यान् सह लक्ष्मणेन चकार रामः परमाहवाग्रे॥

स एवमुक्तो हतदर्पहर्षो निकृत्तचापः स हताश्वसूतः।
शरार्दितः कृत्तमहाकिरीटो विवेश लङ्कां सहसा स राजा॥

तस्मिन् प्रभिन्ने त्रिदशेन्द्रशत्रौ सुरासुरा भूतगणा दिशश्च।
ससागरास्सर्षिमहोरगाश्च तथैव भूम्यम्बुचराश्च हृष्टाः॥

षष्टितमे—

स प्रविश्य पुरीं लङ्कां रामबाणभयार्दितः।
भग्नदर्पस्तदा राजा बभूव व्यथितेंद्रियः॥

मातङ्ग इव सिंहेन गरुडेनेव पन्नगः।
अभिभूतोऽभवद्राजा राघवेण महात्मना॥

ब्रह्मदण्डप्रकाशानां विद्युत्सदृशवर्चसाम्।
स्मरन् राघवबाणानां विव्यथे राक्षसेश्वरः॥

अथ कांचनमयमासनमासीनो दशाननः सचिवानेवमवोचत्।

सर्वं तत्खलु वै मोघं यत्तप्तं परमं तपः।
यत्समानो महेन्द्रेण मानुषेणास्मि निर्जितः॥

अनेन पापिष्ठस्य पूर्वकृतं महदपि तपो नश्यतीति सूचितम्। अत एव कर्णस्याधर्मेण तपोनाश उक्तो भीष्मेण उद्योगे—

यदेव रामे भगवत्यनिन्दिते ब्रह्म ब्रुवाणः कृतवांस्तदैव ।
तदैव धर्मश्च तपश्च नष्टं वैकर्तनस्याधमपूरुषस्य ॥ इति ।

तथा महेन्द्रसदृशस्य मम मानुषात्पराजयः प्राप्त इति क्लेशकरणात् उत्कृष्टस्य निकृष्टेन पराजयः अतिक्लेशाधायक इति सूचितम् । अत एव निकृष्टपराजयेन अर्जुनस्य क्लेश उक्तो विष्णुपुराणे —

स्त्रीसहस्राण्यनेकानि मन्नाथानि महामुने । यततो मम नीतानि दस्युभिर्लगुलायुधैः ॥
आनीयमानमाभीरैः कृष्ण कृष्णावरोधनम् । हृतधीष्टप्रहरणैः परिभूय बलं मम ॥
निश्रीकता न मे चित्तं यज्जीवामि तदद्भुतम् ।
नीचावमानपंकाङ्को निर्लज्जोऽस्मि पितामह ॥ इति ।

इदं तद्ब्रह्मणो घोरं वाक्यं मामभ्युपस्थितम् ।
मनुष्येभ्यो विजानीहि भय न इति तत्तथा ॥

देवदानवगन्धर्वैर्यक्षराक्षसपन्नगैः ।
अवध्यत्वं मया प्राप्तं मनुष्येभ्यो न याचितम् ॥

विदितं मानुषं मन्ये रामं दशरथात्मजम् ।
इक्ष्वाकुकुलनाथेन अनरण्येन यत्पुरा ॥

उत्पत्स्यति हि मद्वंशे पुरुषो राक्षसाधम ।
यस्त्वां सपुत्रं सामात्यं सबलं साश्वसारथिम् ॥

निहनिष्यति संग्रामे त्वां कुलाधम दुर्मते ।
शप्तोऽहं वेदवत्या च या मया धर्षिता पुरा ॥

सेयं सीता महाभागा जाता जनकनन्दिनी ।
उमा नन्दीश्वरश्चापि रंभा वरुणकन्यका ॥

यथोक्तास्तपसा प्राप्तं न मिथ्या‌ऋषिभाषितम् ।

अनेन अनुकूलकाले स्वापराधप्राप्तशापादिकं न विचारयति परिपाकसमये च स्मरतीति सूचितम् । अत एवार्जुनाभिहतस्य कर्णस्य स्वकृतपराजयहेतुमकृत्यस्मरणं प्रतिपादितम् कर्णपर्वणि —

पराभवो मातृगुरुद्विजेश्वरैः समुद्रपर्यंतधरामहाद्रिभिः ।
कृतो ममायं न हि नस्त्वया कृतो न तेऽभिमानो रचिता च नो भृशम् ॥ इति ।

न मिथ्या ऋषिभाषितमित्यनेन तपस्विना वचनं अन्यथा न भवतीत्युक्तम्। तथा **चादिपर्वणि** शमिकं प्रति तत्पुत्रशृङ्गिऋषेर्वचनम् —

प्रियं वाप्यप्रियं वा नो वागुक्ता न मृषा भवेत्। नैवान्यथेदं भविता पितरेष ब्रवीमि ते ॥

शमीकः —

जानन्नुग्रप्रभावं त्वा तात सत्यगिरं तथा।
नानृतं चोक्तपूर्वं ते नैतन्मिथ्या भविष्यति ॥ इति।

**एतदेवाप्युपागम्य यत्नं कर्तुमिहार्हथ।**
**राक्षसाश्चापि तिष्ठंतु चर्यागोपुरमूर्धसु ॥**

**द्वारेषु यत्नः क्रियतां प्राकारश्चाधिरुह्यताम्।**
**निद्रावशं समाविष्टः कुम्भकर्णो विबोध्यताम् ॥**

अनेन मूर्खः बलवति अविचारेण स्वकृतस्यापराधस्य परिपाकसमये स्वसंरक्षणायान्यान् प्रार्थयते इति सूचितम्। अत एव अविचार्यकृताभिमन्युवधेनार्जुनाद्भीतो जयद्रथः स्वसंरक्षणाय तत्रत्यान् राज्ञः शरणं गत इति प्रतिपादितम् **द्रोणपर्वणि**—

ततः सैंधवको राजा क्षुद्रस्तात जयद्रथः। अभिमन्योः पितुर्भीतः सव्रीडमिदमब्रवीत् ॥

तत्स्वस्ति वोऽस्तु यास्यामि स्वगृहं जीवितेप्सया।
अथवास्त्रप्रतिबलं त्रात मा क्षत्रियर्षभाः। पार्थेन प्रार्थितं वीरास्ते संदत्त ममाभयम् ॥
द्रोण दुर्योधन कृपाः कर्णमद्रेश बाह्लिकाः। दुःशासनादयः शक्तास्त्रातुं मामंतकार्दितम् ॥
किमंग पुनरेकेन फाल्गुनेन जिघांसता। त्रायंतु भवतो मां समस्ताः पतयः क्षितेः ॥ इति।

**सहि संख्ये महाबाहुः ककुदं सर्वरक्षसाम्।**
**वानरान् राजपुत्रौ च क्षिप्रमेव वधिष्यति ॥**

अनेन दुर्बुद्धेरसाध्येप्याशा भविष्यतीति सूचितम्। अत एव दुर्योधनस्य तादृशी प्रत्याशोक्ता **शल्यपर्वणि**—

हते भीष्मे हते द्रोणे कर्णे च विनिपातिते।
आशा बलवती राजन् शल्यो जेष्यति पाण्डवान् ॥ इति।

**किं करिष्याम्यहं तेन शक्रतुल्यबलेन हि।**
**ईदृशे व्यसने प्राप्ते यो न साह्याय कल्पते ॥**

अनेन आपदि कार्यकर्ता श्रेष्ठ इति सूचितम् । तथा च **कामन्दके**—

तत. परतरो नास्ति य आपत्रूपतिष्ठते । इति ।

तेऽपि च तद्रक्षोवरभक्षणयोग्यभक्ष्यभोज्यादीनुपादाय तद्गुहामवगाह्य लघूपायै-स्तत्प्रबोधनासमर्था गिरिवरनिभगजराजयूथपादसमर्दनतः प्राबोधयन् । सोऽपि यूपाक्षवचनेन विदितसर्ववृत्तान्तमित्थमवोचत्—

**सर्वमद्यैव यूपाक्ष हरिसैन्यं सलक्ष्मणम् ।**
**राघवं च रणे हत्वा पश्चाद्द्रक्ष्यामि रावणम् ॥**

अनेन कार्यार्थमाहूतास्शूराः तत्कार्यं साधयित्वैव तद्दर्शनं कुर्वन्तीति सूचितम् । तथा च प्राचीनाः—

आज्ञामवाप्य नृपतेर्द्विषता निपाते निर्वर्तिता सपदि लब्धमुखप्रसादः ।
उच्चै.प्रमोदमनुमोदिततदर्शनस्सन् धन्यो नमस्यति पदाम्बुरुहं प्रभूणाम् ॥ इति—

तदाकर्ण्य यूपाक्षः–

**रावणस्य वचः श्रुत्वा गुणदोषौ विमृश्य च ।**
**पश्चादपि महाबाहो शत्रून् युधि विजेष्यसि ॥**

इत्यवोचत् ।

अनेन राजकार्यापेक्षया राजाज्ञाकरणं अधिकमित्युक्तम् । एतच्च प्राक् प्रपञ्चितम्–

**कुम्भकर्णस्तु दुर्धर्षो भ्रातुराज्ञाय शासनम् ।**
**तथेत्युक्त्वा महाबाहुश्शयनादुत्पपात ह ॥**

ततो दशवदनसदनगमनकामनया पुरतः परतः पार्श्वतश्च निशाचरैरावृतो गुहा-मुखान्निस्ससार ।

**तमद्रिशृङ्गप्रतिमं किरीटिनं स्पृशन्तमादित्यमिवात्मतेजसा ।**
**वनौकसः प्रेक्ष्य विवृत्तमद्भुतं भयार्दिता दुद्रुविरे ततस्ततः ॥**

**एकषष्टितमे**—

ततः सर्वलोकभयङ्करं महाकायं कुम्भकर्णमवलोक्य सविस्मयो रामो विभीषण-मपृच्छत्—

**कोऽसौ पर्वतसंकाशः किरीटी हरिलोचनः ।**
**लङ्कायां लक्ष्यते वीरः सविद्युदिव तोयदः ॥ इति ॥**

स पृष्टो राजपुत्रेण रामेणाक्लिष्टकर्मणा।
विभीषणो महाप्राज्ञः काकुत्स्थमिदमब्रवीत्॥

येन वैवस्वतो युद्धे वासवश्च पराजितः।
सएष विश्रवसः पुत्रः कुम्भकर्णः प्रतापवान्॥

अस्य प्रमाणसदृशो राक्षसोऽन्यो न विद्यते।
एतेन देवा युधि दानवाश्च यक्षा भुजङ्गाः पिशिताशनाश्च।
गन्धर्वविद्याधरकिंनराश्च सहस्रशो राघव संप्रभग्नाः॥

शूलपाणिं विरूपाक्षं कुम्भकर्णं महाबलम्।
हन्तुं न शेकुस्त्रिदशाः कालोऽयमिति मोहिताः॥

प्रकृत्या ह्येष तेजस्वी कुम्भकर्णो महाबलः।
अन्येषां राक्षसेन्द्राणां वरदानकृतं बलम्॥

एतेन जातमात्रेण क्षुधार्तेन महात्मना।
भक्षितानि सहस्राणि सत्त्वानां सुबहून्यपि॥

तेषु संभक्ष्यमाणेषु प्रजा भयनिपीडिताः।
यान्तिस्म शरणं शक्रं तमप्यर्थं न्यवेदयन्॥

स कुम्भकर्णं कुपितो महेन्द्रो जघान वज्रेण शितेन वज्री।
स शक्रवज्राभिहतो महात्मा चचाल कोपाच्च भृशं ननाद॥

तस्य नानद्यमानस्य कुम्भकर्णस्य धीमतः।
श्रुत्वा निनादं वित्रस्ता भूयो भूमिर्वितत्रसे॥

ततः कोपान्महेन्द्रस्य कुम्भकर्णो महाबलः।
विकृष्यैरावताद्दन्तं जघानोरसि वासवम्॥

कुम्भकर्णप्रहारार्तो विजज्वाल स वासवः।
ततो विषेदुस्सहसा देवब्रह्मर्षिदानवाः॥

प्रजाभिस्सह शक्रश्च ययौ स्थानं स्वयंभुवः।
कुम्भकर्णस्य दौरात्म्यं शशंसुस्ते प्रजापतेः॥

प्रजानां भक्षणं चापि देवानां चापि धर्षणम्।
आश्रमध्वंसनं चापि परस्त्रीहरणं भृशम्॥

एवं प्रजा यदि त्वेष भक्षयिष्यति नित्यशः ।
अचिरेणैव कालेन शून्यो लोको भविष्यति ॥

वासवस्य वचः श्रुत्वा सर्वलोकपितामहः ।
रक्षांस्यावाहयामास कुंभकर्णं ददर्श ह ॥

कुम्भकर्णं समीक्ष्यैव वितत्रास प्रजापतिः ।
दृष्ट्वाप्याश्वास्य चैवैनं स्वयंभूरिदमब्रवीत् ॥

ध्रुवं लोकविनाशाय पौलस्त्येनासि निर्मितः ।
तस्मात्त्वमद्यप्रभृति मृतकल्पः शयिष्यसे ॥

ब्रह्मशापाभिभूतोऽथ निपपाताग्रतः प्रभोः ।

अनेन दुर्बलघातकं देवाश्शपन्तीति सूचितम् । तथा च **राजधर्मे** —

यदा बलोऽवध्यमानस्त्रातारं चेन्न विंदति। महान् दैवकृतस्तत्र दण्डः पतति दारुणः ॥ इति ।

ततस्तत्प्रभावाकर्णनेन संजातविस्मयो रामभद्रो राक्षसनिर्मितं यंत्रमेतदुच्छ्रितं नास्माद्भेतव्यमित्यभिधाय पलायमानान् वानरान् पर्यवस्थाप्य युद्धसनद्धान् वानरान् कुर्विति नीलमवदत् ।

**द्विषष्टितमे** —

ततो निद्रामदसमाकुलं राक्षसेन्द्रं कुम्भकर्णमवलोक्य दशवदनः,

अद्य ते सुमहान् कालः शयानस्य महाबल ।
वानराणां क्षयं युद्धे न पश्यामि कदाचन ॥

न चापि वानरा युद्धे जितपूर्वाः कदाचन ।
तदेतद्भयमुत्पन्नं त्रायस्वास्मान् महाबल ॥

नाशय त्वमिमानद्य यदर्थं बोधितो मया ।
सर्वक्षपितकोशं च सत्वमभ्यवपद्यताम् ॥

त्रायस्वेमां पुरीं लङ्कां बालवृद्धावशेषिताम् ।
मयैवं नोक्तपूर्वं हि कश्चिद्भ्रातः परंतप ॥

अनेन राज्ञा आपद्यपि परेषु दैन्यं न प्रदर्शनीयं, अत्यापदि स्वकीयेष्वेव प्रदर्शनीयमिति सूचितम् । तथा च **द्रोणपर्वणि** द्रोणं प्रति दुर्योधनः —

अपि शक्यो रणे जेतुं वज्रहस्तः पुरंदरः। नार्जुनः समरे शक्यो जेतुं परपुरंजयः॥
तत्कथं पांडवं युद्धे दहन्तमिव पावकम्। प्रतियोत्स्यामि दुर्धर्षं तमहं शस्त्रकोविदम्॥
क्षमं चेन्मन्यसे युद्धं मम तेनाद्य सयुगे। परवानस्मि भवति प्रेष्यवद्रक्ष मे यशः॥ इति।

**त्रिषष्टितमे**—

तदनु भ्रातुर्वचनमाकर्ण्य कुम्भकर्णस्तमित्थमाचचक्षे—

**दृष्टो हि दोषो योऽस्माभिः पुरा मन्त्रविनिर्णये।**
**हितेष्वनभियुक्तेन सोऽयमासादितस्त्वया॥**

अनेन मोहाद्दोषापरिहरणे महद्व्यसनं प्राप्नोतीति सूचितम्। मोहात् व्यसनप्राप्तिश्च **गदापर्वणि** दुर्योधनं प्रति धर्मपुत्रेणोक्ता—

आत्मनो ह्यपराधेन महद्व्यसनमीदृशम्। प्राप्तवानसि यन्मोहान्मदाद्बाल्याच्च भारत॥ इति।

**शीघ्रं खल्वभ्युपेति त्वां फलं पापस्य कर्मण।**
**निरयेष्वेव पतनं यथा दुष्कृतकर्मण॥**

अनेन ऐहिकमामुष्मिकं वा उत्कृष्टकर्म सद्य एव फलतीति सूचितम्। तथा **चाभियुक्ताः**—

अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते इति।

**उद्योगे विदुरोऽपि**—

अनार्यवृत्तमप्राज्ञमकृतज्ञमधार्मिकम्। अनर्थाः क्षिप्रमायांति वाग्दुष्टं क्रोधनं तथा॥ इति।

**प्रथमं वै महाराज कृतमेतदचिंतितम्।**
**केवलं वीर्यदर्पेण नानुबन्धो विचारितः॥**

अनेन वीर्यदर्पेण आदौ मन्त्रिभिरनालोच्य अनुबन्धविचारणं विना हठात्किंचिन्न कर्तव्यमित्युक्त्या मन्त्रिभिस्सह अनुविचार्यैव कर्मारम्भणीयमिति सूचितम्। तथाच **हरिवंशे** इन्द्रं प्रति नारदः—

हितानुबन्धसहितं कार्यं ज्ञेयं सुरेश्वर। विपरीतं च तद्बुद्ध्या नित्यं बुद्धिमतां वर॥
यत्स्यात्तापकरं पश्चादारब्धं कार्यमीदृशम्। आरभेन्नैव तज्ज्ञाद्देष बुद्धिमतां नयः॥ इति।

**यः पश्चात्पूर्वकार्याणि कुर्यादैश्वर्यमास्थित।**
**पूर्वं चोत्तरकार्याणि न स वेद नयानयौ॥**

अनेन पश्चात्कर्तव्यं कर्म पूर्वं, पूर्वं कर्तव्यं पश्चाच्च यः करोति स नीतिस्वरूपं न जानातीत्युक्त्या उचितकाले कर्म कुर्वन् रसवत्फलमश्नुत इति सूचितम्। तथाच **कामन्दकः**--

न कार्यकालं मतिमानतिक्रामेत्कदाचन। कथंचिदेव भवति कार्ये योगः सुदुर्लभः ॥
सतां मार्गेण मतिमान् काले कर्म समाचरेत्। काले समाचरन्साधु रसवत्फलमश्नुते ॥ इति।

**देशकालविहीनानि कर्माणि विपरीतवत्।**
**क्रियमाणानि दुष्यंति हवींष्यप्रयतेष्विव ॥**

अनेन अप्रयतेषु अग्निविप्रेषु दत्तं कव्यं हव्यं वा निष्फलं भवतीति सूचितम्। तथाच **मनुः**—

नश्यन्ति हव्यकव्यानि नराणामविजानताम्। भस्मीभूतेषु विप्रेषु मोहाद्दत्तानि दातृभिः ॥
यथा प्लवेनोपलेन निमज्जत्युदके तरत्। तथा निमज्जतोऽधस्तादज्ञे दातृपतीच्छकौ ॥
न वार्यपि प्रयच्छेत्तु बैडालव्रतिके द्विजे। न बकव्रतिके पापे नावेदविदि धर्मवित् ॥
त्रिष्वप्येतेषु दत्तं हि विधिनाप्यार्जितं धनम्। दातुर्भवत्यनर्थाय परत्राऽऽदातुरेव च ॥
यथेरिणे बीजमुप्त्वा न वप्ता लभते फलम्। तथानृचे हविर्दत्त्वा न दाता लभते फलम् ॥
ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति। तस्मै हव्यं न दातव्यं नहि भस्मनि हूयते ॥ इति

**प्रयोगपारिजाते स्मृत्यंतरेच**—

तुषकेशास्थिसंस्पृष्टो न योग्यो हवनेऽनलः ॥ इति।

**त्रयाणां पंचधा योगं कर्मणां यः प्रपश्यति।**
**सचिवैस्समयं कृत्वा स सभ्ये पथि वर्तते ॥**

अत्र त्रयाणां शत्रुक्षय-स्वरक्षण-स्ववृद्धिरूपाणां फलानां सिद्धये कर्तव्यानि यानि कर्माणि सामादीनि तेषा चतुर्णां योगं संबंधं सचिवैस्सह पंचधा पंचप्रकारं समयं विचारं कृत्वा यः प्रपश्यति स सभ्ये पथि नीतिमार्गे वर्तते। ते तु पंच प्रकाराः-कर्मारंभोपायः, पुरुषद्रव्यसंपत्तिः, देशकालविभागः, विघ्नप्रतीकारः, कर्मसिद्धिश्चेति। तथा च कर्मारंभोपायादि पंचप्रकारेण युक्ततया विचारितैस्सामादिभिश्चतुर्भिरुपायैः शत्रुक्षयादिफलं साधयेदित्युक्तं। तेन एवं विविच्यार्थं जानन्नेव नीतिशास्त्राभिज्ञो भवतीति सूचितम्। प्रकारान्तरेणापि नीतित्वं निरूपितं **कामंदके**—

अष्टशाखं चतुर्मूलं षष्टिपत्रं द्वये स्थितम् । षट्पुष्पं त्रिफलं वृक्षं यो जानाति स नीतिमान् ॥

अस्यार्थः — मित्रादिभिश्चतुर्भिः पार्ष्णिग्राहादिभिश्चतुर्भिरष्टशाखं अरिविजिगीषु-मध्यमोदासीनैश्चतुर्भिश्चतुर्मूलं अष्टशाखं चतुर्मूलमित्युक्तं मूलशाखाश्रितामात्यादिद्रव्य-प्रकृतिभिः षष्टिप्रकृतिपत्रं दैवमानुषकर्मणि स्थितया द्वये स्थितं षड्गुणाः पुष्पाण्यस्येति षट्पुष्पं क्षयः स्थानं वृद्धिरिति त्रीणि फलान्यस्येति त्रिफलं एवंविधं वृक्षं यो जानाति स नीतिवित् एतन्मात्रत्वान्नयशरीरस्येति ।

**यथागमं च यो राजा समयं विचिकीर्षति ।**
**बुध्यते सचिवान्बुध्या सुहृदश्चानुपश्यति ॥**

**धर्ममर्थं हि कामं वा सर्वान्वा रक्षसां पते ।**
**भजते पुरुषः काले त्रीणि द्वन्द्वानि वा पुनः ॥**

अनेन धर्मार्थकामाना मध्ये एकैकं वा द्वयं द्वयं वा सर्वं वा काले यः सेवते स एव फलं प्राप्नोतीत्युक्तम् । वनपर्वणि तु समुच्चयेनैव सेवनमुक्तं धर्मार्थकामाना —

न धर्मपर एव स्यान्न चार्थपरमो नरः । न कामपर एव स्यात्सर्वान् सेवेत सर्वदा ॥
धर्मं पूर्वं धनं मध्ये जघन्ये काममाचरेत् । अहन्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥
धर्मं चार्थं च कामं च यथावद्वदतां वर । विभज्य काले कालज्ञः सर्वान् सेवेत पण्डितः ॥
इति ।

**त्रिषु चैतेषु यच्छ्रेष्ठं श्रुत्वा तन्नावबुध्यते ।**
**राजा वा राजमात्रो वा व्यर्थं तस्य बहुश्रुतम् ॥**

अत्र धर्मादीनां त्रयाणां मध्ये परस्परविरोधे कामापेक्षया अर्थः श्रेष्ठः अर्थापेक्षया धर्मः श्रेष्ठ इति विचार्य नानुतिष्ठति तस्य बहुश्रुतं व्यर्थमित्युक्त्या धर्मार्थकामेषु पूर्वपूर्वा-विरोधेनैव उत्तरोत्तरं साधनीयमिति सूचितम् । तथा च विष्णुपुराणे —

विबुद्धश्चिंतयेद्धर्ममर्थञ्चापि विरोधिनम् । अपीड्यैनयोः काममुभयोरपि चिंतयेत् ॥
दृष्टादृष्टविनाशाय त्रिवर्गे समदर्शितौ । परित्यजेदर्थकामौ धर्मपीडाकरौ नृप ।
धर्ममप्यशुभोदर्कं लोकविक्रुष्टमेव च ॥ इति ।

**उपप्रदानं सांत्वं वा भेदं काले च विक्रमम् ।**
**योगं च रक्षसां श्रेष्ठ तावुभौ च नयानयौ ॥**

अनेन सामादिभिरुपायैः कर्मारंभादियुक्ततया विचारितैः हितानुबंधादिविचारं नीतिशास्त्रप्रकारेण विधाय धर्मार्थ कामानुचितकाले यः प्रारभते स राजा सचिवैस्सह उन्नतिं प्राप्नोतीति सूचितम्। तथा च **कामदके**—

सम्यक्प्रचारविज्ञानं दुष्टानां चावरोधनम्। गतागतपरिज्ञानं ततः सम्प्रेषणानि च ॥
गुरूणामनुवृत्तिश्च पूज्याना चाभिपूजनम्। धर्मासनप्रतिष्ठानं राज्यकंटकशोधनम् ॥
भूताभूतपरिज्ञानं कृताकृतपरीक्षणम्। तुष्टातुष्टविचारश्च सर्वेषामनुजीविनाम् ॥
मध्योदासीनचरितज्ञानं तत्सिद्धिपालनम्। परिग्रहस्तु मित्राणाममित्राणां च निग्रहः ॥
पुत्रदाराभिगुप्तिश्च बंधुवर्गपरिग्रहः। असतां च परिक्लेशः सता च परिगूहनम् ॥
अहिंसा सर्वभूतानामधर्माणां च वर्जनम्। अकार्यप्रतिषेधश्च कार्याणा च प्रवर्तनम् ॥
प्रदानं च प्रदेयानामदेयाना च संग्रहः। अदंड्यत्वमदंड्याना दण्ड्यानां चापि दंडनम् ॥
अग्राह्याग्रहणं चैव ग्राह्याणां ग्रहणं तथा। अर्थयुक्तस्य करणमनर्थस्य च वर्जनम्।
न्यायतश्च करादानं स्वपक्षाप्रतिमोक्षणम्।
संवर्धनं प्रधानाना निरस्याना च निष्कृतिः। वैषम्याणा प्रशमनं भृत्यानामविरोधनम् ॥
अविज्ञातस्य विज्ञानं विज्ञातस्य च निश्चयः। आरंभः कर्मणा शश्वदारब्धस्यांतदर्शनम् ॥
अलब्धलिप्सा न्यायेन लब्धस्य परिवर्धनम्। परिवृद्धस्य विधिवत् पात्रे सम्प्रतिपादनम् ॥
अधर्मप्रतिषेधश्च न्यायमार्गानुवर्तिनाम्। उपकार्योपकारित्वमितिवृत्तं महीपतेः ॥
एतत्सर्वममात्यादिराजामात्यपुरस्सरः। नयत्युन्नतिमुद्युक्तो व्यसनी क्षयमेव तु ॥ इति।

**काले धर्मार्थकामान्यः संमन्त्र्य सचिवैस्सह।**
**निषेवेतात्मवान् लोके न स व्यसनमाप्नुयात् ॥**

अनेन धर्मार्थकामाः काले विभज्य सेवनीया इत्युक्तम्। तथा च **वनपर्वणि**—

धर्ममर्थं च कामं च यथावद्वदतां वर। विभज्य काले कालज्ञः सर्वान् सेवेत पण्डितः ॥ इति।

**हितानुबन्धानालोच्य कार्याकार्यमिहात्मनः।**
**राजा सहार्थतत्त्वज्ञः सचिवैस्सह जीवति ॥**

अनेन कर्म कुर्वता अनुबन्धो विचारणीय इति सूचितम्। तथाच **हरिवंशे**—
हितानुबन्धसहितं कार्यं ज्ञेयं सुरेश्वर ॥ इति।

अनभिज्ञाय शास्त्रार्थान् पुरुषाः पशुबुद्धयः ।
प्रागल्भ्याद्वक्तुमिच्छन्ति मन्त्रेष्वभ्यन्तरीकृताः ॥

अशास्त्रविदुषां तेषां विपुलां श्रियमिच्छताम् ।
अहितं च हिताकारं धार्ष्ट्याज्जल्पन्ति ये नराः ॥

अवेक्ष्य मन्त्रबाह्यास्ते कर्तव्याः कृतदूषणाः ।
तान् भर्ता मित्रसंकाशान् अहितान्मन्त्रनिर्णये ॥

व्यवहारेण जानीयात्सचिवानुपसंहितान् ॥

अनेन नीतिशास्त्रानभिज्ञा मन्त्रसमये वर्जनीया इत्युक्तम् । तच्च विस्तरेण प्रागुक्तम् ।

**चपलस्येह कृत्यानि सहसानुप्रधावतः ।**
**छिद्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः ॥**

अनेन चापल्यं वर्जनीयमिति सूचितम् । तथाच **कामंदके**—

अहिते हितबुद्धिरन्यधीरवमन्येत मतानि मन्त्रिणाम् ।
अविचार्य बलाबलं द्विषामहमित्येव समुद्धतो बलात् ॥
चपलः स्वमतेन संपतन्विनिपत्याल्पमनाः प्रबुध्यते ।
इति चेति च संपश्यन् कालदेशसहायवान् ।
विशुद्धपार्ष्णिः सद्वस्तु समाक्रामेन्न चापलात् ॥ इति ।

**यो हि शत्रुमविज्ञाय नात्मानमभिरक्षति ।**
**अवाप्नोति हि सोऽनर्थान् स्थानाच्च व्यवरोप्यते ॥**

अनेन शत्राववज्ञा न कर्तव्या इत्युक्तम् । तथा च **कामंदके** ।

नावज्ञेयो रिपुः कश्चिद्दुर्बलोऽपि बलीयसा । अल्पोऽपि दहत्यग्निर्विषमल्पं हिनस्ति च ॥ इति ।

**तत्तु श्रुत्वा दशग्रीवः कुम्भकर्णस्य भाषितम् ।**
**भ्रुकुटिं चैव संचक्रे क्रुद्धश्चैवमुवाच ह ॥**

**मान्यो गुरुरिवाचार्यः किं मां त्वमनुशाससि ।**

अनेन गुर्वादेः शिष्यादिभिरनुशासनं न कर्तव्यमिति सूचितम् । तथाचापस्तंबः—

नामधेयग्रहणप्रेषणानीति गुरोर्वर्जयेत् इति । तत्रोज्ज्वला—प्रेषणमाज्ञापनमिदमित्थं

कुर्विति। भ्रुकुटिं चापि सचक्रे इति कोपप्रदर्शनेन स्वयममार्गप्रवृत्तो राजा परिपाकसमये भृत्ये दोषमारोपयतीति सूचितम्। तथाचाभियुक्ताः—

नृपः कामासक्तो गणयति कार्यं न च हितं यथेष्टं स्वच्छंदः प्रविचरति मत्तो गज इव।
ततो मानाध्मातः निपतति यदा शोकगहने तदा भृत्ये दोषान् क्षिपति न निजं वेत्त्यविनयम्॥
इति।

**किमेवं वाक्श्रमं कृत्वा काले युक्तं विधीयताम्।**
**विभ्रमाच्चित्तमोहाद्वा बलवीर्याश्रयेण वा॥**

**नाभिपन्नमिदानीं यद्व्यर्थास्तस्य पुनः कथाः।**
**अस्मिन् काले तु यद्युक्तं तदिदानीं विधीयताम्॥**

**गतं तु नानुशोचन्ति गतं तु गतमेव हि।**

अनेन अतीतविषये शोको न कर्तव्य इति सूचितम्। तथा चोद्योगे विधुरः—

नाप्राप्यमभिवाछन्ति नष्टं नेच्छंति शोचितुम्।
आपत्सु न विमुह्यंति नराः पंडितबुद्धयः॥ इति।
न कार्यकालं मतिमानतिक्रामेत्कदाचन। इति।

**ममापनयजं दोषं विक्रमेण समीकुरु॥**

अनेन राजातिक्रमो मंत्रिभिस्समाधेयः, अपनयजो दोषोऽपि विक्रमेण समाधेयः इत्युक्तम्। तथा च कामंदके—

तस्मिन् धर्मार्थयोर्व्यग्रे तथा चास्वस्थचेतसि। सर्वमेतदशेषेण मन्त्री संधातुमर्हति॥ इति।

अपनयस्य विक्रमेण निवृत्तिरुद्योगेऽपि—

अकीर्तिं विनयो हंति हत्यनर्थं पराक्रमः। हंति नित्यं क्षमा क्रोधं आचारो हंत्यलक्षणम्॥
अपनीतं सुनीतेन योऽर्थं प्रत्यानिनीषते। मतिमास्थाय सुदृढां तदकापुरुषव्रतम्॥ इति।

**स सुहृद्यो विपन्नार्थं दीनमभ्युपपद्यते।**
**स बन्धुर्योऽपनीतेषु साहाय्यायोपकल्पते॥**

अनेन आपदि यः संरक्षणं करोति स एव सुहृदिति सूचितम्। तथाच कामंदके—

ततः परतरो नास्ति य आपत्सूपतिष्ठते। इति।

**अतीव हि समालक्ष्य भ्रातरं क्षुभितेन्द्रियम्।**
**कुम्भकर्णः शनैर्वाक्यैर्बभाषे परिसांत्वयन् ॥**

अनेन हितमजानानं कुपितं राजानमपि अधिक्षिप्य न ब्रूयादिति सूचितम्। तथाच **कामंदके**—

विजानन्नपि न ब्रूयाद्भर्तु: क्षिप्तोत्तरं वचः ॥ इति।

**अवश्यं तु हितं वाच्यं सर्वावस्थं मया तव।**
**बन्धुभावादभिहितं भ्रातुस्स्नेहाच्च पार्थिव ॥**

अनेन आप्तबन्धुना सर्वावस्थास्वपि राज्ञो हितमुपदेष्टव्यमिति सूचितम्। तथा च **कामंदके**—

तद्बोधयेज्जगन्नाथं संबुध्येत यथा तथा। धीसत्त्वोद्योगसंपन्नैस्तत्कार्यं तदुपाश्रितै: ॥
अकार्यात्प्रतिषेधं च कार्ये चैवानुवर्तनम्। सक्षेपादिति सद्वृत्तं बन्धुमित्रानुजीविनाम् ॥ इति

**नैतन्मनसि कर्तव्यं मयि जीवति पार्थिव।**
**तमहं नाशयिष्यामि यत्कृते परितप्यसे ॥**

अनेन शूरेण आप्तेन सता राज्ञः प्रसक्तं युद्धं स्वयमेव कर्तव्यमिति सूचितम्। अत एव राजानं युद्धान्निवार्य स्वयमेव युद्धं करोमीत्युक्तवान् **द्रोणपर्वणि** रात्रियुद्धे दुर्योधनं प्रत्यश्वत्थामा —

... मयि बंधुना।
शत्रूणां कदनं पश्य क्रियमाणं मया रणे।

**वधेन ते दाशरथेस्सुखार्हं सुखं समाहर्तुमहं व्रजामि।**
**निहत्य रामं सह लक्ष्मणेन खादामि सर्वान् हरियूथमुख्यान् ॥**

अत्र रावणेन तिरस्कृतेनापि कुंभकर्णेन शत्रुहननाय अहमेव व्रजामि भोगानविचारेण भुंक्ष्वेति प्रतिपादनात् राज्ञा हितापरिज्ञानेन तिरस्कृतोऽपि हितवक्ता आप्तबन्धुस्तमपरित्यज्यैव यावत्प्राणं तत्कार्यं साधयेदिति सूचितम्।

अत एव भीष्मद्रोणादयः स्वोक्तहितवचनमश्रृण्वता दुर्योधनेनाधिक्षिप्ता अपि तमपरित्यज्यैव तदर्थे प्राणांस्त्यक्तवंत इति प्रतिपादितमुद्योगे —

त्वामेव स्थापयिष्यंति यौवरज्ये महारथाः। महाराज्ये च पितरं धृतराष्ट्रं जनेश्वरम् ॥

मा तात श्रियमायान्तीं मावमंस्थाः समुद्यताम्। अर्धं प्रदाय पार्थेभ्यो महतीं श्रियमाप्स्यसि ॥
इति।

ततः कृष्णं प्रति दुर्योधनः —

यावद्धि तीक्ष्णया सूच्या विध्येदग्रे जनार्दन। तावदप्यपरित्याज्यं भूमेर्नः पांडवान् प्रति ॥

तदनु दुर्योधनं प्रति भीष्मः —

अकृत्वा तातवचनं केशवस्य महात्मनः। श्रेयो न जातु न सुखं न कल्याणमवाप्स्यसि ॥
आत्मानं स सहामात्यं सपुत्रज्ञातिबान्धवम्। सहमित्रमसद्बुध्या जीविताद्भ्रंशयिष्यसि ॥
अतिक्रामन् केशवस्य सत्यं वचनमर्थवत्। पितुश्च भरतश्रेष्ठ विदुरस्य च धीमतः ॥
मा कुलघ्नः कुपुरुषो दुर्मतिः कुपथंगमः। मातरं पितरं चैव मा मज्जीः शोकसागरे ॥
एवमुक्तस्तु भीष्मेण द्रोणेन विदुरेण च। गांधार्या धृतराष्ट्रेण न च मंदोऽन्वपद्यत ॥
अवधूयोत्थितो मन्दः क्रोधात्सरक्तलोचनः। पितामह विजानीषे पार्थेषु विजयं कथम् ॥
नाहं भवति न द्रोणे न कृपे न च बाह्लिके। अन्येषु च नरेन्द्रेषु पराक्रम्य समारभे ॥
अहं वैकर्तनः कर्णो भ्राता दुःशासनश्च मे। पांडवान् समरे पंच हनिष्यामः शितैश्शरैः ॥

इति दुर्योधनेनाक्षिप्तोऽपि भीष्मः —

योद्धव्यं तु तवार्थाय यथा मे समयः कृतः। शृणु राजन् मम रणे या शक्तिः परमा भवेत् ॥
शस्त्रवीर्यं रणे यच्च भुजयोश्च महाबलम्। आर्जवेनैव युद्धेन योद्धव्या इतरे जनाः ॥
मायायुद्धेन मायावी इत्येतद्धर्मनिश्चयः। हन्यामहं महाभाग पांडवानामनीकिनीम् ॥
दिवसे दिवसे कृत्वा भागं प्रागाह्निकं मम। योधानां दशसाहस्रं कृत्वा भागं महाद्युते ॥
सहस्रं रथिनामेकमेष भागो मतो मम। अनेनाहं विधानेन संनद्धः सततोत्थितः ॥
क्षपयेयमहं सैन्यं कालेनानेन भारत। यदि त्वस्त्राणि मुंचेयं महांति समरे स्थितः ॥

शतसाहस्रघातीनि हन्या मासेन भारत।

इति। **भीष्मपर्वणि** धृतराष्ट्रं प्रति संजयः —

हतो भीष्मः शांतनवो भारतानां पितामहः। परिरक्ष्य स सेनां तु दशरात्रमनीकहा ॥
जगामास्तमिवादित्यः कृत्वा कर्म सुदुष्करम्। जघान युधि योधानामर्बुदं दशभिर्दिनैः ॥
स शेते निहतो भूमौ वातरुग्ण इव द्रुमः। तव दुर्मंत्रिते राजन् यथा नार्हः स भारत ॥ इति।

**रमस्व कामं पिब चाग्र्यवारुणीं कुरुष्व कृत्यानि विनीयतां ज्वरः।**
**मयाऽद्य रामे गमिते यमक्षयं चिराय सीता वशगा भविष्यति ॥**

चतुष्षष्टितमे —

ततो महोदरः समाकर्ण्य कुंभकर्णवचनं तमित्थमाचचक्षे —

कुम्भकर्ण कुले जातः धृष्टः प्राकृतदर्शनः ।
अवलिप्तो न शक्नोषि कृत्यं सर्वत्र वेदितुम् ॥

अत्र कुले जातोऽपि धृष्टोऽपि त्वं अवलिप्ततया प्राकृतदर्शनः नीचबुद्धिः अतः कृत्यं वेदितुमसमर्थ इत्युक्तया नीचबुद्धीनां महाकुलोत्पत्त्यादिकं अवलेपाधायकं समीचीनानां तु शमायैव भवतीति सूचितम् । तथा चोद्योगे विदुरः —
विद्यामदो धनमदस्तृतीयोऽभिजनो मदः । एते मदावलिप्तानां एत एव सतां दमः ॥ इति ।

न हि राजा न जानीते कुम्भकर्ण नयानयौ ।
त्वं तु कैशोरकाद्धृष्टः केवलं वक्तुमिच्छसि ॥

स्थानं वृद्धिं च हानिं च देशकालविभागवित् ।
आत्मनश्च परेषां च बुध्यते राक्षसर्षभः ॥

अत्र हितवक्तारं कुंभकर्णमपि तिरस्कृत्य राजा सर्वज्ञ इति अमार्गप्रवृत्तस्य राज्ञः स्तुतिः कृता । अग्रेऽपि —
भक्षितौ राघवोऽस्माभिर्लक्ष्मणश्चेति वादिनः । तव पादौ ग्रहीष्यामि त्वं नः कामं प्रपूरय ॥
प्रीतो नाम ततो भूत्वा भृत्यानां त्वमरिंदम । भोगांश्च पारिबर्हांश्च कामांश्च वसु दापय ॥
इत्यग्रेऽपि राज्ञो हितोपदेशव्याजेन स्वार्थमेव प्रार्थितवानिति प्रतिपादितम् ।

अनेन वंचनापरा अमात्याः प्रियोक्त्या तच्चित्तानुवर्तनेन स्वार्थमेव साधयन्तीति राजानोऽपि तेषामेव वचनं हितं मन्वानाः तांश्च पुरस्कुर्वंतीति सूचितम् । तथा च कादंबर्यां —

स्वार्थनिंदनपरैः धनपिशितग्रासगृध्रैः आस्थान नलिन बकैः प्रतरण कुशलैर्धूर्तैरमानुषलोकोचिताभिः स्तुतिभिः प्रतार्यमाणा राजानोऽभ्यसूयंति सचिवोपदेशाय क्रुध्यंति हितवादिने यश्चानवरतमुपरचितप्रणामांजलि अधिदैवतमिव विगतान्यकर्तव्यस्तौति योवा माहात्म्यमुद्भावयति तमभिनंदंति तमालपति तं पार्श्वे कुर्वन्ति तं संवर्धयंति तं बहुमन्यंते तमाप्तमापादयन्ति तेन [illegible]मनुतिष्ठन्ते तस्मै ददति तस्माद्बिभ्यति तस्य वचः शृण्वन्ति तत्र वर्षन्तीति ।

**यत्तु शक्यं बलवता कर्तुं प्राकृतबुद्धिना ।**
**अनुपासितवृद्धेन कः कुर्यात्तादृशं बुधः ॥**

अनेन अभिज्ञो राजा बलावलेपेन नीतिविरुद्धं कर्म करोतीत्युक्त्या बुध्या उपक्रांतं कर्मैव सम्यक् फलतीति सूचितम् । तथा च कामदके —

बुध्यैवोपक्रमः श्रीमान् फलनिष्पत्तये सदा । इति ।

**यांस्तु धर्मार्थकामांस्त्वं ब्रवीषि पृथगाश्रयान् ।**
**अनुबोध्दुं स्वभावे तान् न हि लक्षणमस्ति ते ॥**

**कर्म चैव हि सर्वेषां कारणानां प्रयोजनम् ।**
**श्रेयः पापीयसां चात्र फलं भवति कर्मणाम् ॥**

अत्र धर्मार्थकामानां विरुद्धफलकत्वात् सुखार्थं धर्ममनुतिष्ठता कामो नानुष्ठेयः इति पृथगाश्रयान् धर्मादीन् वदतस्तव धर्मादीना तत्त्वं बोद्धुं सामर्थ्य नास्ति यतः कारणानां स्वर्गनरकादीनां कर्मैव हि साधनं तत्र पापीयसामपि अगम्यागमनादीनां कर्मणा श्रेयः फलं दृश्यत इत्युक्तम् ।

**निश्रेयसफलावेव धर्मार्थावितरावपि ।**
**अधर्मानर्थयोः प्राप्तिः फलं च प्रात्यवायिकम् ॥**

अत्र धर्मार्थौ तदितरौ अधर्मानर्थौ च निश्रेयसफलावेव सुखफलावेव तत्र अधर्मानर्थयोः प्रात्यवायिकं फलं दुःखरूपमपि प्राप्यं भवतीति ।

**ऐहलौकिकपारत्रं कर्म पुंभिर्निषेव्यते ।**
**कर्माण्यपि तु कल्यानि लभते काममास्थितः ॥**

अत्र लोके हि ऐहिकसुखार्थमामुष्मिकसुखार्थं वा कर्माणि क्रियंते । तत्र धर्ममाश्रितः इह परत्र वा यथोचितं फलं लभते । काममाश्रितस्तु इहैव कल्यानि शुभान्यपि लभते ।

**तत्र क्लृप्तमिदं राज्ञा हृदि कार्यं मतं च नः ।**
**शत्रौ हि साहसं यत्स्यात्किमिवात्रापनीयताम् ॥**

अत्र धर्मार्थयोरिव अधर्मानर्थयोरपि सुखफलत्वे सिद्धे सति राज्ञा कर्तव्यत्वेन व्यवसिते अस्माभिश्चानुमोदिते सीतापहरणे किमिवात्रापनीयते न किंचिद्धीयत इति । धर्मकामयोर्मध्ये तात्कालिकदुःखप्रदः आयत्यां सुखहेतुर्धर्मः । तद्विरुद्धः कामस्तु

तात्कालिकसुखकरः आयत्यां दुःखजनकः । तथा च मिश्रफलत्वाविशेषे सति कामं परित्यज्य धर्माश्रयणे विनिगमकं न पश्यामः इति विचार्य राज्ञा कृते अस्माभिश्चानुमोदिते सीतापहरणे न दोषं पश्यामः इति प्रतिपादनात् नीचामात्यास्स्वार्थलोभेन कलहमेव प्रवर्धयंतीति सूचितम् । तथा च **कामन्दके** —

मन्त्रिणस्स्वार्थतात्पर्याद्दीर्धमिच्छंति विग्रहम् । इति ।

**प्राचीना अपि** —

नीचाः कलहमिच्छंति सन्धिमिच्छंति साधवः । इति ।

**एकस्यैवाभियाने तु हेतुर्यः प्रकृतस्त्वया ।**
**तत्राप्यनुपपन्नं ते वक्ष्यामि यदसाधु च ॥**

**येन पूर्वं जनस्थाने बहवो राक्षसा हताः ।**
**तं सिंहमिव संक्रुद्धं रामं दशरथात्मजम् ॥**

**सर्पं सुप्तमिवाबुध्या प्रबोधयितुमिच्छसि ।**
**हीनार्थस्तु समृद्धार्थं को रिपुं प्राकृतं यथा ॥**

**निश्चितं जीवितत्यागे वशमानेतुमिच्छसि ।**
**यस्य नास्ति मनुष्येषु सदृशो राक्षसोत्तम ॥**

**कथमाशंससे योध्दुं तुल्येनेन्द्रविवस्वतोः ।**

अत्र बलवता रिपुणा सह युद्धार्थं च एकस्य गमनमनर्थाधायकमित्युक्तम् । तथा च **कामंदके** —

बलिना सह योद्धव्यं इति नास्ति निदर्शनम् । प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥ इति ।

कुंभकर्णमभिधाय रावणमेवमवादीत् — रामविजयायास्मान् प्रेषय । तदनु रामनामांकितैश्शरैः स्वयमेव स्वतनुं विदार्य रामोऽस्माभिः भक्षित इति त्वत्समीपमागत्य ब्रुवतोऽस्मान् कामैः प्रपूर्य पुर्यां हतो राम इति अवघोषय —

**अनयोपधया राजन् भयशोकानुबन्धया ।**
**रञ्जनीयं हि भर्तारं विनष्टमवगम्य सा ॥**

**नैराश्यात् स्त्रीलघुत्वाच्च त्वद्वशं प्रतिपत्स्यते ।**
**सा पुरा सुखसंवृद्धा सुखार्हा दुःखकर्शिता ॥**

त्वदधीनं सुखं ज्ञात्वा सर्वथोपगमिष्यति ॥ इति

एतत्सुनीतं मम दर्शनेन रामं हि दृष्ट्वैव भवेदनर्थः ।
इहैव ते सेत्स्यति मोत्सुको भूर्महानयुद्धेन सुखस्य लाभः ॥

अनष्टसैन्यो ह्यनवाप्तसंशयो रिपूनयुद्धेन जयं नराधिपः ।
यशश्च पुण्यं च महन्महीपतेः श्रियं च कीर्तिं च चिरं समश्नुते ॥

अनेन सर्वप्रकारेणापि युद्धेनैव कार्याणि ।

वृथा भवंतीह निमेषमात्रान्मुहुर्मुहुश्चाकुलितानि तानि ।

तस्मान्न विद्वानतिविग्रही स्यात् ... ।

सुहृज्जनं तथा राज्यमात्मानं कीर्तिमेव च । युधि सदेहदोलास्थं को हि कुर्यादबालिशः ॥

कामानुसारी पुरुषः कामाननु विनश्यति ॥ इति ।

कामात्मता खल्वपि न प्रशस्ता इति ।

अथ शास्त्रप्रतिषिद्धं धर्मविरुद्धं कामं पुरुषार्थं वदन् चार्वाकवदसंभाष्य इति मन्यमानः कुम्भकर्णः निर्भर्त्स्य महोदरं रावणमेवमुवाच ।

**पञ्चषष्टितमे —**

सोहमधुना युद्धे रामवधेन त्वदीयं भयमपनेष्यामि ।

गर्जन्ति न वृथा शूरा निर्जला इव तोयदाः ।
पश्य संपाद्यमानं तु गर्जितं युधि कर्मणा ॥

अनेन शूरा वृथा गर्जनं न कुर्वन्ति । तथा च द्रोणपर्वणि —

वृथा शूरा न गर्जन्ति शारदा इव तोयदाः । सामर्थ्यमात्मनो ज्ञात्वा ततो गर्जन्ति पंडिताः ॥ इति ।

न मर्षयति चात्मानं संभावयति नात्मना ।
अदर्शयित्वा शूरास्तु कर्म कुर्वन्ति दुष्करम् ॥

अत्र शूराः परुषोक्तिं न मर्षयन्ति आत्मनस्स्तुतिं च न कुर्वन्तीत्युक्तम् । न मर्षयन्तीत्यत्र द्रोणपर्वणि कृपं प्रति कर्णवचनम् —

यद्येवं वक्ष्यसे भूयो ममाप्रियमिह द्विज । ततस्ते खड्गमुद्धृत्य जिह्वां च्छेत्स्यामि दुर्मते ॥ इति ।

आत्मस्तुतिं न कुर्वन्तीत्यत्र कर्णं प्रति भीष्म. —

कामं नैव प्रशंसन्ति सन्तः स्वबलमस्तवम् ॥ इति।

**आदिपर्वणि** सौपर्णे इन्द्र प्रति गरुडवचनम् —

कामं नैतत्प्रशंसन्ति सन्तो ह्यात्मबलस्तवम्। अनिमित्तं सुरश्रेष्ठ सद्य. प्राप्नोति गर्हणाम् ॥

अकत्थनेन कर्मकरणं च **द्रोणपर्वणि** —

अब्रुवन् कर्ण युद्धस्व कत्थसे बहु सूतज। अनुक्त्वा विक्रमेद्यस्तु तद्वै सत्पुरुषव्रतम् ॥ इति।

**विक्लबानामबुद्धीनां राज्ञां पण्डितमानिनाम्।**
**शृण्वतां सादितमिदं त्वद्विधानां महोदर ॥**

**युद्धे कापुरुषैर्नित्यं भवद्भिः प्रियवादिभिः।**
**राजानमनुगच्छद्भिः कृत्यमेतद्धि सादितम् ॥**

**राजशेषा कृता लंका क्षीणः कोशो बलं हतम्।**
**राजानमिममासाद्य सुहृच्चिह्नममित्रकम् ॥**

अमित्रकृत्यं भवद्भिः कृतमिति शेषः।

अनेन राजानमनुसृत्य वदद्भिर्बुद्धिहीनैः राज्ञः कार्यं नाशितमित्युक्त्या दुर्मन्त्रिणा राजा नश्यतीति सूचितम्। तथाच **प्राचीनाः** — 'दौर्मन्त्र्यान्नृपतिर्विनश्यति' इति।

**देवीमाहात्म्येऽपि** दुष्टामात्यै राजा विनाशित इति प्रतिपादितम् —

अमात्यैर्बलिभिर्दुष्टैर्दुर्बलस्य दुरात्मभिः। कोशो बलं चापहृतं तत्रापि स्वपुरे ततः ॥ इति।

**एष निर्याम्यहं योद्धुमुद्यतः शत्रुनिर्जये।**
**दुर्नयं भवतामद्य समीकर्तुं महाहवे ॥**

**अनेन** राज्ञा दुर्नयो विक्रमेण समीकर्तव्य इति सूचितम्। विक्रमस्यानर्थनिवर्तकत्वं **चोद्योगे** —

अकीर्तिं विनयो हंति हन्त्यनर्थं पराक्रमः। हंति नित्यं क्षमा क्रोधं आचारो हंत्यलक्षणम् ॥ इति। इत्याकर्ण्य दशवदनः कुंभकर्णमेवमवादीत्।

**गच्छ शत्रुवधाय त्वं कुम्भकर्ण जयाय च।**
**अयं हि कालः सुहृदां राक्षसानामरिन्दम ॥**

अनेनापदि सुहृदाऽवश्यमुपकर्तव्यमिति सूचितम्। तथाच कुन्ती प्रति कर्णवचनम् **उद्योगे** —

अयं स कालः सम्प्राप्तो धृतराष्ट्रोपजीविनाम्। निर्वेष्टव्यं मया तावत् प्राणानपरिरक्षता ॥ इति।

**द्रोणपर्वण्यपि** कर्णं प्रति दुर्योधनः —

अयं स काल सम्प्राप्तो मित्राणां मित्रवत्सल। त्रायस्व समरे कर्ण सर्वान् योधान् महारथान् ॥ इति। तदाज्ञया निशितशूलमादाय तूर्णमेव समुत्पतन्तं कुंभकर्णं रावण एवमुवाच —

**एकाकिनं प्रमत्तं वा नयेयुर्दशनैः क्षयम्।**
**तस्मात्परमदुर्धर्षैः सैन्यैः परिवृतो व्रज ॥**

अनेन बलवतापि एकाकिना युद्धं न कर्तव्यमिति सूचितम्। तथा **चोद्योगे** विदुरः —

महानप्येकको वृक्षो बलवान् संप्रतिष्ठितः। प्रसह्य एव वातेन सस्कन्धः मर्दितुं क्षणात् ॥
अथ ये सहिता वृक्षास्संघशस्तु प्रतिष्ठिता। अथ शीघ्रतमान् वातान् सहन्तेऽन्योन्यसश्रयात् ॥
एवं मनुष्यमप्येकं गुणैरपि समन्वितम्। शक्यं द्विषन्तो मन्यन्ते वायुर्द्रुममिवैकजम् ॥ इति

**अथासनात्समुत्प्लुत्य स्रजं मणिकृतान्तराम्।**
**आबबन्ध महातेजाः कुम्भकर्णस्य रावणः ॥**

ततो दिव्यरचितकनकमयकटकमकुटकटिसूत्रकेयूराङ्गुलीयकवचादिभूषितः,

**सर्वाभरणनद्धाङ्गः शूलपाणिस्स राक्षसः।**
**त्रिविक्रमकृतोत्साहो नारायण इवाबभौ ॥**

अनेन युद्धाय प्रेषणसमये बहुमतिं कृत्वा प्रेषणीयमिति सूचितम्। अत एव दुर्योधनेन शूरगणा पूजा कृतेति प्रतिपादितमुद्योगे —

दिवसे दिवसे चैव प्रतिवेलं च भारत। चक्रे च विविधाः पूजाः प्रत्यक्षं च पुनः पुनः ॥
बभूवुस्सैनिका राजन् राज्ञः प्रियचिकीर्षवः ॥ इति।

**भ्रातरं संपरिष्वज्य कृत्वा चापि प्रदक्षिणम्।**
**प्रणम्य शिरसा तस्मै स प्रतस्थे महाबलः ॥**

अनेन महाकार्यगमनसमये गुरूणां प्रदक्षिणनमस्कारादिकं विधाय गन्तव्यमिति सूचितम्।

अत एव कृष्णेन कृत्याः प्रदक्षिण कृतमिति प्रतिपादितमुद्योगे —

अभिवाद्याथ तां कृष्णः कृत्वा चापि प्रदक्षिणम् । निश्चक्राम महाबाहुः सिंहखेलगतिः सदा ॥

इति । ततो गिरिवरशिखरसमानसारं महच्छूलमादाय नगरान्निर्गच्छन् अविगणय्य च उल्काशनिपातान् महोत्पातान्,

धनुश्शतपरीणाहः स षट्शतसमुच्छ्रितः ।
रौद्रः शकटचक्राक्षो महापर्वतसंनिभः ॥

निर्ययौ कुंभकर्णस्तु कृतान्तबलचोदितः ।
स लंघयित्वा प्राकारं गिरिकूटोपमो महान् ॥

निर्ययौ नगरात्तूर्णं कुम्भकर्णो महाबलः ।

**षट्षष्टितमे —**

ततो युगांतकृतांतसमविक्रांतकुंभकर्णमवलोक्य प्रद्रुतान् सेनापतीन्नीलनलगवयगवाक्षप्रभृतीनंगद इत्थमाचचक्षे —

आत्मानमत्र विस्मृत्य वीर्याण्यभिजनानि च ।
क्व गच्छत भयत्रस्ताः प्राकृता हरयो यथा ।
साधु सौम्य निवर्तध्वं किं प्राणान् परिरक्षथ ॥

नालं युद्धाय वै रक्षो महावीर्यं विभीषिका ।
विक्रमाद्विधमिष्यामः निवर्तध्वं प्लवङ्गमाः ॥

भग्नानां वो न पश्यामि परिगम्य महीमिमाम् ।
स्थानं सर्वे निवर्तध्वं किं प्राणान् परिरक्षथ ॥

निरायुधानां द्रवतामसंगगतिपौरुषाः ।
दारा अपहसिष्यन्ति स वै घातस्तु जीवताम् ॥

कुलेषु जातास्सर्वे स्मो विस्तीर्णेषु महत्सु च ।
क्व गच्छत भयत्रस्ताः हरयः प्राकृता यथा ॥

अनार्याः खलु यद्भीताः त्यक्त्वा वीर्यं प्रधावता ।
विकत्थनानि वो यानि तदा वै जनसंसदि ॥

तानि वः क्व च यातानि सोदग्राणि महांति च ।
भीरुप्रवादाः श्रूयन्ते यस्तु जीवति धिक्कृतः ॥

मार्गः सत्पुरुषैर्जुष्टः सेव्यतां त्यज्यतां भयम् ।
शयामहेऽथ निहताः पृथिव्यामल्पजीविताः ॥

दुष्प्रापं ब्रह्मलोकं वा प्राप्नुमो युधि सूदिताः ।
संप्राप्नुयामः कीर्तिं वा निहत्वा शत्रुमाहवे ॥

जीवन्तो वीरलोकस्य भोक्ष्यामो वसु वानराः ।
न कुम्भकर्णः काकुत्स्थं दृष्ट्वा जीवनमिष्यति ॥

दीप्यमानमिवासाद्य पतङ्गो ज्वलनं यथा ।
पलायनेन चोद्दिष्टाः प्राणान् रक्षामहे वयम् ॥

एकेन बहवो भग्ना यशो नाशं गमिष्यति ।
द्रवमाणास्तु ते वीरा अङ्गदेन बलीमुखाः ॥

सांत्वैश्चैवानुमानैश्च ततः सर्वे निवर्तिताः ।
प्रहर्षमुपनीताश्च वालिपुत्रेण धीमता ॥

आज्ञाप्रतीक्षास्तस्थुश्च सर्वे वानरयूथपाः ।

ऋषभशरभमैंदधूम्रनीलाः कुमुदसुषेणगवाक्षरंभताराः ।
द्विविदपनसवायुपुत्रमुख्याः त्वरिततराभिमुखा रणं प्रयाताः ॥

समुदीरितवीर्यास्ते समारोपितविक्रमाः ।
पर्यवस्थापिता वाक्यैरंगदेन बलीमुखाः ॥

प्रयाताश्च गता हर्षं मरणे कृतनिश्चयाः ।
चक्रुः सुतुमुलं युद्धं वानरास्त्यक्तजीविताः ॥

अत्र भीत्या पलायने यशोहानिर्दारापहास्यता परलोकहानिश्चाभिमुख्येन च युद्धकरणे च यशःप्राप्तिः भाग्यलाभः समुखमरणे पुण्यलोकावाप्तिश्च भवति। अतो निवर्तध्वमिति गुणदोषप्रदर्शनपूर्वकं प्रोत्साहनेन युद्धे प्रवर्तनीयमिति सूचितम् ।

अत एव जनकेन स्वसेनायाः गुणदोषप्रदर्शनपूर्वकं योधानां युद्धप्रवृत्तिः कृतेति प्रतिपादितम् राजधर्मे —

जनको मैथिलो राजा महात्मा सर्वतत्त्ववित् ।
योधान् स्वान् दर्शयामास स्वर्गं नरकमेव च। अभीतानामिमे लोका भास्वंतो हंत पश्यत ॥

पूर्णा गंधर्वकन्याभिः सर्वकामदुघोऽक्षयाः। इमे पलायमानानां नरकाः प्रत्युपस्थिताः॥
अकीर्तिः शाश्वती चैव पतितव्यमनन्तरम्। तां दृष्ट्वाऽरीन् विजयत भूत्वा संत्यागबुद्धयः॥
नरकस्य प्रतिष्ठस्य माभूतवशवर्तिनः। त्यागमूलं हि शूराणां स्वर्गद्वारमनुत्तमम्॥
इत्युक्तास्ते नृपतिना योधा परपुरंजयाः। व्यजयंत रणे शत्रून् हर्षयंतो जनेश्वरम्॥
तस्मादात्मवता नित्यं स्थातव्यं रणमूर्धनि। संग्रामेऽनीकवेलायामुत्क्रुष्टो हि पतत्युन॥
पतत्यभिमुखः शूरः पराङ्भीरु. पलायने। ये सहायान् रणे हित्वा स्वस्तिमंतो ग्रहान् ययुः॥

अस्वस्ति तेभ्यः कुर्वंति देवा इंद्रपुरोगमा।
त्यागेन यः सहायाना स्वान् प्राणान् त्रातुमिच्छति॥

काष्ठैर्लोष्टैश्च तं हन्युर्दहेयुर्वा कटाग्निना। पशुवन्मारयेयुर्वा क्षत्रिया ये स्युरीदृशाः॥
सर्वे योधाः परं स्वर्गं आतिष्ठास्त्यक्तजीविता.। प्राप्नोतीन्द्रलोकं वा शूरः पृष्ठमदर्शयन्॥

इति। **अन्यत्रापि —**

कानि यज्ञे हवींष्यत्र किमाज्यं का च दक्षिणा।
ऋत्विजश्चात्र के प्रोक्तास्तन्मे ब्रूहि शतक्रतो॥

**इन्द्रः—**

ऋत्विजः...... कुंजरास्तत्र मंत्रिणः। आज्यशेषं पिबंत्येते हविः प्राश्नंति चाध्वरे॥
बाणतोमरसंघाता खड्गशक्तिपरश्वथाः। ज्वलंतो निशिताः प्रीतास्स्रुचस्तस्याथ पत्रिणः॥
चापवेगायतस्तीक्ष्णः परकायविभेदकः। ऋजुः सुनासितः पीतः सायकश्चास्रुवो महान्॥

द्वीपिचर्मावनद्धश्च नागदंतकृतत्सरुः॥

हस्तिदन्तयुतः खड्गः स्फ्यो भवेत्तत्र संयुगे। ज्वलितैः निशितैः पाशैः शक्तियष्टिपरश्वथैः॥
सैन्याय समयैस्तीक्ष्णैरभिघातो भवोत्सवः। आवेगाद्यत्र रुधिरं संग्रामे स्यंदते भुवि॥

सास्य पूर्णाहुतिः सोमे समृद्धा सर्वकामधुक्।
छिधिभिधीति यैस्त्वेतत् क्रि[illegible] वाहिनीमुखे॥

सामानि सामगास्तत्र गायंति यमसादने। हविर्धानं तु तस्याहुः परेषां वाहिनीमुखे॥
कुंजराणां हयानां च वर्मिणां च समुच्चयः। अग्निरयेनचितो नाम तस्य यज्ञे विधीयते॥
उत्तिष्ठति कबंधोऽत्र सहसा निहते तु यः। स यूपस्तस्य यज्ञस्य खादिरोऽष्टाश्रिरुच्यते॥
इळोपहूताः क्रोशंति कुंजराश्चागशातिताः। व्याक्रुष्टतलनादेन वषट्कारेण पार्थिवः॥

उद्गाता तस्य संग्रामे त्रिसामा दुंदुभिर्नृपः । भर्तुरर्थे तु यः शूरो विक्रमेद्वाहिनीमुखे ॥
न भयाद्विनिवर्तेत तस्य लोका यथा मम । यस्य शोणितसंघाता भेरीमण्डूककच्छपा ॥
वीरास्थिसंकुला दुर्गा मांसशोणितकर्दमा । पताका जवनी नीरा हतवारणवाहिनी ॥
शोणितोदा सुसंपूर्णा दुस्तरा कातरैर्नरैः । हतनागमहानक्राः परलोकवहा शिवा ॥
शक्तिखड्गवहा नौका गृध्रकंकतनुप्लवा । पुरुषादानुचलिता भीरूणां कश्मलावहा ॥
नदी योधस्य संग्रामे तदस्यावभृथं स्मृतम् । वेदिर्यस्य त्वमित्राणां शिरोभिरवकीर्यते ॥
अश्वस्कंधैर्गजस्कंधैस्तस्य लोका यथा मम । पत्नीशाला कृता यस्य परेषां वाहिनीमुखम् ॥
हविर्धानं स्ववाहिन्यस्तदास्याहुर्मनीषिणः । यस्तु योधः परावृत्तः स त्रस्तो वध्यते परैः ॥
अप्रतिष्ठं स नरकं याति नास्त्यत्र संशयः । यस्य शोणितवेगेन नदी स्यात्सपरिप्लुता ॥
केशमांसास्थिसपूर्णा स गच्छेत्परमां गतिम् । यस्तु सेनापतिं हत्वा तद्यानमधिरोहति ।
नायकं वा प्रधानं वा यो वा स्यात्तत्र पूजितः । स विष्णुविक्रमक्रामी बृहस्पतिसमप्रभः ॥
जीवग्राहं प्रगृह्णाति तस्य लोका यथा मम । वराप्सरस्सहस्राणि शूरमायोधने हतम् ॥
त्वरमाणानि धावन्ति मम भर्ता भवेदिति । एतत्तपश्च पुण्यं च धर्मश्चैव सनातनम् ॥
चत्वारश्चाश्रमास्तस्य यो युद्धे न पलायते ॥ इति ॥

**सप्तषष्टितमे —**

कुंभकर्णोऽपि अङ्गदवचनेन युद्धसंनद्धान् ऋक्षानपि करगतोरुवक्षान् शाखामृगानपि करधृतोरुतरशाखान् संघशः प्रमथनन्नर्दयन् भक्षयंश्च गिरिणा निहंतुमागतस्य द्विविदस्य गदया गिरिमभिहत्य हनूमंतमपि तरुगिरिशिखरवर्षेणापततं शूलसंभ्रमेण संभ्रमं कलयन् युगपदापततः प्रहर्तुं ऋषभ शरभ नील गवाक्ष गंधमादनान् पंचाननपराक्रमान् पंचापि बाहुमुष्टिजानुकरतलपादघातैः क्रमशः प्रमर्दयन् सर्वतोऽपि सहस्रशो वानरान् पर्वताकृतिमानमधिरुह्य दशननखविदारणादिभिः किं तव मामेवाभियाहीति सगर्वमुक्तः तन्निधनाय शूलं विमुच्य तदपि हनुमज्जानुभग्नमवलोक्य रुषा समुत्पाट्य मलयशृंगं तेन च तपनतनयं भुवि पातयामास ।

**स शैलशृंगाभिहतो विसंज्ञः पपात भूमौ युधि वानरेन्द्रः ।**
**जहार सुग्रीवमभिप्रगृह्य यथानिलो मेघमतिप्रचण्डः ॥**

**ततस्तमादाय तदा स मेने हरीन्द्रमिन्द्रोपममिन्द्रवीर्यं ।**
**अस्मिन् हते सर्वमिदं हतं स्यात् सराघवं सैन्यमितीन्द्रशत्रुः ॥**

अत्र हन्तुं शक्यस्यापि सुग्रीवस्य मारणेन विना सजीवस्य ग्रहणप्रतिपादनात् जीवतः नायकस्य ग्रहणं महाफलं हस्तलग्नो नायको न हन्तव्यः सेनानायके जिते सर्वं बलं जितप्रायमिति सूचितम्। जीवतो नायकस्य ग्रहणं महाफलमित्येतद्**राजधर्मे** अम्बरीषं प्रति इन्द्रः—

नायकं वा प्रधानं वा यो वा स्यात्तत्र पूजितः। जीवग्राहं प्रगृह्णाति तस्य लोका यथा मम॥
इति।

**विराटपर्वणि**—दक्षिणगोग्रहणे धर्मपुत्रेण त्रिगर्तनायकस्य विमोचनादवगम्यते।
तस्मिन् गृहीते विरथे त्रिगर्तानां महारथे। अभज्यत बलं सर्वं त्रैगर्तं तद्भयातुरम्॥

**भीमः**—

नायं पापसमाचारो मत्तो जीवितुमर्हति।

**युधिष्ठिरः**—

मुञ्चेममधमाचारं प्रमाणं यदि ते वयम्। स मुक्तोऽभ्येत्य राजानमभिवाद्य प्रतस्थिवान्॥
इति। राज्ञो विजये सर्वबलविजयश्च **तत्रैवोत्तरग्रहणे** उत्तरं प्रत्यर्जुनः—

इषुपाति च सेनायाः हयान्सयच्छ सारथे।
यावत्समीक्ष्ये सैन्येऽस्मिन् क्वासौ कुरुकुलाधमः। सर्वानेताननादृत्य दृष्ट्वा तमतिमानुषम्॥
तस्य मूर्ध्नि पतिष्यामि तत एते पराजिताः॥ इति।

तदनु हनुमान् कुम्भकर्णगृहीतं सुग्रीवमवलोक्य इत्थं चिन्तयामास—

**मया हते संयति कुम्भकर्णे महाबले मुष्टिविकीर्णदेहे।**
**विमोचिते वानरपार्थिवे च भवन्तु हृष्टाः प्लवगाः समस्ताः॥**

अनेन प्रमादात्परिगृहीतः प्रभुः सैनिकैः मोचनीय इति सूचितम्। अत एव त्रैगर्तेन गृहीतो विराटः मोचनीय इत्युक्तं भीमं प्रति धर्मराजेन—

मत्स्यराजः परामृष्टः त्रिगर्तेन सुशर्मणा। तं मोक्षय महाबाहो गच्छेत द्विषतां वशम्॥

पाण्डवान् प्रति मत्स्यः—

युष्माकं विक्रमादद्य मुक्तोऽहं स्वस्तिमानिह। तस्माद्भवन्तो मत्स्यानामीश्वरास्सर्वे एव हि॥
इति।

अथवा स्वयमप्येष मोक्षं प्राप्स्यति पार्थिवः ।
मया तु मोक्षितस्यास्य सुग्रीवस्य महात्मनः ॥

अप्रीतिश्च भवेत्कष्टा कीर्तिनाशश्च शाश्वतः ।
तस्मान्मुहूर्तं कांक्षिष्ये विक्रमं पार्थिवस्य तु ॥

अनेन परगृहीतस्यापि शूरस्य अन्येन मोचनं क्लेशाधायकमिति सूचितम् । अत एवार्जुनोद्देशेन भगदत्तप्रयुक्तवैष्णवास्त्रे कृष्णेन गृहीते अर्जुनस्याप्रीतिः प्रतिपादिता

**द्रोणपर्वणि —**

विद्धस्ततोऽतिव्यथितः वैष्णवास्त्रमुदीरयत् । उरसा प्रतिजग्राह पार्थं सछाद्य केशवः ॥
ततोऽर्जुनः क्लांतमनाः केशवं प्रत्यभाषत । यद्यहं व्यसनी वा स्यामशक्तो वा निवारणे ॥
ततस्त्वयैवं कार्यं स्यान्न तत्कार्यं मयि स्थिते ॥ इति ।

एवं संचिन्त्य इतस्ततो विशकलितान् वानरान् संस्तम्भयति हनूमति कुम्भकर्णोपि निशाचरकृतराजोपचारैराप्यायितः । कुम्भकर्णभुजान्तर्गतः सुग्रीवः नखैर्दशनैश्च सत्वरमुत्कृत्य तदीयकर्णनास सहसा विहायसमार्गेण राजा राम पार्श्वमाजगाम । ततः सुग्रीवेण विरूपितं कुम्भकर्णं पुनर्वानरवाहिनीं प्रविश्य अविगणय्य च तत्कृतशिलाप्रहारान् वानरान् राक्षसान् गणशो भक्षयंतमवलोक्य रामं सौमित्रिरित्थमाचचक्षे—

नैवायं वानरान् राजन् नापि जानाति राक्षसान् ।
मत्तः शोणितगन्धेन स्वान् परांश्चैव खादति ॥

अनेन वीराणा युद्धावेशेन शरीरस्मरणमपि न भवतीति सूचितम् । तथा च

**राजधर्मे —**

शूरो हि काममन्युभ्यामाविष्टो युद्ध्यते भृशम् । हन्यमानानि गात्राणि परैर्नावबुद्ध्यते ॥
इति ।

ततः लक्ष्मणकृतशरताडनेन स्रवच्छोणितः कुम्भकर्णः श्रीरामभद्रमासाद्य तत्प्रयुक्तरौद्रास्त्रविद्धः करगलितगदः कालाग्निरिव समुज्ज्वलन् लक्ष्मणवचनेन स्वशरीरमारूढान् वानरांश्च विधून्वन् कालायसमुद्गरमादाय नाहं विराधः कबन्धो मारीचो वा किं त्वंसकोपमः कुम्भकर्णोहं त्वन्निग्रहाय समागतोऽस्मीति स्वबलमाचख्यौ —

स कुम्भकर्णस्य वचो निशम्य रामः सुपुङ्खान् विससर्ज बाणान् ।
तैराहतो वज्रसमप्रवेगैर्न चुक्षुभे न व्यथते सुरारिः ॥

यैस्सायकैस्सालवरा निकृत्ता वाली हतो वानरपुङ्गवश्च ।
ते कुम्भकर्णस्य तदा शरीरे वज्रोपमा न व्यथयांबभूवुः ॥

ततो मुद्गरमुद्यम्य हन्तुमागते कुम्भकर्णे—

वायव्यमादाय ततो वरास्त्रं रामः प्रचिक्षेप निशाचराय ।
स तस्य बाहुर्गिरिशृङ्गकल्पः समुद्गरो राघवबाणकृत्त ॥

पपात तस्मिन् हरिराजसैन्ये जघान तां वानरवाहिनीं च ।
स कुम्भकर्णोऽस्त्रविकृत्तबाहुर्महेन्द्रकृत्ताग्रइवाचलेन्द्रः ॥

उत्पाटयामास करेण वृक्षं ततोऽभिदुद्राव रणे नरेन्द्रम् ।
तं तस्य बाहुं सहसालवृक्षं समुद्यतं पन्नगभोगकल्पम् ॥

ऐन्द्रास्त्रयुक्तेन जघान रामो बाणेन जाम्बूनदचित्रितेन ।
स कुम्भकर्णस्य भुजो निकृत्तः पपात भूमौ गिरिसंनिकाशः ॥

विवेष्टमानोऽभिजघान वृक्षान् शैलान् शिला वानरराक्षसांश्च ।
तं छिन्नबाहुं समवेक्ष्य रामः तमापतन्तं सहसा नदन्तम् ॥

द्वावर्धचन्द्रौ निशितौ प्रगृह्य चिच्छेद पादौ युधि राक्षसस्य ।
तौ तस्य पादौ प्रदिशो दिशश्च गिरीन् गुहाश्चैव महार्णवं च ॥

लङ्कां च सेनां कपिराक्षसानां विनादयन्तौ विनिपेततुश्च ।
निकृत्तबाहुर्विनिकृत्तपादो विदार्य वक्त्रं बडबामुखाभम् ॥

दुद्राव रामं सहसाऽभिगर्जन् राहुर्यथा चन्द्रमिवान्तरिक्षे ।
अपूरयत्तस्य मुखं शिताग्रैः रामः शरैर्हेमपिनद्धपुङ्खैः ॥

संपूर्णवक्त्रो न शशाक वक्तुं चुकूज कृच्छ्रेण मुमोह चापि ।
अथाददे सूर्यमरीचिकल्पं स ब्रह्मदण्डान्तककालकल्पम् ॥

अरिघ्नमैन्द्रं निशितं सुपुङ्खं रामश्शरं मारुततुल्यवेगम् ।
तं वज्रजांबूनदचित्रपुंख प्रदीप्तसूर्यज्वलनप्रकाशम् ॥

महेन्द्रवज्राशनितुल्यसारं रामः प्रचिक्षेप निशाचराय ।
स सायको राघवबाहुचोदितो दिशः स्वभासा दश संप्रकाशयन् ॥

सधूमवैश्वानरदीप्तदर्शनो जगाम शक्राशनिवीर्यविक्रमः ।
स तं महापर्वतकूटसंनिभ विवृत्तदंष्ट्रं चलचारुकुण्डलम् ॥

चकर्त रक्षोऽधिपतेः शिरस्तदा यथैव वृत्रस्य पुरा पुरंदरः ।
तद्रामबाणाभिहत पपात रक्षःशिरः पर्वतसंनिकाशम् ॥

बभञ्ज चर्यागृहगोपुराणि प्राकारमुच्चं तमपातयच्च ।
तच्चातिकायं हिमवत्प्रकाशं रक्षस्तदा तोयनिधौ पपात ॥

ग्राहान् वरान् मीनवरान् भुजङ्गान् ममर्द भूमिं च तदा विवेश ।
तस्मिन् हते ब्राह्मणदेवशत्रौ महाबले संयति कुंभकर्णे ॥

चचाल भूर्भूमिधराश्च सर्वे हृष्टाश्च देवास्तुमुलं प्रणेदुः ।
ततस्तु देवर्षिमहर्षिपन्नगाः सुराश्च भूतानि सुपर्णगुह्यकाः ॥

सयक्षगन्धर्वगणा नभोगताः प्रहर्षिता रामपराक्रमेण ।
ततस्तु ते तस्य वधेन भूरिणा मनस्विनो नैर्ऋतराजबान्धवाः ॥

विनेदुरुच्चैर्व्यथिता रघूत्तमं हरिं समीक्ष्यैव यथा पुरा सुराः ।
स देवलोकस्य तमो विहत्य सूर्यो यथा राहुमुखाद्विमुक्तः ॥

तथा व्यभासीद् भुवि वानरौघैर्निहत्य रामो युधि कुम्भकर्णम् ।
प्रहर्षमीयुर्बहवश्च वानराः प्रबुद्धपद्मप्रतिमैरिवाननैः ॥

अपूजयन् राघवमिष्टभागिनं हते रिपौ भीमबले दुरासदे ।
स कुम्भकर्णं सुरसंघमर्दनं महत्सु युद्धेष्वपराजितश्रमम् ॥

ननन्द हत्वा भरताग्रजो रणे महासुरं वृत्रमिवामराधिपः ।

अनेन प्रबलशत्रुहनने योधानां सतोषो भवतीति सूचितम् । तथाच **कर्णपर्वणि** कर्णवधेन सर्वेषा सतोष. प्रतिपादितः —

तदद्भुतं सर्वमनुष्ययोधाः सहृष्टवन्तो निहतेस्म कर्णे ।
ततः शङ्खान् पाडवा दध्मुरुच्चैर्दृष्ट्वा कर्णं पातितं फाल्गुनेन ॥

तथैव कृष्णश्च धनञ्जयश्च हृष्टौ यमौ दध्मतुर्वारिजौ तौ ।
तं सोमकाः प्रेक्ष्य हतं शयान सैन्यैस्सार्धं सिंहनादान् प्रचक्रुः ॥

तूर्याणि संजघ्नुरतीव हृष्टा वासांसि चैवादुधुवुर्ध्वजाश्च ।
संवर्धयन्तश्च नरेन्द्रयोधाः पार्थं समाजग्मुरतीव हृष्टाः ॥

बलान्विताश्चाप्यपरेप्यनर्दन् अन्योन्यमाश्लिष्य च दुद्रुवुश्च । इति ।

**अष्टषष्टितमे —**

ततो रावणः कुम्भकर्णवधमवगत्य एवं विललाप —

तदिदं मामनुप्राप्तं विभीषणवचः शुभम् ।
यदज्ञानान्मया तस्य न गृहीतं महात्मनः ॥

विभीषणवचो यावत्कुम्भकर्णप्रहस्तयोः ।
विनाशोऽयं समुत्पन्नो मां व्रीलयति दारुणः ॥

तस्यायं कर्मणः प्राप्तो विपाको मम शोकदः ।
यन्मया धार्मिकः श्रीमान् स निरस्तो विभीषणः ॥ इति ।

अनेन धार्मिकस्य मन्त्रिणः वाक्यं तिरस्कुर्वन् मूढः विपत्त्यनन्तरमेव प्रबोधं प्राप्नोतीति सूचितम् ।

अत एव धृतराष्ट्रः धर्मात्मनो विदुरस्य वाक्यमशृण्वन् विपत्त्यनन्तरमेव प्रबुद्ध इति प्रतिपादितम् शल्यपर्वणि —

पूर्वमेवाहमुक्तो वै विदुरेण महात्मना । दुर्योधनापराधेन प्रजेयं विनशिष्यति ॥

केचिन्न सम्यक् पश्यन्ति मूढाः सम्यगवेक्ष्य च ।
तदिदं मम मूढस्य तथा भूतं च वस्तु तत् ॥

यदब्रवीत् स धर्मात्मा विदुरः सर्वधर्मवित् । तत्तथा समनुप्राप्तं वचनं सत्यमीरितम् ॥
दैवोपहतचित्तेन यन्मया न कृतं पुरा । अनयस्य फलं तस्य ब्रूहि गावल्गणे पुनः ॥ इति

**कामन्दके च —**

अहिते हितबुद्धिरल्पधीरवमन्येत मतानि मन्त्रिणः ।
चपलः सहसैव सपतन् विनिपत्याल्पमनाः प्रबुध्यते ॥ इति ।

**एकोनसप्ततितमे —**

ततः कुम्भकर्णनिधनेन बहुशो विलपन्तं रावणं त्रिशिरा इत्थमुवाच —

**एवमेव महाराज हतो नस्तातमध्यमः ।**
**न तु सत्पुरुषा राजन् विलपन्ति यथा भवान् ॥**

स तस्मात्प्राकृत इव शोचस्यात्मानमीदृशम् ।

अनेन सत्पुरुषा विपदि शोकं न कुर्वन्तीति सूचितम् । तथा च **भारते** —
शोकस्थानसहस्राणि भयस्थानशतानि च । दिवसे दिवसे मूढमाविशंति न पण्डितम् ॥ इति

ब्रह्मदत्तास्ति ते शक्तिः सायकं कवचो धनुः ।
सहस्रखरसंयुक्तो रथो मेघस्वनो महान् ॥

त्वयाऽसकृद्विशस्त्रेण विशस्ताः त्रिदशदानवाः ।
स सर्वायुधसंनद्धो राघवं शास्तुमर्हसि ॥

कामं तिष्ठ महाराज निर्गमिष्याम्यहं रणे ।
उद्धरिष्यामि ते शत्रून् गरुडः पन्नगानिव ॥

श्रुत्वा त्रिशिरसो वाक्यं रावणो राक्षसाधिपः ।
पुनर्जातमिवात्मानं मन्यते कालचोदितः ॥

अनेन अल्पबुद्धयो राजानः अल्पकृताश्वासनेन कृतार्थमात्मानं मन्यन्त इति सूचितम् । अत एव अलायुधाश्वासनेन दुर्योधनादीनां संतोषः प्रतिपादितो **द्रोणपर्वणि** —
अद्य कुन्तीसुतान् सर्वान् वासुदेवपुरोगमान् । हत्वा संभक्षयिष्यामि सर्वैरनुचरैस्सह ॥
निवारयन् बलं सर्वं वयं योत्स्याम पाण्डवान् ॥ इति वदन्तम्,
तमागतमभिप्रेक्ष्य भीमकर्माणमाहवे । पुनर्जातमिवात्मानं मन्वानः पार्थिवस्तथा ॥
अलायुधं राक्षसेन्द्रं स्वागतेनाभ्यपूजयत् । इति ।
तदनु अहमहमिकया युद्धसनद्धाः आशीर्भिर्भूषणैश्च सम्यक् पूजिताः,

त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ ।
महोदरमहापार्श्वौ निर्जग्मुः कालचोदिताः ॥

ततस्सुदर्शनं नाम नीलजीमूतसंनिभम् ।
ऐरावनकुले जातमारुरोह महोदरः ॥

अत्र ऐरावतकुले जातमित्यनेन सर्वगजापेक्षया उत्कृष्टस्य ऐरावतकुलोत्पन्नतया अस्य गजस्य श्रैष्ठ्यमुक्तम् । ऐरावतश्रैष्ठ्यं च सामानि गायति हिरण्यगर्भे उत्पन्नानां अष्टविधानां गजानां मध्ये उत्पन्नत्वात् । तथा च **वीतिहोत्रीये** —

सूर्यस्याण्डकपालमादिमुनिभिस्संदर्शितं तैजसं
पाणिभ्यां परिगृह्य स प्रणववाक् सव्ये कपालं करे ।
कृत्वा गायति सप्तधा कमलजे सामानि तेभ्योऽभवन्
मत्तास्सप्तगजा अभूत्प्रणवतश्चान्यो द्विधा संभवः ॥ इति ।

अन्यत्रापि —

सूर्यस्याण्डकपाले द्वे सामनी यत्प्रजापतिः । हस्ताभ्यां परिगृह्याथ सप्तसामान्यगायत ॥
गायतो ब्रह्मणस्तस्मात् समुत्पेतुर्मतङ्गजाः ॥

इति । एत एव ऐरावतादयो गजाः । तेषां नामानि —

ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥

सर्वे च गजा एतद्वंश्या एव । तत्र ऐरावनवंश्यानां लक्षणानि–तुण्डशिरश्श्रोत्रदन्तरोमनेत्रबालजेषु दीर्घता महाशरीरत्वं चेति । तदपि तत्रैव —

दीर्घतुण्डशिरश्श्रोत्रदन्तरोमाक्षिवालधिः । मतङ्गजो महाकायः सोऽयमैरावतान्वयः ॥

पुण्डरीकवंश्यानां रोमसु कुब्जत्वं महाकुंभत्वं क्रोधनत्वं सारसनेत्रत्वं आयतशुण्डत्वं चेति । तदपि तत्रैव —

कुब्जरोमा बृहत्कुंभः क्रोधनः सारसेक्षणः । अखण्डायतशुण्डोयं पुण्डरीकान्वयः करी ॥

वामनान्वयानां वेगवत्ता जलविहारः शुण्डादैर्घ्यं पिङ्गलवर्णता स्थूलदीर्घशरीरत्वं चेति । तदपि तत्रैव —

जवी जलविहारेच्छुः दीर्घदन्तोऽग्निवर्णवान् । विस्तारायामवानेष वारणो वामनान्वयः ।

कुमुदान्वयानां ताम्रनेत्रत्वं उन्नतदन्तत्वं नीलदीर्घशुण्डत्वं कुमुदपाण्डुरत्वं चेति । इदमपि तत्रैव —

ताम्राक्षोदग्रदन्तोऽयं कृष्णविस्तीर्णपुष्करः । कुमुदापाण्डुरः कुम्भी कुमुदान्वयसंभवः ॥

अञ्जनान्वयानां दन्तोष्ठपुच्छेपु स्निग्धवर्णता श्वेतरोमत्वं तुङ्गजघत्वं चेति । इदमपि तत्रैव —

स्निग्धवालधिदन्तौष्ठः श्वेतरोमा सुपुष्करः । कुञ्जरस्तुङ्गजंघोऽयमञ्जनान्वयसंभवः ॥

पुष्पदन्तान्वयानां हनौ पृष्ठवंशे च स्थूलावर्तत्वं कृष्णरोमत्वं कृशोदरत्वं स्कन्धहस्ते च पृथुलत्वं चेति । इदमपि तत्रैव —

स्थूलबिन्दुहनूवंशः कृष्णरोमा कृशोदरः । पृथुलस्कन्धहस्तोऽयं पुष्पदन्तान्वयोद्भवः ॥

सार्वभौमान्वयानां ह्रस्वश्रोत्रनेत्रत्वं शुण्डायां मस्तके च शूलबिन्दुत्वं पाण्डरवर्णत्वं चेति । एतदपि तत्रैव —

ह्रस्वे श्रोत्रेक्षणस्थूलं बिन्दुशुण्डालमस्तकः । कान्तपाण्डरवर्णोऽयं सार्वभौमान्वयो गजः ॥

सुप्रतीकान्वयानां कपोतवर्णनेत्रत्वं दीर्घकरत्वं कैरववर्णनेत्रत्वं अत्युन्नतत्वं सूक्ष्मरोमत्वं वीरत्वं चेति । इदमपि तत्रैव —

कपोताक्षः करोदग्र' कैरवद्युतिरुन्नत' । सूक्ष्मरोमा तु वीरोऽयं सुप्रतीकान्वयो गजः ॥ इति ।

ते च गजा युगभेदप्रयुक्तलक्षणभेदात् चतुर्विधा व्यवह्रियन्ते ।

कृतत्रेताद्वापरेषु कलौ नागाश्चतुर्विधाः । भद्रा मंद्रा मृगाश्चेति संकीर्णाः सन्ति भूतले ॥इति ।

तत्र भद्रजातिलक्षणं तत्रैव —

शोणाङ्कवक्षो मृगहस्तकर्णोदरस्तनुर्मेहनगण्डपाण्डुः ।
कृते गजाः सप्तगुणाः कफाङ्गदशाब्ददानाष्टमदास्तु भद्राः ॥

भद्रलक्षणम् —

शीताङ्कदन्ताङ्कनहस्तरोमनखांबकाः सद्वपुषो महाबलाः ।
त्रयोदशे षण्मदपङ्कधातवो रजोगुणा मन्द्रगजा बभूवुः ॥

मृगजातिलक्षणम् —

कृष्णाङ्गो मृगरोमलोचननखः शीतांशुबिन्दुर्वयः
प्राप्ते षोडशवत्सरे मदच्युतः श्वेताननः पेचकः ।
वाताङ्गश्च तमोगुणो मृगगजः संवेगपादश्च यः
आहुस्तं विविधाश्च कर्मकुशलाः शीतांकदन्ताननम् ॥

संकीर्णस्य —

आहारधातुत्रयसंकरेणतज्जातयः संकलना भवन्ति ।
कलौ तु सकीर्णगजास्तु सर्वेतत्तद्विशेषाधिकहीनचिह्नः ॥ इति ।

भद्रादीनां क्रमेण व्यवस्थया शरीरपरिमाणभेद उक्तः —

नवाष्टौ सप्त चायामाः सप्त षट्पञ्च चोच्छ्रयाः ।
नाहो दश नवाष्टौ च भद्रमन्द्रमृगाः क्रमात् ॥

एतेषां गजानां स्वजात्युक्तपरिमाणापेक्षया अधिकपरिमाणत्वेपि अरालात्परालादिसंज्ञावत्वेन स्वामिनः श्रेयःप्रदत्वमुक्तं तत्रैव —

अष्टोच्छ्रयो दशायाम एकादश च नाहतः । अरालोल इति ज्ञेयः सर्वकर्मसु पूजितः ॥
नवारत्न्युन्नतो नागः तथैवैकादशायतः । नाहतो द्वादशारत्निरत्पराल इति स्मृतः ॥ इति ।

शास्त्रान्तरे उत्तममध्यमगजा गदिताः ।

सप्तहस्तोच्छ्रितो नागो नवारत्न्यायतस्तथा । दशारत्निपरीणाहः स भवेदुत्तमो गजः ॥
षडरत्न्युच्छ्रितश्चैव अष्टारत्न्यायतस्तथा । अष्टारत्निपरीणाहः स भवेन्मध्यमो गजः ॥

इति । भद्रादीनां मदस्थानविशेषा उक्ताः —

नासाकटकुचाधरश्रवणहृत्कोशेषु पादेषु च
स्थानेष्वेषु कृतेषु भद्रकरिणां नेत्रे कपोलाऽधरे ।
नासाकोशपदेषु मन्द्रकरिणां कोशाक्षिनासापुटे
द्वापरे मृगहस्तिना किल करे गण्डे च कोशे मदाः ॥ इति ।

मदानां स्थानविशेषे नामभेद उक्तः —

कटौ च दानं श्रवणे च सागरो नेत्रे च शीथुः प्रपदे च मेघः ।
कचे तु चिक्क खलु शोभसे मदस्तुण्डो रसाः शीकरघर्मसञ्ज्ञौ ॥ इति ।

एतेषां चतुर्विधानां गजाना ब्राह्मणादिगुणवत्त्वेन ब्राह्मण्यादिजातिमत्त्वमप्यस्ति । तदपि तत्रैव । ब्राह्मणजातिः —

जलावगाहनासक्तः कातरः कोपनो भृशम् । भोजने लंपटो नित्यं कुञ्जरो विप्रसंभवः ॥

विप्रः शुचिर्मधुपयःस्वरसश्च सर्पिश्चूतप्रसूनः समगन्धितागः ।
स्नानप्रियः सकलनागहितश्च शान्तः स्थानप्रियः शुभगतिः कथितो मुनीन्द्रैः ॥

इति क्षत्रियजातिः —

शान्तः शूरस्सदोत्साही बली युद्धविशारदः । अभीरुराहवे वीरः कुञ्जरः क्षत्रसंभवः ॥

यश्चंदनाद्यहरितालसमानवर्णो गन्धेन यश्च समगुग्गुलुकश्च नित्यम् ।
संनाहकर्मकुशलो यदि निर्भयं हि युद्धे विधेयदृढशस्त्रनिपातशूरः ॥

अथ वैश्यजातिः —

कपटी दुष्टचेष्टश्च कुशलो विकलस्वरः । भीरुराहवकाले च कुञ्जरो वैश्यसंभवः ॥

बन्धूकशालितिलकेतकिमालतीनां गन्धेन यश्च समलंकृतवालतीक्ष्णः ।
नैशक्षमः पिशितभुक् प्रियशातनश्च क्रुद्धोऽपि तूर्णमुपशाम्यति वैश्यजातिः ॥

अथ शूद्रजातिः —

दण्डसाध्यस्तथा नीचो मूर्खश्चाविमलाननः । आहवे निरतः शूद्रजातिर्भवति वारणः ।

उच्छिष्टचिह्नः सहसैव भीरुः शुक्लान्नपाठीनकुलीरगन्धः ।
क्रुद्धो हयेभ्यः कृपणः कृतघ्नः सत्त्वेन शूद्रस्स गजाधमस्यात् ॥

विशेषलक्षणान्यपि —

मध्वाभदक्षिणसमुन्नतदीर्घदन्तः सुस्निग्धचारुनयनस्त्वतिदीर्घनासः ।
सपूर्णविंशतिनखः परिपूर्णकुम्भ ऐरावतः सदृशलक्षणतोऽपि भद्रः ॥

इच्छादानप्रतिभटगजेऽजस्रमालग्नचित्तो युद्धे शक्तः प्रहरति परं भद्रमन्द्रद्वयस्य ।
श्लेष्मोसत्त्वः पृथुतरतनुः क्रोधमन्दोऽतिवेगः शातो दान्तस्त्वखिलकरिणां याति संकीर्णनागः ॥

शिक्षितः शिल्पिभिः शूरः शूरारूढः प्रतापवान् ।
जयत्येकोऽपि मातङ्गः षट्सहस्राणि वाजिनाम् ॥ इति ।

एतेषामवयवलक्षणभेदेन स्वामिनः फलविशेषोऽपि तत्रैव । तत्र शुण्डालक्षणफलभेदस्तावत् —

अङ्गानां श्लेष्मको हस्तः सर्वलोकेषु विश्रुतः । कुरुते पुत्रवृद्धिं सः विश्वासेन सुगंधिना ॥
राष्ट्रवृद्धिं च बलिभिः कुर्याच्छत्रुक्षयं तथा । ताम्रकुक्षिस्तु कुरुते शोकवृद्धिं न संशयः ॥
ताम्रपुष्करयुक्तस्तु शुद्धांतमभिवर्धयत् । मृदुवृत्तः पीनसानुः रुचिरेखा बलायितः ॥
स्फुरन्नीलच्छायः किसलयलतास्वादनरतः विदूरस्वर्णाली प्रचुरतनुपर्याप्तजठरः ।
करस्सत्यं करिसकलमुददायी बहुमतः ॥

नेत्रलक्षणम् —

बिशालनीलागरुबिल्वगन्धपुन्नागबिम्बारुणमन्दवेगम् ।
पयोजशोणाभ्रसुपल्लवाभं करोति हर्षं करिणोऽक्षियुग्मम् ॥

फाललक्षणम् —

समं विशालं बहुदीर्घकेशं सितातिसूक्ष्मारुणरोमयुक्तम् ।
परागपृथ्वीजलगन्धलिप्तं ददाति फालं नवरत्नजालम् ॥

कुम्भलक्षणम् —

कुम्भौ समानारुणरोमयुक्तौ मृद्वल्पबिंद्वन्वितदानगन्धौ ।
पयोजबिल्वाश्वपरागलिप्तौ दत्तस्तुरंगाश्वाचलऋद्धिसपत् ॥

नखलक्षणानि —

शङ्खप्रभाष्टादशविंशतिर्वा सुवर्णबिल्वागरुसूनुचिह्ना ।
उशीरधान्यब्जकचोरगन्धाः कुर्वन्ति रत्नानि नखा गजानाम् ॥

कर्णलक्षणम् —

कर्णाविंगुलिपद्मपञ्चकयुतौ सूक्ष्मौ कठोराचितौ
भीतव्याघ्रमधूकपर्णदलितौ ढक्कामृदङ्गध्वनीम् ।
नीलस्स्वर्णजपाकपृष्टजमरावच्छिद्रशुभ्रौ कटे
लातस्सर्वमहीपतीनिव पशून् पीतातिदीर्घालकौ ॥

गुदलक्षणम् —

जपाप्रसूनारुणरोमयुक्तं कपित्थचूतागरुमूलगन्धम् ।
पयस्तिलाज्याहुतिदुग्धगन्धं गुदं गजाना नृपशौर्यदायी ॥

दन्तलक्षणम् —

विधूतौ चास्य निष्क्रान्तौ निष्किणौ श्लक्ष्णकौ तथा ।
सुस्थिरौ मधुवर्णाभौ गजदन्तौ बहुप्रदौ ॥ इति गजलक्षणानि इति

**हयमुच्चैश्श्रवप्रख्यं श्वेतं कनकभूषणम् ।**
**मनोजवं महाकायमारुरोह नरान्तकः ॥**

अत्र नरान्तकतुरङ्गमस्य श्वेतवर्णत्वेन महाकायत्वेन वेगवत्त्वेन च उत्तमत्वमुक्तम् । श्वेतवर्णस्य प्राशस्त्यमुक्तं ब्रह्मपुराणे —

श्वेताश्वस्य श्वेततरं शिरो यस्य च लक्ष्यते ।
भर्तुः सर्वार्थकृत् स स्यात् सूर्यकान्ताभिधानवान् ॥
सर्वे वर्णाः प्रशस्तास्स्युः श्वेतवर्णेन संयुताः । इति ।

अन्येऽपि वर्णविशेषास्तत्रैव —

श्वेताः शोणाः पिशङ्गाश्च कृष्णमिश्रास्तुरङ्गमाः । वर्णभेदात्पञ्चभेदाः भवन्ति जगतीतले ॥ इति ।

एतेषां श्वेतादिवर्णविशेषेण फलभेदस्तत्रैव प्रतिपादितः –

हीरक्षीरशशाङ्कशङ्खरजतप्रालेयवर्णाः स्थिता-
आलक्तद्युतिदाडिमीकुसुमवद्रक्ताश्च शोणाश्शुभाः ।
कृष्णास्त्वंजनकोकिलाबुदनिभा भृङ्गाङ्गनागोपमा
हेमाभा हरयः प्रदीप्तहुतभुग्गोरोचनाभाः शुभाः ॥

ये वर्णभेदसंमिश्रास्तेऽश्वा मिश्राः प्रकीर्तिताः । शिरोवक्षःपुच्छमुखपादा एषा च पांडराः ॥
ते त्वष्टमङ्गला प्रोक्तास्तानश्वानवलोकय । मुखे च चरणे ये च गता धवलतांगके ॥
पञ्चकल्याणसंपन्नास्तान् पश्य तुरगानपि । अश्वस्य नाभिमारभ्य पूर्वार्धं बालभानुवत् ॥
अपरार्धं पाण्डरं चेद्दिवावैजयको हि सः । पूर्वमर्धं शशाकाभं पश्चिमं बालसूर्यवत् ॥
यस्याश्वस्य भवेदेवं निशावैजयकस्तु सः । इति ।

इतोऽपि वर्णविशेषेण फलदातृत्वमश्वानां प्रदर्शितम् तत्रैव —

अश्वस्तु जठरे श्वेतः पुत्रं भर्त्रे ददाति च । वलक्षवक्षा आनन्दं ग्रीवायां पांडुरो धनम् ॥
मुखे शुक्लस्तु विजयं सौख्यं पृष्ठे तु पांडुरः ।
वामपार्श्वे सितो दारान् धान्यं दक्षे वलक्षवान् ॥

दक्षे–दक्षिणपार्श्वे –

यस्त्वस्य पृष्ठवालेषु श्वेतः सोऽश्वो जयप्रदः । सैन्यस्य पुरतो नेयो जयार्थं पृथिवीभुजाम् ॥
अन्यवर्णयुताश्श्वेता अश्वानां तु प्रशस्तकाः । अश्वस्तु कृष्णः शोणो वा कुक्षौ वक्षसि सर्वतः ॥
वाजी वैजयिको नाम्ना भर्तुस्सर्वार्थसाधकः । अश्वस्तु कृष्णः श्वेतो वा कुक्षौ वक्षसि चारुणः ॥
भर्त्रे ददाति भाग्यं च विजयं च रणागणे । इति ।

परिमाणविषये –

शतांगुलसमुत्सेधमुत्तमाश्वस्य कीर्तितम् । ततः षोडशभागोनं प्रमाणं मध्यमस्य तु ॥
मध्यमस्याष्टभागोनं प्रमाणं स्यात्कनीयसः ॥ इति ।

वेगविषये –

उपचितत्वलिशोभाः संप्रसारैरुपेताः सुरभिकुसुमगन्धाः शंखमेघेभनादाः ।
बहुविधशुभवर्णाः संहताङ्गास्सुरूपाश्शुभगतिजवयुक्ता वाहवर्यास्सुनेत्राः ॥
जीमूतवर्णो घनघोषहेषितः सत्त्वाढ्यगन्धो गजसिंहगामी ।

प्रियश्च माल्ये च विलेपने च सोऽप्यश्वराजो नृपवाहनं स्यात् ॥ इति।

अन्यान्यपि लक्षणानि तत्रैव –

उरसि द्वौ शिरसि च द्वौ वास्ये द्वौ च नासयोः। ललाटमध्ये त्वेकश्च पाणावेकः प्रकीर्तितः ॥

एते दश ध्रुवावर्ताः प्रशस्ताः सर्ववाजिनाम् ।

उक्तलक्षणरहिता अश्वा अशुभाः। तदुक्तं ब्रह्मपुराणे ––

एतैर्विरहिता अश्वाः प्रोक्ता दुर्लक्षणा इति ।

इतोपि अश्वानां लक्षणविशेषेग स्वामिफलदातृत्वमुक्तं तत्रैव —

श्रीवत्सो वक्षसि प्रोक्तस्त्वावर्तैः पञ्चभिर्भवेत् । मध्यमेच चतुर्दिक्षु संभूतैः सप्रदक्षिणैः ॥

श्रीवक्षकी तुरंगश्च भर्तुस्सर्वार्थसाधक । भवेना यस्य चाश्वस्य द्वावावर्तौ ललाटिके ॥

रिपुं जयति तत्स्वामी धनधान्यसपुत्रवान् । ललाटे त्रिभिरावर्तैः यस्य निश्रेणिरस्ति हि ॥

लभते वाजिनानेन धनधान्यमियान्नृपः । सव्यावर्तैश्चतुर्भिश्च ललाटस्थैस्तुरङ्गमाः ॥

कुर्वते स्वामिनं सद्यः पुत्रवन्तं महीपतिम् । आवर्तौ वृषभाख्यौ तु कर्णमूले समाश्रितौ ॥

यस्य स्वामी तदश्वस्य लभते भूषणानि च । एवमादिशुभावर्तैरंकिताश्चाश्वपुङ्गवाः ॥

वक्षो ललाटं जवनं हयानां त्रीणि प्रशस्तानि पृथूनि विद्यात् ।

पृष्ठं च कर्णावथ कुक्षिनासा ह्रस्वानि वै त्रीणि शुभानि विद्यात् ॥

वालाश्च रोमाणि च केसराश्च त्रीणि प्रशस्तानि मृदूनि विद्यात् ।

आस्यं च नेत्रे च शिरो हयानां त्रीणि प्रशस्तानि महान्ति विद्यात् ॥

ओष्ठौ च जिह्वा त्वथ सृक्किगी च त्रीणि प्रशस्तानि तनूनि विद्यात् ।

ग्रीवाऽथ जंघा वदनं हयाना त्रीण्येव दीर्घाणि शुभानि विद्यात् ॥

इति लक्षणविशेषविशिष्टः राजवाहनत्वेन स्वीकार्यः । तदुक्तम् –

पादे कन्दुकवत् स्थितौ च गिरिवच्चास्फालने सिह्मवत्
नेत्रे नीरजवज्जवे पवनवद्धेषारवे मेघवत् ।
विन्यासे नटवन्मुखे कुवलवद्वक्त्रेन्दुवद्वाजिनां
येषां ते भुवि राजवाहनपदे संभावनीयास्सदा ॥ इति ।

दुर्लक्षणानि च तत्रैवोक्तानि –

आवर्तौ गलमध्यस्थौ भर्तुः क्षुद्दुःखमृत्युदौ । भर्तुर्जंघोद्भवावर्तौ भयबन्धनदुःखदौ ॥

स्वामिनो मातरं हन्ति ह्यावर्तस्तूत्तरोष्ठजः । कक्षावर्तस्तुरंगाणां हन्ति स्वामिनमाहवे ॥
घोणावर्तो जनयति कश्मलं मृत्युमाशु च । गडावर्तो भयगदजनकः स्वामिनो भवेत् ॥
जान्वावर्तः भक्षयति सकुलं स्वामिनं द्रुतम् । एवमाद्यशुभावर्तैस्सहिताश्च हयाधमाः ॥

शालायां न प्रवेश्याश्च नागता इह तद्विधाः ॥
द्वात्रिंशदायुरश्वानां दशाश्च कथिता दश ।
त्रीणि वर्षाणि मासौ द्वौ दिनानि द्वादशैव हि ॥
आयुषो दशमे भागे दशा प्रोक्ताः क्रमाद्दश ।

देशविशेषोत्पन्नत्वात् अश्वाः प्रशस्ताः । ते च ब्रह्माण्डपुराणे दर्शिता —

एते कांभोजदेशीया एते बाह्लीकदेशजाः । एते वनायुजा अश्वा एते गान्धारदेशजाः ॥
आरट्टदेशजा एते सिन्धुदेशोद्भवा इमे । एते यवनदेशीया एते कंदरदेशजाः ॥
पार्वतेया इमे अश्वा एते काश्मीरसंभवाः । द्वीपान्तरोद्भवा एते इमे केकयदेशजाः ॥
वासंतिकाश्च सौवीरा मालवास्तालवा इमे । कौरक्षेत्राश्च कालिङ्गा एते सौराष्ट्रजा हयाः ॥
एते हैमवता अश्वा इमे मगधदेशजाः । पाञ्चाला अपि साल्वेया मन्दराद्रिसमुद्भवाः ॥ इति

एतादृशाश्वानां पूजनीयत्वमुक्तं तत्रैव —

राजाप्येवंविधानश्वान् रूपलक्षणसंयुतान् । गन्धमाल्यैश्च विविधैः पूजयेत्तान् विधानतः ॥
इति । वीतिहोत्रीयेऽपि —

सर्वदेवमया वाहास्संति यस्मिन्गृहांगणे । पवित्रं परमं तस्मिन् माङ्गल्यमपि चोत्तमम् ॥

अश्वेभ्यः परमं नास्ति राज्ञो विजयकारणम् ।
आशु कार्याणि भूपाना यथाश्वाः पृथिवीतले ॥

कुर्वंतीह तथा शीघ्रं न गजा न पदातयः । पदातिगजमुख्यैश्च शतशोऽथ सहस्रशः ॥
वेष्टितोऽपि व्रजत्यश्वः यथेष्टं पक्षिराडिव । सङ्ग्रामे वाजिनोऽत्यर्थं जिता अपि सहस्रशः ॥

क्षणान्मुख्ये रिपून् वीक्ष्य नयन्ति यममन्दिरम् ।
प्रसादं न प्रयच्छंति न च निर्गमनं तथा ।
पिण्डीकृत्य रिपून् हन्तुं धारयन्ति तुरङ्गमान् ॥

शत्रोस्सहायमायांतं श्रुत्वा दूरादपि द्रुतम् । गत्वा घ्नंति हयारोहाः पुनश्चायांति तत्क्षणात् ॥
रणे सहायवन्तोऽपि गजास्स्थूला महाबलाः । अश्वैर्विना निपात्यन्ते छिन्नमूला इव द्रुमाः ॥

यस्याश्वास्तस्य सौराज्यं यस्याश्वास्तस्य संपदः।
यस्याश्वास्तस्य विक्रान्तिर्यस्याश्वास्तस्य मेदिनी ॥

विद्या धनं वै विदुषां विवेको योगिनां धनम्। द्विजाना धनमाचारस्तुरगा भूभृतां धनम् ॥

पानीयं प्राणिनां प्राणाः प्राणास्सस्यं क्षितेस्तथा।
तारुण्यं योषिता प्राणाः प्राणा अश्वास्तु भूभृताम् ॥

न साहित्यात्परा विद्या न विवेकात्परं धनम्।
नास्ति शंभोः परं दैवं न वाहोऽन्यस्तुरङ्गमात् ॥ इति।

इतरैरपि स्वस्ववाहनान्यधिरुह्य विविधसमरपरिकरसमेताः स्वस्वसेनासमावृताः निर्गत्य वानरवाहिनीमभिजघ्नु। विचित्रतरचातुर्यसंदर्शनाय देवानाकर्षयन्तः परस्परप्रहारेण शूरान् दिवं प्रापयन्त सुरलोकमध उपरि च नरलोकं कुर्वाणा इव त्रिभुवनमपि व्यामोहयन्तो वानरैर्नैऋतयूथपाः गिरितरुपाषाणैः शस्त्रैश्च युद्धमकुर्वन् ॥

तस्मिन् प्रवृत्ते तुमुले विमर्दे प्रहृष्यमाणेषु बलीमुखेषु।
निपात्यमानेषु च राक्षसेषु महर्षयो देवगणाश्च नेदुः ॥

ततो हयं मारुततुल्यवेगमारुह्य शक्तिं निशितां प्रगृह्य।
नरान्तको वानरराजसैन्यं महार्णवं मीन इवाविवेश ॥

स वानरान् सप्तशतानि वीरः प्रासेन दीप्तेन विनिर्बिभेद।
एकक्षणेनेन्द्ररिपुर्महात्मा जघान सैन्यं हरिपुङ्गवानाम् ॥

ददृशुश्च महात्मानं हयपृष्ठप्रतिष्ठितम्।
चरन्तं हरिसैन्येषु विद्याधरमहर्षय ॥

स तस्य ददृशे मार्गो मांसशोणितकर्दमः।
पतितैः पर्वताकारैर्वानरैरभिसंवृतः ॥

यावद्विक्रमितुं बुद्धिं चक्रुः प्लवगपुङ्गवाः।
तावदेतानतिक्रम्य निर्बिभेद नरान्तकः ॥

यावदुत्पाटयामासुः वृक्षान् शैलान् वनौकसः।
तावत्प्रासहताः पेतुर्वज्रहस्तादिवाचलाः ॥

ततो नरान्तकाय सुग्रीवचोदितो वालितनयः नरान्तकोपान्तमासाद्य किमेभिरल्पबलै-र्वानरैः अस्मदुरसि निदर्शय प्रासबलमिति रोषमुद्दीपयन् विफलयन् प्रासप्रहारं तद्वाहनमपि निजकरतलेन ताडयामास ॥

> निमग्नतालुः स्फुटिताक्षितारः निष्क्रान्तजिह्वोऽचलसंनिकाशः ।
> स तस्य वाजी निपपात भूमौ तलप्रहारेण विकीर्णमूर्धा ॥

तदनु नरान्तकमुष्टिप्रहारेण कुपितहृदयोऽगद. मुष्टिताडनेन तद्रक्षो विक्षोभ्य भुवि पातयामास ॥

**सप्ततितमे —**

ततो देवान्तकत्रिशिरोमहोदरैः परिक्षिप्तमङ्गदमवलोक्य हनूमान् देवान्तकं सहसाभ्युपेत्य मुष्टिना शिरस्यभिहत्यापातयत् । करिवरगतोऽपि महोदरः नीलेन प्रविध्य कतिपयसमय तत्प्रेरितगिरिशिखरपातेन गजेन सहैव गतासुः पपात । ततस्समीरसुतोऽपि स्वप्रहिततरुगिरिशिखराणि अन्यथयन्तं त्रिशिखरं त्रिशिरस तदीयासिदशिना शिरश्छेदेन शमनशरणं प्रापयामास । ऋषभनामको हरिरपि गदापाणिना महापार्श्वेन रणमाचरन् तदीयया गदया तं पातयामास ॥

**एकसप्ततितमे —**

ततो निजभ्रातृव्यनिधनेन रजनीचरनिकरपरिभ्रमणेन च रोषकषायलोचनं रणतल-निजरथचरणचक्रविदीर्णार्णवसमवानरसमूहं दशशतहयवरधोरणीयुतायुतभानुभास्वरहेमरथा-स्थितं कटितटघटितहाटकगुणकटकमकुटकोटीसंघटितमहामणिगणकिरणावल्याऽभिमुखगत-कपिगणमनोविषादमाकलयन्तं स्वकृततपोविधिमुदितचतुराननवरदानलब्धनिरुपमभुजगसम-निजबलजनितावलेपं आयान्तमन्तकमिव पुनश्च कायमानेन कुंभकर्ण एवायमिति भ्रममातन्वन्तं महाकायं तमतिकायमवलोक्य भीता वानराः,

> शरण्यं शरणं जग्मुर्लक्ष्मणाग्रजमाहवे ।
> स तं दृष्ट्वा महात्मानं राघवस्तु विसिष्मिये ॥

> वानरान् सांत्वयित्वा तु विभीषणमुवाच ह ।
> कोऽसौ पर्वतसंकाशो धनुष्मान् हरिलोचनः ॥

युक्तं हयसहस्रेण विपुलस्यंदनं श्रितः।
धनुषा चास्य सज्जानि हेमपृष्ठानि सर्वशः॥

शोभयन्ति रथश्रेष्ठं शक्रचापमिवांवरम्।
सध्वजः सपताकश्च सानुकर्षो महारथः॥

चतुस्सादिसमायुक्तो मेघस्तनितनिस्वनः।
विंशतिर्दश चाष्टौ च तूण्योऽस्य च रथे स्थिताः॥

द्वौ च खड्गौ रथगतौ पार्श्वस्थौ पार्श्वशोभितौ।
चतुर्हस्तत्सरुयुतौ व्यक्तहस्तदशायतौ।
आचक्ष्व मे महाबाहो त्वमेनं राक्षसोत्तमम्॥

इति पृष्टो विभीषणो रामभद्रमित्थमाचचक्षे—

दशग्रीवो महातेजा राजा वैश्रवणानुजः।
तस्यासीद्वीर्यवान् पुत्रो रावणप्रतिमो रणे॥

वृद्धसेवी श्रुतनयस्सर्वास्त्रविदुषां वरः।
अश्वपृष्ठे रथे नागे खड्गे धनुषि चर्मणि॥

भेदे सांत्वे च दाने च नये मन्त्रे च संमतः।
यस्य बाहुं समाश्रित्य लङ्का वसति निर्भया॥

तनयं धान्यमालिन्या अतिकायमिमं विदुः।
एतेनाराधितो ब्रह्मा तपसा भावितात्मना॥

अस्त्राणि चाप्यवाप्तानि रिपवश्च पराजिताः।
सुरासुरैरवध्यत्वं दत्तमस्मै स्वयंभुवा॥

एतच्च कवचं दिव्यं रथश्चैवाऽर्कभास्वरः।
वज्रं विष्टंभितं येन बाणैरिन्द्रस्य धीमतः॥

पाशस्सलिलराजस्य युद्धे प्रतिहतस्तथा।
तदस्मिन् क्रियतां यत्नः क्षिप्रं पुरुषपुङ्गव॥

ततोऽतिकायोऽपि वनौकसामनीकिनीं प्रविश्य तामतिसंत्रासयन्नभिमुखमागतान् गिरिशिखरधरान् द्विविदमैंदकुमुदादीन् शरवर्षैरुत्सादयन्,

स राक्षसेन्द्रो हरियूथमध्ये नायुध्यमानं निजघान कञ्चित् ।

अनेनायुध्यमानस्य हननं न कर्तव्यमिति सूचितम् । तथाच मनुः —

नायुध्यमानं पश्यन्तं न परेण समागतम् । इति ।

उपेत्य रामं सधनु कलापी सगर्वितं वाक्यमिदं बभाषे ।
रथे स्थितोऽहं शरचापपाणिर्न प्राकृतं कञ्चन योधयामि ॥

यश्चास्ति कश्चिद्व्यवसाययुक्तो ददातु मे क्षिप्रमिहाद्य युद्धम् ।
तत्तस्य वाक्यं ब्रुवतो निशम्य चुकोप सौमित्रिरमित्रहन्ता ॥

अथातिकायः कुपितो दृष्ट्वा लक्ष्मणमुत्थितम् ।
बालस्त्वमसि सौमित्रे विक्रमेष्वविचक्षणः ॥

गच्छ किं कालसदृशं मां योधयितुमिच्छसि ।
अथवा त्वं प्रतिष्टंभान्न निवर्तितुमिच्छसि ।
तिष्ठ प्राणान् परित्यज्य गमिष्यसि यमक्षयम् ॥

ततः —

श्रुत्वातिकायस्य वचस्सरोषं सगर्वितं संयति राजपुत्रः ।
न वाक्यमात्रेण भवान् प्रधानो न कत्थनात्सत्पुरुषा भवन्ति ॥

कर्मणा सूचयात्मानं न विकत्थितुमर्हसि ।
पौरुषेण तु यो युक्तः स तु शूर इति स्मृतः ॥

अनेन सत्पुरुषाः कत्थनं न कुर्वन्ति क्रिययैव बलं दर्शयन्तीत्युक्तम् । तच्च प्राक् निरूपितम् ॥

बालोऽयमिति विज्ञाय न माऽवज्ञातुमर्हसि ।
बालो वा यदि वा वृद्धो मृत्यु जानीहि मां तव ॥

बालेन विष्णुना क्रान्तास्त्रयो लोकास्त्रिभिः क्रमैः ।

अत्र बालोऽपि तेजस्वी शत्रुर्नावमन्तव्य इत्युक्त्या तेजस्विना बाल्यं वयः पराक्रमनिरोधे न भवतीति सूचितम् । तथाच कालिदासः —

कौशिकेन सकिलक्षितीश्वरो राममध्वरविघातशातये ।
काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते ॥

वनपर्वणि अष्टावक्रोपाख्यानेऽपि —

न बाल इत्यवमन्तव्यमाहुर्बालोऽप्यग्निर्दहति स्पृश्यमानः । इति ।

ततस्तद्वचनाकर्णनकुपितोऽतिकायः शरवर्षेण सौमित्रिकृतपत्रिवर्षधारामधरीकृत्य लक्ष्मणप्रयुक्तमाग्नेयास्त्रं सौरेण सशाम्य स्वेन प्रहितमैषीकास्त्रमैन्द्रेण प्रतिहतमवलोक्य सौम्यमस्त्रं प्रायुङ्क्त ॥

**वायव्येन तदस्त्रं तु निजघान स लक्ष्मणः ।**
**अथैनं शरधाराभिर्धाराभिरिव तोयदः ॥**

**अभ्यवर्षत्सुसंक्रुद्धो लक्ष्मणो रावणात्मजम् ।**
**तेऽतिकायमासाद्य कवचे वज्रभूषिते ॥**

**भग्नाग्रशल्यास्सहसा पेतुर्बाणा महीतले ।**
**अवध्यकवचः संख्ये राक्षसो नैव विव्यधे ॥**

**अथैनमभ्युपागम्य वायुर्वाक्यमुवाच ह ।**
**ब्रह्मदत्तवरो ह्येष अवध्यकवचावृतः ॥**

**ब्राह्मेणास्त्रेण भिन्ध्येनमेष वध्यो हि नान्यथा ।**

अनेन कवचस्य अभेद्यत्वमुक्तम् । तच्चाभेद्यत्वं द्विविधं देवताप्रसादकृतं मन्त्रप्रभावकृतं चेति । तत्र देवताप्रसादकृतं मार्कण्डेयपुराणे —

अस्त्राण्यनेकरूपाणि तथाऽभेद्यं च दंशनम् । अम्लानपंकजां मालां शिरस्युरसि चापरम् ।
अददाज्जलधिस्तस्मै पङ्कजं चातिशोभनम् ॥ इति ।

मन्त्रप्रभावकृताऽभेद्यत्वं च द्रोणपर्वणि —

सत्यं वदसि कौरव्य दुराधर्षो धनंजयः । अहं तु तत्करिष्यामि यथैनं प्रसहिष्यसि ॥
अद्भुतं चाद्य पश्यंतु लोके सर्वधनुर्धराः । एष ते कवचं राजन् तथा बध्नामि काञ्चनम् ॥
यथा न बाणा नास्त्राणि प्रसरिष्यति ते रणे ।
एवमुक्त्वा वरं द्रोणः स्पृष्ट्वाऽम्भो वर्म भास्वरम् ॥

आबबन्धाद्भुततमं जपन्मन्त्रं यथाविधि ।

द्रोणः —

करोतु स्वस्ति ते ब्रह्मा ब्रह्म चापो द्विजातयः ।
सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्स्वस्त्यस्तु भारत ॥

ययातिर्नहुषश्चैव धुन्धुमारो भगीरथः । तुभ्यं राजर्षयस्सर्वे स्वस्ति कुर्वन्तु सर्वशः ॥
स्वस्ति तेऽस्त्वेकपादेभ्यो बहुपादेभ्य एव च । स्वस्त्यस्त्वपादकेभ्यश्च नित्यं तव महारणे ॥

स्वाहा स्वधा शची चैव स्वस्ति कुर्वन्तु ते सदा ।
लक्ष्मीररुन्धती चैव कुर्वाता स्वस्ति तेऽनघ ॥

असितो देवलश्चैव विश्वामित्रस्तथाङ्गिराः । वसिष्ठः काश्यपश्चैव स्वस्ति कुर्वन्तु ते नृप ॥

धाता विधाता लोकेशो दिशश्च सदिगीश्वराः ।
स्वस्ति तेऽद्य प्रयच्छन्तु कार्तिकेयश्च षण्मुखः ॥

विवस्वान् भगवान् स्वस्ति करोतु तव सर्वशः ।
दिग्गजाश्चैव चत्वारः क्षितिश्च गगनं ग्रहाः ॥

अधस्ताद्धरणीं योऽसौ सदा धारयते नृप । शेषश्च पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु ॥
गान्धारे युधि विक्रम्य निर्जितास्सुरसत्तमाः । पुरा वृत्रेण दैत्येन भिन्नदेहास्सहस्रशः ॥

ततश्शक्रो ब्रह्माणं पुरस्कृत्य देवैस्सह शिवं शरणं जगाम । शिवोऽपि शरणागतमिन्द्रमाह —

अवश्यं तु मया कार्यं साह्यं सर्वदिवौकसाम् । ममेदं गात्रजं शक्र कवचं गृह्य भास्वरम् ॥

बधानानेन मन्त्रेण मानसेन सुरेश्वर ।

द्रोणः —

इत्युक्त्वा वरदः प्रादाद्वर्म तन्मन्त्रमेव च ।

स तेन वर्मणा गुप्तः प्रायाद्वृत्रचमूं प्रति । नानाविधैश्च शस्त्रौघैः पात्यमानैर्महारणे ॥
न सन्धिः शक्यते भेत्तुं वर्म भेदस्य तस्य तु । ततो जघान समरे वृत्रं देवपतिस्स्वयम् ॥
तं च मन्त्रमयं बन्धं वर्म चाङ्गिरसे ददौ । अंगिराः प्राह पुत्रस्य मन्त्रज्ञस्य बृहस्पतेः ।

बृहस्पतिरथोवाच अग्निवेश्याय धीमते ॥

अग्निवेश्यो मम प्रादात्तेन बध्नामि वर्म ते । तवाद्य देहरक्षार्थं मन्त्रेण नृपसत्तम ॥

ब्रह्मसूत्रेण बध्नामि कवचं तव भारत।

हिरण्यगर्भेण यथा बद्धं विष्णोः पुरा रणे। यथा च ब्रह्मणा बद्धं संग्रामे तारकामये॥

शक्रस्य कवचं दिव्यं तथा बध्नाम्यहं तव। बध्वा तु कवचं तस्य मन्त्रेण विधिपूर्वकम्॥

प्रेषयामास राजानं युद्धाय महते द्विजः।

ततो दुर्योधनः—

व्येतु वो भीरहं कृष्णं प्रेषयिष्यामि मृत्यवे।

इत्युक्त्वा सैनिकान् सर्वान् जयापेक्षीनराधिपः॥

पार्थमाभाष्य संरंभादिदं वचनमब्रवीत्। पार्थाय शिक्षितं तेऽस्त्रं दिव्यं पार्थिवमेव॥

तद्दर्शय मयि क्षिप्रं यदि जातोऽसि पांडुना। यद्बलं तव वीर्यं च केशवस्य तथैव च॥

तत्कुरुष्व मयि क्षि ं पश्यामस्तव पौरुषम्। अस्मात्परोक्षं कर्माणि कृतानि प्रवदन्ति ते।

स्वामिसत्कारयुक्तानि यानि तानीह दर्शय॥

संजय उवाच—

एवमुक्त्वार्जुनं राजा त्रिभिर्मर्मातिगैश्शरैः। अभ्यविध्यन्महावेगैश्चतुर्भिश्चतुरो हयान्॥

वासुदेवं च दशभिः प्रत्यविध्यत्स्तनान्तरे। प्रतोदं चास्य भल्लेन छित्वा भूमावपातयत्॥

तं चतुर्दशभिः पार्थश्चित्रपुंखैः शिलाशितैः। अविध्यत्तूर्गमव्यग्रस्ते चाभ्रंशयन्त वर्मणि॥

तेषां नैष्फल्यमालोक्य पुनर्नव च पञ्च च।

प्राहिणोन्निशितान् बाणान् ते चाभ्रश्यन्त वर्मणि॥

अष्टाविंशस्तुतान्बाणान् स्तान् विप्रेक्ष्य निष्फलान्। अब्रवीत्परवीरघ्नः कृष्णोर्जुनमिदं वचः॥

अदृष्टपूर्वं पश्यामि शिलानामिव सर्पणम्। त्वया सम्प्रेषिता. पार्थ नार्थं कुर्वन्ति पत्रिणः॥

कश्चिद्गाण्डीवजः प्राणः तथैव भरतर्षभ। मुष्टिश्च ते यथापूर्वं भुजयोश्च बलं तव॥

नवा कश्चिदयं कालः प्राप्तस्स्यादद्य पश्चिमः॥

तव चैवास्य शत्रोश्च धर्ममाचक्ष्व पृच्छतः। विस्मयो मे महान् पार्थ तव दृष्टा शरानिमान्॥

व्यर्थान्निपतितान् दृष्ट्वा दुर्योधनरथं प्रति। वज्राशनिसमा घोराः परकायावभेदिनः॥

शराः कुर्वन्ति ते नार्थं पार्थ काद्य विडम्बना॥

अर्जुनः—

द्रोणेनैषा मतिः कृष्ण धार्तराष्ट्रे निवेशिता। अभेद्या हि ममास्त्राणां एषा कवचधारणा॥

अस्मिन्नन्तर्हितं कृष्ण त्रैलोक्यमपि वर्मणि। एको द्रोणो हि वेदैतदहं तस्माच्च सत्तमात् ॥
न शक्यते तत्कवचं बाणैर्भेत्तुं कथञ्चन। अपि वज्रेण गोविन्द स्वयं मघवता युधि ॥
जानंस्त्वमपि वै कृष्ण मा विमोहयसे कथम्। यद्वृत्तं त्रिषु लोकेषु यच्च केशव वर्तते ॥
तथा भविष्यच्चैव तत्सर्वं विदितं तव। न त्विदं वेद वै कश्चिद्यथा त्वं मधुसूदन ॥

एष दुर्योधनः कृष्ण द्रोणेन विहितामिमाम् ॥

तिष्ठत्यभीतवत्संख्ये बिभ्रन् कवचधारणम्। यत्त्वत्र विहितं कार्यं नैष तद्वेत्ति माधव ॥
स्त्रीवदेव बिभर्त्येतां युक्तां कवचधारणाम्। पश्य बाह्वोश्च मे वीर्यं धनुषश्च जनार्दन ॥
पराजयिष्ये कौरव्यं कवचेनापि रक्षितम्। इदमङ्गिरसे प्रादाद्देवेशो वर्म भास्वरम् ॥
तस्माद्बृहस्पतिः प्राप ततः प्राप पुरन्दरः। पुनर्ददौ सुरपतिर्मह्यं वर्म सुसंग्रहम् ॥
दैवं यद्यस्य वर्मैतद्ब्रह्मणा वा स्वयंकृतम्। नैनं गोप्स्यति दुर्बुद्धिरद्य बाणहतं मया ॥

संजयः —

एवमुक्त्वार्जुनो बाणानभिमन्त्र्य व्यकर्षयत्। विकृष्यमाणांस्तेनैव धनुर्मध्यगतान् शरान् ॥
तानस्यास्त्रेण चिच्छेद द्रौणिस्सर्वास्त्रघातिना। तान्निकृत्तानिषून् दृष्ट्वा दूरतो ब्रह्मवादिना ॥
न्यवेदयत्केशवाय विस्मितश्श्वेतवाहनः। नैतदस्त्रं मया शक्यं द्विः प्रयोक्तुं जनार्दन ॥
अस्त्रं मामेव हन्याद्धि हन्याच्चापि बलं मम। ततो दुर्योधनः कृष्णं नवभिर्नवभिश्शरैः ॥
अविध्यत रणे राजन् शरैराशीविषोपमैः। भूय एवाभ्यवर्षच्च समरे कृष्णपाण्डवौ ॥
शरवर्षेण महता ततोऽहृष्यन्त तावकाः। चक्रुर्वादित्रनिनदान् सिंहनादरवांस्तथा ॥
ततः क्रुद्धो रणे पार्थः सृक्किणी परिसंलिहन्। नापश्यत तस्याङ्गं यन्न स्याद्वर्मरक्षितम् ॥
ततोऽस्य निशितैर्बाणैस्सुमुक्तैरन्तकोपमैः। हयांश्चकार निर्देहानुभौ च पार्ष्णिसारथी ॥
धनुरस्याच्छिनत्तूर्णं हस्तावापञ्च वीर्यवान्। रथं च शकलीकर्तुं सव्यसाची प्रचक्रमे ॥
दुर्योधनं च बाणाभ्यां तीक्ष्णाभ्या विरथीकृतम्। अविद्धयद्धस्ततलयोरुभयोरर्जुनस्तदा ॥
तं कृच्छ्रामापदं प्राप्तं दृष्ट्वा परमधन्विनः। तमापेतुः परीप्सन्तो धनञ्जयशरार्दितम् ॥
तं रथैर्बहुसाहस्रैः कल्पितैः कुञ्जरैर्हयैः। पदात्योघैश्च सरब्धैः परिवव्रुर्धनञ्जयम् ॥ इति।

**तं ब्रह्मणोऽस्त्रेण नियुज्य चापे शरं सुपुंखं यमदूतकल्पम्।**
**सौमित्रिरिन्द्रारिसुतस्य तस्य ससर्ज बाणं युधि वज्रकल्पम् ॥**

समागतं प्रेक्ष्य तदातिकायो बाणं प्रदीप्तान्तककालकल्पम् ।
जघान शक्त्यृष्टिगदाकुठारैः शूलैर्हलैश्चाप्यविपन्नचेताः ॥

तान्यायुधान्यद्भुतविग्रहाणि मोघानि कृत्वा स शरोऽग्निदीप्तः ।
प्रसह्य तस्यैव किरीटजुष्टं तदातिकायस्य शिरो जहार ॥

प्रहर्षयुक्ता बहवश्च वानराः प्रबुद्धपद्मप्रतिमाननास्तदा ।
अपूजयन् लक्ष्मणमिष्टभागिनं हते रिपौ भीमबले दुरासदे ॥

द्विसप्ततितमे —

ततस्समागतो रावणः सौमित्रिनिहतं महाबलमतिकायं श्रुत्वा तच्छोकमसहमानोऽकंपनधूम्राक्षप्रहस्तकुम्भकर्णादीन् सुरासुरापराजितानपि नरजितान् इन्द्रजित्प्रयुक्तदुर्निरसनद्विरसनपाशबद्धावपि निरस्ततद्बन्धौ रामलक्ष्मणावपि सस्मरन् तदीयं पराक्रमं च बहुशस्तर्कयन्,

तद्भयाद्धि पुरी लङ्का पिहितद्वारतोरणा ।
अप्रमत्तैश्च युष्माभी रक्षितव्या पुरी त्वियम् ॥

अनेन प्रबलशत्रुणा पुरीनिरोधे कृते द्वारपिधानादिना पुरी रक्षणीया, अप्रमत्तैश्च भवितव्यमिति सूचितम् । अत एव महाकवाटपिधानादिना संरक्षणमभिधाय क्षुद्रद्वाराणि कर्तव्यानीत्युक्तं राजधर्मे —

कलिङ्गद्वारकाणि स्युरुच्छ्वासार्थे पुरस्य च । तेषां च द्वारकागुप्तिः कार्या सर्वात्मना भवेत् ॥

इति । अप्रमादश्च सौभवधे —

प्रमत्तेष्वभिघातं हि कुर्यात्साल्वो नराधिपः ।
इतिकृत्वाऽप्रमत्तास्ते सर्वे वृष्ण्यंधकास्स्थिताः ॥ इति ।

अशोकवनिकायां च यत्र सीताऽभिरक्ष्यते ।
निष्क्रमो वा प्रवेशो वा ज्ञातव्यः सर्वथैव नः ॥

अनेन प्रवेशो निष्क्रमो वा परीक्षणीय इति सूचितम् । अत एव वनपर्वणि सौभवधे —

न चामुद्रोऽभिनिर्याति न चामुद्रः प्रवेश्यते । वृष्ण्यंधकपुरे राजन् तदा सौभसमागमे ॥
इति ।

द्रष्टव्यं च बलं तेषां वानराणां निशाचराः ।
प्रदोषे वार्धरात्रे वाप्रत्यूषे वाऽपि सर्वतः ॥

नावज्ञा तेषु कर्तव्या वानरेषु कदाचन ॥
द्विषतां बलमुद्युक्तमापतत् किं स्थितं यथा ॥

अनेन शत्रुसेनावृत्तान्तः पदे पदे ज्ञातव्यः विशिष्य सन्धिकालेषु सावधानतया च स्थेयमिति सूचितम् । एतच्च प्राक्प्रपञ्चितम् ।

इति समादिश्य,

मन्युशल्य वहन् दीनः प्रविवेश स्वमालयम् ।

**त्रिसप्ततितमे —**

तदनु अप्रमेयपराक्रमस्य भ्रातुः पुत्रस्य च वधेन विस्मयाविष्टहृदयस्य सम्भ्रान्त-राक्षसगणपरिवृतस्य दशाननस्य पुरतः समुत्थाय मेघनादः अद्याहं समुद्यतास्त्रो भुवनत्रयं संत्रासयिष्यामि च सपरिवारं शत्रुम् ।

न तात मोहं प्रतिगन्तुमर्हसि यत्रेन्द्रजिज्जीवति राक्षसेन्द्र ।

अनेन पुत्रेण पितृविपत्तिसमये स्वप्राणव्ययेनापि तदीयापन्निवृत्तिः कर्तव्येति पुत्रधर्मस्सूचितः । तथा च **तैत्तिरीयश्रुतिः —**

सोऽब्रवीदसौ वै पितरौ पुत्रान् बिभृतः तृतीयस्यामितो दिवि सोमस्तमाहर तेनात्मानं निष्क्रीणीष्व इति ।

**द्रोणपर्वण्यपि** रात्रियुद्धे घटोत्कचं प्रति भगवान् —

एतदर्थेन हैडिंबे पुत्रानिच्छन्ति मानवाः । यथा नस्तारयेद्दुर्गात् स त्वं तारय बान्धवान् ॥
इच्छन्ति पितरः पुत्रान् स्वार्थहेतोर्घटोत्कच । इहलोकात्परे लोके तारयिष्यन्ति ये हिताः ॥
पाण्डवानां प्रभग्नाना कर्णेन निशि सायकैः । मज्जतां धार्तराष्ट्रेषु भव पारं परंतप ॥

घटोत्कचः —

अलमेवास्मि कर्णाय द्रोणायालं च भारत । अन्येषां क्षत्रियाणां वै कृतास्त्राणां महात्मनाम् ॥
अद्य दास्यामि संग्रामं सूतपुत्राय तन्निशि । यं जनाः संप्रवक्ष्यन्ति यावद्भूमिर्धरिष्यति ॥
एवमुक्त्वा महाबाहुर्हैडिंबः परवीरहा । अभ्ययात् तुमुले कर्णं तव सैन्यं विभीषयन् ॥ इति

द्रोणवधानन्तरमपि अश्वत्थामा —

यदर्थं पुरुषव्याघ्र पुत्रानिच्छन्ति मानवाः । प्रेत्य चेह च संप्राप्तास्त्रायन्तो महतो भयात् ॥

पित्रा तु मम साऽवस्था प्राप्ता निर्बन्धुना यथा ।
मयि शैलप्रतीकाशे पुत्रे शिष्ये च जीवति ॥

यन्मां द्रोणः सुतं प्राप्य केशग्रहणमाप्तवान् । स तथाहं करिष्यामि यथा भारतसत्तम ॥

परलोकगतस्यापि भविष्याम्यनृणः पितुः ॥

इति । तत्रैवाभिमन्युः —

द्रोणस्य दृढमत्युग्रमनीकप्रवरं युधि । पितॄणां जयमाकाङ्क्षन्नवगाहेऽविलम्बितः ॥

तत्कर्माद्य करिष्यामि हितं यद्वंशयोर्द्वयोः । मातुलस्य च यत्प्रीतिं करिष्यति पितुश्च मे ॥

इति । आदिपर्वणि जनमेजयः —

उतङ्कस्य प्रियं कुर्वन्नात्मनश्च महत्प्रियम् । तपतां चैव सर्वेषां यास्याम्यपचितिं पितुः ॥

यथा तेन पिता मह्यं पूर्वं दग्धो विषाग्निना ।
तथाऽहमपि तं पापं दग्धमिच्छामि पन्नगम् ॥ इति ।

इत्यभिधाय निखिलबलपरिवृतो हैमं रथवरमास्थाय समरभूप्रदेशमागतो मेघनादः शत्रुविजयाय,

ततस्तं हुतभोक्तारं हुतभुक्सदृशप्रभः ।
जुहुवे राक्षसश्रेष्ठो मन्त्रवद्विधिवत्तदा ॥

स हविर्लाजसत्कारैर्माल्यगन्धपुरस्कृतैः ।
जुहुवे पावकं दीप्तं राक्षसेन्द्रः प्रतापवान् ॥

शस्त्राणि शरपत्राणि समिधोऽथ विभीतकाः ।
लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ।
स तत्राग्निं समास्तीर्य शरपत्रैस्सतोमरैः ॥

छागस्य सर्वकृष्णस्य गलं जग्राह जीवतः ।
सकृदेव समिद्धस्य विधूमस्य महार्चिषः ॥

बभूवुस्तानि लिङ्गानि विजयं यान्यदर्शयन् ।
प्रदक्षिणावर्तशिखस्तप्तकाञ्चनसंनिभः ॥

हविस्तत्प्रतिजग्राह पावकस्स्वयमुत्थितः ।
सोऽस्त्रमाहारयामास ब्राह्ममस्त्रविशारदः ॥

धनुश्चात्मरथं चैव सर्वं तत्राभ्यमन्त्रयत् ।
तस्मिन्नाहूयमानेऽस्त्रे हूयमाने च पावके ॥

सार्कग्रहेन्दुनक्षत्रं वितत्रास नभस्स्थलम् ।

स पावकं पावकदीप्ततेजसा हुत्वा महेन्द्रप्रतिमप्रभावः ।
स चापबाणासिरथाश्वसूतः खेऽन्तर्दधेत्मानमचिन्त्यरूपः ॥

अत्र इन्द्रजिता शत्रुवधोद्देशेन स्वविजयाय च क्रियमाणेऽभिचाररूपे कर्मणि लोहितोष्णीषत्वादयो धर्मा उक्ताः । तेषा आभिचारिके कर्माङ्गत्वमुक्तं श्रुतौ सूत्रेषु च —

तत्र **छान्दोग्यब्राह्मणे** सर्वाभिचरणीययागप्रकृतिभूतं श्येनयागमधिकृत्योक्तं —- शरमयं बर्हिः श्टगात्येवैभीतक इध्मो विधृत्यै लोहितोष्णीषा लोहितवाससो निवीता इति ॥

**आपस्तम्बोऽपि** —- सर्वेष्वभिचरणीयेषु लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति इति ॥

अभिचारणीयानि च कर्माणि दर्वीहोमेष्टिपशुसोमात्मकानि श्रुतिसूत्रादिषु बहुलमुपलभ्यन्ते । अथाप्यत्रानतिप्रयोजनत्वान्न तेषा प्रपञ्च क्रियते इति ॥

ततो वाहिन्यामम्बुद इव शरौघानभिवर्षन् दशमुखवधपरदशरथसुतसुखविनिहितमतीरविसुतकपिगणकृतनिशिचरवरमृधभयविद्रुतेषु सुरर्षभेषु सकटक करिवरद विघटित कपिघट्या कपियूथप्रकृतगुरुतरतरुपातभग्नहयरथादिनिशिचरसेनया च विषमितेषु समितिभूभागेषु रथगतकेतुजालकरीन्द्रकर्णवाताहतिसशुष्यमाणेषु निशिचरकपिशोणितप्रवाहेषु कनकप्रकृतिककरिकङ्कटतत्पातावल्या च निर्बन्धितेषु रणधरणीरजोन्धकारेषु दशकन्धरसुतः हनूमत्सुग्रीवाङ्गदप्रभृतीन् संप्रहृत्य बाणवर्षैरस्त्रजालैश्च विगृह्य दाशरथी बहुशो व्याकुलीकृत्य पुनश्च लङ्कां प्रविवेश ।

**चतुस्सप्ततितमे** —

तदनु विविदत्तवरेण दुरासदेन रावणिना ब्रह्मास्त्रबद्धौ दाशरथी समालोक्य बिभीषणः बिषण्णहृदयान् वानरप्रमुखानित्थमाश्वासयामास —

तस्मै तु दत्तं परमास्त्रमेतत् स्वयंभुवा ब्राह्ममोघवेगम् ।
तन्मानयन्तौ यदि राजपुत्रौ निपातितौ कोऽत्र विषादकाल. ॥ इति ।

ब्राह्ममस्त्रं तथा धीमान् मानयित्वा तु मारुतिः ।
विभीषणवचश्श्रुत्वा हनूमांस्तमथाब्रवीत् ॥

एतस्मिन्निहते सैन्ये वानराणां तरस्विनाम् ।
यो यो धारयते प्राणान् तं तमाश्वासयामहे ॥

तदनु विभीषण उल्काहस्तो हनूमता सह रणभूमिगतान् गतासूनगतासूंश्च संचूर्णितपरिपिष्टावयवांश्च पश्यन् मन्दं मन्दं शरनिपीडितस्य जाम्बवतः समीपमभ्येत्य अह्नः पञ्चमशेषेण सप्तषष्टिकोटिवानराः सुरारिणा इन्द्रजिता निषूदिताः दिष्ट्या भवानविध्वंसित-प्राण इत्यभिधाय तेन च पवनसुतः कच्चित्सप्राण इति पृष्टो राजपुत्रौ राजानं सुग्रीवं चापहाय मारुतिमेव किमिति पृच्छसीत्यवोचत् । तदनु जाम्बवान्,

यस्मिन् जीवति वीरे तु हतमप्यहतं बलम् ।
हनूमत्युज्झितप्राणे जीवन्तोऽपि वयं हताः ॥

अनेन बहुजनजीवनोपयोगिनो जनस्य जीवनं श्लाघ्यमिति सूचितम् । तथा च प्राचीनाः —

यस्मिन् जीवति जीवन्ति बहवस्स तु जीवतु ॥ इति ।

इत्यभिधाय अभिवादयन्तं हनूमन्तं बहुधा संस्तुवन् त्वत्पराक्रमकालोऽयं । सत्वरं ऋषभ-हिमवतोरन्तरा विद्यमानमौषधपर्वतमासाद्य संजीवनीविशल्यकरणीसवर्णकरणी संधान-करण्यभिधा ओषधीरानीय सर्वानस्मानुज्जीवयेत्यनुशशास ।

ततो हनूमानपि तत्क्षणेनैव गिरिमात्रशरीर. स्वोरुवेगेन तरुगिरिशिखराणि विशीर्ण-यन् सुरपथमुत्प्लुत्य विविधानि स्थलानि पश्यन्,

स ब्रह्मकोशं रजतालयं च शक्रालयं रुद्रशरप्रमोक्षम् ।
हयाननं ब्रह्मशिरश्च दीप्तं ददर्श वैवस्वतकिन्नरांश्च ॥

वज्रालयं वैश्रवणालयं च सूर्यप्रभं सूर्यनिबन्धनं च ।
ब्रह्मालयं शङ्करकार्मुकं च ददर्श नाभिं च वसुन्धरायाः ॥

कैलासमग्र्यं हिमवच्छिलां च तं वै वृषं काञ्चनशैलमग्र्यम् ।
स दीप्तसर्वौषधिसंप्रदीप्तं ददर्श सर्वौषधिपर्वतेन्द्रम् ॥

ततः

अर्थिनं मामवलोक्य अदर्शितस्वस्वरूपा औषध्य इति कुपितहृदयस्तमेव पर्वतं सवनश्रृङ्गमुत्पाट्य नभोमार्गमुल्लंघ्य समाजगाम ।

ततो महात्मा निपपात तस्मिन् शैलोत्तमे वानरसैन्यमध्ये ।
हर्युत्तमेभ्यः शिरसाऽभिवाद्य विभीषणं तत्र स सस्वजे च ॥

अनेन महत्कार्यं साधितवताऽभिवादनं कर्तव्यमिति सूचितम् । अत एव दुस्साध्यस्य जयद्रथस्य वधानन्तरं भीमादिभिरभिवादनं धर्मपुत्रस्य कृतमिति प्रतिपादितं द्रोणपर्वणि —

ततो भीष्मो महाराज सात्यकिश्च महारथः । अभिवाद्य गुरुश्रेष्ठं मार्गणैः क्षतविक्षतौ ॥
क्षितावास्ता महेष्वासौ पाञ्चाल्यैः परिवारितौ ॥ इति ।

तावप्युभौ मानुषराजपुत्रौ तं गन्धमाघ्राय महौषधीनाम् ।
बभूवतुस्तत्र तदा विशल्यौ उत्तस्थुरन्ये च हरिप्रवीराः ॥

सर्वे विशल्या विरुजाः क्षणेन हतप्रवीरा निहताश्च ये स्युः ।
गन्धेन तासां प्रवरौषधीनां सुप्ता निशांतेष्विव संप्रबुद्धाः ॥

वानरवन्मृता राक्षसा अपि कुतो नोत्थिता इति शङ्का व्यावर्तयितुमुत्तरग्रन्थः —

यदाप्रभृति लङ्कायां युद्ध्यन्ते कपिराक्षसाः ।
तदाप्रभृति मानार्थमाज्ञया रावणस्य च ॥

ये हन्यन्ते रणे तत्र राक्षसाः कपिकुञ्जरैः ।
हताहतास्ते क्षिप्यन्ते सर्व एव तु सागरे ॥

अतस्समानीताभिरप्योषधीभिर्दैवहता राक्षसा नोज्जीविताः —

ततो हरिर्गन्धवहात्मजस्तु तमौषधीशैलमुदग्रवीर्यः ।
निनाय वेगाद्धिमवन्तमेव पुनश्च रामेण समाजगाम ॥ इति ॥

पञ्चसप्ततितमे —

ततस्सुग्रीवः प्रबलतरराक्षसयूथपनिधनेन व्यथितहृदयो दशवदनः नेदानीं युद्धाय निष्क्रमणं संपादयितुं समर्थः । तदिदानीं अस्तं गते गभस्तिमालिनि उल्काहस्ताः पर्वताकारान् प्राकारान् युगपदाक्रम्य सर्वतो लङ्कामादीपयत ।

आसन्नद्वारमासाद्य युध्यत्वं प्लवगर्षभाः ।
यश्च वो वितथं कुर्यात्तत्र तत्र व्यवस्थितः ॥

स हन्तव्योऽभिसंप्लुत्य राजशासनदूषकः ।
राज्ञो वध चिकीर्षेद्यः तस्य चित्रो वधः स्मृतः ॥ इति ।

ततो वानरप्रवीरैर्व्याकुलीकृतां लङ्कामभिवीक्ष्य प्रकुपितेन दशवदनेन प्रेषिता यूपाक्षप्रजङ्घाकम्पनशोणिताक्षपरिवृताः निकुम्भकुम्भादयो राक्षसप्रवराः वलीमुखबलं प्रविश्य निर्विशङ्कं असह्यविक्रमा व्याकुलीचक्रुः ।

षट्सप्ततितमे —

ततः प्रवृत्ते वानररजनीचरसंक्षये अङ्गदनिहतमकम्पनमवेक्ष्य शोणिताक्षः रणक्षोणीतलगतमङ्गदमभिपत्य युद्ध्यमानः तेन विभग्नधनुस्स्यन्दनः सखड्गः श्येनवदाकाशमुत्प्लुत्य परिभ्रमन् गृहीतखड्गेनाङ्गदेन उपवीतमार्गतो विदलितशरीरोऽपि प्रजङ्घयूपाक्षसहितः द्विविदमैन्दसहितमङ्गदमयुद्ध्यत । ततोऽङ्गदेन खड्गेन निकृत्तशिरसि प्रजङ्घे द्विविदेन शोणिताक्षे विदीर्णे मैन्दबाहुपीडिते च यूपाक्षे वानरैर्भग्नां रजनीचरवाहिनीमवेक्ष्य कुम्भनामा निशाचर शिलावर्षेणापततो मैन्दद्विविदागदान् तीव्रतरशरवेगेनाभिभूय श्रीरामवच प्रचोदितान् जाम्बवत्सुषेणवेगदर्शिप्रमुखानप्यभिमुखमापततः पत्रिभिस्समुत्सार्य सकोपमागतेन तपनसुतेन सह कतिपयसमयं संगरमाचरन् भग्नकार्मुकः तेन चेत्थमभ्यधायि —

निकुम्भाग्रज वीर्यं ते बाणवेगं तदद्भुतम् ।
सन्नतिश्च प्रभावश्च तव वा रावणस्य वा ॥

प्रह्लादबलवृत्रघ्नं कुबेरवरुणोपम ।
एकस्त्वमनुजातोऽसि पितरं बलवृत्ततः ॥

त्वामेवैकं महाबाहुं चापहस्तमरिन्दमम् ।
त्रिदशा नातिवर्तन्ते जितेन्द्रियमिवाधयः ॥

अत्र इन्द्रियनिग्रहवतः आधयो न भवन्तीत्युक्तम् । अतएव इन्द्रियनिग्रहेण मनसो विषयवासनानिषेधे सति आधिव्याधिनाश इति **योगशास्त्रे** प्रतिपादितम् —

वासनासपरित्यागे यदि यत्नं करोत्यलम् ।
तत्ते शिथिलतां यान्ति सर्वाधिव्याधयः क्षणात् ॥ इति ।

एतादृशेन्द्रियनिग्रहे मनोनिग्रहो हेतुः । मनोनिग्रहस्य हेतुत्वं च कठवल्ल्याम् —

यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ इति ।

**अद्य भूतानि पश्यन्तु शक्रशंबरयोरिव ।**
**महाविमर्दं समरे मया सह तवाद्भुतम् ॥**

**कृतमप्रतिमं कर्म दर्शितं चास्त्रकौशलम् ।**
**पातिता हरिवीराश्च त्वयैते भीमविक्रमाः ॥**

**उपालम्भभयाच्चापि नासि वीर मया हतः ।**
**कृतकर्मा परिश्रान्तो विश्रान्तः पश्य मे बलम् ॥**

अनेन वीराणा अन्यैर्युद्धकरणेन श्रान्तस्य शत्रोर्हननं निन्दितमिति सूचितम् । अत एव श्रांतस्य सात्यकेर्हननप्रवृत्तं भूरिश्रवस प्रति अर्जुनकृतोपालम्भो **द्रोणपर्वणि** —

बहुभिस्सह संगम्य निर्जित्य च महारथान् । श्रान्तश्च श्रांतवाहश्च विमनाः शस्त्रपीडितः ॥

ईदृशं सात्यकिं संख्ये निर्जित्य च महारथम् । अधिकत्वं विजानीषे स्ववीर्यवशमागतम ॥

यदीच्छसि शिरश्चास्य असिना हन्तुमाहवे ।
तथा कृच्छ्रगतं चैव सात्यकिं कः क्षमिष्यति ॥ इति ।

कुम्भोऽपि मुष्टियुद्धेन तत्प्राणनष्टिमाकाङ्क्षन् तेन च मध्येसमुद्रमुत्क्षिप्य निक्षिप्तोऽपि पुनश्च सत्वरमुत्प्लुत्य प्लवगाधिपमभियुध्यमानः तत्कृतमुष्टिप्रहारेण विशीर्ण-हृदयो रणक्षोणौ निपपात ॥

सप्तसप्ततितमे --

ततो निकुम्भोऽपि कुम्भवधमसहमानः गिरिवरशिखराभं महापरिघमादाय नगरीमुखाद्विनिष्क्रम्य तेन च परिभ्रामयन्वानरानीकं विनाशयन् दिवौकसां प्रहर्षं समुखमागत्य विवृतोरसि मारुतौ परिघनिपातवैफल्यमाकलय्य सचालयन् साचलामचला मारुतकृतमुष्टिनिपातपरिपिष्टो दिष्टां गतिमवाप ॥

व्यपेते तु जीवे निकुंभस्य हृष्टा विनेदुः प्लवङ्गा दिशः सस्वनुश्च ।
चचालेव चोर्वी पफालेव च द्यौर्बलं राक्षसानां भयं चाविवेश ॥

अष्टसप्ततितमे --

ततो निकुम्भनिपातकुपितराक्षसपतिचोदितो मकराक्षो नाम राक्षसः ससमरपरिकरं ससारथिं रथमारुह्य निशाचरवाहिन्या नगरीमुखान्निर्गत्य व्यत्यासयन्नत्याहितनिमित्तानि दशरथसुतपरिपालितां वनौकसां सेनामाविवेश ॥

एकोनाशीतितमे --

ततो वानरनिशाचरेषु भृशतरं परस्परं युध्यमानेषु वानरकृतनिजबलक्षोभरोषारुणाक्षो मकराक्षोऽपि स्वजनकवैरिणं जानकीरमणमासाद्य निजमरणमासाद्य निजमरणाय बाणगणैरर्दयन् संमर्दितोऽपि श्रीरामसायकासारैर्निजपितृवधानुसन्धानतः किमपि प्रलपन् समुद्दीपयंश्च रामभद्रस्य रोषं तच्छरनिकृत्तवर्मकार्मुकत्रिशूलः पावकास्त्रतो गतासुरपतत् ।

दशरथसुतचापबाणवेगै रजनीचरं निहतं खरात्मजं तु ।
ददृशुरथ च देवताः प्रहृष्टा गिरिमिव वज्रहतं यथा विकीर्णम् ॥

अशीतितमे --

अथ मकराक्षसंक्षपणसंक्षुब्ध[illegible]पतिप्रचोदितो विहितसमितिर्संमतहुतभुक्समपिशिताशनसंनाहो जनितनिजतातसमुत्साहो रावणिः कौणपगणपतिपरिभूतिमन्यथयन् दाशरथिमनोरथावधीरणायाग्निशालां प्रविश्य यथोक्तहुतवहसंतर्पणसंप्राप्तं महारथमधिरुह्यान्तर्धाय चात्मानं पर्जन्यमार्गे ऊर्जितानार्जवः समार्जयन् वीरलक्ष्मीं नखरवानरवाहिनीं रणक्षोणीगतौ समररचनाविचक्षणावपि रामलक्ष्मणौ अक्षयशरक्षेपैर्विक्षोभ्यापीडयत् ।

लक्ष्मणस्तु ततः क्रुद्धो भ्रातरं वाक्यमब्रवीत् ।
ब्राह्ममस्त्रं प्रयोक्ष्यामि वधार्थं सर्वरक्षसाम् ॥

तमुवाच ततो रामो लक्ष्मणं शुभलक्षणम् ।
नैकस्य हेतो रक्षांसि पृथिव्यां हन्तुमर्हसि ॥

अनेन एकस्य दुष्टस्य कृते बहूनां हननं न कर्तव्यमिति सूचितम् । तथाच हरिवंशे पृथ्वीं प्रति पृथुः—

एकस्यार्थाय यो हन्यादात्मनो वा परस्य च ।
बहून् वा प्राणिनो भद्रे भवेत्तस्येह पातकम् ॥ इति ।

अयुध्यमानं प्रच्छन्नं प्राञ्जलिं शरणागतम् ।
पलायन्तं प्रमत्तं वा न हन्तुं त्वमिहार्हसि ॥

अनेन प्रच्छन्नादेर्वधो न कर्तव्य इत्युक्तम् । तच्च प्राक् प्रपञ्चितम् ॥

अस्यैव तु वधे यत्नं करिष्यावो महाबल ।
आदेक्ष्यावो महावेगानस्त्रानाशीविषोपमान् ॥

तमेनं मायिनं क्षुद्रमन्तर्हितचरं बलात् ।
राक्षसं निहनिष्यन्ति दृष्ट्वा वानरयूथपाः ॥

यद्येष भूमिं विशते दिवं वा रसातलं वाऽथ नभस्तलं वा ।
एवं निगूढोऽपि ममास्त्रदग्धः पतिष्यते भूमितले गतासुः ॥

इत्येतदुक्त्वा वचनं महार्थं रघुप्रवीरः प्लवगोत्तमैर्वृतः ।
वधाय रौद्रस्य नृशंसकर्मणस्तदा महात्मा त्वरितं निरीक्षते ॥

एकाशीतितमे—

तदनु मेघनादः स्वविनाशकरं राघवव्यवसायमध्यवसाय भीतः संनिवृत्त्याहवात् प्रविश्य नगरीं मायामयीं सीतां स्वरथमारोप्य प्रभञ्जनात्मजप्रभृतीनां वानरयूथपानां मनोव्यामोहनाय,

कृत्वा विकोशं निस्त्रिंशं मूर्ध्नि सीतां प्रधर्षयन् ।
तां स्त्रियं पश्यतां तेषां ताडयामास राक्षसः ॥

ततस्तदवलोक्य व्यथितहृदयो मारुतिस्तमेवमुवाच —

**दुरात्मन्नात्मनाशाय केशपक्षे परामृशः ।**

अनेन सतीनां केशग्रहणमात्मनः कुलस्य च नाशकमिति सूचितम्। अतएव दुःशासनगृहीतान् केशान् प्रदर्श्य क्लिश्यन्ती द्रौपदीं प्रति कृष्णः त्वत्केशाकर्षणजनितपापस्य फलं कुलनाशं प्राप्स्यन्ति। अहमपि तथा करोमीत्युक्तवान् **उद्योगे** —

अचिराद्द्रक्ष्यसे कृष्णे रुदतीर्भरतस्त्रियः। हतमित्रा हतबला येषां योद्धासि भामिनि ॥
अहं वै तत्करिष्यामि भीमार्जुनयमैस्सह। युधिष्ठिरनियोगेन दैवाच्च विधिनिर्मितात् ॥
इति।

**ब्रह्मर्षीणां कुले जातो राक्षसीं योनिमाश्रितः ।**
**धिक् त्वां पापसमाचारं यस्य ते मतिरीदृशी ॥**

अनेन महाकुलोत्पन्नस्यापि पुरुषस्य क्षेत्रानुगुण्येन बुद्धिर्भवतीति सूचितम्। तथा च **विष्णुपुराणे** —

सुनीथा नाम या कन्या मृत्योः प्रथमजाऽभवत् ।
अङ्गस्य भार्या या दत्ता तस्यां वेनो व्यजायत ॥
स मातामहदोषेण तेन मृत्योस्सुतात्मजः। निसर्गादेव मैत्रेय दुष्टभावो व्यजायत ॥ इति।

**नृशंसानार्य दुर्वृत्त क्षुद्र पापपराक्रम ।**
**अनार्यस्येदृशं कर्म घृणा ते नास्ति निर्घृण ॥**

अनेन अनार्या दयनीयेष्वपि दयां न कुर्वन्तीति सूचितम्। तथा **चानुशासनिके** मतङ्गतुन्नं पुत्रं प्रति गर्दभीमवचनम् —

अयं तु पापप्रकृतिर्बाले न कुरुते दयाम् ।
स्वयोनिं मानयत्येष भावो भावं नियच्छति ॥ इति।

**ये च स्त्रीघातिनां लोका वीरलोकेषु कुत्सिताः ।**
**इह जीवितमुत्सृज्य प्रेत्य तान् प्रतिपत्स्यते ॥**

अनेन स्त्रीवधो निन्दित इति सूचितम्। तथा चोद्योगे विदुरः —

ब्राह्मणेषु च ये शूराः स्त्रीषु गोषु तपस्विषु ।

वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्ति ते ॥ इति ।

आपद्धर्मेऽपि —

मा वधीस्त्वं स्त्रियं भीरुं मा पशुं मा तपस्विनम् ।
सर्वथा स्त्री न हन्तव्या सर्वसत्त्वेषु न क्वचित् ॥ इति ।

ततः —

**हरिश्रेष्ठं हनूमन्तमिन्द्रजित्प्रत्युवाच ह ।**
**सुग्रीवस्त्वं च रामश्च यन्निमित्तमिहागताः ॥**

**तां वधिष्यामि वैदेहीमद्यैव तव पश्यतः ।**

अतः स्वभावत एव पापिष्ठस्येन्द्रजितः स्वस्य कार्यसिद्ध्याशया मायासीतावधे प्रवृत्तिप्रतिपादनात् पापिष्ठस्य अर्थनाशक एव पापसाधने च कर्मणि अर्थसाधकताबुद्ध्या प्रवृत्तिर्भवतीति सूचितम् । अत एव राज्यस्य स्वस्य च नाशके पापसाधने द्यूते पापिष्ठस्य दुर्योधनस्य राज्याशया प्रवृत्तिरुक्ता **सभापर्वणि** धृतराष्ट्रं प्रति दुर्योधनः —

अयमुत्सहते राजन् श्रियमाहर्तुमक्षवित् । द्यूतेन पाण्डुपुत्रस्य तदनुज्ञातुमर्हसि ॥

द्यूते पुराणैर्व्यवहार. प्रणीतः तत्रात्ययो नास्ति न संप्रहारः ।
तद्रोचतां शकुनेर्वाक्यमद्य सभां क्षिप्रं त्वमिहाज्ञापयस्व ॥
स्वर्गद्वारं दीव्यता नो विशिष्टं तद्वर्तिनां चापि तथैव युक्तम् ।
भवेदेव ह्यात्मना तुल्यमेवं दुरोदरं पाण्डवैस्त्वं कुरुष्व ॥

इति । तत्रैव युधिष्ठिरं प्रति दुर्योधनः —

अहं दातास्मि रत्नानां धनानां च विशां पते । मदर्थे देविता चायं शकुनिर्मम मातुलः ॥
इति ।

द्रोणस्य सैनापत्याभिषेकानन्तरं वरं वृणीष्वेति द्रोणेनोक्तो दुर्योधनः पुनरपि देवनार्थतया युधिष्ठिर आनेय इत्युक्तवान् **द्रोणपर्वणि** —

सेनापतित्वं संप्राप्य भारद्वाजो महारथः । मध्ये सर्वस्य सैन्यस्य पुत्रं ते वाक्यमब्रवीत् ॥
यत्कौरवाणामृषभादापगेयादनन्तरम् । सेनापत्येन यद्राजन् मामद्य कृतवानसि ॥
सदृशं कर्मणस्तस्य फलं प्राप्नुहि भारत । करोमि कामकं तेऽद्य प्रवृणीष्व यदीच्छसि ॥
ततो दुर्योधनो राजा कर्णः दुःशासनादिभिः । तमथोवाच दुर्धर्षमाचार्यं जपतां वरम् ॥

दद्यामि चेद्वरं मह्यं जीवग्राहं युधिष्ठिरम् । गृहीत्वा रथिनां श्रेष्ठ मत्समीपमिहानय ॥
ततः कुरूणामाचार्यः श्रुत्वा पुत्रस्य ते वचः । सेनां प्रहर्षयन् सर्वामिदं वचनमब्रवीत् ॥
धन्यः कुन्तीसुतो राजन् यस्य ग्रहणमिच्छसि । न वधार्थं सुदुर्धर्ष वरमद्य प्रयाचसे ॥
किमर्थं च नरव्याघ्र न वधं तस्य कांक्षसे । नाशंससि क्रियामेतां ततो दुर्योधन ध्रुवम् ॥

आहोस्विद्धर्मराजस्य द्वेष्टा तस्य न विद्यते ।
यदीच्छसि त्वं जीवन्तं कुलं रक्षसि चात्मनः ॥
अथवा भरतश्रेष्ठ निर्जित्य युधि पाण्डवान् ।
राज्यं संप्रति दत्त्वा च सौभ्रात्रं कर्तुमिच्छसि ॥

धन्यः कुन्तिसुतो राजा सुजातं तस्य धीमतः । अजातशत्रुता तस्य यत्स्निह्यते भवान् ॥
द्रोणेनैवमुक्तस्य तव पुत्रस्य भारत । सहसा निःसृतो भावो योऽस्य नित्यं हृदि स्थितः ॥
नाकारो गूहितुं शक्यो बृहस्पतिसमैरपि । तस्मात्तव सुतो राजन् प्रहृष्टो वाक्यमब्रवीत् ॥
वधे कुन्तीसुतस्याजौ नाचार्य विजयो मम । हते युधिष्ठिरे पार्थो हन्यात्सर्वान्हि नो ध्रुवम् ॥
न च शक्या रणे सर्वे निहन्तुममरैरपि । य एव तेषां शेषस्स्यात् स एवास्मानशेषयत् ॥
सत्यप्रतिज्ञे त्वानीते पुनर्द्यूतेन निर्जिते । पुनर्यास्यंत्यरण्याय पाण्डवास्तमनुव्रताः ॥

सोऽयं मम जयो व्यक्तं दीर्घकालं भविष्यति ।
अतो न वधमिच्छामि धर्मराजस्य कर्हिचित् ॥
तस्य जिह्ममभिप्रायं ज्ञात्वा द्रोणोऽथ तत्ववित् ।
तं वरं सांतरं तस्मै ददौ सचिंत्य बुद्धिमान् ॥

इति । द्यूतस्यार्थनाशकत्वं च **कामन्दके**—

अर्थनाशक्रियाऽवश्यं नित्यं वैरानुबन्धना । द्यूतादनर्थसंरंभो द्यूतात्स्नेहक्षयो महान् ॥

इति केवलदोषं हि द्यूतं राजा परित्यजेत् ॥

इति । द्यूतस्याधर्मत्वं च **सभापर्वणि** शकुनिं प्रति युधिष्ठिरः—

निकृतिर्देवनं पापं क्षत्रा क्षत्रपराक्रम । न च नीतिर्ध्रुवा राजन् किं त्वं द्यूतं प्रशंससि ॥
नहि मानं प्रशंसंति निकृतौ कितवस्य हि । शकुने मैव नो जेषीरमार्गेण नृशंसवत् ॥ इति

**न हन्तव्याः स्त्रियश्चेति यद्ब्रवीषि प्लवङ्गम ।**
**पीडाकरममित्राणां यत्स्यात्कर्तव्यमेव तत् ॥**

इत्युवाच । ततः —

तं दृष्टरूपं समुदीक्ष्य वानरा विषण्णरूपाः समभिप्रदुद्रुवुः ।

**द्व्यशीतितमे —**

तदनु हनूमान् रावणिभयेन इतस्ततो धावतो वानरान् कथञ्चिदवस्थाप्य तद्विनाशाय स्वप्रयुक्तं पाषाणं च इन्द्रजिता वितथीकृतमवलोक्य वितथमनोरथो मैथिलीशैथिल्येन च विशकलितोत्साहो वानरानभिवीक्ष्य इत्थमवोचत् —

**यन्निमित्तं हि युद्ध्यामो हता सा जनकात्मजा ।**
**इममर्थं हि विज्ञाप्य रामं सुग्रीवमेव च ।**
**तौ यत्प्रतिविधास्येते तत्करिष्यामहे वयम् ॥**

अनेन उद्देश्यस्य फलस्याभावे युद्धं न कर्तव्यमित्युक्तम् । तथाच **विराटपर्वणि** उत्तरं प्रत्यर्जुनः —

तत्रैव गच्छ वैराटे नास्ति युद्धं निरामिषम् ।

इत्यभिधायोपरते हनूमति रावणिरपि निकुंभिलामुखो हव्यवाहं तर्पयितुं प्रतस्थे ॥

**त्र्यशीतितमे —**

ततः श्रीरामवचसा स्वसाहाय्याचरणाय समागतेन जाम्बवता सह रामसमीपमागत्य पवनसुतो रावणिकृतसीतावधवृत्तान्तमखिलमपि निवेदयामास ॥

तदनु तदाकर्णनसमूर्च्छितम्,

**तं लक्ष्मणोऽथ बाहुभ्यां परिष्वज्य सुदुःखितः ।**
**उवाच राममस्वस्थं वाक्यं हेत्वर्थसंयुतम् ॥**

**शुभे वर्त्मनि तिष्ठन्तं त्वामद्य विजितेन्द्रियम् ।**
**अनर्थेभ्यो न शक्नोति त्रातुं धर्मो निरर्थकः ॥**

अत्र सन्मार्गे वर्तमानं जितेन्द्रियमपि त्वां धर्मोऽनर्थेभ्यो दुःखेभ्यस्त्रातुं न शक्नोतीत्युक्त्या असन्मार्गे वर्तमानस्य धर्मो नश्यति सन्मार्गे वर्तमानस्य सफलो भवतीति च सूचितम् । तथाच **मानवे** —

यज्ञोऽनृतेन क्षरति तपः क्षरति कीर्तनात्। आयुर्विप्रापवादेन दानं तु परिकीर्तनात् ॥
इति। **वनपर्वणि** धर्मपुत्रं प्रति द्रौपदीवाक्ये —

राजानं धर्मगोप्तारं धर्मो रक्षति रक्षितः ॥ इति।

**भूतानां स्थावराणां च जङ्गमानां च दर्शनम्।**
**यथाऽस्ति न तथा धर्मस्तेन नास्तीति मे मतिः ॥**

**यथैव स्थावरं व्यक्त जङ्गमं च तथाविधम्।**
**नायमर्थस्तथायुक्तस्त्वद्विधो न विपद्यते ॥**

अत्र स्थावरजङ्गमात्मकभूताना यादृशं स्फुटतरं प्रत्यक्षमस्ति न तथा धर्मस्य प्रत्यक्षदर्शनमस्ति. तस्मान्न धर्मे प्रत्यक्षं प्रमाणम्। यदि धर्मः प्रामाणिकः स्यात् त्वादृशो न विपद्येतेत्युक्तम् ॥

**यद्यधर्मो भवेद्भूतो रावणो नरकं व्रजेत्।**
**भवांश्च धर्मसंयुक्तो नैव व्यसनमाप्नुयात् ॥**

**तस्य च व्यसनाभावाद्व्यसनं च गते त्वयि।**
**धर्मो भवत्यधर्मश्च परस्परविरोधिनौ ॥**

अत्र यद्यधर्मो वा भूत. स्यात् प्रामाणिकः स्यात्तदा रावणो नरकं व्रजेत् क्लेशं प्राप्नुयात्। धर्मयुक्तो भवानपि व्यसनं न प्राप्नुयात्। अधार्मिके रावणे व्यसनादर्शनात् धार्मिके च त्वयि दुःखदर्शनाच्च धर्मः अधर्मो भवति क्लेशफलको भवति। अधर्मश्च सुखफलको भवति। अतः धर्माधर्मयोः सुखदुःखानुभवैकलिङ्गत्वस्य वक्तव्यतया सुखस्य अधर्मेण सहचारस्य रावणे दर्शनात् त्वयि च दु.खस्य धर्मेणैव सहचारदर्शनेन व्यभिचारित्वान्नानुमानं प्रमाणमित्युक्तम् ॥

**धर्मेणोपलभेद्धर्ममधर्मं चाप्यधर्मतः।**
**यद्यधर्मेण युज्येयुर्येष्वधर्म प्रतिष्ठितः ॥**

**यदि धर्मेण युज्येरन्नाधर्मरुचयो जना।**
**धर्मेणाचरतां धर्मस्तथा चैषां फलं भवेत् ॥**

**यस्मादर्था विवर्धते येष्वधर्मः प्रतिष्ठितः।**
**क्लिश्यंते धर्मशीलाश्च तस्मादेतौ निरर्थकौ ॥**

अत्र धर्मेण सुखेन धर्मं पुण्यं तदोपलभेत् अनुमिनुयात् । एवमधर्मतो दुःखात् अधर्मं पापं च तदा अनुमिनुयात् । येष्वधर्मः प्रतिष्ठितः व्यवस्थितः ते अधर्मेण दुःखेन यदि युज्येरन् नाधर्मरुचयो जनाः अधर्मरुचयो न भवन्तीत्यधर्मरुचयः धर्मिष्ठा इति यावत् । ते च धर्मेण सुखेन यदि युज्येरन् यदि वा अधुना धर्मेण चरतां धर्मेणैव सह वर्तमानानां धर्मः सुखं फलं भवेत् फलमुत्पद्येत तथा अधर्मेण सह वर्तमानानां अधर्मः दुःखं फलमुत्पद्येत । न चैवं दृश्यते, यस्मात्कारणाद्येष्वधर्मः प्रतिष्ठितः तेष्वर्था विवर्धन्ते धर्मशीलाश्च क्लिश्यन्ते ।

तदयमभिप्रायः – सुखेन धर्मं दुःखेन चाधर्मं तदाऽनुमिनुयात् यदि पूर्वं धर्मं कृतवति संप्रति वा अनुतिष्ठति सुखं दृश्येत । यदि वा पूर्वं अधर्ममनुष्ठितवतः संप्रति वा पापं समाचरतः तत्फलं दुःखं दृश्येत । नचैव उभयविधं दृश्यते । यस्मात्कारणादधर्म-प्रधानेष्वर्थाभिवृद्धिदर्शनं धार्मिकेषु च क्लेशाभिवृद्धिदर्शनं अतो नियतसहचाराभावान्नानुमानं प्रमाणम् । अतः अप्रामाणिकौ धर्माधर्मौ । यदि च तत्साधकं प्रमाणान्तरं भवेत् तथा-प्युक्तविधया विपरीतफलकत्वान्निरर्थकावित्युक्तम् ।

**वध्यंते पापकर्माणो यद्यधर्मेण राघव ।**
**वधकर्महतो धर्मः स हतः कं वधिष्यति ॥**

अत्र पापप्रधाना जनाः अधर्मेण पापेन पीडामनुभवन्तीत्यप्ययुक्तम् । वधकर्म हननक्रियाकर्म नश्वरं इति यावत् । अत एव हतः विनष्टः । अतः स्वयं विनष्टस्सन् कमन्यं वधिष्यति पीडयेत्? स्वयमेव क्षणिकत्वाच्चिरध्वस्तस्सन् कालांतरभावि दुःखं कथमुत्पादयेदित्युक्तम् ।

**अथवा विहितेनायं हन्यते हंति वापरं ।**
**विधिरालिप्यते तेन न स पापेन कर्मणा ॥**

अत्र

अज्ञो जन्तुरनीशोऽयमात्मनस्सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥
ईश्वरो विदधातीह कल्याणं यच्च पापकम् । शकुनिस्त्विव बद्धो वा नीयतेयमनीश्वरः ॥

इत्यादिशास्त्रविहितेन ज्ञापितेन ईश्वरेण विधायकेन शास्त्रेण वा पुरुषो हन्यते बाध्यते हंति वा परान् नतु पुण्यपापयोः स्वतंत्रः पुरुष इति मतमयुक्तम् । तथा सति स्वतंत्रस्येश्वरस्यैव पुण्यपापे स्यातां न पुरुषस्य अस्वातंत्र्यादित्युक्तम् ।

**अदृष्टप्रतिकारेण त्वव्यक्तेनासता सता ।**
**कथं शक्यं परं प्राप्तुं धर्मेणारिविकर्शन ॥**

अत्र अदृष्टप्रतिकारेण अज्ञातप्रतिबंधकेन अज्ञानसाधकेन स्वरूपतोऽप्यनभिव्यक्तेन अत एव असता असत्कल्पेन एवंरूपेण सता धर्मेण परं सुखं कथं प्राप्तुं शक्यं? यस्यानुकूलं प्रतिकूलं वा ज्ञातु न शक्यं स्वरूपं चानभिव्यक्तं तेन कथं कार्यं साधयेत्? अतो धर्मस्य फलजनकत्वेऽपि प्रतिबंधान्न फलोत्पत्तिरिति मतमयुक्तम् ।

**यदि सत्स्यात्सतां मुख्यं नासत्स्यात्तव किंचन ।**
**त्वया यदीदृशं प्राप्तं तस्मात्सन्नोपपद्यते ॥**

अत्र यदि धर्मः प्रामाणिकस्स्यात् तस्य सुखफलकत्वमपि यद्यनुमितं स्यात्तदा सत्पुरुषश्रेष्ठस्य धर्मप्रधानस्य तव सुखमेव स्यात्, दुःखं किंचिदपि न स्यात् । यद्यस्मात् कारणात् त्वया व्यसनमीदृशं राज्यभ्रंशादि प्राप्तं तस्मात् सत् पुण्यजनकसुखमिति स्वरूपं सदिति च नोपपद्यते इत्युक्तम् ।

**अथवा दुर्बलः क्लीबो बलं धर्मोऽनुवर्तते ।**
**दुर्बलो हृतमर्यादो न सेव्य इति मे मतिः ॥**

अत्र धर्मः सुखहेतुरेव तथाऽपि,

न दैवमकृते किञ्चित्कस्यचिद्दातुमर्हति । यथाग्निः पवनोद्धूतः सूक्ष्मोऽपि सुमहान् भवेत् ॥
तथा कर्मसमायुक्तं दैवं साधु विवर्धते ॥

इति वचनेन धर्मः पुरुषकारबलमपेक्ष्य कार्यं साधयतीति यदि मन्यसे तर्हि पुरुषकार एव प्रबलत्वात्सेव्यः नतु धर्मो हृतमर्यादः पुरुषकारेणापहृता मर्यादा सुखजननसामर्थ्यं यस्य स तथोक्तः तादृशो दुर्बलो धर्मो न सेव्य इत्युक्तम् ॥

**बलस्य यदि चेद्धर्मो गुणभूतः पराक्रमे ।**
**धर्ममुत्सृज्य वर्तस्व यथा धर्मे तथा बले ॥**

अत्र पुरुषकारस्य धर्मो गुणभूतश्चेद्धर्ममुत्सृज्य पुरुषकार एव प्राधान्येन वर्तस्व यथा संप्रति धर्मे प्राधान्येन वर्तसे इत्युक्तम् ।

**अथ चेत्सत्यवचनं धर्मः किल परन्तप ।**

अनृतस्त्वय्यकरुणः किं न बद्धस्त्वया पिता ॥

अनेन यदि सत्यवचनं धर्मः तदतिक्रामन् राजा दण्ड्यश्च , तदा त्वय्यनृतस्त्वद्विषये अभिषेकं प्रतिज्ञाय पश्चाद्वनप्रस्थापनेन अनृतवादी अकरुणश्च पिता किमिति त्वया न बद्धः त्वया न शिक्षितः तस्माद्धर्मः क्रियत इति तव प्रतिज्ञामात्रमित्युक्तम् ॥

यदि धर्मो भवेद्भूतो ह्यधर्मो वा परन्तप ।
न स्म हत्वा मुनिं वज्री कुर्यादिज्यां शतक्रतुः ॥

अधर्मसंश्रितो धर्मो विनाशयति राघव ।
सर्वमेतद्यथाकामं काकुत्स्थ कुरुते नरः ॥

मम चेदं मतं तात धर्मोऽयमिति राघव ।
धर्ममूलं त्वया छिन्नं राज्यमुत्सृजता तदा ॥

अत्र धर्मोऽधर्मश्च भूतः प्रामाणिकः तयोर्मध्ये धर्म एवाऽऽदरणीयः अधर्मः परित्याज्य इति यदि तदा शतक्रतुरिन्द्रो राज्यप्राप्त्यर्थं मुनिं विश्वरूपं त्वाष्ट्रं स्वपुरोहितं न हन्यात् नवा तत्प्रायश्चित्तं यागं कुर्यात् । अतः कारणाद्धर्मः अधर्मसहित एव अनर्थं विनाशयति न केवलो धर्मः तस्मादुभावपि धर्माधर्मौ कार्यार्थी पुरुषो यथाकामं यथेच्छं अर्थप्राप्त्युचितदेशकालानुसारेण कुर्यात् । अयमेव काले धर्माधर्मोभयपरिग्रहो न्याय्य इति इंद्रादेरिव ममापि मतम् । एतादृशधर्ममूलं च हस्तप्राप्तं राज्यमुत्सृजता परित्यजता त्वया छिन्नमित्युक्त्या अर्थस्य धर्मं प्रति कारणत्वं विस्पष्टमुक्तम् ॥

तथाच वनपर्वणि भीमः —

धर्मश्चार्थेन महता शक्यो राजन्निषेवितुम् । न चार्थो भैक्ष्यचर्येण नापि क्लैब्येन कर्हिचित् ॥
नहि केवलधर्मात्मा पृथिवीं जातु कश्चन । पार्थिवो व्यजयद्राजन् न भूतिं न पुनः श्रियम् ॥
राज्यस्य पदवीं धर्म्यां व्रजन्सत्पुरुषोचिताम् । धर्मकामार्थहीनानां कि नो वस्तुं तपोवने ॥
इति ।

अर्थेभ्योऽथ विवृद्धेभ्यस्संवृत्तेभ्यस्ततस्ततः ।
क्रियास्सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥

अर्थेन हि वियुक्तस्य पुरुषस्याल्पतेजसः ।
उच्छिद्यन्ते क्रियास्सर्वा ग्रीष्मे कुसरितो यथा ॥

अत्र अर्थस्य अन्वयव्यतिरेकाभ्यां सर्वक्रियामूलत्वमुक्त्वा अर्थाभावे काचिदपि क्रिया न प्रवर्तत इत्युक्तम्। अत एव राजधर्मे युधिष्ठिरं प्रति अर्जुनवाक्यम् —

अर्थेन हि वियुक्तस्य पुरुषस्याल्पचेतसः। विच्छिद्यंते क्रियास्सर्वा ग्रीष्मे कुसरितो यथा॥ इति।

सन्तमर्थं परित्यज्य सुखकामसमेधितः।
पापमारभते कर्तुं तदा दोषः प्रवर्तते॥

अत्र पूर्वोक्तप्रकारेण धर्ममूलं सर्वलौकिकक्रियामूलं चार्थं परित्यज्य सुखकामस्सन् यः पुरुषः पापमारभते दुःखबहुलं अधर्ममारभते यदा तदा राज्यभ्रंशादिदोषः प्रवर्तत इत्युक्तम्।

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः।
यस्यार्थाः स पुमान् लोके यस्यार्थास्सच पण्डितः॥

यस्यार्थाः सच विक्रान्तो यस्यार्थास्सच बुद्धिमान्।
यस्यार्थास्स महाभागो यस्यार्थास्स गुणान्वितः॥

अर्थस्यैते परित्यागे दोषाः प्रव्याहृता मया।
राज्यमुत्सृजता वीर येन बुद्धिस्त्वया कृता॥

यस्यार्थास्तस्य कामार्थास्तस्य सर्वे प्रदक्षिणाः।
अधनेनार्थकामेन नार्थश्शक्यो विचिन्वता॥

हर्षः कामश्च दर्पश्च धर्मः क्रोधः शमो दमः।
अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप॥

येषां नश्यत्ययं लोकश्चरतां धर्मचारिणाम्।
तेऽर्थास्त्वयि न दृश्यन्ते दुर्दिनेषु यथा ग्रहाः॥

त्वयि प्रव्रजिते वीर गुरोश्च वचने स्थिते।
रक्षसाऽपहृता भार्या प्राणैः प्रियतरा तव॥

अत्र यस्यार्थास्तस्य मित्राणीत्यादिना केवलं धर्मे मूलं धर्मः किंतु मित्रबान्धवादिसकलसंपत्तावपि अर्थं मूलमित्युक्तम्। तथाच राजधर्मे युधिष्ठिरं प्रति अर्जुनवाक्यम् —

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बांधवाः।

यस्यार्थास्स पुमान् लोके यस्यार्थास्स च पण्डितः ॥
अधनेनार्थकामेन नार्थश्शक्यो विधित्सता । अर्थैरर्था निबद्ध्यन्ते गजैरिव महागजाः ॥
धर्मः कामश्च दर्पश्च हर्षः क्रोधः शमो दमः । अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥
धनात्कुलं प्रभवति धनाद्धर्मः प्रवर्तते । नाधनस्यास्त्ययं लोको न परः पुरुषोत्तम ॥
नाधनो धर्मकृत्यानि यथावदनुतिष्ठति । धनाद्धि धर्मो निःस्रौति शैलाद्गिरिनदी यथा ॥

कृशाश्वश्च कृशा गावः कृशभृत्यः कृशातिथिः ।
स वै राजन् कृशो नाम न शरीरकृशः कृशः ॥ इति ।

**तदद्य विपुलं वीर दुःखमिन्द्रजिता कृतम् ।**
**कर्मणा व्यपनेष्यामि तस्मादुत्तिष्ठ राघव ॥**

**उत्तिष्ठ नरशार्दूल महाबाहो दृढव्रत ।**
**किमात्मानं महात्मानमात्मानं नावबुद्ध्यसे ॥**

**अहमनघ तवोद्यतः प्रियार्थं जनकसुतानिधनं निरीक्ष्य रुष्टः ।**
**सहयरथगजां सराक्षसेन्द्रां भृशमिषुभिर्विनिपातयामि लङ्काम् ॥**

**चतुरशीतितमे —**

तदनु भ्रातरमाश्वासयन्तं विषण्णवदनं लक्ष्मणं परितो विषण्णान् वानरप्रमुखानप्यवलोक्य किमेतदित्याश्चर्याविष्टो विभीषणो वैदेहीवृत्तान्तश्रवणतो वयं विषण्णा जातास्स्म इति लक्ष्मणमुखादवेत्येत्थमकथयत् — निखिलवानरवाहिनीमोहनाय मेघनादविहितमायादर्शनेन नेदानीं क्लेश उचितः ॥

**नैव साम्ना न भेदेन न दानेन कुतोऽन्यथा ।**
**सा द्रष्टुमपि शक्येत नैव चान्येन केनचित् ॥**

अनेन उत्कटेच्छाविषयं वस्तु आप्राणं न विसृजतीति सूचितम् । अत एवार्थलुब्धः प्राणात्ययेऽपि अर्थव्ययं नाङ्गीकरोतीत्युक्तं प्राचीनैः —

कृपणः खलु जीवान्ते ऋतौ भार्यां न गच्छति ।
कदाचिदस्यां सञ्जातो धनं मे भक्षयिष्यति ॥ इति ।

वधस्तु सीतायाः रावणस्य असंमत एव यतः रावणः —

याच्यमानस्सुबहुशो मया हितचिकीर्षुणा ।
वैदेहीमुत्सृजस्वेति नैव तत्कृतवान् वचः ॥

तदिदानीमस्मान् मोहयित्वा समारब्धं निकुंभिलायां यज्ञं वितथयितुं —

लक्ष्मणं प्रेषयास्माभिः सह सैन्यानुकर्षिभिः ।
त्याजयिष्यति तत्कर्म ततो वध्यो भविष्यति ॥

अनेन क्रियमाणस्य कर्मण असमाप्तौ कर्तुरेव वधो भवतीति सूचितम्। तथाच **तैत्तिरीयश्रुतिः** – यज्ञस्य वा अप्रतिष्ठितायज्ञः पराभवति यज्ञं पराभवन्तं यजमानोनुपराभवतीति ।

**बालकाण्डेऽपि** —

अरक्षितस्य यज्ञस्य सद्यः कर्ता विनश्यति। इति।

**समाप्तकर्मा हि स राक्षसर्षभो भवत्यवध्यः समरे सुरासुरैः ।**
**युयुत्सतानेन समाप्तकर्मणा भवेत्सुराणामपि संशयो महान् ॥**

इत्यादिशत् ।

**पञ्चाशीतितमे** —

तदनु रामेण इन्द्रजिद्वधोपायं समयं जिज्ञासमानेन पृष्टो विभीषणस्तमित्थमाचचक्षे—

**निकुंभिलामसंप्राप्तमहुताग्निं च यो रिपुः ।**
**त्वामाततायिनं हन्यादिन्द्रशत्रो स ते वधः ॥**

**वरो दत्तो महाबाहो सर्वलोकेश्वरेण ह ।**
**इत्येवं विहितो राजन् वधस्तस्यैष धीमतः ॥ इति ।**

तदनु तद्वचनाकर्णनेन समाहितमना रामः वानरसेनया जांबवता च सह शत्रुवधाय निर्याहि ।

**अयं त्वां सचिवैस्सार्धं महात्मा रजनीचरः ।**
**अभिज्ञस्तस्य देशस्य पृष्ठतोऽनुगमिष्यति ॥**

इति लक्ष्मणमादिशत् ।

अनेन प्रकुपितो मर्मज्ञो ज्ञातिरेव विनाशको भवतीति सूचितम् । तथाच **कामन्दके** —

छिद्रं मर्म च वीर्यं च विजानाति निजो रिपुः । विकृतस्तत्कुलीनस्तु स्वयोनि ग्रसतेऽग्निवत् ॥

दहत्यंतर्गतश्चैव शुष्कं वृक्षमिवानलः । इति ।

तदनु सुमित्रापुत्रोऽपि अग्रजं राममभिवाद्य निखिलबलपरिवारेण निकुम्भिलाम्,

**स संप्राप्य धनुष्पाणिर्मायायोगमरिंदमः ।**
**तस्थौ ब्रह्मविधानेन ... ... ... ... ॥**

ब्रह्मोक्तवधोपायानुसारेण हन्तुं तस्थाविति प्रतिपादनात् यस्य येन प्रकारेण वधो विधिनिर्दिष्ट स तेनैवोपायेन हन्तव्य इति सूचितम् । अत एव नमुचिनानार्द्रेण न शुष्केण न दिवा न नक्तं अहं हन्तव्य इति पृष्टः इन्द्रः तथैव वरं दत्त्वा तादृशेनैव अशुष्कानार्द्रफेनेन दिवारात्रभिन्ने सन्धिकाल एव हतवान् वृत्रहा इति प्रतिपादितम् **पारक्षुद्रशाखायां** —

इन्द्रो वृत्रं हत्वासुरान् पराभाव्य नमुचिमासुरं नालभन तं शच्यागृह्णात् तौ समलभेता सोऽस्मानभिशुनतरोभवत् सोब्रवीत् सन्धाऽसन्दधावहै अथ त्वावस्रक्ष्यामि न मा शुष्केण नार्द्रेण हनः न दिवा न नक्तमिति स एतमपा फेनमसिचत् न वा एष शुष्को नार्द्रो व्युष्टासीत् अनुदितः सूर्य. न वा एतद्दिवा न नक्तं तस्यैतस्मिन् लोके अपा फेनेन शिर उदवर्तयत् तदेनमनवर्तत मित्रद्रुगिति इति । **ऋगपि**—

अपा फेनेन नमुचे शिर इन्द्रोदवर्तय. । विश्वापदजयस्पृथः ।

**छन्दोगब्राह्मणेऽपि** —

अपा फेनेन शिरोऽच्छिनत् एतद्वै न नक्तं न दिवा यद् व्युष्टायां यतं नार्द्रं न शुष्कं यदपां फेनस्तदेन पापीयं वाचं ववदच वर्तन इति ।

**षडशीतितमे** —

ततः स्फुरदुरुतरमुद्गरासिपरिघशतघ्नीशरशरासनकररजनीचरवरनिकरपरिवृतिभयङ्करे चैत्यस्थलमासाद्य तद्बलसमादिष्टैस्तरुगिरिशिखरनखरायुधैर्वानरैर्विविधयातुधाननिवहेषु हन्यमानेषु मेघनादः,

**स्वमनीकं विषण्णं तु श्रुत्वा शत्रुभिरर्दितम्।**
**उदतिष्ठत दुर्धर्षस्तत्कर्मण्यननुष्ठिते ॥**

तदनु मुष्टिघातकरतलप्रहारादिभिर्निशाचरान्निषूदयन्तं हनूमन्तं निग्रहीतुं संनद्धोऽयं रावणिरितः समागत इति लक्ष्मणाय विभीषणस्समाचख्यौ ॥

**सप्ताशीतितमे —**

ततो विभीषणकरधृतकार्मुकेण लक्ष्मणेनान्यैश्च वानरैस्सह इन्द्रजित्समीपमागच्छन् तत्कृतबलिपूजोपहारस्थलं विकटविटपाभोगकलितसकलदिग्रोधं न्यग्रोध लक्ष्मणाय प्रदर्श्य पुनस्तद्देशसंप्रवेशे स च सर्वथा दुराधर्ष. अदृश्यश्च भवेदित्युपदिश्य —

**तमप्रविष्टं न्यग्रोधं बलिनं रावणात्मजम्।**
**विध्वंसय शरैश्शीघ्रं ... ... ... ॥**

इत्यनुशास्य च तत्र स्वयमप्यतिष्ठत। इन्द्रजिदपि समाहूयाहवाय रामानुजं तदनुचरन्तं स्वीयं पितृव्यमेवमुवाच —

**इह त्वं जातसंवृद्धः साक्षाद्भ्राता पितुर्मम।**
**कथं द्रुह्यसि पुत्रस्य पितृव्यो मम राक्षस ॥**

अनेन येन संवर्धितस्तस्य द्रोहो न कर्तव्यः पुत्रेषु च द्रोहबुद्धिं परित्यज्य ऋजुतया अवस्थातव्यमिति सूचितम्। तथा चोद्योगे विदुरः—

अवध्या ब्राह्मणा गावो ज्ञातयश्शिशवस्स्त्रियः।
येषां चान्नानि भुंजीत ये च स्युः शरणागताः ॥ इति।

तत्रैव धृतराष्ट्रं प्रति विदुरः —

आर्जवं प्रतिपद्यस्व पुत्रेषु सततं विभो। इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥ इति

**न ज्ञातित्वं न सौहार्दं न जातिस्तव दुर्मते।**
**प्रमाणं न च सोदर्यं न धर्मो धर्मदूषक ॥**

अनेन धर्मदूषकस्य कुलादिकं प्रमाणं न भवतीति सूचितम्। तथा **चोद्योगे** विदुरः —

न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः। अन्तेष्वपि हि जातीनां वृत्तमेव विशिष्यते ॥
शीलं प्रधानं पुरुषे तद्यदास्य प्रणश्यति। न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥ इति

शोच्यस्त्वमसि दुर्बुद्धे निन्दनीयश्च साधुभिः ।
यस्त्वं स्वजनमुत्सृज्य परभृत्यत्वमागतः ॥

अनेन स्वजनं परित्यज्य यः परान् वृणीते स दुःखं प्राप्नोतीति सूचितम् ।
तथा **चोद्योगे** विदुरः —

योऽसत्सेवी वृथाचारो न श्रोता सुहृदां सदा। परान्वृणीते स्वान्द्वेष्टि भृशं तपति भारत ॥
इति ।

नैतच्छिथिलया बुद्धया त्वं वेत्सि महदन्तरम् ।
क्व च स्वजनसंवासः क्व च नीचपराश्रयः ॥

अनेन स्वजनसंवासश्श्लाध्यः पराश्रयेण जीवनं तु दुःखाधायकमिति सूचितम् ।
**तथाचोद्योगे** विदुरः —

सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ। संभोजनं संकथनं संप्रीतिश्च परस्परम् ॥
ज्ञातिभिस्सह कार्याणि न विरोधः कदाचन ॥ इति ।

तत्रैव —

ईर्षुर्घृणी त्वसंतुष्टः क्रोधनो नित्यशंकितः। परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ इति

गुणवान्वा परजनः स्वजनो निर्गुणोऽपि वा ।
निर्गुणः स्वजनः श्रेयान् यः परः पर एव सः ॥

यः स्वपक्षं परित्यज्य परपक्षं निषेवते ।
स स्वपक्षे क्षयं प्राप्ते पश्चात्तैरेव हन्यते ॥

अनेन यः स्वपक्षं परित्यजति सः वैरिहस्तान्मरणं प्राप्नोतीत्युक्तम् । **तथाचोद्योगे**
दुर्योधनं प्रति गान्धारी —

भिन्नं हि स्वजनेन त्वां प्रहरिष्यंति शत्रवः। इति ।

निरनुक्रोशता चेयं यादृशी ते निशाचर ।
स्वजने न त्वया शक्यं परुषं रावणानुज ॥

अनेन स्वजने पारुष्यं न कर्तव्यमिति सूचितम्। तथाचोद्योगे दुर्योधनं प्रति भगवान् —

स्वेषु बन्धुपु मुख्येषु मा मन्युवशमन्वगाः। स्वेषु बन्धुषु कस्साधुश्चरेदेवमसांप्रतम् ॥
नृशंसानामनार्याणां परुषाणा च भाषणम्। इति।

इत्युक्तो भ्रातृपुत्रेण प्रत्युवाच विभीषणः।
अज्ञानन्नपि मच्छीलं किं राक्षस विकत्थसे ॥

राक्षसेन्द्रसुतासाधो पारुष्यं त्यज गौरवात्।
कुले यद्यप्यहं जातो रक्षसां क्रूरकर्मगाम् ॥

गुणो यः प्रथमो नृणां तन्मे शीलमराक्षसम्।
न रमे दारुणेनाहं न चाधर्मेण वै रमे ॥

अत्र नृणां सत्पुरुषाणा यः प्रथमो गुणः सात्विक तदेव स्वकीयशीलं अराक्षसं तेनैव रमे। दारुणेन क्रोधदर्पादिना न रमे इति विभीषणोक्त्या राक्षसासुराणां शीलं क्रोध-दर्पादिकमिति सूचितम्। तथा च **गीतायाम्** —

दंभो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च। अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ इति।

भ्रात्रा विषमशीलेन कथं भ्राता निरस्यते।

अत्र भ्रातृपरित्यागो न कर्तव्य इत्युक्तम्। अत एव **स्वर्गारोहिणिके**—धर्मपुत्रः भ्रातॄनपरित्यज्य अत्रैव स्थास्यामीत्युक्तवान्—

किं मे भ्रातृविहीनस्य स्वर्गेण सुरसत्तमाः।
यत्र ते मम स स्वर्गो नायं स्वर्गो मतो मम ॥ इति।

धर्मात्प्रच्युतशीलं हि पुरुषं पापनिश्चयम्।
त्यक्त्वा सुखमवाप्नोति हस्तादाशीविषं यथा ॥

अनेन पापिष्ठपरित्यागेन सुखं प्राप्नोतीति सूचितम्। अत एवोद्योगे वृष्ण्यंधकैः कंसपरित्यागेन सुखं प्राप्तमित्युक्तं भीष्मादीन् प्रति कृष्णेन—

उग्रसेनसुनः कंसः परित्यक्तस्स बांधवैः । कंसमेकं परित्यज्य कुलार्थे सर्वयादवाः ॥

संभूय सुखमेधन्ते भारतान्धकवृष्णयः ॥ इति ।

परस्वहरणेऽभ्युक्तं परदाराभिमर्शनम् ।
त्याज्यमाहुर्दुराचारं वेश्म प्रज्वलितं यथा ॥

परस्वानां च हरणं परदाराभिमर्शनम् ।
सुहृदामतिशङ्का च त्रयो दोषाः क्षयावहाः ॥

महर्षीणां वधो घोरः सर्वेदेवैश्च विग्रहः ।
अभिमानश्च कोपश्च वैरित्वं प्रतिकूलता ॥

एते दोषा मम भ्रातुर्जीवितैश्वर्यनाशनाः ।
गुणान् प्रच्छादयामासुः पर्वतानिव तोयदाः ॥

दोषैरेतैः परित्यक्तो मया भ्राता पिता तव ।

अनेन ब्राह्मणवधदेवताविग्रहाभिमानकोपादयो दोषाः जीवितैश्वर्यनाशनाः समीचीन-गुणप्रच्छादकाश्चेति सूचितम् ।

नेयमस्ति पुरी लङ्का न च त्वं न च ते पिता ।
अतिमानी च बालश्च दुर्विनीतश्च राक्षस ॥

बद्धस्त्वं कालपाशेन ब्रूहि मां यद्यदिच्छसि ।

अष्टाशीतितमे—

तदनु कनकमयं रथवरमारुह्य समापतन्तं शरवरनिकरानभिवर्षतो दशास्यसूनोः पुरतः कस्थास्यतीति बहुधा प्रलपन्तं समरविचक्षणो लक्ष्मणः

अभीतवदनः क्रुद्धो रावणिं वाक्यमब्रवीत् ।
उक्तश्च दुर्गमः पारः कार्याणां राक्षस त्वया ॥

कार्याणां कर्मणां पारं यो गच्छति स बुद्धिमान् ।
स त्वमर्थस्य हीनार्थो दुरवापस्य केनचित् ॥

वचो व्याहृत्य जानीषे कृतार्थोऽसीति दुर्मते ।

**अन्तर्धानगतेनाजौ यत्त्वयाचरितं तदा ।**
**तस्कराचरितो मार्गो नैष वीरनिषेवितः ॥**

इति । तदुदीरितेन कुपितः पिशिताशनोऽपि युगात्यये मृत्युवद्व्यत्ययकरैरुज्वलद्गरलानलमुखैः शिलीमुखैः भृशतरं सपीड्योवाच — अद्य मद्बाणनिहतमितस्ततश्श्येनगृध्रगोमायुसन्धैः कृष्यमाणं त्वामवलोक्य भवदग्रज इति बहुविध प्रलपन् पञ्चभिश्शिलीमुखैः पञ्चास्यनिकाशं सुमित्रापुत्रमाजघान । ततः

**अविकत्थन् वधिष्यामि त्वामद्य पुरुषादक ।**
**इत्युक्त्वा पञ्च नाराचानाकर्णापूरितान् शितान् ॥**

**निजघान महावेगान् लक्ष्मणो राक्षसोरसि ।**
**स बभूव महाभीमो नरराक्षससिंहयोः ॥**

**विमर्दस्तुमुलो युद्धे नरराक्षससिंहयोः ।**

**एकोननवतितमे —**

अथ रामानुजरावणात्मजयोः परस्परमपरिमिताप्रतर्क्यकर्कशवृत्रशक्रविक्रमसदृशविक्रमयोः अधिगतविविधायुधसमरागमयोः परिसरगतकपिकौणपगणविस्रापकयोरनिमिषैरप्यविदितशरसन्धिमोक्षणयोस्तयो. संप्रवृत्ते समरे क्रमेण हीयमाने मेघनादे वर्धमानं लक्ष्मणमवलोक्य विभीषणः,

**निमित्तान्यनुपश्यामि यान्यस्मिन् रावणात्मजे ।**
**त्वर तेन महाबाहो भग्न एष न संशयः ॥**

इत्यवदत् । रावणिरपि पूर्वकृतशरबन्धमात्मानं किं न स्मरति भवानित्यादि बहु विप्रलपन् सप्तभिश्शरैर्लक्ष्मणं दशभिर्हनूमन्तं शरशतेन च विभीषणं सकोपं निर्भिद्य पुनश्च शरासारानसृजत् । एवमुभावपि स्वर्भानुविभावरीशाविव प्रदर्शितपरिभवानुभावौ प्रकटितपटुतरभुजविक्रमौ शरचयतिमिरसंच्छादिताकाशौ परस्परशरसंकलितकनकवर्माणौ शरकृतविवरसमुद्गतरुधिरस्रावावसेकौ ताववेक्ष्य विभीषणो रामानुजमाजगाम—

**अथ समरपरिश्रमं निहन्तुं समरमुखेष्वजितस्य लक्ष्मणस्य ।**
**प्रियहितमुपपादयन् महौजाः समरमुपेत्य विभीषणोवतस्थे ॥**

नवतितमे—

तदनु सज्जं धनुराधाय विभीषणः प्रहस्तनिकुम्भकुम्भकर्णधूम्राक्षजम्बुमालिसुप्तघ्नयज्ञकोपवज्रदंष्ट्रसंह्रादि विकचनिघ्नतपनदमनप्रघासमघमप्रजङ्घजङ्घाग्निकेतुरश्मिध्वज विद्युज्जिह्व-सूर्याग्निजिह्वशत्रुकम्पनकम्पनसुपार्श्वचक्रमालिदेवान्तकनरान्तकत्रिशिरोतिकायमहाकायमकराक्ष-प्रभृतयो दुष्टचेष्टाप्रभावतो विनष्टाः। एतावदिह जेतव्यं युध्यध्वमिति वानरान् अनुशिष्य,

अयुक्तं निधनं कर्तुं पुत्रस्य जनितुर्मम।
घृणामपास्य रामार्थे निहन्यां भ्रातुरात्मजम्॥

अनेन युद्धार्थमागताः पुत्रादयोऽपि स्वामिकार्यार्थे योद्धव्या एवेति सूचितम्। अत एवाश्वमेधिके यज्ञीयाश्वरक्षणाय समागतोऽर्जुनः पुत्रेण बभ्रुवाहनेन युद्धं कृतवानिति प्रतिपादितम् —

पुत्रं रथस्थं भूमिष्ठः स न्यवारयताहवे। स तत्र राजा तं वीरं शरसंघैरनेकशः।
अर्दयामास निशितैराशीविषविषोपमैः॥
तयोस्समभवद्युद्धं पितुः पुत्रस्य चोभयोः। उलूपी प्राह वचनं धर्म्यं धर्मविशारदम्॥
कुरुष्व वचनं पुत्र धर्मस्ते भविता परः।
युध्यस्वैनं कुरुश्रेष्ठ पितरं युद्धदुर्मदम्॥ इति।

हन्तुकामस्य मे बाष्पं चक्षुश्चापि निरुद्धयति।
तमेवैष महाबाहुर्लक्ष्मणः शमयिष्यति॥
वानरा घ्नन्तु संभूय भृत्यानस्य समीपगान्।

इत्यवदत्।

इति प्रचोदनया युध्यमानेषु जांबवदांजनेयपुरोगमेषु तानभिभूय पुनर्लक्ष्मणमभिधावन् पूर्ववदेव स रावणिः समरमारभत॥

ततः हिमकरदिनकरयोरिव शरवरचयजलदावृतयोरचलितकरतलकृतधनुःशरवर-संधयोराकलितशरधिशरग्रहणगुणसविविमोचनयोः युगविलयोद्धितयोः जलभरपरिपूरितयोः घनघटयोरिव सततगतोपमशरसपातयोः पतगकुलाधिपत्योरिव निरुपमप्रक्रमयोस्तयोः भुज-प्रतापवेगाभ्यामह्नि बहिः प्रदीपेष्विव मन्दप्रभेषु पुण्यवच्चित्रभानुषु प्रभञ्जने क्वचिद्विलीने-

तद्भयसंस्तंभितेषु पयोधिषु सर्वेषु मलिनासु च दिशासु सर्वासु त्रिलोकीव्यत्ययोऽय अधुना समभवदिति जल्पत्सु महर्षिषु तथागतेषु सर्वेषु भूतेषु सौमित्रिश्चतुर्भिः पत्रिभिः तत्स्यन्दनाश्वानभिहत्य भल्लेन तदीयसारथेः शिरोऽपहृत्य गननियन्तुरपि सारथिकृत्यं अभियुध्यतस्तस्य प्रमाथिशरभरभसगन्धमादनैश्चतुर्भिर्हरिवरैर्मथितेषु हयेषु चतुर्षु भग्ने च रथे भूमाववतीर्णेन पदातिना तेन रावणिना युद्धमतन्यत ।

## एकनवतितमे —

तदनु स्वपरविवेकविनाशकारिणा घनतमसा समावृताः समस्ता दिशः समवलोक्य निर्विशङ्कं युध्यन्तु भवन्तः सत्वरमहमपि नगरीं प्रविश्य स्यन्दनमन्यं समारुह्य समरपरिकरं आगच्छामीति राक्षसानभिधाय प्रविश्य नगरीं समारुह्य च रथवरं पुनर्वानरवाहिनीं प्रविष्टो लाघवेन सर्वानपि विस्मापयन् रावणिः शतशो निशितशरासारतो निर्दयमभिहत्य विभीषणेन हताश्वरथादवप्लुत्य ,

रथशक्तिं महातेजाः पितृव्याय मुमोच ह ।

ततो लक्ष्मणेन विनथीकृता रथशक्तिमवलोक्य स्वमर्मणि विभीषणप्रहितबाणविद्धः,

स पितृव्याय संक्रुद्ध इंद्रजिच्छरमाददे ।
उत्तमं रक्षसां मध्ये यमदत्तं महाबलः ॥

लक्ष्मणोऽप्याददे बाणमन्यं भीमपराक्रमः ।
कुबेरेण स्वयं स्वप्ने यद्दत्तममितात्मनः ॥

तौ भासयन्तावाकाशं धनुर्भ्यां विशिखौ च्युतौ ।
मुखेन मुखमाहत्य संनिपेततुरोजसा ॥

शरौ प्रतिहतौ दृष्ट्वा तावुभौ रणमूर्धनि ।
सुसंरब्धस्तु सौमित्रिरस्त्रं वारुणमाददे ॥

रौद्रं महेन्द्रजिद्युद्धे व्यसृजद्युधि निष्ठितः ।
तेन तद्विहतं शस्त्रं वारुणं परमाद्भुतम् ॥

ततः क्रुद्धो महातेजा इन्द्रजित्समितिंजयः ।
आग्नेयं सन्दधे दीप्तं स लोकं संक्षिपन्निव ।

सौरेणास्त्रेण तद्वीरो लक्ष्मणः प्रत्यवारयत् ॥

अस्त्रं निवारितं दृष्ट्वा रावणिः क्रोधमूर्छितः ।
आसुरं शत्रुनाशाय घोरमस्त्रं समाददे ॥

तं दृष्ट्वा लक्ष्मणः संख्ये घोरमस्त्रमथासुरम् ।
माहेश्वरेण द्युतिमान् तदस्त्रं प्रत्यवारयत् ॥

ऋषयः पितरो देवाः गन्धर्वा गरुडोरगाः ।
शतक्रतुं पुरस्कृत्य ररक्षुर्लक्ष्मणं रणे ॥

अथान्यं मार्गणश्रेष्ठं सन्दधे राघवानुजः ।
हुताशनसमस्पर्शं रावणात्मजदारणम् ॥

सुपत्रमनुवृत्ताङ्गं सुपर्वाणं सुसंस्थितम् ।
येन शक्रो महातेजा दानवानजयत्प्रभुः ॥

तदैन्द्रमस्त्रं सौमित्रिः संयुगेष्वपराजितम् ।
शरश्रेष्ठं धनुश्रेष्ठे नरश्रेष्ठोऽभिसंदधे ॥

संधाय धनुषि श्रेष्ठे विकर्षन्निदमब्रवीत् ।
धर्मात्मा सत्यसंधश्च रामो दाशरथिर्यदि ॥

पौरुषे चाप्रतिद्वन्द्वः शरैनं जहि रावणिम् ।

अनेन तपोबलयुक्तस्यातिपराक्रमशालिनो वधार्थमस्त्रप्रक्षेपेण धर्मातिशयव्ययेनापि हंतव्य इति सूचितम्। तथा च **कर्णपर्वणि** अर्जुनस्तथैव कर्णं हतवानिति प्रतिपादितम् ॥

गुरुणा महास्त्रेण परेण चास्त्रं निकृष्य गाण्डीवमुवाच सुस्वरम्।
तपोऽतितप्तं गुरवश्च तोषिता मया यदिष्टं सुहृदा श्रुतं तथा ॥
अनेन श्रेयेण निहत्वय शरः सुसंचितः कर्णमरिं मयोर्जितम् ॥ इति ।

स शरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् ।
प्रमथ्येन्द्रजितः कायात्पपात धरणीतले ॥

पतितं तं समाज्ञाय राक्षसी सा महाचमूः ।
वध्यमाना दिशो भेजे हरिभिर्जितकाशिभिः ॥

अथान्तरिक्षे देवानां ऋषीणां च महात्मनाम् ।
अभिजज्ञे च संनादो गन्धर्वाप्सरसामपि ॥

ववर्षुः पुष्पवर्षाणि तदद्भुतमभूत्तदा ।
हर्षं च शक्रो भगवान् सह सर्वैः सुरर्षभैः ॥

जगाम निहते तस्मिन् राक्षसे पापकर्मणि ।
ऊचुश्च सहितास्सर्वे देवगन्धर्वदानवाः ॥

विज्वरा शान्तकलुषा ब्राह्मणा विचरन्त्विति ।

तदसुकरमभिवीक्ष्य हृष्टाः प्रियसुहृदो युधि लक्ष्मणस्य कर्म ।
परममुपलभन्मन प्रहर्षं विनिहतमिन्द्ररिपुं निशम्य देवाः ॥

द्विनवतितमे —

रुधिरक्लिन्नगात्रस्तु लक्ष्मणः शुभलक्षणः ।
बभूव हृष्टस्तं हत्वा शक्रजेतारमाहवे ॥

विभीषणमवष्टभ्य हनूमन्तं च लक्ष्मणः ।
ततो राममभिक्रम्य सौमित्रिरभिवाद्य च ॥

तस्थौ भ्रातृसमीपस्थः इन्द्रस्येव बृहस्पतिः ।
निष्टनन्निव चागम्य राघवाय महात्मने ॥

रावणेस्तु शिरश्छिन्नं लक्ष्मणेन महात्मना ।
न्यवेदयत रामाय तथा हृष्टो विभीषणः ॥

अनेन स्वीयेषु संतोषहेतुमुच्चैर्ज्ञापयेदिति सूचितम् । अत एव जयद्रथवधं राज्ञि भीमसेन उच्चैर्विज्ञापितवानिति प्रतिपादितं द्रोणपर्वणि —

ततो जयद्रथे राजन् हते पार्थेन केशवः । दध्मौ शङ्खं महाबाहुरर्जुनश्च परंतपः ॥
भीमसेनोऽपि सङ्ग्रामे बोधयन्निव पाण्डवम् । सिंहनादेन महता पूरयामास रोदसी ॥ इति ।

तदाकर्ण्य संतुष्टहृदयो रामः लक्ष्मणमिदमाह —

साधु लक्ष्मण तुष्टोऽस्मि कर्म चासुकरं कृतम् ।
रावणेर्हि विनाशेन जितमित्युपधारय ॥

स तं शिरस्युपाघ्राय लक्ष्मणं लक्ष्मिवर्धनम् ।
लज्जमानं बलात्स्नेहादङ्कमारोप्य वीर्यवान् ॥

उपवेश्य तमुत्संगे परिष्वज्यावपीडितम् ।
भ्रातरं लक्ष्मण स्निग्धं पुनः पुनरुदैक्षत ॥

विभीषणहनूमद्भ्यां कृतं कर्म महद्रणे ।
त्वया लक्ष्मण नाथेन सीता च पृथिवी च मे ॥

न दुष्प्रापा हते त्वद्य शक्रजेतरि चाहवे ।

अनेन महत्कर्म कृतवतां भ्रातृभृत्यादीनामपि क्लेशनिवारणाय तत्कृतं कार्यमभिनन्देदिति सूचितम् । अत एव कर्णं हत्वा समागतौ कृष्णार्जुनौ धर्मपुत्रेण स्तुताविति प्रतिपादितं **कर्णपर्वणि** —

पार्थमादाय गोविन्दो ददर्श च युधिष्ठिरम् । अगृह्णीतां च मुदितौ चरणौ पार्थिवस्य तु ॥
तयोः प्रहर्षमालक्ष्य प्रहारांश्चातिमानुषान् । राधेयं निहतं मत्वा समुत्तस्थौ युधिष्ठिरः ॥
उत्थाय स महाबाहुः पुनः पुनररिन्दम. । वासुदेवार्जुनौ प्रेम्णा पुनश्च परिषस्वजे ॥
ततोऽस्मै तद्यथावृत्तं वासुदेवः प्रियं वच । कथयामास कर्णस्य निधनं यदुनन्दनः ॥
युधिष्ठिरस्तु दाशार्हं प्रहृष्टः प्रत्यपूजयत् । दिष्ट्या दिष्ट्येति राजेन्द्रो वाक्यं चैनदुवाच ह ॥
नैतच्चित्रं महाबाहो त्वयि देवकिनन्दन । त्वया सारथिना पार्थो यत्नवानहनच्च तं ॥
तव कृष्ण प्रभावेण पाण्डवेयो धनंजयः । जयत्यभिमुखान् शत्रून् न चासीद्विमुख क्वचित् ॥
गाण्डीवमुक्तैर्विशिखैः सर्वतः शकलीकृतम । सपुत्र निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः ॥
प्रशशंस नरव्याघ्र उभौ माधवपाण्डवौ । अद्य राजाऽस्मि गोविन्द पृथिव्यां भ्रातृभिस्सह ॥
त्वया नाथेन वीरेण विदुषा परिवारितः । निराशोऽद्य दुरात्मा स भविष्यति सुयोधनः ॥
विजिताच्चैव राज्याच्च हते कर्णे महारथे । एव स बहुशो राजन् प्रशशंस जनार्दनम् ॥
अर्जुनं चापि राजेन्द्रो धर्मराजो युधिष्ठिरः ॥ इति ।

तदनु सुषेणकृतदिव्यौषधनस्यादिभिः विशल्यं सौमित्रिं अन्यानपि वानरयूथपान् नीरुजोऽवलोक्य सहर्षं,

अपूजयत्कर्म स लक्ष्मणस्य सुदुष्करं दाशरथिर्महात्मा ।

त्रिनवतितमे —

अथ सचिवमुखादात्मजवधमाकर्ण्य दुस्सहशोकवेगसमाकुलो दशवदनः बहुशो विलप्य

> एष पन्थाः सुयोधानां सर्वामरगणेष्वपि ।
> यः कृते हन्यते भर्तुः स पुमान् स्वर्गमृच्छति ॥

अनेन स्वामिकार्यार्थनया तनुं त्यजता स्वर्गप्राप्तिर्भवतीति सूचितम् । तथाच राजधर्मे अंबरीषं प्रति इन्द्रः —

भर्तुरर्थेच यश्शूरो विक्रमेद्वाहिनीमुखे । न भयाद्विनिवर्तेत तस्य लोका यथा मम ॥ इति ।

इत्थं अंबरीषार्थतया तनुत्यागिनः तत्सेनापते सुदेवस्य तदपेक्षयाऽपि अधिक-लोकप्राप्तिरित्येतच्च प्रागुक्तं विस्तरेण ।

> अद्य लोकास्त्रयः कृत्स्नाः पृथिवी च सकानना ।
> एकेनेन्द्रजिता हीना शून्येव प्रतिभाति मा ॥
>
> मम नाम त्वया वीर गतस्य यमसादनम् ।
> प्रेतकार्याणि कार्याणि विपरीते हि वर्तते ॥
>
> स त्वं जीवति सुग्रीवे लक्ष्मणे च सराघवे ।
> मम शल्यमनुद्धृत्य क्व गतोऽसि विहाय नः ॥

इति बहुविधं विलप्य कोपेन वृत्रासुर इव वक्त्राद्रोषानलमुद्वमन् क्रुद्धो रुद्र इव निश्वसन् लोचनैरपि सानलबाष्पकणानुत्सृजन् दन्तानपि तीव्रतरं कटकटापयन् निजदृक्पथ-संगतानपि कालानल इव निर्दहन् दुर्वहभूभारखेदविजृंभितबहुफून्कारः पन्नगपतिरिव सदस्यान् विभीषयन् तत्तत्स्थलेषु चिरकृततीव्रव्रतयमनियमप्रसादितपद्मभूदत्तकवचशरासनादिसंपत्सु सतीषु सुरासुरमानवादिभ्यो न भय ममेति वदन् यन्मूलमिदं अशेषामिषाशवारिधिशोषणं अनृतेतरमारचयामीति सचिवानभिधाय करगृहीतकरवालः सत्वरं जानकीसमीपमुपससार ।

तदनु स्वकृतबहुविधप्रार्थनाप्रत्याख्यातो निराशोऽयं दशवदनो नूनं संहरिष्यति मामित्यपास्य जीवितश्रद्धां निजवल्लभपदमेवानुपदमनुसदधतीं व्यवहितहिमकिरणां रोहिणीमिव दुर्ग्रहवशगां विषमाकृतिनिशाचरीसमूहसंदर्शनसंजातभयपरिहृतधैर्यशाखां दशरथवरसुतवनितां हन्तुमुद्यतं दशाननं सुपार्श्वः एवमुवाच —

कथं नाम दशग्रीव साक्षाद्वैश्रवणानुज ।
हन्तुमिच्छसि वैदेहीं क्रोधाद्धर्ममपास्यसि ॥

वेदविद्याव्रतस्नातः स्वकर्मनिरतस्तदा ।
स्त्रियाः कस्माद्वध वीर मन्यसे राक्षसेश्वर ॥

मैथिलीं रूपसंपन्नां प्रत्यवेक्षस्व पार्थिव ।

अत्र पापिष्ठस्य रावणस्य सीतावधान्निवर्तनाय स्त्रीवधोऽनुचित इति प्रथमतो धर्ममुपदिश्य मैथिलीं रूपसपन्नामिति तदभिलषितकामपुरुषार्थप्रदर्शनात् पापिष्ठस्य केवल-धर्मोपदेशेन अमार्गान्निवृत्तिर्न भवति किन्तु तदभिलषितार्थसिद्धिप्रदर्शनेनैव निवृत्तिर्भवतीति सूचितम् ॥

अत एव गन्धर्वगृहीतो दुर्योधन पाण्डवकृतविमोचनजनितलज्जया प्रायमुपविष्टः कर्णेन दैत्यैश्च प्रायोपवेशन राज्ञामयुक्तमिति प्रथमं धर्ममुपदिश्य तदभिलषितार्जुनवध-प्रदर्शनेनैव निवर्तित इति प्रतिपादितं **वनपर्वणि** । तत्र दैत्या —

अकार्षीः साहसमिद कस्मात्प्रायोपवेशनम् ।
आत्मत्यागी ह्यधो याति वाच्यता चायशस्करीम् ॥

नहि कार्यविरुद्धेषु बहुपापेषु कर्मसु । मूलघातिषु सज्जंते बुद्धिमन्तो भवद्विधाः ॥
नियच्छैनां मतिं राजन् धर्मार्थसुखनाशिनीम् । यशःप्रतापवीर्यघ्नीं शत्रूणां हर्षवर्धिनीम् ॥
यच्च तेऽन्तर्गतं वीर भयमर्जुनसंभवम् । तत्रापि विहितोऽस्माभिर्वधोपायोऽर्जुनस्य वै ॥
हतस्य नरकस्यात्मा कर्णमूर्तिमुपाश्रित. । तद्वैरं संस्मरन् वीर योत्स्यते केशवार्जुनौ ॥ इति

कर्णोऽपि —

प्रायोपविष्टस्तु नरो राज्ञां हास्यो भविष्यति ।
सत्यं ते प्रतिजानामि वधिष्यामि रणेऽर्जुनम् ॥

एवमुक्तस्तु कर्णेन दैत्यानां वचनात्तथा । प्रणिपातेन चाप्येषामुदतिष्ठत् सुयोधनः ॥ इति ।

त्वमेव तु सहास्माभी राघवे क्रोधमुत्सृज ।
अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशीम् ॥

कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः ।

इति प्रचोद्यमानः स्वसदनमाससाद ।

चतुर्नवतितमे —

> स प्रविश्य सभां राजा दीनः परमदुःखितः।
> निषसादासने मुख्ये सिंहः क्रुद्ध इव श्वसन्॥

> अब्रवीच्च स तान् सर्वान् बलमुख्यान् महाबलः।
> रावणः प्राञ्जलिर्वाक्यं पुत्रव्यसनकर्शितः॥

अत्र अत्यन्तं स्तब्धेनापि रावणेन स्वकार्यार्थतयाऽञ्जलिबन्धपूर्वकं स्वभृत्यानामपि राक्षसानां प्रार्थनाकरणाद्राज्ञां कार्यप्रत्ययप्रसक्तौ कार्यसाधनाय भृत्यानामपि प्रार्थना कर्तव्येति सूचितम्।

अत एव **शल्यपर्वणि** दुर्योधनेन प्रार्थनापूर्वकमेव शल्यो युद्धे नियुक्त इति प्रतिपादितम्।

> ततो दुर्योधनश्शल्यं भूमौ स्थित्वा रथे स्थितम्।
> उवाच प्राञ्जलिर्भूत्वा रामभीष्मसमं रणे॥

अयं स काल सम्प्राप्तो मित्राणां मित्रवत्सल। यत्र मित्रममित्रं वा परीक्षन्ते बुधा जनाः॥

> स भवानस्तु नः शूरः प्रणतो वाहिनीमुखे॥ इति।

> **सर्वे भवन्तः सर्वेण हस्त्यश्वेन समावृताः।**
> **एकं रामं परिक्षिप्य समरे हन्तुमर्हथ॥**

इत्याज्ञप्ता नक्तंचरा नगराद्विनिष्क्रम्य कनकमयस्यन्दनगन्धसिन्धुरगन्धर्वपदातिपरिवृताः काननौकसामनीकिनीं प्रविश्य अवश्यायविगमसमयसमुज्ज्वलद्हिमकर इव शरनिकरैः परबलमखिलं प्रतापयन्तः क्करगततरुशिखरानपि खररदनखरायुधान् आयुधकलापैर्निपातयन्तः क्वचन शरासारतः परबलमुत्सादयन्तो नखदारुणरदंदशनतालभिवेष्टनघूर्णनाद्युपायैरपगतसंग्रामभयैर्गिरिगुरुदेहपातशकलित हयगजरथकोणपैः प्रतिभटकरटिघटाविघटनपटुभिर्वानरभटैर्युद्धमकुर्वन्॥

ततः संछादितसुरपथदिशावकाशेषु पिशिताशनकपिसैनिकोत्थरेणूत्करमहान्धकारेषु परस्परप्रहारजनितव्रणमुखनिर्गतशोणितस्रवेरुपशान्तेषु सत्सु हरिरदनखदलितकलधौतचामरातपत्रशिरस्त्रशकलफेनासु सकङ्ककर्कपदखण्डकारण्डवादिविविधाण्डजमण्डलासु रणधरणीतल

निपतितहिमगिरिसमकरिवरतटयुगलासु प्रतिहतनिशिचररथनतक्रूरराक्षचक्रनक्रकमठपाठीनासु हरिगणविनिकृष्टदैत्यशैवालशिरोरुहासु कपिकौणपगणगोत्वमसुद्धवत्क्षतजवाहिपु प्रवाहिनीषु सतीषु च वीरुनरुविविधौषधिकाननं समरुद्दावानलमिव निर्दहन्त रसभरपुष्टविवृद्धपौण्ड्राटवीं करटीश्वरमिव च विनाशयन्तम्,

न ते ददृशिरे रामं दहन्तमरिवाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥

प्रहरन्तं शरीरेषु न ते पश्यन्ति राघवम् ।
इन्द्रियार्थेषु तिष्ठन्तं . ... ... .. ॥

भूतात्मानं भोक्तारं संनिहितमपि जीवं तत्त्वतो यथा न जानन्ति तथा प्रहरन्तं रामं न पश्यन्ति किन्तु तत्कृतप्रहारमेव पश्यन्तीत्युक्तम् ।

ननु भोक्तृरूपस्यान्त करणोपाधिकस्य जीवस्य देहावस्थितस्य विषयदेशावस्थानं कथमिति चेदुच्यते भोक्तुरन्तःकरणावच्छिन्नस्य विषयापरोक्षत्वसिध्यर्थं विषयदेशावस्थानमावश्यकम् । तथाहि यथा तटाकादौ स्थितमुदकं कुल्याद्वारा केदारं व्याप्नोति तथा शरीरावच्छिन्नमन्तःकरणं इन्द्रियद्वारा विषयदेशं व्याप्नोति सा च व्याप्तिरन्तःकरणवृत्तिरुच्यते । तस्या च विषयावच्छिन्न चैतन्यं प्रतिफलति तच्च चैतन्यमन्तःकरणावच्छिन्नत्वात् प्रमातृचैतन्यमपि भवति । एवं विषयचैतन्ययोरभेदे सति अन्तःकरणपरिच्छिन्नस्य भोक्तुर्विषयदेशावस्थितत्वमङ्गीकार्यम् ।

अन्यथा विषयस्य प्रमात्रव्यवहितत्वरूपापरोक्षत्वानुपपत्ते । न चापरोक्षज्ञानविषयत्वेनैव विषयस्यापरोक्षत्वं इन्द्रियजन्यज्ञानत्वेनेति वाच्य ज्ञानस्यापरोक्षत्वं हि इन्द्रियजनित्वमात्र अथ इन्द्रियत्वेनेंद्रियजन्यत्वं उत जाति ? नाद्यः ज्ञानमात्रस्य मनोरूपेन्द्रियजन्यत्वेन तत्रातिव्याप्ते । न द्वितीयः परमते ईश्वरीयज्ञाने अस्मन्मते सुखादिसाक्षात्कारे नित्यसाक्षिणि च अव्याप्ते । नापि जातिः सुरभिश्चन्दनखण्ड इत्याद्युपनीतप्रत्यक्षे सौरभ्यांशेऽपि तत्सत्त्वे अविद्यानिवृत्त्यापत्तेः तदसत्वे च चन्दनखण्डांशे अपरोक्षत्वस्यावक्तव्यतया अव्याप्यवृत्तित्वात् । किं चापरोक्षत्वजाते किंचिद्व्यंजकमस्ति वा न वा आद्येऽपि इन्द्रियजन्यत्वं वा अन्यद्वा नाद्यः तस्यातदभिव्यञ्जकत्वे पूर्वोक्तदोषानतिवृत्तेः । न द्वितीयः अन्यस्याभिव्यंजकस्य सत्त्वे तेनैवापरोक्षत्वव्यवहारोपपत्तौ तद्वैयर्थ्यापत्तेः व्यंजकासत्त्वे च तस्य प्रतीतिपथारोहासंभवेन तत्सद्भावे प्रमाणाभावात् ।

तस्मादपरोक्षार्थविषयत्वं ज्ञानस्यापरोक्षत्वं विषयस्यापरोक्षत्वं च प्रमात्रव्यवहितत्वं। तच्चान्तःकरणवृत्तेर्बहिर्निर्गमनेन विषयावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदे सति भवति नान्यथेति अन्तःकरणोपाधिकस्य जीवस्य विषयदेशावस्थितत्वमंगीकार्यम्। तथा च **कौषीतकिश्रुतिः** विषयाणां इन्द्रियद्वारा निर्गतान्तःकरणवृत्त्यभिव्यक्तचैतन्यविषयत्वमन्वय-व्यतिरेकाभ्यां दर्शयति।

प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया प्राणं समारुह्य प्राणेन सर्वान् गन्धानाप्नोति प्रज्ञया चक्षुस्समारुह्य चक्षुषा सर्वाणि रूपाण्यवाप्नोति प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वान् शब्दानाप्नोति प्रज्ञया जिह्वा समारुह्य जिह्वया सर्वान्नरसाना-प्नोति प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्माण्याप्नोति प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति प्रज्ञयोपस्थं समारुह्य उपस्थेनानन्दरतिं प्रजातिराप्नोति प्रज्ञया पादौ समारुह्य पादाभ्यां सर्वा इत्या आप्नोति प्रज्ञयैव धिय समारुह्य प्रज्ञयैव धियो विज्ञातव्यान् कामानाप्नोति न हि प्रज्ञापेता वाङ् नाम किंचन प्रज्ञापयेत् अन्यत्र मे मनोऽभूदित्याह नाहमेतन्नाम प्राज्ञासिषमिति। नहि प्रज्ञापेतः प्राणो गन्धं कञ्चन प्रज्ञापयेत् अन्यत्र मे मनोऽभूयादित्याह नाहमेतं गन्धं प्राज्ञासिषमिति। न हि प्रज्ञापेतं चक्षू रूपं किञ्चन प्रज्ञापयेत् अन्यत्र मे मनोऽभूयादित्याह नाहमेतद्रूपमज्ञासिषमिति न हि प्रज्ञापेतं श्रोत्रं शब्दं कञ्चन प्रज्ञापयेत् अन्यत्र मे मनोऽभूयादित्याह नाहमेतं शब्दं प्राज्ञासिषमिति न हि प्रज्ञापेतोन्नरसं जिह्वा अन्नरसं कञ्चन प्रज्ञापयेत् अन्यत्र मे मनो-ऽभूयादित्याह न हि प्रज्ञापेतौ हस्तौ कर्म किंचन प्रज्ञापयेत् अन्यत्र मे मनोऽभूयादित्याह नाहमेतत्कर्म प्राज्ञासिषमिति न हि प्रज्ञापेतं शरीरं सुखदुःखं किञ्चन प्रज्ञापयेत् अन्यत्र मे मनोऽभूयादित्याह नाहमेतत् सुखदुःखं प्राज्ञासिषमिति न हि प्रज्ञापेतः उपस्थः आनन्दरतिं प्रजातिं काञ्चन प्रज्ञापयेत् अन्यत्र मे मनोऽभूयादित्याह नाहमेतं आनन्दं प्रजातिं प्राज्ञासिषमिति न हि प्रज्ञापेतौ पादौ काञ्चन गतिं प्रज्ञापयेतां अन्यत्र मे मनो-ऽभूयादित्याह नाहमेतामित्यां प्राज्ञासिषमिति न हि प्रज्ञापेता धीः काञ्चन सिद्ध्येत् न प्रज्ञातव्यां प्रज्ञायेतेति।

एवं विषयदेशस्थोप्यात्मा त्वमहमादिशब्दैः व्यवह्रियमाणोऽपि तत्त्वतो न ज्ञायते। तथा च **सूतसंहितायां —**

आत्मा नाम सुराः स्वेन भासा यो भाति संततिम्। तमेव त्वमहंशब्दप्रत्ययाभ्यां तु जन्तवः॥

व्यवहारे विजानन्ति न जानन्त्येव तेऽर्थतः ।
अर्थतश्चास्य चेत् ज्ञाता न विद्यन्तेद्वयन्वत ॥

त्वमहंप्रत्ययव्याजात् सर्वे जानन्ति जन्तवः ।
तथापि शिवरूपेण न विजानन्ति तं सदा ॥ इति ।

एष हन्ति गजानीकं एष हन्ति महारथान् ।
एष हन्ति शरैस्तीक्ष्णैः पदातीन् वाजिभिस्सह ॥

इति ते राक्षसास्सर्वे रामस्य सदृशान् रणे ।
अन्योन्यं कुपिता जघ्नुः सादृश्याद्राघवस्य ते ॥

ते तु रामसहस्राणि रणे पश्यन्ति राक्षसाः ।
पुनः पश्यन्ति काकुत्स्थमेकमेव महारणे ॥

भ्रमन्तीं काञ्चनं कोटिं कार्मुकस्य महात्मनः ।
अलातचक्रप्रतिमां ददृशुस्ते न राघवम् ॥

शरीरमभि सत्वार्चि शरारं नेमिकार्मुकम् ।
ज्याघोषतलनिर्घोषं तेजोबुद्धिगुणप्रभम् ॥

दिव्यास्त्रगुणपर्यन्तं निघ्नंतं युधि राक्षसान् ।
ददृशू रामचक्रं तत् कालचक्रमिव प्रजाः ॥

अनीकं दशसाहस्रं रथानां वातरंहसाम् ।
अष्टादशसहस्राणि कुञ्जराणां तरस्विनाम् ॥

चतुर्दशसहस्राणि सारोहाणां च वाजिनाम् ।
पूर्णे शतसहस्रे द्वे राक्षसानां पदातिनाम् ॥

दिवसस्याष्टमे भागे शरैरग्निशिखोपमैः ।
हतान्येकेन रामेण रक्षसां कामरूपिणाम् ॥

तदनु भयादपयातेषु हतशेषेषु निशाचरेषु संप्रहृष्टेषु च देवगणेषु पार्श्ववर्तिनो विभीषणसुग्रीवप्रमुखानेवमवादीत् ।

एतदस्त्रबलं दिव्यं मम वा त्र्यम्बकस्य वा ॥ इति ।

ततो,

> निहत्य तां राक्षसवाहिनीं तु रामस्तदा शक्रसमो महात्मा ।
> अस्त्रेषु शस्त्रेषु जितक्लमश्च संस्तूयते देवगणैः प्रहृष्टैः ॥

**पञ्चनवतितमे —**

ततो हतशेषैर्निशाचरैरावेदितवृत्तान्ता रजनीचरास्तन्नार्यश्च —

> विधवा हतपुत्राश्च क्रोशन्त्यो हतबान्धवाः ।
> राक्षस्यः सह संगम्य दुःखार्ताः पर्यदेवयन् ॥
>
> कथं शूर्पणखा वृद्धा कराला निर्णतोदरी ।
> आससाद वने रामं कन्दर्पसमरूपिणम् ॥
>
> जनस्यास्याल्पभाग्यत्वात् पलिनी श्वेतमूर्धजा ।
> अकार्यमपहास्यं च सर्वलोकविगर्हितम् ॥
>
> राक्षसानां विनाशाय दूषणस्य खरस्य च ।
> चकाराप्रतिरूपा सा राघवस्य प्रधर्षणम् ॥

तन्निमित्ततया च कृतवैरस्य रावणस्य प्रत्येकमेव राममाहात्म्यज्ञापनसमर्थैर्विराध-कबन्धवालिकुम्भकर्णादिवधैः समुदितैरपि अविदितरामप्रभावस्य,

> रावणस्यपनीतेन दुर्विनीतस्य दुर्मते ।
> अयं निष्टानको घोरः शोकेन समभिप्लुतः ॥

अनेन मूर्खस्याधर्मिष्ठस्य राज्ञो दोषेण तद्राष्ट्रस्य सपुत्रज्ञातिबान्धवस्य स्वस्य च नाशो भवतीति सूचितम् । तथा चाश्वमेधिके —

> धिक् तं दुर्योधनं क्षुद्रं राज्यलुब्धं च मानिनम् ।
> यत्कृते बान्धवास्सर्वे मया नीता यमक्षयम् ॥ इति ।

> एषा देवैः प्रयुक्ता तु क्षुद्यथा दानवान् पुरा ।
> भक्षयिष्यति नस्सीता राक्षसघ्नी सरावणान् ॥

अनेन असुरान् प्रति देवैः क्षुत् प्रेरितेत्युक्तम् । एतच्च पारक्षुद्रे —

ते देवा गृहमेधीयेनेष्ट्वा आशिताभवत् आञ्जताभ्यञ्जता अनुवत्सानवासयन् तेभ्यः सुराः क्षुधं प्रहिण्वन् सा देवेषु लोकमवित्व असुरान्पुनरगच्छत् गृहमेधीयेनेष्ट्वा आशिता भवन्ति आञ्जतेभ्यञ्जते अनुवत्सान् वासयन्ति भ्रातृव्यायैव तद्यजमानः क्षुध प्रहिणोतीति ।

अत्र क्षुधं यजमानः भ्रातृव्याय प्राहिणोतीत्यर्थसारूप्याय पूर्वत्रापि देवैः प्रेषिता सती असुरान् पुनरगच्छदित्यर्थोऽवगन्तव्य ।

अयं निष्ठानको घोरः शोकेन समभिप्लुतः ।
नास्ति नः शरणं कश्चिद्भये महति तिष्ठताम् ॥

दावाग्निवेष्टितानां हि करेणूनां यथा वने ।
अद्यप्रभृति लोकांस्त्रीन् सर्वे दानवराक्षसाः ॥

भयेन प्रावृता नित्यं विचरिष्यन्ति शाश्वतम् ।

इति ब्रह्मवचनम्,

उत्पत्स्यति हितार्थं वो नारी रक्षःक्षयावहा ।

इति शिववचनं चानुस्मरंत्यो —

मम पुत्रो मम भ्राता मम भर्ता रणे हतः ।

इतीव सर्वा रजनीचरस्त्रियः परस्परं संपरिगृह्य बाहुभि ।
विषेदुरार्ता भयभारपीडिता विनेदुरुच्चैश्च तदा सुदारुणम् ॥

षण्णवतितमे —

ततः प्रतिगृहं राक्षसीकृतपरिदेवनाकर्णनेन रोषकषायलोचनो रावणः —

कल्प्यतां मे रथश्शीघ्रं क्षिप्रमानीयतां धनु ।
अनुप्रयान्तु मां युद्धे येऽवशिष्टा निशाचराः ॥

अद्य बाणैर्धनुर्मुक्तैर्युगान्तादित्यसंनिभै ।
राघवं लक्ष्मण चैव नेष्यामि यमसादनम् ॥

इत्यवदत् । तदनु हलमुसलासिशक्तिपरश्वथशूलपट्टसपरिघगदाकूटमुद्गरमुसुण्ठिभिण्डिपाल-शतघ्निप्रमुखैः शरधिधनुर्हाटककंकटैरुपेतं कनकखलीनवर्मदिव्यगन्धर्वयुक्तं संनद्धं रथमारुह्य

महत्या रजनीचरवाहिन्या उत्तरद्वारेण निष्क्रम्य अभूतपूर्वानत्याहितशंसिनो महोत्पातानपि सहजधैर्यवशादनादृत्य.

वानराणामनीकेषु चकार कदनं महत् ।

दशाननः क्रोधविवृद्धनेत्रो यतो यतोऽभ्येति रथेन संख्ये ।
ततस्ततस्तस्य शरप्रवेगं सोढुं न शेकुर्हरिपुङ्गवास्ते ॥

सप्तनवतितमे —

तेऽर्दिता निशितैर्बाणैः क्रोशंतो विप्रदुद्रुवु ।
पावकार्चिःसमाविष्टा दह्यमाना यथा गजाः ॥

तदनु प्रभञ्जन इव महाभ्राणि प्लवङ्गमान् विद्रावयन् दशवदनः,

आससाद ततो युद्धे राघव त्वरितस्तदा ।

अत्रान्तरे दिनकरतनयः स्वसेनासंरक्षणविचक्षणं सुषेणमभिगुल्मं निक्षिप्य गृहीतपादपः अनुयायिभिः तरुशिखरशिलावर्षिभिः परकृतशरवर्षाण्यन्यथयन् राक्षसप्रवरानभ्यर्दयन् अक्षयबलं रक्षःपतिपक्षरक्षणाय बद्धकक्षं विरूपाक्षमासाद्य महत्या शिलया तदीयरथाश्वानाजघान ।

तदनु हताश्वाद्रथादवप्लुत्य गजस्कन्धमारूढो विरूपाक्षः सुग्रीवकृतपादपप्रहारेण तस्मिन्नपि गजे प्रमथिते,

अपक्रम्य स विक्रान्तः खड्गेन प्राहरत्तदा ।

तदनु सुग्रीवः स्वकृतमुष्टिप्रहारमसहमानेन विरूपाक्षेण खड्गपादप्रहाराभ्यां निकृत्तकवचः सुग्रीवस्सहसोत्प्लुत्य,

ततो न्यपातयत्क्रुद्धश्शङ्खदेशे महत्तलम् ।
पपात रुधिरक्लिन्नः शोणितं स समुद्वमन् ॥

विनाशितं प्रेक्ष्य विरूपनेत्रं महाबलं तं हरिपार्थिवेन ।
बलं समस्तं कपिराक्षसानां उन्मत्तगङ्गाप्रतिम बभूव ॥

**अष्टनवतितमे —**

ततो विरूपाक्षवधं अक्षीणबलैर्वानरैर्हन्यमानं स्वसैन्यं दैवविपर्ययं चावलोक्य द्विगुणीकृतकोपो महोदरमेवमुवाच —

**जहि शत्रुचमूं वीर दर्शयाद्य पराक्रमम्।**
**भर्तृपिण्डस्य कालोऽयं निर्वेष्टुं साधु युध्यताम्॥**

अनेन चिरकालभुक्तस्य भर्तृपिण्डस्य स्वामिन आपदि समुपस्थितायां स्वकीयप्राणत्यागेनैव निर्यातनं कर्तव्यमिति सूचितम्। तथाच **वनपर्वणि** द्रौपदी —

अवश्यं भर्तृपिण्डस्तैर्निर्वेश्य इति मे मतिः।
यस्मात् त्यक्ष्यन्ति सङ्ग्रामे प्राणानपि सुदुस्त्यजान्॥ इति।

**उद्योगे** दुर्योधनं प्रति गान्धारी —

राजपिण्डभयादेते यदि हास्यंति जीवितम्।
नहि शक्ष्यंति राजान युधिष्ठिरमुदीक्षितुम्॥ इति।

तदनु महोदरः पावकं पतङ्ग इव हरिवाहिनीं प्रविश्य विमत्तकेसरिणा मत्तमातङ्ग इव रवितनयेन सङ्गतः तत्प्रयुक्तविपुलशिलाशरवरनिकरैराकुलीचकार।

तदनु सुग्रीवेण रणतलनिपतितपरिघमादाय तेन रथाश्वेषु प्रमथितेषु,

**तस्माद्धतहयाद्वीरः सोऽवप्लुत्य महारथात्।**
**गदां जग्राह संक्रुद्धो राक्षसोऽथ महोदरः॥**

तया च गदया, सुग्रीवं प्रहितं परिघमभिहत्य सुग्रीवप्रहिनमायसं मुसलमपि अन्यया गदयाऽभिहत्य कञ्चित्कालं तेन सह बाहुयुद्धमकरोत्।

तदनु समीपपतितं खड्गं चर्म चादायान्योन्यमभिजघ्नतोस्तयोः,

**सतु शूरो महावेगो वीर्यश्लाघी महोदरः।**
**महाचर्मणि तं खड्गं पातयामास दुर्मतिः॥**

**लग्नमुत्कर्षतः खड्गं खड्गेन कपिकुञ्जरः।**
**जहार सशिरस्त्राणं कुण्डलोपहितं शिरः॥**

अथ विजयमवाप्य वानरेन्द्र समरमुखे सुरपक्षसिद्धसंघैः ।
अवनितलगतैश्च भूतसंघैर्हर्षसमाकुलितैस्स्तुतो महात्मा ॥

एकोनशततमे —

तदनु,

रथारूढो महापार्श्वे प्रविश्यांगदवाहिनीम् ।

सायकासारैर्वानराणा करपादशिरः शातयन्नङ्गदप्रहितपरिघातेन,

ससूतः स्यन्दनात्तस्माद्विसंज्ञः प्रापतद्भुवि ।

ततश्च जाम्बवत्प्रहितशिलया विमथिते च साश्वे रथे मुहूर्ताल्लब्धसज्ञो महापार्श्वः पर्जन्य इव गर्जनेन संतर्जयन् वानरान् ऋक्षराजगवाक्षजाम्बवत्प्रभृतींश्च शरवर्षेण सक्षोभयन्नङ्गदप्रहितपरिघविचूर्णितशरचापाद्युपकरणः सविधनिपतितनिशितपरश्वथेनागदं समाजघान । तदनु च लाघवातिशयाद्विफलीकृतपरश्वथप्रहारेणागदेन मुष्टिप्रहाराभिहतस्य तस्य,

पफाल हृदयं चाशु स पपात हतो भुवि ।

अथेन्द्रशत्रुस्त्रिदशालयानां वनौकसां चैव महाप्रणादम् ।
श्रुत्वा सरोषं युधि राक्षसेन्द्रः पुनश्च युद्धाभिमुखोऽवतस्थे ॥

शततमे —

तदनु महोदरादिवधकुपितहृदयेन रावणेन वानरविनाशाय प्रयुक्तं तामसास्त्रं,

निर्ददाह कपीन् सर्वान् ते प्रपेतुस्समन्ततः ।
नहि तत्सहितुं शेकुर्ब्रह्मणा निर्मितं स्वयम् ॥

ततो विद्रुताया वानरवाहिन्यां —

स ददर्श ततो रामं तिष्ठतमपराजितम् ।
लक्ष्मणेन सह भ्रात्रा विष्णुना वासवं यथा ॥

आलिखन्तमिवाकाशमवष्टभ्य महद्धनुः ।
पद्मपत्रविशालाक्षं दीर्घबाहुमरिंदमम् ॥

तदनु विस्फार्य कार्मुकं शरवर्षं वर्षन् रावणः युद्धोत्सुकस्य शरवर्षं वर्षतः सौमित्रेः

एकमेकेन बाणेन त्रिभिस्त्रीन् दशभिर्दश ।
लक्ष्मणस्य प्रचिच्छेद दर्शयन् पाणिलाघवम् ॥

तदनु सुमित्रापुत्रमतिक्रम्य समुखमापतता रावणेन निसृष्टान्,

तान् शरौघांस्ततो भल्लैस्तीक्ष्णैश्चिच्छेद राघवः ।

ततः,

राघवो रावणं तूर्णं रावणो राघवं तदा ।
अन्योन्यं विविधैस्तीक्ष्णैः शरैरभिववर्षतुः ॥

चेरतुश्च चिरं चित्रं मण्डलं सव्यदक्षिणम् ।
गवाक्षितमिवाकाशं बभूव शरवृष्टिभिः ॥

शरान्धकारमाकाशं चक्रतुः परमं तदा ।
गतेऽस्तं तपने चापि महामेघाविवोत्थितौ ॥

बभूव तुमुलं युद्धमन्योन्यवधकांक्षिणोः ।
अनासाद्यमचिन्त्यं च वृत्रवासवयोरिव ॥

तदनु रावणेन ललाटे प्रत्यर्पिता नाराचमाला उत्पलमालामिव कलयन् रामः कङ्क काक गृध्र श्येन सिंह व्याघ्रकुक्कुटाद्याननाकृतिशरसंघातोत्पादकमासुरमस्त्रं रावणप्रहितं प्रतिहन्तुं,

ससर्जास्त्रं महोत्साहं पावकं पावकोपमः ।
अग्निदीप्तमुखान् बाणान् तथा सूर्यमुखानपि ॥

ग्रहनक्षत्रवक्त्रांश्च महोल्कामुखसुस्थितान् ।
ते रावणशरा घोरा राघवास्त्रसमाहताः ॥

विलयं जग्मुराकाशे जग्मुश्चैव सहस्रशः ।

ततस्तदस्त्रं विनिहत्य राघवः प्रगृह्य तद्रावणबाहुनिस्सृतम् ।
मुदान्वितो दाशरथिर्महात्मा विनेदुरुच्चैर्मुदिताः कपीश्वराः ॥

एकशततमे —

ततः स्वप्रहितं आयसमुसलकूटमुद्गरादीनामुत्पादकं मयविहितं रौद्रमस्त्रं रामप्रहित-गान्धर्वास्त्रप्रतिहतमवलोक्य,

रावणः क्रोधताम्राक्षः सौरमस्त्रमुदीरयत्।
ततश्चक्राणि निष्पेतुर्भास्वराणि महान्ति च॥

तैरासीद्गगनं दीप्तं संपतद्भिरितस्ततः।
तानि चिच्छेद बाणौघैश्चक्राणि च स राघवः॥

तदनु कुपितहृदयेन दशाननेन दशभिश्शरैः मर्मसु ताडितोऽप्यविचलितहृदयो राघवस्तीक्ष्णतरैश्शरैस्तमपि सर्वगात्रेषु विव्याध।

एतस्मिन्नन्तरे क्रुद्धो राघवस्यानुजो बली।
लक्ष्मणः सायकान् सप्त जग्राह परवीरहा॥

ध्वजं मनुष्यशीर्षं तु तस्य चिच्छेद नैकधा।
सारथेश्चापि बाणेन शिरो ज्वलितकुण्डलम्॥

जहार बाणैश्चिच्छेद धनुर्गजकरोपमम्।

अत्र एतस्मिन्नन्तर इत्यनेन रामरावणयोर्युद्धे कञ्चित्कालमुपरते सति अयमेव समयो रावणं योद्‌धुमित्यागतो लक्ष्मण इति प्रतिपादनेन अन्येन संगतो न योद्धव्य इति सूचितम्। एतच्च प्राक् प्रपञ्चितम्। अत एव लक्ष्मणेन सह युद्धसमये रामेण युद्धं कृतमिति नावगम्यते।

नीलमेघनिभांश्चास्य सदश्वान् पर्वतोपमान्।
जघानाप्लुत्य गदया रावणस्य विभीषणः॥

तदनु रथादवप्लुत्य कुपितेन दशाननेन विभीषणं प्रति प्रयुक्तां,

अप्राप्तामेव तां शक्तिं त्रिभिश्चिच्छेद लक्ष्मणः।
अथोदतिष्ठत्सन्नादो वानराणां तरस्विनाम्॥

तेन च संक्रुद्धो रावणः,

ततस्संभाविततरां कालेनापि दुरासदाम् ।
जग्राह विपुलां शक्तिं दीप्यमानां स्वतेजसा ॥

एतस्मिन्नन्तरे वीरो लक्ष्मणस्तं विभीषणम् ।
प्राणसंशयमापन्नं तूर्णमभ्यवपद्यत ॥

तं विमोक्षयितुं वीरश्चापमायम्य लक्ष्मणः ।
रावणं शक्तिहस्तं वै शरवर्षमवाकिरत् ॥

कीर्यमाणः शरौघेन विसृष्टेन महात्मना ।
न प्रहर्तुं मनश्चक्रे विमुखीकृतविक्रमः ॥

मोक्षितं भ्रातरं दृष्ट्वा लक्ष्मणेन स रावणः ।
लक्ष्मणाभिमुखस्तिष्ठन्निदं वचनमब्रवीत् ॥

विमुच्य राक्षसं शक्तिस्त्वयीयं विनिपात्यते ।
एषा ते हृदयं भित्त्वा शक्तिर्लोहितलक्षणा ॥

मद्बाहुपरिघोत्सृष्टा प्राणानादाय यास्यति ।
इत्येवमुक्त्वा तां शक्तिमष्टघण्टां महास्वनाम् ॥

मयेन मायाविहिताममोघां शत्रुनाशिनीम् ।
रावणः परमक्रुद्धः चिक्षेप च ननाद च ॥

तामनुव्याहरच्छक्तिमापतन्तीं स राघवः ।
स्वस्त्यस्तु लक्ष्मणायेति मोघा भव हतोद्यमा ॥

अनेन भ्रातृपुत्रादीनामापत्प्रसक्तौ श्रेयः प्रार्थनीयमिति सूचितम् । तथा च ऐषीके अर्जुनः—

पूर्वमाचार्यपुत्राय ततोऽनन्तरमात्मने । मातृभ्यश्चैव सर्वेभ्यस्स्वस्तीत्युक्त्वा परंतप ॥
उत्ससर्ज शिवं ध्यायन्नस्त्रमस्त्रेण शाम्यताम् ॥ इति ।

रावणेन रणे शक्तिः क्रुद्धेनाशीविषोपमा ।
मुक्ता शूरस्य भीतस्य लक्ष्मणस्य ममज्ज सा ॥

ततो रावणवेगेन सुदूरमवगाढया ।
शक्त्या निर्भिन्नहृदयः पपात धरणीतले ॥

तदवस्थं समीपस्थो लक्ष्मणं प्रेक्ष्य राघवः ।
भ्रातृस्नेहान्महातेजा विषण्णहृदयोऽभवत् ॥

न विषादस्य कालोऽयमिति संचिन्त्य राघवः ।
चक्रे सुतुमुलं युद्धं रावणस्य वधे धृतः ॥

ततो वानरश्रेष्ठैरशक्यां,

तां कराभ्यां परामृश्य रामः शक्तिं भयावहाम् ।
बभञ्ज समरे क्रुद्धो बलवद्विचकर्ष च ॥

अत्रान्तरे सर्वगात्रेषु रावणेन प्रहितान् बाणगणानविगणय्य समाश्लिष्य च लक्ष्मणं सुग्रीवहनुमत्प्रमुखानेवमुवाच —

लक्ष्मणं परिवार्येह तिष्ठध्वं वानरोत्तमा ।
पराक्रमस्य कालोऽयं संप्राप्तो मे चिरेप्सितः ॥

पापात्माऽयं दशग्रीवो वध्यतां पापनिश्चयः ।
काङ्क्षितस्तोककस्येव घर्मान्ते मेघदर्शनम् ॥

अस्मिन् मुहूर्ते नचिरात् सत्यं प्रतिशृणोमि वः ।

अत्र पराक्रमस्य कालोऽयमित्युक्त्या दृष्टिपथं प्राप्तश्शत्रुर्नोपेक्षणीयो हन्तव्य एवेति सूचितम् । तथा च **कर्णपर्वणि** अर्जुनं प्रति कृष्णः —

नैवाहितानां सततं विपश्चितः क्षणं प्रतीच्छन्त्यपि दुर्बलीयसाम् ।
विशेषतोऽरीन् व्यसनेषु पण्डितो निहत्य धर्मं च यशश्च विन्दति ॥

असौ निवृत्तो राधेयो दृष्ट्वा ते वानरध्वजम् । एष त्वां प्रेक्षते कर्णः शकटाक्षं धनंजय ॥
त्वया यशश्च राज्यं च सुखं चोत्तममिच्छता । सर्वैस्स्वभावैर्दुष्टात्मा वध्य एष प्रयत्नतः ॥
प्रतिपद्यस्व राधेयं प्राप्तकालमरिन्दम । इति ।

अरावणमरामं वा जगद्द्रक्ष्यथ वानराः ।

अत्र शूरस्य युद्धे विजयो वा मरणं वा श्रेयस्करत्वाविशेषात् उभयमपि समानमिति सूचितम् । अत एव अर्जुनं प्रति **भगवद्वचनम्** —

हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।

इति । अत एव **कर्णपर्वणि** कृष्णं प्रत्यर्जुनेन युद्धे मरणविजययोः अविशेष एवोक्त इत्यवगम्यते —

चोदयाश्वान् हृषीकेश रथं मम महारथ । नाहत्वा समरे कर्णं निवर्तिष्यति फाल्गुनः ॥

अद्य कर्णं हतं पश्य मच्छरैः शकलीकृतम् ।
मां वा द्रक्ष्यसि गोविन्द कर्णेन निहतं शरैः ॥ इति ।

**राज्यनाशं वने वासं दण्डके परिधावनम् ।**
**वैदेह्याश्च परामर्शं रक्षोभिश्च समागमम् ॥**

**प्राप्तं दुःखं महाघोरं क्लेशं च निरयोपमम् ।**
**अद्य सर्वमहं त्यक्ष्ये निहत्वा रावणं रणे ॥**

अनेन यस्मादात्मनो महाक्लेशानुभवस्तद्वधे तत्क्लेशनिवृत्तिरिति सूचितम् । अत एव **कर्णपर्वणि** कृष्णं प्रत्यर्जुनः —

मोक्ष्याम्यद्य महद्दुःखं त्रयोदशसमार्जितम् ।
हत्वा कर्णं रणे कृष्ण शम्बरं मघवानिव ॥ इति ।

**स्वस्थाः पश्यत दुर्धर्षा युद्धं वानरपुङ्गवाः ।**
**आसीनाः पर्वताग्रेषु ममेदं रावणस्य च ॥**

अनेन विजिगीषोर्युद्धप्रसक्तौ सैनिकैः प्रेक्षकैर्भवितव्यमित्युक्तम् । अत एव **कर्णपर्वणि** अर्जुनं प्रति कृष्णः —

नृसिंहयोर्विद्रुतयोर्युवयोर्योत्स्यमानयोः । पश्यन्तु कौरवास्सर्वे तव पार्थपराक्रमम् ॥ इति ।

**अद्य रामस्य रामत्वं पश्यन्तु मम संयुगे ।**
**त्रयो लोकाः सगन्धर्वाः सदेवाः सर्षिचारणाः ॥**

**अद्य कर्म करिष्यामि यल्लोकाः सचराचराः ।**
**सदेवाः कथयिष्यन्ति यावद्भूमिर्धरिष्यति ॥**

अत्र महापुरुषस्य अतिमानुषपराक्रमेण सकललोकस्थायिनी सार्वकालिकी च कीर्तिर्भवतीति सूचितम् । अत एव एतदेवाभिप्रेत्य **कर्णपर्वण्यर्जुनवचनं** —

अद्य लोकास्त्रयः कृष्ण जानन्तु मम पौरुषम् ।

अनेन खलु संग्रामे यत्तु कृष्ण मया कृतम् ॥

कथयिष्यन्ति संग्रामे यावद्भूमिर्धरिष्यति ।

उपस्थितमिदं घोरं युद्धं त्रैलोक्यमोहनम् । यं जनाः कथयिष्यन्ति यावद्भूमिर्धरिष्यति ॥

इत्यभिधाय प्रतप्तकनकभूषणैर्बाणगणैः सरोषं दशग्रीवमाजघान ।

ननु पराक्रमस्य कालोऽयमित्यादिना रामेण स्ववीर्यप्रशंसा कृतेत्यवगम्यते । तच्च निषिद्धम् । तथा चापस्तंबः — आत्मप्रशंसा परगर्हामिति च वर्जयेत् — इति चेन्न । परविभिन्नायाः सेनाया आश्वासनेन पुनस्स्थिरीकरणाभिप्रायेण कृतस्य स्ववीर्यप्रख्यापनस्य आत्मस्तुतिरूपाभावेन दोषत्वाभावात् । अत एवार्जुनेन स्वीयानां शत्रुनयुक्तभयनिवृत्त्यर्थं स्वपराक्रमप्रख्यापनं कृतं च कर्णपर्वणि —

अद्य कृष्ण विकर्णा मे कर्णं नेष्यन्ति मृत्यवे ।
गाण्डीवमुक्ताः क्षीबन्ते मम हस्तप्रचोदिताः ॥

अद्य दुर्योधनो राजा जीविताच्च निराशवान् ।
भविष्यति न सन्देहो मया कर्णे विनाशिते ॥

तस्याद्य सूतपुत्रस्य मही पास्यति शोणितम् ।
आशीविष इव क्रुद्धास्तस्य पास्यन्ति शोणितम् ॥

अद्य कर्णं हतं दृष्ट्वा धार्तराष्ट्रोऽत्यमर्षणः ।
जानातु मे बलं कृष्ण प्रवीरं सर्वधन्विनाम् ॥

भवत्समक्षं वक्ष्यामि पुनरेवात्मसंस्तवम् ।

धनुर्धरः कोऽनुवसेत लोके पराक्रमे वा मम कोऽस्ति तुल्यः ।
को वाऽप्यन्यो मत्समोऽस्ति क्षमायां ममानृशंस्ये सदृशोऽस्ति कोऽन्यः ॥

अहं धनुष्मान् ससुरासुरांश्च सर्वाणि भूतानि च संगतानि ।
स्वबाहुवीर्याद्गमये पराभवं मत्पौरुषं विद्धि परं परेभ्यः ॥ इति ।

**स कीर्यमाणः शरजालवृष्टिभिर्महात्मना दीप्तधनुष्मताऽर्दितः ।**
**भयात्प्रदुद्राव समेत्य रावणो यथाऽनिलेनाऽभिहितो बलाहकः ॥**

द्विशततमे —

ततः प्रद्रुते रावणे शक्तिप्रहारेण विनष्टचेष्टं दिष्टां गतिमाविष्टमिव स्थितं स्वेष्टतमं भ्रातरं,

पश्यतो मम का शक्तिर्योद्धुं पर्याकुलात्मनः ।
अवसीदन्ति गात्राणि स्वप्नयाने नृणामिव ॥

किं मे राज्येन किं प्राणैर्युद्धे कार्यं न विद्यते ।
यत्रायं निहतश्शेते रणमूर्धनि लक्ष्मणः ॥

इति विरचितबहुधाविलापं करगलितविविधायुधकलापमधिगतधैर्यलोपं पुनः पुनरुच्छ्वसतं,

राममाश्वासयन् वीरः सुषेणो वाक्यमब्रवीत् ।
न मृतोऽयं महाबाहुर्लक्ष्मणो लक्ष्मिवर्धनः ॥

न चास्य विकृतं वक्त्रं नापि श्यामं न निष्प्रभम् ।
सुप्रभं च प्रसन्नं च मुखमस्याभिलक्ष्यते ॥

पद्मरक्ततलौ हस्तौ सुप्रसन्ने च लोचने ।
एवं न विद्यते रूपं गतासूनां विशां पते ॥

दीर्घायुषस्तु ये मर्त्यास्तेषां च मुखमीदृशम् ।
नायं प्रेतत्वमापन्नो लक्ष्मणो लक्ष्मिवर्धनः ॥

मा विषादं कृथा वीर सप्राणोऽयमरिन्दमः ।
आख्यास्यते प्रसुप्तस्य स्रस्तगात्रस्य भूतले ॥

सोच्छ्वासं हृदयं वीर कंपमानं मुहुर्मुहुः ।

तदनु सौमित्रिसंजीवनाय ओषधीस्समानयेति सुषेणसमादिष्टो हनूमान् सत्वरमुपसृत्यौषधिपर्वतं तद्गताश्चौषधीरजानानः,

इदमेव गमिष्यामि गृहीत्वा शिखरं गिरेः ।
अगृह्य यदि गच्छामि विशल्यकरणीमहम् ॥

कालात्ययेन दोषस्स्याद्वैक्लव्यं च महद्भवेत् ।

इति विचिन्त्य तदेव गिरिशिखरमादाय सुषेणमुपगम्य एवमुवाच —

**ओषधीं नावगच्छामि तामहं हरिपुङ्गव ।**
**तदिदं शिखरं कृत्स्नं गिरेस्तस्याहृतं मया ॥**

ततस्तत्कर्मविस्मितस्तिमितमानसेषु वानरवरेषु सुषेणस्तद्गतौषधीः सङ्क्षुद्य,

**लक्ष्मणस्य ददौ नस्त. सुषेणस्सुमहाद्युतिः ।**
**सशल्यः स समाघ्राय लक्ष्मणः परवीरहा ॥**

**विशल्यो विरुजश्शीघ्रं उदतिष्ठन्महीतलात् ।**

उत्थितं च तं लक्ष्मणं गाढमालिङ्ग्य,

**दिष्ट्या त्वां वीर पश्यामि मरणात् पुनरागतम् ।**
**न हि मे जीवितेनार्थः सीनया चापि लक्ष्मण ।**
**कोहि मे विजयेनार्थः त्वयि पंचत्वमागते ॥**

इति सस्नेहं वदन्तं रामभद्रम् —

**खिन्नः शिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ।**
**तां प्रतिज्ञां प्रतिज्ञाय पुरा सत्यपराक्रम ॥**

**लघुः कश्चिदिवासत्त्वो नैव त्वं वक्तुमर्हसि ।**
**नहि प्रतिज्ञां कुर्वन्ति वितथां साधवोऽनघ ॥**

**लक्षणं हि महत्त्वस्य प्रतिज्ञाप्रतिपालनम् ।**
**नैराश्यमुपगन्तुं ते तदलं मत्कृतेऽनघ ॥**

**अहं तु वधमिच्छामि शीघ्रमस्य दुरात्मनः ।**
**यावदस्तं नयत्येष कृतकर्मा दिवाकरः ॥**

अत्र स्वप्राणापेक्षया भ्रातुराधिक्यं । प्रतिज्ञातार्थस्य अवश्यं परिपालनीयत्वं चोक्तं तच्च प्राक् बहुधा प्रपञ्चितं इति नेह प्रपंच्यते।

**त्रिशततमे —**

इति लक्ष्मणवचनेन सन्तुष्टं युद्धसंनद्धं पदातिं राघवं रथस्थं रावणं चावलोक्य —

**भूमिस्थस्य रामस्य रथस्थस्य च रक्षसः ।**
**न समं युद्धमित्याहुर्देवगन्धर्वदानवाः ॥**

अनेन भूमिष्ठस्य रथारूढेन सह युद्धमनुचितमित्युक्तम्। अत एवोद्योगपर्वणि परशुरामं प्रति भीष्मवचनं—

भूमिष्ठं नोत्सहे युद्धं भवन्तं रथमास्थितः। आरोह स्यन्दनं वीर कवचं च महाभुज॥

बधान समरे राम यदि योद्धुं मयेच्छसि॥ इति।

**कर्णपर्वण्यपि** अर्जुनं प्रति कर्णः—

न मा रथस्थो भूमिष्ठं विह्वलं कर्तुमर्हसि।

स्मृत्वा धर्मं च शूराणां मुहूर्तं परिपालय॥ इति।

ततः शचीपतिना निर्दिष्टो मातलिः वैडूर्यकूबरं पवनजवनतुरङ्गमयुक्तं सज्जं रथवरमानीय राममेवमुवाच—

**सहस्राक्षेण काकुत्स्थ रथोऽयं विजयाय ते।**
**दत्तस्तव महासत्त्व श्रीमन् शत्रुनिबर्हण॥**

**इदमैन्द्रं महच्चापं कवचं चाग्निसंनिभम्।**
**शराश्चादित्यसंकाशाः शक्तिश्च विपुला शिता॥**

**आरुह्यैनं रथवरं राक्षसं जहि रावणम्।**
**इत्युक्तः संपरिक्रम्य रथं तमभिवाद्य च॥**

**आरुरोह तदा रामो लोकान् लक्ष्म्या विराजयन्।**

अनेन प्रदक्षिणादिपूर्वकं रथारोहणं कर्तव्यमित्युक्तम्। अयमर्थः प्रागुक्तः।

**स गान्धर्वेण गान्धर्वं दैवं दैवेन राघवः।**
**अस्त्रं राक्षसराजस्य जघान परमास्त्रवित्॥**

तदनु दशाननः नागास्त्रमन्त्रसंयोजितान् निरन्तरीकृतदिगन्तरान् पन्नगमयान् स्वप्रहितान् शरान् गरुडास्त्रमन्त्रसयोजितैः रामप्रहितैः सुपर्णाकृतिभिश्शरैः प्रतिहतानवलोक्य,

**ततश्शरसहस्रेण राममक्लिष्टकारिणम्।**
**अर्दयित्वा शरौघेण मातलिं प्रत्यविध्यत॥**

**चिच्छेद केतुमिन्द्रस्य शरेणैकेन रावणः।**

ततस्तत्कर्मसंत्रस्तमानसेषु महर्षिषु देवदानवगन्धर्वगणेषु व्यथितेषु च वानरयूथपेषु,

प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियाम् ।
समाक्रम्य बुधस्तस्थौ प्रजानामशुभावहः ॥

सधूमपरिवृत्तोर्मिः प्रज्वलन्निव सागरः ।
उत्पपात तदा क्रुद्धः स्पृशन्निव दिवाकरम् ॥

शस्त्रवर्णः सुपरुषो मन्दरश्मिर्दिवाकरः ।
अदृश्यत कबन्धाङ्कः संसक्तो धूमकेतुना ॥

कौसलानां च नक्षत्रं व्यक्तमिन्द्राग्निदैवतम् ।
आक्रम्याङ्गारकस्तस्थौ विशाखामपि चाम्बरे ॥

दशास्यो विंशतिभुजः प्रगृहीतशरासनः ।
अदृश्यत दशग्रीवो मैनाक इव पर्वतः ॥

निरस्यमानो रामस्तु दशग्रीवेण रक्षसा ।
नाशक्नोदभिसन्धातुं सायकान् रणमूर्धनि ॥

स कृत्वा भ्रुकुटिं क्रुद्धः किंचित्संरक्तलोचनः ।
जगाम सहसा क्रोधं निर्दहन्निव चक्षुषा ॥

चतुरधिकशततमे —

तदनु कोपविचलितेषु सकलकुलाचलेषु संक्षोभितेषु सप्तसागरेषु आकुलीकृते च भुवनत्रये,

रामं दृष्ट्वा च संक्रुद्धं उत्पातांश्च सुदारुणान् ।
वित्रेसुः सर्वभूतानि रावणस्याभवद्भयम् ॥

तदनु निखिललोकक्षयकरं घोरतरं रामरावणसमरमभिवीक्ष्य,

ऊचुः सुरासुरास्सर्वे तदा विग्रहमास्थिताः ।
दशग्रीवं जयेत्याहुरसुरास्समवस्थिताः ॥

देवा राममथोचुस्ते त्वं जयेति पुनः पुनः ।

अनेन धर्मिष्ठस्य देवा विजयमाशंसन्ते अतस्तस्य विजयः, अधर्मिष्ठस्य चासुरा विजयमाकाङ्क्षन्ते, अतस्तस्य पराजय इति सूचितम्। तथा च **कर्णपर्वणि** —

**महात्मा फाल्गुनश्चापि सत्यधर्मरतस्सदा।**
**विजयस्तस्य नियतं जायते नात्र संशयः॥**

यतः पार्थस्ततो देवा यतः कर्णस्ततोऽसुराः।
कर्णं च दानवं पक्षमतः कर्णपराजयः॥ इति॥

अतः कोपकषायितलोचनो दशाननो निखिललोकवित्रासनं तीक्ष्णकरं अतिभीषणं शूलं समादाय,

**विनद्य सुमहानादं रामं परुषमब्रवीत्।**
**शूलोऽयं वज्रसारस्ते राम रोषान्मयोद्यतः॥**

**तव भ्रातृसहायस्य सद्यः प्राणान् हरिष्यति॥ इति।**

तदनु रामेण रावणप्रहितं घोरतरमष्टघटं शूलं स्वकीयशरासारैरशक्यनिवारणमवगत्य मातलिना समानीता निष्टप्ताष्टापदपट्टशोभिता या शक्तिः,

**सा क्षिप्ता राक्षसेन्द्रस्य तस्मिन् शूले पपात ह।**
**भिन्नः शक्त्या महान् शूलः पपात च महाद्युतिः॥**

**स रामबाणैरभिविद्धगात्रो निशाचरेन्द्रः क्षतजार्द्रगात्रः।**
**जगाम दैन्यं च समाजिमध्ये क्रोधं च चक्रे सुभृशं तदानीम्॥**

**पञ्चशततमे —**

तदनु काकुत्स्थशरपीडितो रावणः सशरं धनुरादाय,

**अभ्यद्रवत्सुसंक्रुद्धो राघवं परमाहवे।**

अथ भुवनत्रयविस्मापकनिरुपमभुजबलौ कालमेघाविव निरंतरशरासाराभिवर्षिणौ,

**शरान्धकारे समरे नोपालक्षयतां तदा।**
**ततः कोपसमाविष्टो रामो दशरथात्मजः॥**

उवाच रावणं वीरः प्रहस्य परुषं वचः।
मम भार्या जनस्थानादज्ञानाद्राक्षसाधम॥

हृता ते विवशा यस्मात्तस्मात्त्वं नासि वीर्यवान्।
स्त्रीषु शूर विनाथासु परदाराभिमर्शक॥

कृत्वा कापुरुषं कर्म शूरोऽहमिति मन्यसे।
दिष्ट्यासि मम दुष्टात्मन् चक्षुर्विषयमागतः॥

अद्य त्वा सायकैस्तीक्ष्णैर्नयामि यमसादनम्।

इति वदतो रघुकुलतिलकस्य,

बभूव द्विगुणं वीर्यं बलं हर्षश्च संयुगे।
रामस्यास्त्रबलं चैव शत्रोर्निधनकांक्षिणः॥

प्रादुर्बभूवुरस्त्राणि सर्वाणि विदितात्मनः।
प्रहर्षाच्च महातेजाः शीघ्रहस्ततरोऽभवत्॥

शुभान्येतानि चिह्नानि विज्ञायात्मगतानि च।
भूय एवार्दयद्रामो रावणं राक्षसान्तकृत्॥

अनेन विजेष्यमाणस्य युद्धसमये अस्त्राणां परिस्फूर्तिः बलाभिवृद्धिश्च भवतीति सूचितम्। अत एव **विराटपर्वणि** उत्तरगोग्रहणे जेष्यतोऽर्जुनस्यास्त्राणि सर्वाणि प्रादुर्भूतानीत्युक्तं —

अथासौ प्राङ्मुखो भूत्वा शुचिः प्रयतमानसः। अभिदध्यौ महाबाहुः सर्वास्त्राणि रथोत्तमे॥
प्रतिलभ्य ततोऽस्त्राणि प्रहृष्टवदनोऽभवत्।

इति। अत एव **द्रोणपर्वणि** विजेष्यमाणस्य धृष्टद्युम्नस्य बलाभिवृद्धिरुक्ता —

तस्य रूपं बभौ राजन् भारद्वाजं जिघांसतः।
यथा रूपं परं विष्णोर्हिरण्यकशिपोर्वधे॥ इति।

हरीणां चाश्मनिकरैः शरवर्षैश्च राघवात्।
हन्यमानो दशग्रीवो विघूर्णहृदयोऽभवत्॥

यदा च शस्त्रं नारेभे न व्यकर्षच्छरासनम्।

नास्य प्रत्यकरोद्वीर्यं विक्लबेनान्तरात्मना ॥

क्षिप्ताश्चापि शरास्तेन शस्त्राणि विविधानि च ।
न रणार्थाय वर्तन्ते मृत्युकालेऽभिवर्ततः ॥

अनेन युध्यमानस्य मृत्युकाले सन्निहिते वीर्यक्षयः स्वाभ्यस्तानामप्यस्त्राणामस्फुरणं प्रयुक्तानां शराणां आयुधानां मोघत्वं च इत्येते दोषा भवन्तीति सूचितम् । अत एव कर्णस्य वधकाले एते दोषा उक्ताः कर्णपर्वणि —

यदात्मनोऽस्त्रं मनसः प्रणष्टं यद्भार्गवोऽस्मै प्रददौ महात्मा ।
चक्रं च वामं प्राग्रसद्भूमिरस्य प्राप्ते तस्मिन् वधकाले नृवीरे ॥ इति ।

अत एव द्रोणपर्वणि विनाशकाले अस्त्राणां वैफल्यं भवतीत्यभिप्रायेणोक्तमर्जुनं प्रति वासुदेवेन —

अदृष्टपूर्वं पश्यामि शिलानामपसर्पणम् । त्वया सम्प्रेषिताः पार्थ नार्थं कुर्वंति पत्रिणः ॥
नवा कश्चिदयं कालः प्राप्तस्स्यादद्य पश्चिमः ॥ इति ।

अत एव द्रोणस्य मरिष्यतः अस्त्राप्रतिभा द्रोणपर्वणि —

न चास्यास्त्राणि राजेन्द्र प्रादुरासन्महात्मनः । विविधानां च दिव्यानां शस्त्राणामप्रसादता ॥
दृष्ट्वाऽमन्यत देहस्य कालपर्यायमागतम् । इति ।

सूतस्तु रथनेतास्य तदवस्थं निरीक्ष्य तम् ।
शनैर्युद्धादसंभ्रान्तो रथं तस्यापवाहयत् ॥

षट्शततमे —

स तु मोहात् सुसंक्रुद्धः कृतान्तबलचोदितः ।
क्रोधसंरक्तनयनो रावणः सूतमब्रवीत् ।
हीनवीर्यमिवाशक्तं पौरुषेण विवर्जितम् ॥

भीरुं लघुमिवाशक्तं विहीनमिव तेजसा ।
विमुक्तमिव मायाभिरस्त्रैरिव बहिष्कृतम् ॥

मामवज्ञाय दुर्बुद्धे स्वया बुद्ध्या विचेष्टसे ।
त्वयाद्य हि ममानार्य चिरकालसमार्जितम् ॥

**यशो वीर्यं च तेजश्च प्रत्ययश्च विनाशितः ।**

अनेन युद्धे पलायनं कीर्त्यादिनाशकमिति सूचितम् । तथाच **राजधर्मे**—

इमे पलायमानानां नरकाः प्रत्युपस्थिता । अकीर्तिश्शाश्वती चैव पतितव्यमनन्तरम् ॥

तस्मादात्मवता नित्यं स्थातव्यं रणमूर्धनि । इति ।

**यस्त्वं रथमिमं मोहान्न चोद्वहसि दुर्मते ।**
**सत्योऽयं परितर्को मे परेण त्वमुपस्कृतः ॥**

अनेन परेणोपजापिताः सूतप्रभृतयः समये स्वामिनोऽहितमाचरन्तीति सूचितम् ।

अत एव धर्मपुत्रेण प्रार्थितश्शल्यः कर्णस्य युद्धसमये अनिष्टं कृतवानित्युक्तं **स्त्रीपर्वणि**—

येन संगृह्णता तात रथमाविरथेर्युधि । जयार्थं पाण्डुपुत्राणां तदा तेजोवधः कृतः ॥ इति ।

**निवर्तय रथं शीघ्रं यावन्नोपैति मे रिपुः ।**

तदाकर्ण्य सारथिस्तमेवमुवाच—

**श्रमं तवावगच्छामि महता रणकर्मणा ।**
**नहि ते वीर्यसौमुख्यं प्रहर्षं चोपधारये ॥**

**रथोद्वहनखिन्नाश्च त इमे रथवाजिनः ।**
**दीना घर्मपरिश्रांता गावो वर्षहता इव ॥**

**निमित्तानि च भूयिष्ठ यानि प्रादुर्भवन्ति नः ।**
**तेषु तेष्वभिपन्नेषु लक्षयाम्यप्रदक्षिणम् ॥**

**देशकालौ च विज्ञेयौ लक्षणानीङ्गितानि च ।**
**दैन्यं हर्षश्च खेदश्च रथिनश्च बलाबलम् ॥**

**तथा निम्नानि भूमेश्च समानि विषमाणि च ।**
**युद्धकालश्च विज्ञेयः परस्यांतरदर्शनम् ॥**

**उपयानापयाने च स्थानं प्रत्यपसर्पणम् ।**
**सर्वमेतद्रथस्थेन ज्ञेयं रथकुटुम्बिना ॥**

तदधुना यथानियोगं करिष्यामीति वदतः सारथेर्वचनमाकर्ण्य सन्तुष्टहृदयो रावणः

ददौ तस्मै शुभं ह्येकं हस्ताभरणमुत्तमम् ।

ततो द्रुतं रावणवाक्यचोदितः प्रचोदयामास हयान् स सारथिः ।
स राक्षसेन्द्रस्य ततो महारथः क्षणेन रामस्य रणाग्रतोऽभवत् ॥

अत्र आपन्नो रथी सारथिना रथापवाहादिना रक्षणीयः अपवाहादिना स्वास्थ्यं प्राप्तेन रथिनाऽपि पुनर्युद्धाय गन्तव्यमिति सूचितम् । अत एव **वनपर्वणि**—

साल्वबाणार्दिते तस्मिन् प्रद्युम्ने बलिनां वरे । वृष्णयो भग्नसंकल्पा विव्यथुः पृतनागताः ॥
हाहाकृतमभूत्सर्वं वृष्ण्यधकबलं ततः । प्रद्युम्ने मोहिते राजन् परे च मुदिता भृशम् ॥
तं तथा मोहितं दृष्ट्वा सारथिर्जवनैर्हयैः । रणादपाहरत्तूर्णं शिक्षितो दारुकिस्तदा ।
नातिदूरापयातेतु रथे रथवरप्रणुत् । धनुर्गृहीत्वा यन्तारं लब्धसञ्ज्ञोऽब्रवीदिदम् ॥
सौते किं ते व्यवसितं कस्माद्यासि पराङ्मुखः । नैष वृष्णिप्रवीराणां आहवे धर्म उच्यते ॥

कच्चित्सौते न ते मोहः साल्वं दृष्ट्वा महाहवे ।
विषादो वा रथं दृष्ट्वा ब्रूहि मे त्वं यथातथम ॥

सौतिरुवाच—

जानार्दने न मे मोहो नापि मा भयमाविशत् । अतिभारं तु ते मन्ये साल्वं केशवनन्दन ॥
सोऽपयामि शनैर्वीर बलवानेष पापकृत् । मोहितश्च रणे शूरो रक्ष्यः सारथिना रथी ॥

आयुष्मंस्त्वं मया नित्यं रक्षितव्यस्त्वयाप्यहम् ।
रक्षितव्यो रथी नित्यमिति कृत्वाऽपयाम्यहं ॥

एकश्चासि महाबाहो बहवश्चापि दानवाः । न समं रौक्मिणेयाहं रणे मत्वाऽपयामि वै ॥
एवं ब्रुवति सूते तु तदा मकरकेतुमान् । उवाच सूतं कौरव्य निवर्तय रथं पुनः ॥
दारुकात्मज मैवं त्वं पुनः कार्षीः कथञ्चन । व्यपयानं रणात्सौते जीवतो मम कर्हिचित् ॥
न स वृष्णिकुले जातो यो वै त्यजति सङ्गरम् । त्वयापनीतो विवशो न जीवेयं कथंचन ॥
संनिवर्त रथेनाशु पुनर्दारुकनन्दन । न चैतदेवं कर्तव्यं अप्यापत्सु कथंचन ॥
न जीवितमहं सौते बहुमन्ये कथंचन । अपयातो रणाद्भीतः पृष्ठतोऽभ्याहतः शरैः ॥
कदाच सूतपुत्र त्वं जानीषे मां भयार्दितम् । अपयातं रणं हित्वा यथा कापुरुषं तथा ॥

न युक्तं भवता त्यक्तुं सग्रामं दारुकात्मज ।
मयि युद्धार्थिनि भृशं स त्वं वाहय तोरणम् ॥ इति ।

आरण्यके पर्वणि सौभवधे वासुदेव उवाच —

एवमुक्तस्तु कौन्तेय सूतपुत्रस्ततोऽब्रवीत् ।
प्रद्युम्नं बलिना श्रेष्ठं श्लक्ष्णं मधुरमञ्जसा ।
न मे भयं रौक्मिणेय सग्रामे यच्छतो हयान् ॥

युद्धज्ञश्चास्मि वृष्णीनां नात्र किञ्चिदतोऽन्यथा । आयुष्मन्नुपदेशस्तु सारथ्ये वर्ततां स्मृतः ॥
सर्वार्थेषु रथी रक्ष्यः त्वं चापि भृशपीडितः । त्वं हि शल्यप्रयुक्तेन शरेणाभिहतो भृशम् ॥
कश्मलाभिहतो वीर ततोऽहमपयातवान् । स त्वं सात्वतमुख्याद्य लब्धसंज्ञो यदृच्छया ॥
पश्य मे हयसंयाने शिक्षां केशवनन्दन । दारुकेणाहमुत्पन्नो यथावच्चैव शिक्षितः ॥

वीतभीः प्रविशाम्येतां शाल्वस्य प्रथितां चमूम् ।

वासुदेव उवाच —

एवमुक्त्वा ततो वीर हयान् सञ्चोद्य सङ्गरे । रश्मिभिस्तु समुद्यम्य जवेनाभ्यपतत्तदा ॥
मण्डलानि विचित्राणि दक्षिणानि च सर्वशः । प्रतोदेन हतो राजन् रश्मिभिश्च समुद्यताः ॥
उत्पतन्त इवाकाशे व्यचरंस्ते हयोत्तमाः । ते हस्तलाघवोपेतं विज्ञाय नृपदारुकिम् ॥

ऊह्यमाना इव तदा नास्पृशंश्चरणैर्महीम् । इति ।

**सप्तशततमे —**

**ततो युद्धपरिश्रांतं समरे चिन्तया स्थितम् ।**
**रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥**

**दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् ।**
**उपागम्याब्रवीद्राममगस्त्यो भगवानृषिः ॥**

**राम राम महाबाहो शृणु गुह्यं सनातनम् ।**
**येन सर्वानरीन् वत्स समरे विजयिष्यसि ॥**

**आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् ।**
**जयावहं जपेन्नित्यमक्षय्यं परमं शिवम् ॥**

सर्वमङ्गलमांगल्यं सर्वपापप्रणाशनम् ।
चिन्ताशोकप्रशमनं आयुर्वर्धनमुत्तमम् ॥

रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् ।
पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥

सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः ।
एष देवासुरगणान् लोकान् पाति गभस्तिभिः ॥

एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः ।
महेन्द्रो धनदः कालो यमः सोमो ह्यपांपतिः ॥

पितरो वसवस्साध्या अश्विनौ मरुतो मनुः ।
वायुर्वह्निः प्रजाः प्राणा ऋतुकर्ता प्रभाकरः ।

आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ।
सुवर्णसदृशो भानुस्स्वर्णरेता दिवाकरः ॥

हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान् ।
तिमिरोन्मथनः शम्भुः त्वष्टा मार्ताण्ड अंशुमान् ॥

हिरण्यगर्भः शिशिर तपनो भास्करो रविः ।
अग्निगर्भोऽदितेः पुत्रः शङ्खश्शिशिरनाशनः ॥

व्योमनाथस्ततोभेदी ऋग्यजुस्सामपारगः ।
घनवृष्टिरपां मित्रं विन्ध्यवीथीप्लवंगमः ॥

आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः ।
कविर्विश्वो महातेजा रक्तस्सर्वभवोद्भवः ॥

नक्षत्रग्रहताराणामधिपो विश्वभावनः ।
तेजसामपि तेजस्वी द्वादशात्मन्नमोस्तु ते ॥

नमः पूर्वाय गिरये पश्चिमायाद्रये नमः ।
ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥

जयाय जयभद्राय हर्यश्वाय नमो नमः ।
नमो नमस्सहस्रांशो आदित्याय नमो नमः ॥

नम उग्राय वीराय सारंगाय नमो नमः ।
नमः पद्मप्रबोधाय मार्ताण्डाय नमो नमः ॥

ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे ।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥

तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने ।
कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥

तप्तचामीकराभाय वह्नये विश्वकर्मणे ।
नमस्तमोभिनिघ्नाय [1] रवये लोकसाक्षिणे ॥

नाशयत्येष वै भूतं तदेव सृजते पुनः ।
पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥

एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः ।
एष चैवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥

वेदाश्च क्रतवश्चैव क्रतूनां फलमेव च ।
यानि कृत्यानि लोकेषु सर्व एष रविः प्रभुः ॥

एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च ।
कीर्तयन् पुरुषः कश्चिन्नावसीदति राघव ॥

पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् ।
एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ॥

अस्मिन् क्षणे महाबाहो रावणं त्वं वधिष्यसि ।
एवमुक्त्वा तदागस्त्यो जगाम च यथागतम् ॥

एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा ।
पूजयामास [2] सुप्रीतो राघवः प्रयतात्मवान् ॥

त्रिराचम्य शुचिर्भूत्वा धनुरायम्य वीर्यवान् ।
आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान् ॥

---

1 'घृणये', 'रुचये' इति पाठान्तरे ।

2 'धारयामास' इति कृष्णाचार्यमुद्रिते कोशे पाठः ।

रावणं प्रेक्ष्य हृष्टात्मा युद्धाय समुपागमत् ।
सर्वयत्नेन महता वधे तस्य दृढो भवेत् ॥

अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः ।
निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति ॥

अष्टशततमे —

तदनु पुनराहवाय समागतं लङ्कापुरीकान्तं करकलितचण्डकोदण्डो रामचन्द्रो मातलिमुवाच –

मातले पश्य संरब्धमापतन्तं रथं रिपोः ।
यथापसव्यं पतता वेगेन महता पुनः ॥

समरे हन्तुमात्मानं तथाऽनेन कृता मतिः ।
तदप्रमादमातिष्ठ प्रत्युद्गच्छ रथं रिपोः ॥

अनेन स्वविजयार्थतया शत्रुर्यथा नापसव्यं परिक्रामति तथा यत्नः कर्तव्य इति सूचितम् ।

अत एव **वनपर्वणि** सौभप्रद्युम्नयुद्धे सौभेन निरुद्धमप्यपसव्ययानं प्रद्युम्नेन विजयाय बलात्कृतमिति प्रतिपादितं —

सोऽपसव्यां चमूं तस्य साल्वस्य भरतर्षभ । चकाराप्रतियत्नेन तदद्भुतमिवाभवत् ॥
अमृष्यमाणोऽपसव्यं प्रद्युम्नस्य च सौभराट् । यन्तारमस्य सहसा त्रिभिर्बाणैस्समर्दयत् ॥
दारुकस्य सुतस्तत्र बाणवेगमचिन्तयत् । भूय एव महाबाहो प्रययावपसव्यतः ॥ इति ।

कामं न त्वं समाधेयः पुरंदररथे स्थितः ।
युयुत्सुरहमेकाग्रः स्मारये त्वां न शिक्षये ॥

अनेन मान्यानां क्रियाकर्तृणां कार्ये नियोजनं विनयेनैव कुर्यादिति सूचितम् । प्रपञ्चितं चेदं प्राक् । तेन च वाक्येन सन्तुष्टो मातलिः —

अपसव्यं ततः कुर्वन् रावणस्य महारथम् ।
चक्रोत्क्षिप्तेन रजसा रावणं व्यवधूनयत् ॥

अनेन युद्धे शत्रुमप्रदक्षिणीकुर्यादिति सूचितम् । तथा च **द्रोणपर्वणि** गजेनागतं भगदत्तं विजयायाप्रदक्षिणीकृतवान् भगवानिति प्रतिपादितम् —

आपतन्तं च द्विरदं दृष्ट्वा क्रुद्धमिवान्तकम्। चक्रेऽपसव्यं त्वरितः स्यन्दनेन जनार्दनः॥
सारोहं मृत्युसात्कर्तुं स्मरन्धर्मं धनञ्जय। इति।
तदनु परस्परं शरवर्षमभिवर्षतोस्तयोः,

**समुत्पेतुरथोत्पाता दारुणा रोमहर्षणाः।**
**रावणस्य विनाशाय राघवस्य जयाय च॥**

**निमित्तानि च सौम्यानि राघवस्य जयाय वै।**
**दृष्ट्वा परमसंहृष्टो हतं मेने च रावणम्॥**

**नवशततमे —**

अथ रामरावणसमरावलोकनकौतुकेन निश्चलमवस्थितेषु निशाचरवानरयूथपेषु,

**तौ तु तत्र निमित्तानि दृष्ट्वा रावणराघवौ।**
**कृतबुद्धी स्थिरामर्षौ युयुधाते ह्यभीनवत्॥**

**जेतव्यमिति काकुत्स्थो मर्तव्यमिति रावणः।**
**धृतौ स्ववीर्यसर्वस्वं युयुधाते ह्यभीतवत्॥**

अत्र विजयो भविष्यतीति निमित्तैर्निश्चित्य रामेण युद्धं कृतं, रावणेन तु चिह्नेन स्वस्य मरणं निश्चित्यापि धैर्यमवलंब्य युद्धं कृतमित्युक्त। तेन विजयवानिव मरणनिश्चयवानपि युद्धं कुर्यादेव राज्ञा युद्धे मरणविजययोरपि सफलत्वात्। अत एव **गीतायां** अर्जुनं प्रति भगवद्वचनम् —

हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥ इति।

**पराशरोऽपि —**

जितेन लभ्यते लक्ष्मीर्मृतेनापि सुराङ्गनाः।
क्षणविध्वंसिकायेस्मिन् का चिन्ता मरणे रणे॥ इति।

**स्त्रीपर्वण्यपि —**

हतोऽपि लभते स्वर्गं हत्वाऽपि लभते यशः।
उभयं नो बहुगुणं नास्ति निष्फलता रणे॥ इति।

ततो ध्वजनिपातनाय रावणप्रहितान् शरानवलोक्य कुपितहृदयेन रामेण बाणगणै-र्विनिपातितं सध्वजं दृष्ट्वा दशाननेन निर्दयमभिहता अपि रथतुरगाः —

बभूवुः स्वस्थहृदया पद्मनालैरिवाहताः ।

तदनु संभ्रांतान् तुरङ्गमानवलोक्य मायाबलेन गिरिनरुशिलाशूलशस्त्रास्त्राणि अभि-वर्षति रावणे तत्प्रतिकृतु शरवर्षमभिवर्षति च रामभद्रे,

नानिमित्तोऽभवद्बाणो नानिर्भेत्ता न निष्फलः ।
अन्योन्यमभिसंहत्य निपेतुर्धरणीतले ॥

एवं तौ तु सुसंक्रुद्धौ चक्रतुर्युद्धमुत्तमम् ।
मुहूर्तमभवद्युद्ध तुमुल रोमहर्षणम् ॥

प्रयुध्यमानौ समरे महाबलौ सितैश्शरै रावणलक्ष्मणाग्रजौ ।
ध्वजावपातेन स राक्षसाधिपो भृशं प्रचुक्रोध तदा रघूत्तमे ॥

दशशततमे —

तौ तदा युद्ध्यमानौ तौ समरे रामरावणौ ।
ददृशुः सर्वभूतानि विस्मितेनान्तरात्मना ॥

अर्दयन्तौ तु समरे तयोस्तौ स्यन्दनोत्तमौ ।
परस्परमभिक्रुद्धौ परस्परमभिद्रुतौ ॥

परस्परवधे युक्तौ घोररूपौ बभूवतुः ।
मण्डलानि च वीथीश्च गतप्रत्यागतानि च ॥

दर्शयन्तौ बहुविधां सूतसारथ्यजां गतिम् ।
अर्दयन् रावणं रामो राघवं चापि रावणः ॥

गतिवेगं समापन्नौ प्रवर्तननिवर्तनौ ।
क्षिपतोः शरजालानि तयोस्तौ स्यन्दनोत्तमौ ॥

क्षिपतोः शरजालानि सासारौ जलदौ यथा ।
दर्शयित्वा तदा तौ तु गतिं बहुविधां रणे ॥

परस्परस्याभिमुखौ पुनरेवावतस्थतुः ।
धुरन्धरेण रथयोर्वक्त्रं वक्त्रेण वाजिनाम् ॥

पताकाश्च पताकाभिः समेयुस्स्थितयोस्तदा ।
रावणस्य तदा रामो धनुर्मुक्तैः शितैश्शरैः ॥

चतुर्भिश्चतुरो दीप्तान् हयान्प्रत्यपसर्पयत् ।

तदनु मातलिधर्षणाजनितक्रोधेन रामेण सहस्रशो रुक्मपुंखैर्विमुखीकृतस्य रावणस्य गदामुसलवर्षेण निरवकाशमाकाशमभूत् ।

तत्प्रवृद्धं महद्युद्धं तुमुलं रोमहर्षणम् ।
गदानां मुसलानां च परिघाणां च निस्वनैः ॥

शराणां पुङ्खवातैश्च क्षुभितास्सप्त सागराः ।
क्षुब्धानां सागराणां च पातालतलवासिनः ॥

व्यथिताः पन्नगास्सर्वे दानवाश्च सहस्रशः ।
चकंपे मेदिनी कृत्स्ना सशैलवनकानना ॥

भास्करो निष्प्रभश्चासीन्न ववौ चापि मारुतः ।
ततो देवास्सगन्धर्वाः सिद्धाश्च परमर्षयः ॥

स्वस्ति गोब्राह्मणेभ्यस्तु लोकास्तिष्ठन्तु शाश्वताः ।
जयतां राघवस्संख्ये रावणं राक्षसेश्वरम् ॥

एवं जपन्तोऽपश्यंस्ते देवा ऋषिगणास्तदा ।
गगनं गगनाकारं सागरस्सागरोपमः ॥

रामरावणयोर्युद्धं रामरावणयोरिव ।
एवं ब्रुवन्तो ददृशुस्तद्युद्धं रोमहर्षणम् ॥

ततः क्रुद्धो महाबाहू रघूणां कीर्तिवर्धनः ।
संधाय धनुषा रामः क्षुरमाशीविषोपमम् ॥

रावणस्य शिरोऽच्छिन्दच्छ्रीमज्ज्वलितकुण्डलम् ।
तच्छिरः पातितं भूमौ दृष्टं लोकैस्त्रिभिस्सह ॥

तस्यैव सदृशं चान्यद्रावणस्योत्थितं शिरः ।
तच्छिन्नं क्षिप्रहस्तेन रामेण क्षिप्रकारिणा ॥

द्वितीयं रावणशिरश्छिन्नं संयति सायकैः ।
छिन्नमात्रे तु तच्छीर्षे पुनरन्यत्स्म दृश्यते ॥

तदप्यशनिसंकाशैश्छिन्नं रामेण सायकैः ।
एवमेकशतं छिन्नं शिरसां तुल्यवर्चसाम् ॥

न चैव रावणस्यान्तो दृश्यते जीवितक्षये ।

तदनु रावणः मारीचखरदूषणविराधकबन्धवधविधायकैः सायकैः निर्दयमभिहतोऽपि किमिति न पञ्चतामवापेति चिन्तामातन्वानं रामभद्रमभिवीक्ष्य क्रुद्धो दशवदनः,

ववर्ष शरवर्षाणि रावणो राघवोरसि ।
तत्प्रवृत्तं महायुद्धं तुमुलं रोमहर्षणम् ॥

नैव रात्रं न दिवसं न मुहूर्तं न च क्षणम् ।
रामरावणयोर्युद्धं विराममुपगच्छति ॥

दशरथसुतराक्षसेन्द्रयोस्तयोर्जयमनवेक्ष्य रणे पराजयम् ।
सुरवररथसारथिर्महात्मा रणगतराममुवाच वाक्यमाशु ॥

**एकादशशततमे —**

तदनु मातलिना पैतामहेनास्त्रेण कथितोऽस्य वधो देवैरिति स्मारितो रामचन्द्रः—

जग्राह स शरं दीप्तं निःश्वसन्तमिवोरगम् ।
यमस्मै प्रथमं प्रादादगस्त्यो भगवानृषिः ॥

ब्रह्मदत्तं महाबाणमादाय युधि वीर्यवान् ।
ब्रह्मणा निर्मितं पूर्वमिन्द्रार्थममितौजसा ॥

दत्तं सुरपतेः पूर्वं त्रिलोकजयकाङ्क्षिणः ।
यस्य वाजेषु पवनः फले पावकभास्करौ ॥

शरीरमाकाशमयं गौरवे मेरुमन्दरौ ।
जाज्वल्यमानं वपुषा सुपुङ्खं हेमभूषितम् ॥

तेजसा सर्वभूतानां कृत भास्करवर्चसम् ।
सधूममिव कालाग्निं दीप्तमाशीविषं यथा ॥

परनागाश्ववृन्दानां भेदनं क्षिप्रकारिणम् ।
द्वाराणां परिघाणां च गिरीणामपि भेदनम् ।
नानारुधिरसिक्ताङ्गं मेदोदिग्ध सुदारुणम् ॥

वज्रसारं महानादं नानासमितिदारुणम् ।
सर्ववित्रासनं भीम श्वसन्तमिव पन्नगम् ॥

कङ्कगृध्रबलानां च गोमायुगणरक्षसाम् ।
नित्यं भक्षप्रदं युद्धे यमरूपं भयावहम् ॥

नन्दनं वानरेन्द्राणां रक्षसामवसादनम् ।
वाजितं विविधैर्वाजैश्चारुचित्रैर्गरुत्मतः ॥

तमुत्तमेषुं लोकानामिक्ष्वकुभयनाशनम् ।
द्विषतां कीर्तिहरणं प्रहर्षकरमात्मनः ॥

अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः ।
वेदप्रोक्तेन विधिना संदधे कार्मुके बली ॥

अनेन प्रबलस्य शत्रोर्वधार्थतया उत्तमास्त्रयोजितः अमोघः शरः प्रयोक्तव्य इति सूचितम् । अतएव **कर्णपर्वणि** कर्णवधार्थनया अर्जुनेनापि दिव्यः शरः दिव्यास्त्रेण सयोजित इति प्रतिपादितम् —

आदत्त पार्थो ज्वलितं निषङ्गात् सहस्ररश्मेरिव रश्मिमुत्तमम् ।
मर्मच्छिदं शोणितमांसदिग्धं वैश्वानरार्कप्रतिमं महार्हं ॥

नराश्वनागासुहरं त्रिरत्निं षडस्त्रिमञ्जोगतिमुग्रतेजा ।
सहस्रनेत्राशनितुल्यवीर्यं कालानलं व्यात्तमिवातिघोरम् ॥

पिनाकनारायणचक्रसंनिभं भयङ्करं प्राणभृतां विनाशनम् ।
जग्राह पार्थः स शरं प्रहृष्टो यो देवसङ्घैरपि दुर्निवार्यः ॥

संपूजितो यः सततं महात्मा देवासुरान्यो विजयेन्महेषुभिः ।
तं वै प्रसृष्टं प्रसमीक्ष्य युद्धे चचाल सर्वं सचराचरं जगत् ॥

ततस्तु तं वै शरमप्रमेय गाण्डीवधन्वा धनुषि व्ययोजयत् ।
युक्त्वा महास्त्रेण परेण चाय निष्कृष्य गाण्डीवमुवाच सुस्वरम् ॥ इति ।

तस्मिन् संधीयमाने तु राघवेण शरोत्तमे ।
सर्वभूतानि वित्रेसुश्चचाल च वसुन्धरा ॥

स राघवोऽथ संक्रुद्धो भृशमायम्य कार्मुकम् ।
चिक्षेप परमायत्तस्तं शरं मर्मघातिनम् ॥

स वज्र इव दुर्धर्षो वज्रबाहुविसर्जितः ।
कृतान्त इव चावार्यो न्यपतद्रावणोरसि ॥

स विसृष्टो महावेगः शरीरान्तकरः शरः ।
बिभेद हृदयं तस्य रावणस्य दुरात्मनः ॥

रुधिराक्तस्स वेगेन शरीरान्तकरश्शरः ।
रावणस्य हरन् प्राणान् विवेश धरणीतले ॥

स शरो रावणं हत्वा रुधिरार्द्रीकृतच्छविः ।
कृतकर्मा निभृतवत् स्वतूणीं पुनरागमत् ॥

तस्य हस्ताद्धतस्याशु कार्मुकं तत्ससायकम् ।
निपपात सह प्राणैर्भ्रश्यमानस्य जीवितात् ॥

गतासुर्भीमवेगेन नैर्ऋतेन्द्रो महाद्युतिः ।
पपात स्यन्दनाद्भूमौ वृत्रो वज्रहतो यथा ॥

रामचन्द्रेण निर्भिद्य हृदयं विनिपातिते ।
दशवदने हतेऽवशिष्टेषु निशाचरेषु यथायथं विद्रुतेषु सहर्षमुन्नदत्सु वानरगणेषु,
आविवेश महान् हर्षो देवानां चारणैस्सह ।
अथान्तरिक्षे व्यनदत् सौम्यस्त्रिदशदुन्दुभिः ॥

निपपातान्तरिक्षाच्च पुष्पवृष्टिस्तदा भुवि ।
किरन्ती राघवरथं दुरवापा मनोरमा ॥

ततस्तु सुग्रीवविभीषणादयः सुहृद्विशेषास्सहलक्ष्मणास्तदा ।
समेत्य हृष्टा विजयेन राघवं रणेऽभिरामं विधिनाभ्यपूजयन् ॥

स तु निहतरिपुः स्थिरप्रतिज्ञः स्वजनबलाभिवृतो रणे रराज ।
रघुकुलनृपनन्दनो महौजास्त्रिदशगणैरभिसंवृतो यथेन्द्रः ॥

द्वादशशततमे —

भ्रातरं निहतं दृष्ट्वा शयानं रामनिर्जितम् ।
शोकवेगपरीतात्मा विललाप विभीषणः ॥

अनेन द्वेषिणोऽपि भ्रात्रादेर्विपत्तौ सोदर्यादे स्वभावेन क्लेशो भवतीति सूचितम्। अत एव पुत्रवधेन सन्तप्तो धृतराष्ट्र आयसीं प्रतिमां भीमसेनबुध्या समालिङ्गनेन भंक्त्वा हतोऽयं भीमसेन इति रुरोदेत्युक्तं स्त्रीपर्वणि —

स तु कोपं समुत्सृज्य हतमन्युर्महामना । हाहा भीमेति चुक्रोश भूयश्शोकसमन्वितः ॥ इति

वीर विक्रान्त विख्यात विनीत नयकोविद ।
महार्हशयनोपेत किं शेषेऽद्य हतो भुवि ॥

विक्षिप्य दीर्घौ निश्चेष्टौ भुजावङ्गदभूषितौ ।
मकुटेनापवृत्तेन भास्कराकारवर्चसा ॥

तदिदं वीर संप्राप्तं मया पूर्वसमीरितम् ।
काममोहपरीतस्य यत्ते न रुचितं वचः ॥

यन्न दर्पात्प्रहस्तो वा नेन्द्रजिन्नापरे जनाः ।
न कुम्भकर्णोऽतिरथो नातिकायो नरांतकः ॥

न स्वयं त्वं च मन्येथास्तस्योदर्कोऽयमागतः ।
गतः सेतुस्सुनीतानां गतो धर्मस्य विग्रहः ॥

गतः सत्त्वस्य संक्षेपः प्रस्तावानां गतिर्गता ।
आदित्यः पतितो भूमौ मग्नस्तमसि चन्द्रमाः ॥

चित्रभानुः प्रशान्तार्चिः व्यवसायो निरुद्यमः ।
अस्मिन्निपतिते भूमौ वीरे शस्त्रभृतां वरे ॥

किं शेषं इह लोकस्य हतवीरस्य सांप्रतम् ।
रणे राक्षसशार्दूले प्रसुप्त इव पांसुषु ॥

धृतिप्रवालः प्रसहाग्र्यपुष्पः[1] तपोबलः शौर्यनिबद्धमूलः ।
रणे महान् राक्षसराजवृक्षः संमर्दितो राघवमारुतेन ॥

---

1. 'प्रसह' 'प्रसभ' इति पाठद्वयं दृश्यते कोशेषु ।

तेजोविषाण कुलवंशवंशः कोपप्रसादापरगात्रहस्त ।
इक्ष्वाकुसिंह्यावगृहीतदेह सुतः क्षितौ रावणगन्धहस्ती ॥

पराक्रमोत्साहविजृंभितार्चिर्निश्वासधूम स्वबलप्रतापः ।
प्रतापवान् संयति रावणाग्निर्निर्वापितो रामपयोधरेण ॥

सिंहर्क्षलांगूलककुद्विषाण· पराभिजिद्गन्धनगन्धहस्ती ।
रक्षोवृषश्चापलकर्णचक्षुः क्षितीश्वरव्याघ्रहतोऽवसन्नः ॥

वदन्तं हेतुमद्वाक्यं परिदृष्टार्थनिश्चयम् ।
रामश्शोकसमाविष्टमित्युवाच विभीषणम् ॥

नायं विनष्टो निश्चेष्टस्समरे चण्डविक्रमः ।
अत्युन्नतमहोत्साह· पतितोयमशङ्कितः ॥

नैवं विनष्टाः शोच्यन्ते क्षत्रधर्मे व्यवस्थिताः ।
वृद्धिमाशंसमानाश्च निपतन्ति रणाजिरे ॥

क्षत्रियो निहतः संख्ये न शोच्य इति निश्चयः ॥

अत्र अयं रावणो निश्चेष्टस्सन् पशुवन्न मृत· किन्तु मृत्युशंकारहितः धैर्येणैव युध्यन्मृतः । एवं पराक्रमं कृत्वा युद्धे मृताना स्वर्गे निरतिशयसुखभागिना विषये शोको न कर्तव्य इत्युक्त्या महाफलं प्राप्तुं शौर्यं कृत्वा युद्धे मृता क्षत्रिया न शोच्या· निश्चेष्टानां क्षत्रियाणा वध· कुत्सित इति च सूचितम् । अत एव **स्त्रीपर्वणि** —

न युद्धादधिकं किञ्चित्क्षत्रियस्येह विद्यते । क्षत्रियास्ते महात्मान· शूरास्समितिशोभनाः ॥

आशिषः परमाः प्राप्ता न शोच्याः सर्व एव हि ॥ इति ।

निश्चेष्टवधः कुत्सित इत्येतच्चारण्यकाण्डे —

निश्चेष्टानां वधो राजन् कुत्सितो जगतीपते । क्रतुमध्योपनीतानां पशूनामिव राघव ॥ इति

येन सेन्द्रास्त्रयो लोकास्त्रासिता युधि धीमता ।
अस्मिन् कालसमायुक्ते न कालः परिशोचितुम् ॥

अनेन यावज्जीवं सर्वातिशायिसुखमनुभूय युद्धमरणेनापि पारत्रिकं निरतिशयं सुखं प्राप्तवतः सर्वथा शोको न कर्तव्य इति सूचितम् । तथा च **गदापर्वणि** —

देवार्हा मानुषा भोगाः प्राप्ता असुलभा नृपैः । ऐश्वर्यं चोत्तमं प्राप्तं कोनु स्वन्ततरो मया ॥

ससुहृत्सानुजश्चैव स्वर्गं गच्छामहेऽच्युत ॥ इति ।

आशिषः परमः प्राप्ता न शोच्यास्सर्व एव हि । इति च ।

नैकान्तविजयो युद्धे भूतपूर्वः कदाचन ।
परैर्वा हन्यते वीरः परान्वा हन्ति संयुगे ॥

इयं हि पूर्वैस्संदिष्टा गतिः क्षत्रियसंमता ।
क्षत्रियो निहतस्संख्ये न शोच्य इति निश्चयः ॥

तमेवं निश्चयं दृष्ट्वा सत्त्वमास्थाय विज्वरः ।
यदिहानन्तरं कार्यं कल्प्य तदनुचिन्तय ॥

तमुक्तवाक्यं विक्रान्त राजपुत्रं विभीषणः ।
उवाच शोकसंतप्तो भ्रातुर्हितमनन्तरम् ॥

योऽयं विमर्देषु न भग्नपूर्वः सुरैस्समेतैः सह वासवेन ।
भवन्तमासाद्य रणेऽद्य भग्नो वेलां समासाद्य यथा समुद्रः ॥

अनेन दत्तानि सुपूजितानि भुक्ताश्च भोगाः सुभृताश्च भृत्याः ।
धनानि मित्रेषु समर्पितानि वैराण्यमित्रेषु च यापितानि ॥

एषोहिताग्निश्च महातपाश्च वेदान्तगः कर्मसु चाग्र्यवीर्यः ।
एतस्य यत्प्रेतगतस्य कृत्यं तत्कर्तुमिच्छामि तव प्रसादात् ॥

अनेन क्षत्रियेण महाराज्यं प्राप्तवता पात्रेषु दानं पूज्यानां पूजनं भोग्यानामुपभोगो भृत्यानां भरणं मित्रेषु धनं अमित्रेषु वैराणि अग्निहोत्रं तपः वेदान्तज्ञानं युद्धे धैर्यमित्येते धर्माः कर्तव्या इति सूचितम् । अत एव प्राप्तराज्येन राज्ञा कर्तव्या धर्मा मया कृता इति वदता दुर्योधनेन एते धर्मा उक्ता इति प्रतिपादितं **गदापर्वणि** —

इष्टं भृत्या भृतास्सम्यग्भूः प्रशास्ता ससागरा ।
मूर्ध्नि स्थितममित्राणां जीवतामेव सञ्जय ॥

दत्ता दाना यथाशक्ति मित्राणां च प्रियं कृतम् ।
अमित्रा बाधितास्सर्वे कोनु स्वन्ततरो मया ॥

मानिता बान्धवास्सर्वे वश्यः संपूजितो जनः ।
त्रितयं सञ्चितं सर्वं कोनु स्वन्ततरो मया ॥

आज्ञप्तं नृपमुख्येषु मानः प्राप्तः सुदुर्लभः ।
आजानेयैस्तथा प्राप्त कोनु स्वन्ततरो मया ॥

पातानि परराष्ट्राणि नृपा भुक्ताश्च दासवत् ।
प्रियेभ्यः सततं साधु कोनु स्वन्ततरो मया ॥

अधीतं विधिवद्दत्तं प्राप्तमायुर्निरामयम् ।
स्वधर्मविजितो लोकः कोनु स्वन्ततरो मया ॥

दिष्ट्या नाहं जितस्संख्ये परान् प्रेष्यवदाश्रितः ।
दिष्ट्या मे विपुला लक्ष्मीर्मृते त्वन्यं गता विभो ॥

यदिष्टं क्षत्रबन्धूना स्वधर्ममनुतिष्ठनाम् ।
निधनं तन्मया प्राप्तं कोनु स्वन्ततरो मया ॥ इति ।

**अयोध्याकाण्डे** रामं प्रति दशरथोप्येतान् धर्मानाह —

राम वृद्धोऽस्मि दीर्घायुर्भुक्ता भोगा मयेप्सिता. । अन्नवद्भिः क्रतुशतैर्यथेष्टं भूरिदक्षिणैः ॥
जातमिष्टमपत्यं मे त्वमद्यानुपमं भुवि । दत्तमिष्टमधीत च मया पुरुषसत्तम ॥
अनुभूतानि चेष्टानि मया वीरसुखान्यपि ।
देवर्षिपितृविप्राणामनृणोऽस्मि तथात्मनः ॥ इति ।

**स तस्य वाक्यैः करुणैर्महात्मा संबोधितस्साधु विभीषणेन ।**
**आज्ञापयामास नरेन्द्रसूनुः स्वर्गीयमाधानमदीनसत्त्वः ॥**

**मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ।**
**क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥**

अनेन महापुरुषा. शत्रौ मरणानन्तरं द्वेषं परित्यज्य परलोकहितमप्याचरंतीति सूचितम् । अत एव कृष्ण कंसवधानन्तरं तत्पित्रा उग्रसेनेन प्रार्थितो वैरं परित्यज्य तस्य परलोकहितं पैतृमेधिकं कारितवानिति प्रतिपादितं **हरिवंशे** —

अस्य त्वत्कोपदग्धस्य कंसस्याशुभकर्मण । तव प्रसादाद्गोविन्द प्रेतकार्यं क्रियेत ह ॥
प्रेतसंस्कारमात्रेण कृते बान्धवकर्मणि । आनृण्यं लौकिकं कृष्ण गताः किल भवन्ति हि ॥

कृष्णः —

काल्युक्तमिदं तात त्वयैतत्प्रतिभाषितम् । सदृश राजशार्दूल वृत्तस्य च कुलस्य च ॥
यत् त्वमेवंविधं ब्रूषे गतेऽर्थे दुरतिक्रमे । प्राप्यते नृपसत्कारं कंसः प्रेतगतोऽपि सन् ॥

ततः,

चकार सह कृष्णेन कंसस्य निधनक्रियाम् ।
सत्कारं लंभयामासुः सह कृष्णेन यादवाः ॥ इति ।

**त्रयोदशशततमे —**

ततो राक्षसराजनिधनेन शोकाक्रान्तहृदया राक्षसीनार्यं विनिष्क्रम्य नगरात् प्रविश्य च रणधरणीं प्रकीर्णकेशाः रणभूमिगतितं पतिमासाद्य समारोप्य चाङ्के तत्करपादं शिरांसि च तदीयविचित्रतरचरित्रस्मरणेन,

विलेपुरेवं दीनार्ता राक्षसाधिपयोषित ।
कुर्र्य इव दुःखार्ता बाष्पपर्याकुलेक्षणाः ॥

**न कामकार कामं वा तव राक्षसपुङ्गव ।**
**दैवं चेष्टयते सर्वं हतं दैवेन हन्यते ॥**

अनेन हिताहितकर्मसु पुरुषः दैवपरवश इत्युक्तम् । तथा च **वनपर्वणि —**

ईश्वरो विदधातीह कल्याणं यच्च पापकम् । शकुनिस्तंतुबद्धो वा नीयतेऽयमनीश्वरः ॥
इति । अत्र वाशब्दः इवार्थकः ।

**नैवार्थेन न कामेन विक्रमेण न चाज्ञया ।**
**शक्या दैवगतिर्लोके निवर्तयितुमुद्यता ॥**

अनेन दैवं पुरुषकारेण निवर्तयितुमशक्यमिति सूचितम् । तथा **चारण्यपर्वणि** पाण्डवान् प्रति मार्कंडेयः —

न शक्यते सर्वगुणोपपन्नैरपोहितुं दैवमिति श्रुतं मे ।
माभूद्विशंका तव कौरवेन्द्र हृष्टात्मनः क्लेशमिमं सुखार्हे ॥ इति।

चतुर्दशशततमे —

तदनु मन्दोदर्यपि पतिवियोगजनितशोकपरवशा रणभुवमालिंग्यावस्थितं पति-मवलोक्य सुचिरं विललाप । हा प्रिय धिक्कृतशक्रविक्रम' निर्जित देवदानवसिद्धविद्याधर-गन्धर्वगणः —

स त्वं मानुषमात्रेण रामेण युधि निर्जितः ।
न व्यपत्रपसे राजन् किमिदं राक्षसर्षभ ॥

विनाशस्तव रामेण संयुगे नोपपद्यते ।
अथवा रामरूपेण वासवः स्वयमागतः ॥

वासवस्य कुतश्शक्तिः त्वां द्रष्टुमपि संयुगे ।
महावीर्यं महासत्त्वं देवशत्रुं भयावहम् ॥

व्यक्तमेष महायोगी परमात्मा सनातनः ।
अनादिमध्यनिधनो महतः परमो महान् ॥

तमसः परमो धाता शङ्खचक्रगदाधरः ।
श्रीवत्सवक्षा नित्यश्रीरजय्य. शाश्वतो ध्रुवः ॥

मानुषं वपुरास्थाय विष्णुस्सत्यपराक्रमः ।
सर्वैः परिवृतो देवैर्वानरत्वमुपागतैः ॥

सर्वलोकेश्वरस्साक्षाल्लोकानां हितकाम्यया ।
सराक्षसपरीवारं हतवांस्त्वां महाद्युतिः ॥

अनेन लोकानां हितार्थतया दुष्टनिग्रहं परमेश्वरः करोतीति सूचितम् । तथा च गीतायां —

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ इति

इन्द्रियाणि पुरा जित्वा जितं त्रिभुवनं त्वया ।
स्मरद्भिरिव तद्वैरमिन्द्रियैरसि निर्जितः ॥

अनेन वश्येन्द्रियो लोकान् जयति, इन्द्रियवश्यस्तु नश्यतीति सूचितम्। तथा च मनुः —

इन्द्रियाणां प्रसंगेन दोषमृच्छत्यसंशयम्।
संनियम्य तु तान्येव ततस्सिद्धिं निगच्छति॥ इति।

खरदूषणकबन्धविराधवधविधायिना रामचन्द्रेण विरोध्य रणमनुचितमिति असकृदभिहितोऽपि.

**अकस्माच्चाभिकामोऽसि सीतां राक्षसपुङ्गव।**
**ऐश्वर्यस्य विनाशाय देहस्य स्वजनस्य च॥**

**अरुन्धत्या विशिष्टां तां रोहिण्याश्चापि दुर्मते।**

अत्र अरुन्धत्या विशिष्टामित्यनेन सर्वोत्कृष्टे पातिव्रत्ये सिद्धेऽपि पुनः रोहिणीग्रहणं रोहिणीचन्द्रमसोः यादृशः परस्परानुराग. ततोप्यधिकानुरागोऽस्ति सीतारामयोरिति प्रतिपादनार्थं इति।

**सीतां धर्षयता मान्यां त्वया ह्यसदृशं कृतम्।**
**वसुधायाश्च वसुधां श्रिय श्रीं भर्तृवत्सलाम्॥**

**सीतां सर्वानवद्याङ्गीमरण्ये विजने शुभाम्।**
**आनयित्वा च तां दीनां छद्मनात्मस्वदूषण॥**

**अप्राप्य चैव तं कामं मैथिलीसंगमे कृतम्।**
**पतिव्रतायास्तपसा नूनं दग्धोऽसि मे प्रभो॥**

**तदैव यन्न दग्धस्त्वं धर्षयंस्तनुमध्यमाम्।**

अनेन पतिव्रताविषयापराधः सद्यो विनाशहेतुरिति सूचितम्। अत एव द्रौपद्याः पतिव्रतायाः कीचकं प्रति वचनं विराटपर्वणि —

परदारास्मि भद्रं ते न युक्तं त्वयि सांप्रतम्।
मासूतपुत्रमुह्यस्व माद्य त्यक्ष्यसि जीवितम्॥ इति।

**अवश्यमेव लभते फलं पापस्य कर्मणः।**
**घोरं पर्यागते काले कर्ता नास्त्यत्र संशयः॥**

अनेन पापस्य कर्मणोऽव्यवधानेन फलाभावेऽपि कालान्तरे नियमेन फलं भवतीति सूचितम्। तथा च राजधर्मे —

नाधर्मश्चरितो लोके सद्यः फलति गौरिव।
न चेदात्मनि पुत्रेषु न चेत्पौत्रेषु नप्तृषु ॥ इति।

**शुभकृच्छुभमाप्नोति पापकृत् पापमश्नुते।**
**विभीषण· सुखं प्राप्तस्त्वं प्राप्तः पापमीदृशम् ॥**

अनेन पुण्यमाचरता सुखं पापमाचरता दुःखं च नियमेन भवतीति सूचितम्। तथाच **भारते** —

शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा।
कृतं फलति सर्वत्र नाकृतं भुज्यते क्वचित् ॥ इति।

**न कुलेन न रूपेण न दाक्षिण्येन मैथिली।**
**मयाऽधिका वा तुल्या वा त्वं तु मोहान्न बुद्ध्यसे ॥**

अनेन पापिष्ठाः कुलीनाया रूपवत्या गुणशालिन्यां स्वकीयाया भार्याया सत्यामपि परदाररुचयो भवन्तीति सूचितम्। अतएव **उद्योगे** — नहुषः बह्वीभिर्देवकन्याभिः समावृतोऽपि इन्द्रभार्यामिंद्राणीं प्रार्थितवानिति प्रतिपादितम् —

स तां संदृश्य दुष्टात्मा प्राह सर्वान् सभासदः। अप्सरोभिः परिवृतो देवकन्यासमावृतः।
नहुषो देवराजोऽथ क्रीडन् बहुविधं तथा ॥

एवं हि क्रीडतस्तस्य नहुषस्य दुरात्मनः। सम्प्राप्ता दर्शनं देवी शक्रस्य महिषी प्रिया ॥

इन्द्रस्य महिषी देवी कस्मान्मां नोपतिष्ठति।
आगच्छतु शची मह्यं क्षिप्रमेव निवेशनम् ॥ इति।

**विराटपर्वण्यपि** सैरन्ध्रीं प्रति कीचकः —

त्यजामि दारान् मम ये पुरातना भवन्ति दास्यस्तव चारुहासिनि।
अहञ्च ते सुन्दरि दासवत्स्थितः सदा भविष्ये वशगो वरानने ॥ इति।

**सर्वथा सर्वभूतानां नास्ति मृत्युरलक्षणः।**
**तव तावदयं मृत्युर्मैथिलीकृतलक्षणः ॥**

अनेन कामक्रोधरोगादि यत्किंचिन्निमित्तीकृत्यैव मृत्युरागच्छतीति सूचितम्।

अत एव प्रजासंहरणभीतं मृत्युं प्रति तदीयैः कामक्रोधरोगादिभिर्हतानां प्रजानां हननेन तव दोषो न भवतीति ब्रह्मवचनं द्रोणपर्वणि —

लोभः क्रोधोऽभ्यसूयेर्ष्या द्रोहो मोहश्च देहिनाम्।
अह्रीश्चान्योन्यपरुषा देहं भिन्द्युः पृथग्विधाः॥
यान्यश्रुबिन्दूनि करे समासते ते व्याधयः प्राणिनां आत्मजाताः।
ते मारयिष्यन्ति नरान् गतासून् नाधर्मस्ते भविता मास्म भैषीः॥ इति।

त्वया सह विमानवरमधिरुह्य विचित्रतरचैत्ररथादिनानोपवनेषु संक्रन्दननन्दनादपि अतिसुन्दरेषु अनवरतविहारेण अमन्दानन्दकन्दलितहृदया सुचिरं निर्वृताऽस्मि।

**भ्रंशिता कामभोगेभ्यः साऽस्मि वीरवधात्तव।**
**सैवान्येवास्मि संवृत्ता धिग्राज्ञां चञ्चलाश्श्रियः॥**

अनेन श्रीरतिचपलेत्युक्तम्। तथाच **मोक्षधर्मे** —

ममेयमिति मोहात्त्वं राजश्रियमभीप्ससि। नेयं तव न चास्माकं नचान्येषां स्थिरा सदा॥
कंचित्कालमियं स्थित्वा त्वयि वासव चञ्चला।
गौर्निवासमिवोत्सृज्य पुनरन्यं गमिष्यति॥ इति।

**हा पश्चिमा मे संप्राप्ता दशा वैधव्यकारिणी।**
**या मयासीन्न संबुद्धा कदाचिदपि मन्दया॥**

अनेन स्त्रीणां वैधव्यमतिकष्टमिति सूचितम्। तथा च **स्मृतिसंग्रहे** —

जीवहीनो यथा देहः क्षणादशुचितां व्रजेत्। भर्तृहीना तथा योषित्सुस्नाताप्यशुचिस्सदा॥
अमङ्गलेभ्यः सर्वेभ्यो विधवा ह्यत्यमङ्गलम्।
विधवादर्शनात्सिद्धिः क्वापि जातु न जायते॥ इति।

**पिता दानवराजो मे भर्ता मे राक्षसेश्वरः।**
**पुत्रो मे शक्रनिर्जेता इत्यहं गर्विता भृशम्॥**

अनेन अभिजनादयः अभिज्ञानां गुणा भवन्ति किंचिज्ज्ञानां दोषा भवन्तीति सूचितम्। तथा चोद्योगे **विदुरः** —

विद्यामदो धनमदः तृतीयोऽभिजनो मदः।

एते मदावलिप्तानामेत एव सता दमाः ॥ इति ।

त्रैलोक्यवसुभोक्तारं त्रैलोक्योद्योगदं महत् ।
जेतारं लोकपालानां क्षेप्तारं शंकरस्य च ॥

दृप्तानां निगृहीतारमाविष्कृतपराक्रमम् ।
लोकलोभयितारं च नादैर्भूतविराविणम् ॥

ओजसा दृप्तवाक्यानां वक्तारं रिपुसन्निधौ ।
स्वयूथभृत्यवर्गाणां गोप्तारं भीमविक्रमम् ॥

हन्तारं दानवेन्द्राणां यक्षाणां च सहस्रशः ।
निवातकवचानां च संग्रहीतारमीश्वरम् ॥

नैकयज्ञविलोप्तारं त्रातारं स्वजनस्य च ।
लङ्काद्वीपस्य गोप्तारं कर्तारं भीमकर्मणाम् ॥

अस्माकं कामभोगानां दातारं रथिनां वरम् ।
एवंप्रभावं भर्तारं दृष्ट्वा रामेण पातितम् ॥

स्थिराऽस्मि या देहमिमं धारयामि हतप्रिया ।

अनेन गुणवद्भर्तृवियोगे भार्यायास्तदीयगुणस्मरणेन अधिकक्लेशो भवतीति सूचितम् । अत एव भर्तृगुणवर्णनेन विलाप उक्त स्त्रीपर्वणि—

भार्या यूपध्वजस्यैषा करसंमितमध्यमा । कृत्वोत्सगे भुजं भर्तु' कृपणं परिदेवति ॥

अयं स नखरोत्कर्षी पीनस्तनविमर्दनः । नाभ्योरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

अयं स हन्ता शत्रूणाममित्राणां भयप्रदः । पदाता गोसहस्राणां क्षत्रियांतकरः करः ॥ इति ।

यदा मे तनयो शस्तो लक्ष्मणेनेन्द्रजिद्युधि ।
तदा त्वभिहता तीव्रमद्य त्वऽस्मिन्निपातिता ॥

अत पुत्रवियोगापेक्षया भर्तृवियोगो अधिकक्लेशकर इति प्रतिपादनात्पुत्रापेक्षया भर्ता अधिक इति सूचितम् । अत एवाश्वमेधिके परस्परप्रहारेण पतितमर्जुनं स्वपुत्रं बभ्रुवाहनं चावलोक्य अर्जुनभार्यायाश्चित्रांगदाया वचनं नागकन्यां प्रति —

नाहं शोचामि तनयं हतं पन्नगनन्दिनि ।

पतिमेवानुशोचामि यस्यातिथ्यमिदं कृतम् ॥ इति ।

**दृष्ट्वा न खल्वसि क्रुद्धो मामिहानवकुण्ठिताम् ।**
**निर्गतां नगरद्वारात् पद्भ्यामेव गतां प्रभो ॥**

अनेन स्त्रीभिर्गुर्वनुज्ञां अवकुण्ठनं च विना बहिर्न गन्तव्यमिति सूचितम् । तथा च शङ्खः — नानुक्ता गृहान्निर्गच्छेन्नानुत्तरीयेति ।

**यास्त्वया विधवा राजन् कृतानेकाः कुलस्त्रियः ।**
**पतिव्रता धर्मपरा गुरुशुश्रूषणे रताः ॥**

**ताभिः शोकाभितप्ताभिः शप्तः परवशं गतः ।**
**त्वया विप्रकृताभिर्यत्तदा शप्तं तथागतम् ॥**

**प्रवादस्सत्य एवायं त्वां प्रति प्रायशो नृप ।**
**पतिव्रतानां नाकस्मात्पतन्त्यश्रूणि भूतले ॥**

अनेन पतिव्रतानां शोकजनिताच्छापात्फलं भवतीति सूचितम् । तथा च **स्त्रीपर्वणि** कृष्णं प्रति गान्धारी —

पतिशुश्रूषया यन्मे तपः किंचिदुपार्जितम् । तेन त्वां दुरवापेन शप्स्ये चक्रगदाधर ॥

यस्मात्परस्परं घ्नन्तो ज्ञातयः कुरुपाण्डवाः ।

उपेक्षितास्ते गोविन्द तस्माज्ज्ञातीन् वधिष्यसि । त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन ॥

हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः । अनाथवदविज्ञातो लोकेष्वनभिलक्षितः ॥

कुत्सितेनाभ्युपायेन निधनं समवाप्स्यसि । तवाप्येवं तव सुता निहता ज्ञातिबांधवाः ॥

स्त्रियः परिनपिष्यन्ति यथैव भरतस्त्रियः ।

ततः कृष्णः —

दैवादेते विनक्ष्यन्ति वृष्णयो नात्र संशयः । संहर्ता वृष्णिचक्रस्य नान्यो वै विद्यतेऽशुभः ॥

इति । **मौसलेऽपि** कृष्णः—

पुत्रशोकाभिसंतप्ता गान्धारी हतबांधवा । यदनुव्याजहारार्ता तदिदं समुपागमत् ॥ इति ।

**कातर्यं च न ते युद्धे कदाचित्संस्मराम्यहम् ।**
**तत्तु भाग्यविपर्यासान्नूनं ते पक्वलक्षणम् ॥**

अत्र शूरस्य तव कातर्यं विनाशज्ञापकमिति प्रतिपादनात् पुरुषाणां पूर्वस्थित-बुद्धिवैपरीत्यं विनाशसूचकमिति सूचितम् । तथा च सभापर्वणि —

प्रायस्समासन्नपराभवाणां धियो विपर्यस्ततरा भवन्ति ॥ इति ।

**अयं राक्षसमुख्यानां विनाशः पर्युपस्थितः ।**
**कामक्रोधसमुत्थेन व्यसनेन प्रसंगिना ।**
**निर्वृत्तस्त्वत्कृतोऽनर्थो सोऽयं मूलहरो महान् ॥**

अनेन कामक्रोधवशं गतः पुरुषः सपरीवारो नश्यतीति सूचितम् । तथाच मनुः—

कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ।
वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥ इति ।

**सुकृतं दुष्कृतं च त्वं गृहीत्वा स्वां गतिं गत ।**

अनेन मृतः सुकृतदुष्कृते गृहीत्वा गच्छतीत्युक्तम् । तथा च स्मृतिः —

अर्था गृहान्निवर्तन्ते श्मशाने मित्रबान्धवाः ।
सुकृतं दुष्कृतं चैव गच्छन्तमनुगच्छति ॥ इति ।

**बिभीषणेनाभिहितं न कृतं वचनं त्वया ।**
**मारीचकुम्भकर्णाभ्यां वाक्यं मम पितुस्तदा ॥**

**न श्रुतं वीर्यमत्तेन तस्येदं फलमीदृशम् ।**

अनेन वीर्यदर्पेण सुहृदुपदेशं तिरस्कुर्वतः विनाशो भवतीति सूचितम् । अत एव शल्यपर्वणि सुहृदो विदुरस्य वचनतिरस्कारेण स्वीयानां विनाशो वृत्त इत्युक्तं धृतराष्ट्रेण –

पूर्वमेवाहमुक्तो वै विदुरेण महात्मना । दुर्योधनापराधेन प्रजेयं विनशिष्यति ॥

केचिन्न सम्यक् पश्यन्ति मूढाः सम्यगवेक्ष्य च ।
तदिदं मम मूढस्य तथाभूतं च वस्तु तत् ॥

यदब्रवीत्स धर्मात्मा विदुरः सर्वधर्मवित् । तत्तथा समनुप्राप्तं वचनं सत्यमीरितम् ॥
दैवोपहतचित्तेन यन्मया न कृतं पुरा । अनयस्य फलं तस्य ब्रूहि गावल्गणे पुनः ॥ इति ।

**एतस्मिन्नन्तरे रामो बिभीषणमुवाच ह ।**
**संस्कारः क्रियतां भ्रातुस्स्त्रियश्चैता निवर्तय ॥**

तं प्रश्रितस्ततो रामं श्रुतवाक्यो विभीषणः।
विमृश्य बुद्ध्या धर्मज्ञो धर्मार्थसहितं वचः॥

रामस्यैवानुवृत्त्यर्थमुत्तरं प्रत्यभाषत।
त्यक्तधर्मव्रतं क्रूरं नृशंसमनृतं तथा॥

नाहमर्होऽस्मि संस्कर्तुं परदाराभिमर्शकम्।

अनेन त्यक्तधर्मस्य पापिष्ठस्य बन्धुना संस्कारो न कर्तव्य इति सूचितम्। **तथाच माधवीये** श्राद्धे —

परदारान् हरन्तश्च रोषात्तत्पतिभिर्हताः। महापातकिनो ये च पतितास्ते प्रकीर्तिताः॥
पतितानां न दाहस्स्यान्नान्त्येष्टिर्नास्थिसञ्चयः॥ इति।

**भ्रातृरूपो हि मे शत्रुरेष सर्वाहिते रतः।**
**रावणो नार्हते पूजां पूज्योऽपि पितृगौरवात्॥**

अत्र भ्रातृरूपो हि मे शत्रुरित्यनेन रावणस्य सहजशत्रुत्वमुक्त्वा सर्वाहिते रत इत्यनेन सर्वप्रकाराहितकर्तृत्वस्वरूपस्य सहजशत्र्वपेक्षया प्रबलस्य कृत्रिमशत्रुत्वस्यापि प्रतिपादनात् उभयविधशत्रुत्वमेनस्योक्तम्। सहजशत्रुत्वापेक्षया कृत्रिमशत्रुप्राबल्यमुक्तमभियुक्तैः—

सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्यतः।
स्याताममित्रे मित्रे च सहजप्राकृतावुभौ॥ इति।

**नृशंस इति मां कामं वक्ष्यन्ति मनुजा भुवि।**
**श्रुत्वा तस्य गुणान्सर्वे वक्ष्यन्ति सुकृतं पुनः॥**

अत्र ज्येष्ठस्य भ्रातुः संस्काराकरणान्मां नृशंस इति लोकाः प्रथमं वक्ष्यन्ति अनन्तरं च रावणस्य परदाराभिमर्शनादिदोषान् श्रुत्वा सम्यगेव विभीषणेन कृतमिति च मां जानन्ति अतोऽस्माकं न दोष इत्युक्तम्। अनेन मिथ्यापवाददोषाधायकः मिथ्यापवादश्च प्रथमतोऽविचारेण यैर्यैरेनमभिहितं तैरेव विशेषदर्शनेन नास्मिन्दोष इति ज्ञाते तस्य मिथ्यापवाददोषो न भवतीति सूचितम्। अत एव कृष्णः जांबवन्तं विजित्य स्यमन्तकमणिं सत्राजिते प्रदाय शुद्धोऽहमिति ज्ञापयित्वा मिथ्यापवाददोषाद्विमुक्तो बभूवेति प्रतिपादितं विष्णुपुराणे —

सत्राजिने भगवना सूर्येण निजकंठादवमुच्य स्यमन्तकं नाम महामणिरत्नं एकान्ते न्यस्तं तं च अष्टौ कनकभारान् स्रवन्तन्तं अच्युतोऽपि दिव्यं रत्नं उग्रसेनस्य भूपतेर्योग्यमिति लिप्साञ्चक्रे। सत्राजिदपि अच्युतो मामेतद्याचयिष्यतीति स्वभ्रात्रे प्रसेनाय तद्रत्नमदात्। प्रसेनः कण्ठसक्तेन स्यमन्तकेनाऽश्वमारुह्य अटव्या मृगयामगच्छत्। तत्र च जाम्बवान् प्रसेन हत्वा मणिरत्नमादायागच्छन्त सिंहमपि निहत्य मणिरत्नमादाय बिलं प्रविवेश। तदनु अनागच्छति प्रसेने कृष्णो मणिरत्नमभिलषितवान् नच प्राप्तवान् नूनमेतस्य कर्मेत्यखिल एवायं सत्राजिप्रमुखो लोकः परस्परं कर्णाकर्णिकयाऽकथयत्।

विदितलोकापवादवृत्तान्तश्च भगवान् प्रसेनस्य अश्वपदीमनुससार। ददर्श चाश्वसमवेतं प्रसेनं सिंहेन विनिहतमखिलजनमध्ये सिंहवधदर्शनकृतपरिशुद्धिः सिंहपदमनुससार। ऋक्षनिहतं च सिंहं अल्पे भूमिभागे दृष्ट्वा ततश्च रत्नगौरवात् ऋक्षस्यापि पदमनुययौ। सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हत। सुकुमारक मारोदीस्तव ह्येष स्यमन्तकः॥ इति गुहायां शिशुमुपलालयत्या धात्र्या वचनमाकर्ण्य तत्र प्रविश्य जाम्बवन्तं निर्जित्य जाम्बवत्या कन्यया सह मणिरत्नमवाप्य अपवादविशुद्ध्यर्थं तद्रत्नमादाय सत्राजिते दत्त्वा मिथ्याभिशस्तिपरिशुद्धिमवाप। जाम्बवतीं चात पुरे निवेशयामास। सत्राजिदपि मयास्याभूतं मलिनमारोपितमिति जातसंत्रामः स्वसुता सत्यभामां भार्यां प्रददौ। इति।

अत्र विभीषणेन रावणस्य,

गतस्सेतुस्सुनीताना गतो धर्मस्य विग्रहः।
गतः सत्त्वस्य सक्षेप प्रस्तावानां गतिर्गता॥

अनेन दत्तानि सुपूजितानि भुक्ताश्च भोगाः सुभृताश्च भृत्याः।
धनानि मित्रेषु समर्पितानि वैराण्यमित्रेषु च यापितानि॥

एषोहिताग्निश्च महातपाश्च वेदांतगः कर्मसु चाग्र्यवीर्यः।
एतस्य यत्प्रेतगतस्य कृत्यं तत्कर्तुमिच्छामि तव प्रसादात्॥

इति वचनैर्धर्मिष्ठत्वं सस्कार्यत्वं च प्रतिपादितम्। तथा,

विमृश्य बुद्ध्या धर्मज्ञो धर्मार्थसहितं वचः। रामस्यैवानुवृत्त्यर्थमुत्तरं प्रत्यभाषत॥

त्यक्तधर्मव्रतं क्रूरं नृशंसमनृतं तथा। नाहमर्होऽस्मि संस्कर्तुं परदाराभिमर्शकम्॥

भ्रातृरूपो हि मे शत्रुरेष सर्वाहिते रतः। रावणो नार्हते पूजां पूज्योऽपि पितृगौरवात्॥

इत्यग्निमवचनैरधर्मिष्ठत्वं संस्कारानर्हत्वं च प्रतिपादितम्। एतेषां वचनानां धर्मिष्ठत्वाधर्मिष्ठत्वसंस्कार्यत्वासंस्कार्यत्वरूपपरस्परविरुद्धार्थप्रतिपादकत्वात् सर्वेषामप्यभिमतार्थप्रतिपादकत्वं वक्तव्यम्। इतरेषामन्यथानयनं कर्तव्यं । तत्रकेषामभिमतार्थप्रतिपादकत्व श्रुतिस्मृतीतिहासादिषु धर्मत्वेन प्रसिद्धैः आहिताग्नित्वदातृत्वतपस्वित्ववेदान्तनिष्ठत्वादिभिर्युक्तस्य रावणस्य धर्मिष्ठत्वावश्यंभावात् ॥

अपुत्रज्येष्ठभ्रातुः संस्कारे कनिष्ठस्य अधिकारः अकरणे प्रत्यवायश्चेत्यत्र **निर्णसिन्धौ** सुमन्तुः —

उत्सन्नबांधवं प्रेतं पिता भ्राताऽथवाग्रजः ।
जननी वापि संस्कुर्यान्महदेनोऽन्यथा भवेत् ॥ इति ।

'त्यक्तधर्मव्रतं क्रूरम्' इत्यादिवचनं तु,

रामस्यैवानुवृत्त्यर्थमुत्तरं प्रत्यभाषत ।

इति पूर्ववचनानुसारेण रामप्रीत्यर्थमेव । तत्रहि रामद्वेषिणो रावणस्य संस्कारकरणे रामस्याप्रीतिर्भवेत्, ततः स्वस्य राज्यप्राप्तिः न स्यात्, अतो रामानुसरणेनैव वर्तितव्यमित्यभिप्रायोऽवगम्यते ॥

किंच एषोहिताग्निरिति विभीषणवचनेन आहिताग्नित्वेनावगतस्य रावणस्य संस्काराकरणे आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति वचनेन आहिताग्निसंस्कारे विनियुक्तानां तदीयाग्नियज्ञपात्राणामनुपयोगापत्तिः ॥

तस्माद्धर्मिष्ठत्वसंस्कार्यत्वप्रतिपादकानां वचनानि विभीषणाभिमतार्थत्व इतरेषां तु रामप्रीत्यर्थमेवेति चेदुच्यते ॥

विमृश्य बुद्ध्या धर्मज्ञो धर्मार्थसहितं वचः ।

इति विमर्शपूर्वकमुक्तत्वावगमात् अधर्मिष्ठत्वासंस्कार्यप्रतिपादकवचनानामेव अभिमतार्थत्वं । यत्तु श्रुतिस्मृतीतिहासादिषु धर्मत्वेन प्रसिद्धैर्वेदाध्ययनाहिताग्नित्वादिभिः युक्तस्य रावणस्य धर्मिष्ठत्वावश्यंभावादिति तन्न, तत्कृतानां वेदाध्ययनयज्ञदानतपसां मध्ये अनाचारपरावमानाभ्यामध्ययनस्य निष्फलत्वात् अनृतवचनेन यज्ञस्य नष्टत्वात् अश्रद्धया कृतत्वेन यज्ञदानयोस्तामसत्वात् तपसश्चैव फलोपभोगेन क्षीणत्वात् तामसत्वाच्च किं बहुना सर्वेषामध्ययनादीनां रावणकृतानां मोहकृतत्वेन तामसत्वात् तैर्धार्मिकत्वानुपपत्तेः । रावणस्य दुराचारश्च **उत्तररामायणे** —

क्रूरैस्तैस्तैः समाचारैर्यशोऽर्थकुलनाशनै । धर्षणं प्राणिनां दत्त्वा स्वमतेन विचेष्टसे ॥

इति विभीषणवचनादवगम्यते। दुराचारस्याध्ययननिष्फलत्वमित्येतच्चोद्योगे विदुरवचनेन—

आचारहीनं न पुनन्ति वेदाः यद्यप्यधीतास्सह षड्भिरङ्गैः ।
छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव जातपक्षाः ॥ इति ।

परावमानेनाध्ययनं निष्फलमित्येतच्च आदिपर्वणि —

अधीयानः पण्डितंमन्यमानो यो विद्यया हन्ति यशः परेषाम् ।
तस्यान्तवन्तश्च भवन्ति लोकाः न चास्य तद्ब्रह्मफलं ददाति ॥ इति ।

रावणस्यानृतवदनं च 'नृशंसमनृतं क्रूरमि'ति विभीषणवचनात् 'अधर्मानृतसंयुक्तः काममेष निशाचरः' इति रामवचनाच्चावगम्यते। अनृतवचनेन यज्ञो नश्यतीत्येतच्च मानवे यज्ञोऽनृतेन क्षरति इति। अश्रद्दधानत्वं च रावणस्य तदीयवाक्यादेवावगम्यते। तथा च उत्तररामायणे इन्द्रजिता राजसूयादिभिरिष्टमिति शुक्रवचनं शृण्वतो रावणस्य वाक्यं—
ततोऽब्रवीद्दशग्रीवो न शोभनमिदं कृतम्। पूजिताश्शत्रवो यस्माद्द्रव्यैरिन्द्रपुरोगमाः ॥

यदिदानीं कृतं यद्धि तदाहर्तुं न शक्यते ।
आगच्छ सौम्य गच्छामः स्वमेव भवनं प्रति ॥ इति ।

किं बहुना ? तत्रैव —

दृष्टं मे नन्दनं भग्नं ऋषयो मे हताश्श्रुताः ।
देवानां तु समुद्वेगः त्वत्तो राजन् श्रुतश्च मे ॥

इति। कुबेरसंदेशे देवब्राह्मणहिंसकत्वेनावगतस्य रावणस्य देवब्राह्मणसंप्रदानके यज्ञे दाने च श्रद्धा दूरादपेतैव। अश्रद्धाकृतयोर्यज्ञदानयोस्तामसत्वमित्येतच्च गीतायां —
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्। श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥
अदेशकाले यद्दानं अपात्रेभ्यश्च दीयते। असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ इति।

रावणेन कृतं तपश्च शिरच्छेदनरूपात्मपीडया परेषामुत्सादनाय च कृतत्वेन तामसम्। रावणकृतं तपः स्वशिरश्छेदनरूपात्मपीडनेन कृतमित्येतदुत्तररामायणे —
पूर्णे वर्षसहस्रे तु शिरश्चाग्नौ जुहाव ह। एवं वर्षसहस्राणि नव तस्यातिचक्रमुः ॥

शिरांसि नव चाऽप्यस्य प्रविष्टानि हुताशनम्। इति।

रावणकृतं तपः परोत्सादनार्थमित्येतदपि बालकाण्डे —

युद्धे जयति लोकास्त्रीनुच्छ्रितान् द्वेष्टि दुर्मति । शक्रं त्रिदशराजानं प्रधर्षयितुमिच्छति ॥

ऋषीन् यक्षान् सगन्धर्वान् असुरान् ब्राह्मणांस्तथा ।
अतिक्रामति दुर्धर्षो वरदानेन मोहित ॥ इति ।

स्वात्मपीडनेन परपीडार्थतया च कृतस्य तपसस्तामसत्व च गीतायाम् —

मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ इति ।

सर्वेषां कर्मणा मोहकृतानां तामसत्वमित्येतदपि गीतायामेव—

अनुबन्ध क्षयं हिंसामनवेक्ष्य च पौरुषम् । मोहादारभ्यते कर्म तत्तामसमुदाहृतम् ॥

इति । तामसाना चाधोगतिहेतुत्वान्निंद्यत्वं । तथा चाधोगतिहेतुत्वं तामसानामुक्तं गीतायाम् —

ऊर्ध्वं गच्छन्ति सत्त्वस्थाः मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छंति तामसा. ॥ इति ।

स्वमतेन विचेष्टस इति विभीषणवचनेन शास्त्रमर्यादामुल्लंघ्य स्वाभिप्रायानुरोधेन कर्मकरणावगमेन रावणकृतकर्मणा निष्फलत्वमप्यवगम्यते । तथा च स्मृतिः —

स्वाभिप्रायकृतं कर्म यत्किञ्चिज्ज्ञानवर्जितम् । क्रीडार्थमिव बालानां तत्सर्वं निष्प्रयोजनम् ॥

इति । अश्रद्धादिना कृतानां तेषां चाधर्मत्वं उक्तं गीतायाम् —

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ नच तत्प्रेत्य नो इह ॥

इति । अत एव भावशुद्धिसहितमेव तपोऽध्ययनादिकं धर्मः, भावशुद्धिरहितं तु अधर्म इत्युक्तं वनपर्वणि । मार्कण्डेयः —

त्रिदण्डधारणं मौनं जटाधारोऽथ मुण्डनम् । अग्निहोत्रं वने वास शरीरपरिशोषणम् ॥

सर्वाण्येतानि मिथ्या स्यु' यदि भावो न निर्मलः । इति ।

तथा व्याजेन कृतानामप्यधर्मत्वमनर्थहेतुत्वं चोक्तं आदिपर्वणि —

इति दद्यामिति यजे इत्यधीय इति व्रतम् । इत्येतानि भयान्याहुस्तानि वर्ज्यानि सर्वशः ॥

इति । अभिमानकृतानामप्यनर्थहेतुत्वमधर्मत्वं चोक्तं तत्रैव —

चत्वारि कर्माण्यभयङ्कराणि भयं प्रयच्छंत्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः ॥ इति ।

तपश्च दानं च शमो दमश्च ह्रीरार्जवं सर्वभूतानुकम्पा ।
स्वर्गस्य लोकस्य वदन्ति सन्तो द्वाराणि सप्तैव महान्ति पुंसाम् ॥

नश्यन्ति मानेन तमोऽभिभूताः पुंसस्सदेति प्रवदन्ति सन्तः ॥ इति च ।

तस्माद्रावणकृतयज्ञदानाध्ययनादीनां अश्रद्धादिना हतत्वात् तपस इहैव फलोपभोगेन क्षीणत्वात् सर्वेषां तामसत्वादभिमानदग्धत्वाच्चाधर्मत्वेन न तैर्यज्ञदानादिभिर्धार्मिकत्वमस्येति। यानि चान्यानि दानानि धनानि मित्रेषु समर्पितानि सुभृताश्च भृत्या इत्यादीनि तेषां मित्रादिभिः स्वकीयमैहिकं प्रयोजनं साधनीयमित्यैहिकफलोद्देशेन कृतत्वेन आमुष्मिकफलशङ्काया एवाभावेन धर्मत्वाभावात् तैरपि धार्मिकत्वमस्यासंभावितमेव ।

यच्च अपुत्रस्य ज्येष्ठभ्रातुः संस्काराकरणे प्रत्यवाय इति तदपि न —

नाहमर्होऽस्मि संस्कर्तुं परदाराभिमर्शकम् ।

इति रावणस्य परदाराभिमर्शकत्वेन संस्कारानर्हत्वावगमेन तादृशस्य संस्काराकरणे प्रत्यवायाभावात् । परदारापहर्तुः पतितत्वेन संस्कारानर्हत्वमुक्तं ब्रह्मपुराणे —

शृङ्गिदंष्ट्रिनखिव्यालविषवह्निमहाजलैः । सुदूरात्परिहर्तव्यैः कुर्वन् क्रीडां मृतस्तु यः ॥
नागानां विप्रियं कुर्वन् दग्धश्चाप्यथ विद्युता । निगृहीताश्च ये राज्ञा चोरदोषेण कुत्रचित् ॥
परदारान् हरन्तश्च रोषात्तत्पतिभिर्हताः । असमानैश्च सङ्कीर्णैः चण्डालाद्यैश्च विग्रहम् ।
कृत्वा तैर्निहतस्तद्वच्चण्डालादीन्समाश्रिताः ॥
क्रोधात्प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम् । गिरिवृक्षप्रपातं वा ये कुर्वन्ति नराधमाः ॥
महापातकिनो ये च पतितास्ते प्रकीर्तिताः । पतितानां न दाहस्स्यात् नान्त्येष्टिर्नास्थिसञ्चयः ॥
न चाश्रुपातः पिण्डो वा कार्यं श्राद्धादिकं क्वचित् ॥ इति ।

यत्तु न करिष्यामीत्येतद्रामानुवृत्त्यर्थमिति सत्यं रामानुवृत्त्यर्थं किंतु धर्मात्मनो रामस्य सकाशे धर्मानुसारिणैव मया स्थातव्यमित्येवरूपं रामानुवृत्त्यर्थमेव रामशत्रौ रामप्रीत्यर्थतया स्वेनापि शत्रुभावेनैव वर्तितव्यमित्येवंपरं । अत एव —

**मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ।**
**क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥**

इति रामवचनेन रामस्य रावणद्वेषनिवृत्तिः तत्संस्कारकरणमभिमतमिति चावगम्यते ।

यच्च एषोहिताग्निरिति विभीषणवचननेन रावणस्याहिताग्नित्वावगमेन तस्य संस्काराभावे तदीयानामग्नीनां पात्राणां च का गतिरिति, तदपि न —

वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे । पात्राणि तु दहेदग्नौ यजमाने वृथा हते ॥

आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया । तेषामपि तथा गङ्गातोये संस्थापनं हितम् ॥

इति स्मृत्युक्तप्रतिपत्तिसंभवात् । अतो रावणस्याहिताग्नित्वेऽपि संस्कारानर्हत्वमेव । तस्माद्विमर्शपूर्वकमुक्तत्वावगमात् रावणकृताध्ययनादीनामनाचारादिदुष्टत्वात् रावणस्य परदारावमर्शाद्यधर्माचरणाच्च अधर्मिष्ठत्वासंस्कार्यत्वप्रतिपादकानामेव विभीषणवचनानामभिमतार्थत्वं धर्मिष्ठत्वसंस्कार्यत्वपराणां तु भ्रातृस्नेहपरत्वं । अत एव पुत्रभार्यादिभिर्निरस्तस्य वैश्यस्य तेषु स्नेहपाश उक्तो मार्कण्डेयपुराणे —

यैस्संत्यज्य पितृस्नेहं धनलुब्धैर्निराकृतः । पतिः स्वजनहार्दं च हार्दि तेष्वेव मे मनः ॥

किमेतन्नाभिजानामि जानन्नपि महामते । यत्प्रेमप्रवणं चित्तं विगुणेष्वपि बन्धुषु ॥

तेषां कृते मे निश्वासो दौर्मनस्यं च जायते । करोमि किं यन्न मनस्तेष्वप्रीतिषु निष्ठुरम् ॥

इति । तस्मात् असंस्कार्यत्वपराण्येव विभीषणवचनानीति सिद्धम् ॥

अपच्छेदन्यायेनापि इदमेवाभिमतं । तथाहि षष्ठे 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यधिकरणे अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारमुद्गातोद्गातारं प्रतिहर्तेत्यादिक्रमेणान्वारभ्य प्रसर्पतामध्वर्यादीनां मध्ये यदि क्वचिदुद्गातृप्रतिहर्त्रोरन्वारंभविच्छेदः क्रमेण स्यात्तदा तन्निमित्तयोः प्रायश्चित्तयोर्यद्युद्गाताऽपच्छिद्येतादक्षिणो यज्ञः संस्थाप्यो धान्य आहृत्य तत्र तद्द्यात् पूर्वस्मिन् दास्यन् स्याद्यदि प्रतिहर्तापच्छिद्येत सर्ववेदसं दद्यादिति च विहितयोरदक्षिणक्रतुसमापनसर्ववेदसदक्षिणादानरूपयोर्विरुद्धयोस्समुच्चित्यानुष्ठानानुपपत्तावन्यतरस्मिन्ननुष्ठेये किं पूर्वनिमित्तमनुष्ठेयमुतोत्तर निमित्तमनुष्ठेयमिति संशयेऽनुपसंजातविरोधित्वात्पूर्वनिमित्तमनुष्ठेयमिति प्राप्ते परनिमित्ते सति तस्मिन्निमित्तशास्त्रस्यापि दुर्निवारप्रवृत्तित्वात् तस्य च पूर्वाबाधेनानुत्पत्तेः पूर्वोपमर्देनोत्पत्तिनियमाच्च तन्निमित्तमेवानुष्ठेयमिति सिद्धम् । उक्तं च —

पूर्वं परमजातत्वादबाधित्वैव जायते । परस्यानन्यथोत्पादान्नाद्याबाधेन संभवः ॥ इति ।

तदेवं अधर्मिष्ठत्वासंस्कार्यत्वप्रतिपादकवचनानामेवाभिमतार्थत्वमिति सिद्धम् ।

एवं विभीषणेन रावणसंस्कारे अकर्तव्यत्वेन प्रतिपादिते सति रामः सोपपत्तिकं तस्य हितकरवचनमाह —

**तच्छ्रुत्वा परमप्रीतो रामो धर्मभृतां वर ।**

**विभीषणमुवाचेदं वाक्यज्ञो वाक्यकोविदः ॥**

अत्र धर्म्यं प्रियं च विभीषणवचनं श्रुत्वा परमप्रीतो राम इति प्रतिपादनाद्धार्मिकाणां धर्म्यप्रियवचनश्रवणादतिप्रीतिर्भवतीति सूचितम् । तथा **चाश्रमवासिके** —

तस्य तद्वचनं धर्म्यमनुमान्य गुणोत्तरम् ।
साधु साध्विति सर्वः स जनः प्रतिगृहीतवान् ॥ इति ।

**तवापि मे प्रियं कार्यं त्वत्प्रभावाच्च मे जितम् ।**
**अवश्यं तु क्षमं वाच्यो मया त्वं राक्षसेश्वर ॥**

अनेन पूर्वोपकारिणि हितमवश्यं कर्तव्यमिति सूचितम् । तथा च **सुन्दरकाण्डे** मैनाकवचनं —

कृते च प्रतिकर्तव्यमेष धर्मस्सनातनः । इति ।

'नहि कृतमुपकारं साधवो विस्मरन्ति' इत्यभियुक्ताश्च । अत्र अवश्यं तु हितं वाच्यं इत्यनेनायमर्थोऽवगम्यते – रावणवधे साहाय्यमाचरतो विभीषणस्य हितोपदेशेन अवश्यं प्रत्युपकारः कर्तव्यः । युद्धमरणेन निरस्तसमस्तदोषस्य रावणस्य सस्कारकरणमेव विभीषणस्य हितं । तथाहि — यदि विभीषणः सस्कारं न कुर्यात्,

कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्या क्रिया नृप ।

इति **विष्णुपुराण**वचनेन,

पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं हरेत च ॥

इति **वृद्धमनु**वचनेन भार्यैव सस्कारं कृत्वा रिक्थमपि हरेत् । वालिसस्कारकर्तुः रङ्गदस्य यौवराज्यं यथा दापितं तथा सस्कारकर्त्र्यास्तस्याः किञ्चित् यौववतं दापनीयं स्यात् शास्त्रप्राप्तस्य रिक्थस्य मयाऽपि प्रतिषेद्धुमशक्यत्वात् । एवं सति समग्रं राज्यं विभीषणस्य न स्यात्, तथाच युद्धमरणेन निरस्तसमस्तदोषस्य रावणस्य सस्कारकरणमेव कृत्स्नराज्यप्राप्तिहेतुत्वात् विभीषणस्य हितमिति विचिन्त्य सस्कारः कर्तव्य इति हितमुपदिष्टवान् राम इति । रावणे आहिताग्नित्वतपस्वित्वादिगुणानां अधर्मानृतादिदोषैर्नष्टत्वेन दोषाणां प्राबल्येऽपि सर्वदोषोपमर्दकत्वेन दोषापेक्षयापि प्रबलतरयुद्धविजयादिलक्षणगुणसद्भावेन सस्कारार्हो रावण इत्याह —

**अधर्मानृतसंयुक्तः काममेष निशाचरः ।**
**तेजस्वी बलवान् शूरः संग्रामेषु च नित्यशः ॥**

**शतक्रतुमुखैर्देवैः श्रूयते न पराजितः ।**
**महात्मा बलसंपन्नो रावणो लोकरावणः ॥**

अनेन युद्धे मरणवद्युद्धे जयोऽपि राज्ञामुत्कृष्टो धर्म , तथा पराजयोऽपि अत्यन्त-पापाधायक इति सूचितम् । युद्धे जय उत्कृष्टधर्म इत्येतद्राजधर्मे —

भर्तुरर्थे च यः शूरो विक्रमेद्वाहिनीमुखे । न भयाद्विनिवर्तेत तस्य लोका यथा मम ॥
यस्तु सेनापतिं हत्वा तद्यानमधिरोहति । नायकं वा प्रधानं वा यो वा स्यात्तत्र पूजितः ॥
स विष्णुविक्रमकामी बृहस्पतिसमप्रभः । जीवग्राहं प्रगृह्णाति तस्य लोका यथा मम ॥ इति
एतत्तपश्च पुण्यं च धर्मं चैव सनातनम् । चत्वारश्चाश्रमास्तस्य यो युद्धे न पलायते ॥
इति च । मनुरपि —

आहवेषु यदन्योन्यं जिघांसन्तो महीक्षित ।
युध्यमाना परं शक्त्या स्वर्गं यान्त्यपराजिना ॥ इति ।

पराजयः पापाधायक इत्येतदपि राजधर्मे —

इमे पलायमानानां नरका प्रत्युपस्थिता ।
अकीर्तिश्शाश्वती चैव पतितव्यमनन्तरम् ॥ इति ।

एतस्य संस्कारकरणं मयाप्यभिमतं इत्याह —

**मरणान्तानि वैराणि निर्वृत्तं न प्रयोजनम् ।**
**क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥**

अत्र मदीयशत्रो रावणस्य सस्कारकरणेन मम मनसि वैषम्यं भविष्यतीति न मन्तव्यं मरणानन्तरं रावणे मम द्वेषाभावात् । प्रयोजनं च सीताप्राप्तिलक्षणमस्माकं संपन्नं । अतः परलोकगतस्य रावणस्य हिताचरणं तव मम चावश्यकमिति प्रतिपादनेन महापुरुषाः शत्रोर्मरणानन्तरं पूर्वकृतमपराधं न स्मरन्ति प्रत्युत तस्य हितमेवाचरंतीति सूचितम् ।

तथाच हरिवंशे —

विजयान्तानि वैराणि शान्ते शान्तिर्भविष्यति ।

शत्रौ मृते वैरशान्तिर्भवतीत्यर्थः । अत एवाश्रमवासिके दुर्योधनकृतान् क्लेशान् स्मृत्वा तस्य परलोकसुखार्थं श्राद्धं न कर्तव्यम् ,

श्राद्धानि पुरुषव्याघ्र मा प्रादात्कौरवो नृपः । इति मे वर्तते बुद्धिर्मा नो नन्दन्तु शत्रवः ॥

कष्टात्कष्टतरं यान्तु सर्वे दुर्योधनादयः। यैरियं पृथिवी कृत्स्ना घातिता कुलपांसनैः ॥

इति वदन्तं भीमं प्रत्यर्जुनः —

न स्मरंत्यपराद्धानि स्मरन्ति सुकृतान्यपि। असम्भिन्नार्यमर्यादाः साधवः पुरुषोत्तमा ॥ इति

त्वत्सकाशान्महाबाहो संस्कारं विधिपूर्वकम्।
क्षिप्रमर्हति धर्मज्ञ त्वं यशोभाग्भविष्यसि ॥

इत्यनेन विभीषणस्य रावणसंस्कारकरणं यशस्करमित्यवगम्यते। तच्च यशः पूर्वं स्वकृतहितोपदेशानादरेण तिरस्कृतोऽपि विभीषणः तदीयावमतिमपि सोढ्वा द्वेषं परित्यज्य अन्ते संस्कारं कृतवानित्येवंरूपम्। अनेन युद्धे मृतानामकृतेऽपि संस्कारे गतिर्भवत्येव, कर्तुस्तु तत्संस्कारेण अतिशयो भवतीति सूचितम्। तथाच **राजधर्मे** अंबरीषं प्रतीन्द्रः —

न ह्यन्नमुदकं तस्य न स्नानं नास्त्यशौचकम्। हतस्य कर्तुमिच्छन्ति तस्य लोका यथा मम ॥ इति। कर्तुरतिशयविषये **हरिवंशे**—

प्रेतसंस्कारमात्रेण कृते बान्धवकर्मणि। आनृण्यं लौकिकं कृष्ण गताः खलु भवन्ति हि ॥ इति।

ननु विभीषणः अपुत्रस्य ज्येष्ठस्य भ्रातुर्युद्धमरणेन शुद्धस्य संस्कारकरणं धर्म इति रामवचनात्पूर्वमेव कुतोऽज्ञातवान्? राम एव वा कथं ज्ञातवानिति चेत्, नैव दोषः, विभीषणापेक्षया रामस्योत्कृष्टत्वेन प्रथमतः तदुपरि ज्ञातार्थस्य ज्ञानसंभवात्।

अत एव देवापेक्षया उत्कृष्टस्य प्रजापतेर्ज्ञानाधिक्यं प्रतिपादितं **मनुना**—

श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः। मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥
तान् प्रजापतिरित्याह माकृध्वं विषयं समम्। श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ॥ इति।

अतः ज्ञानाधिकस्य रामस्य वचनश्रवणानन्तरमेव विभीषणः ज्ञातवानित्येतद्युक्तमेव। एवंच पापिष्ठस्यापि रावणस्य शत्रुविजयेन च युद्धमरणेन निरस्तसमस्तदोषत्वेन संस्कारार्हत्वात् मरणानन्तरं वैराभावात् स्वप्रयोजनस्य निर्वृत्तत्वात् विभीषणकृत्स्नराज्यप्राप्तिहेतुत्वेन हितकरत्वाद्यशस्करत्वाच्च विभीषणं प्रति रावणस्य संस्कारः कर्तव्य इति यदुक्तं रामेण तद्युक्तमेव।

एवं धर्मार्थयुक्तं रामवचनं श्रुत्वा किंचिदप्यनुक्त्वैव रावणसंस्कारकर्मणि प्रवृत्तिमाह-

**राघवस्य वचः श्रुत्वा त्वरमाणो विभीषणः।**
**संस्कारेणानुरूपेण योजयामास रावणम् ॥**

चितां चन्दनकाष्ठानां पद्मकोशीरसंवृताम्।
ब्राह्मया संवेशयाञ्चक्रुः परार्ध्यास्तरणावृताम्॥

वर्तते वेदविहितो राज्ञो वै पश्चिमक्रतुः।
प्रचक्रू राक्षसेन्द्रस्य पितृमेधमनुत्तमम्॥

वेदिं च दक्षिणां प्राचीं यथास्थानं च पावकम्।
पृषदाज्येन पूर्णेन स्रुवं सर्वे प्रचिक्षिपु॥

पादयोः शकटं प्राहुरन्तरूर्वोरुलूखलम्।
दारुपात्राणि सर्वाणि अरणिं चोत्तरारणिम्॥

दत्त्वा तु मुसलं चान्यं यथास्थान विचक्षणः।
शास्त्रदृष्टेन विधिना महर्षिविहितेन च॥

तत्र मेध्यं पशुं हत्वा राक्षसेन्द्रस्य राक्षसाः।
परिस्तरणिकां राज्ञो घृताक्तां समवेशयन्॥

गन्धमाल्यैरलंकृत्य रावणं दीनमानसाः।
विभीषणसहायास्ते वस्त्रैश्च विविधैरपि॥

लाजैश्चावकिरन्ति स्म बाष्पपूर्णमुखास्तदा।
ददौ च पावक तस्य विधियुक्त विभीषणः॥

स्नात्वा चैवार्द्रवस्त्रेण तिलान् दूर्वाभिमिश्रितान्।
उदकेन च संमिश्रान् प्रदाय विधिपूर्वकम्॥

प्रदाय चोदक तस्य मूर्ध्ना चैनं नमस्य च।
तास्त्रियोऽनुनयामास सांत्वयित्वा पुनः पुनः॥

गम्यतामिति ताः सर्वा विविशुर्नगरं तदा।
प्रविष्टासु च सर्वासु राक्षसीषु विभीषणः॥

रामपार्श्वमुपागम्य तदातिष्ठद्विनीतवत्।

नन्वत्र रावणं संस्कृत्य विभीषणो रामपार्श्वमागत इत्यवगम्यते। अग्रिमसर्गे च रामाज्ञया लक्ष्मणो विभीषणमभिषिक्तवानिति चावगम्यते। तदेतदसंगतं, भ्रातृमरणे दशरात्राशौचिनः अकृतद्वादशाहकृत्यस्य विभीषणस्याभिषेकाधिकाराभावादिति चेन्न,

न ह्यन्नमुदकं तस्य न स्नानं नाप्यशौचकम् । हतस्य कर्तुमिच्छन्ति ..... ॥

इत्यादिवचनैर्युद्धे मृतस्य सूतकाभावस्य क्रियानपेक्षायाश्चावगमेन संस्कारसमनन्तर-मेव रामपार्श्वागमनाभिषेकयोस्संभवात् । संस्कारकरणं च कीर्त्यर्थमेवेत्येतच्च पूर्वमुक्तम् । अत एवैतच्छंकापरिहारायैव,

अभ्यषिंचत्स धर्मात्मा शुद्धात्मानं विभीषणम् ।

इति विभीषणस्य शुद्धस्यैवाभिषेकमुक्तवान् भगवान् वाल्मीकिः ।

**रामोऽपि सह सैन्येन ससुग्रीव सलक्ष्मणः ।**
**हर्षं लेभे रिपुं हत्वा वृत्रं हत्वा शतक्रतुः ॥ इति ।**

**पञ्चदशशततमे —**

दशवदनवधसमेधमानमोदमेदुरितमानसेषु विचित्रतररामरावणसमरसदर्शनसंजातहर्ष-भरमनुभूय यथायथं गतेषु सिद्धविद्याधरदेवगन्धर्वगणेषु मातलिना च रामाज्ञया देवरथे दिवं नीते रामचन्द्रो लक्ष्मणमेवमुवाच —

**विभीषणमिमं सौम्य लङ्कायामभिषेचय ।**
**अनुरक्तं च भक्तं च मम चैवोपकारकम् ॥**

अनेन स्वस्य श्रेयःप्राप्त्यनन्तरं अनुरक्तस्य भक्तस्योपकारिणः प्रथमतः श्रेयो दातव्यमिति सूचितम् । तथाच **प्राचीनाः —**

उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् । विभावयन् समृद्धीनां फलं सुहृदनुग्रहम् ॥ इति

**एष मे परमः कामो यदीमं रावणानुजम् ।**
**लङ्कायां सौम्य पश्येयमभिषिक्तं विभीषणम् ॥**

अत्र लङ्कायां विभीषणाभिषेकात् प्रतिज्ञातार्थपरिपालनस्यात्युत्कृष्टधर्मस्य, शत्रुवधा-नन्तरं कर्तव्यतत्कुलीनाभिषेकस्य च धर्मस्य लाभ इत्यभिप्रायेण 'एष मे परमः कामः' इत्युक्त्या राज्ञां प्रतिज्ञापरिपालनं, शत्रोर्वधानन्तरं तद्राज्ये तत्कुलीनाभिषेचनं च इति धर्मद्वयमपि सूचितम् ।

तत्र प्रतिज्ञापालनं प्रागुक्तं । तत्कुलीनाभिषेके **मनुः —**

जित्वा संपूजयेद्देवान् ब्राह्मणांश्चैव धार्मिकान् । प्रदद्यात्परिहारांश्च ख्यापयेदभयानि च ॥

सर्वेषां तु विदित्वैषां समासेन चिकीर्षितम् ।
स्थापयेत्तत्र तद्वंश्यं कुर्याच्च समयक्रियाम् ॥ इति ।

तदनु लक्ष्मणः प्लवगयूथपवरसमानीतेन नानानदनदीपयोधितोयेन,

**विधिना मन्त्रदृष्टेन सुहृद्गणसमावृतम् ।**
**अभ्यषिंचत्स धर्मात्मा शुद्धात्मानं विभीषणम् ॥**

तदनु लब्धराज्यो विभीषणः प्रकृतीः परिसान्त्व्य तदुपनीतानि नानाविधोपायनानि रामाय निवेदयामास ।

अथ पार्श्ववर्तिनं प्राञ्जलिमाञ्जनेयमवलोक्य —

**अब्रवीद्राघवो वाक्यं हनूमन्तं प्लवङ्गमम् ।**
**अनुमान्य महाराजं इमं सौम्य विभीषणम् ॥**

**गच्छ सौम्य पुरीं लङ्कामनुज्ञाप्य यथाविधि ।**

अनेन यो यत्राधिकृतस्तदनुज्ञयैव किञ्चित्कार्यं कर्तव्यमिति सूचितम् । तथाच **कालिदासः** — 'द्वारे नियुक्तपुरुषानुमतप्रवेशः' इति ।

**आचक्ष्व जयतां श्रेष्ठ रावणं च मया हतम् ।**
**प्रियमेतदुदाहृत्य मैथिल्यास्त्वं हरीश्वर ॥**

**प्रतिगृह्य च सन्देशं उपावर्तितुमर्हसि ।**

अनेन विजयसन्तोषो निवेदनीय इष्टजनानामिति सूचितम् । अत एव **विराटपर्वणि** उत्तरं प्रत्यर्जुनः —

गच्छन्तु त्वरिताश्चेमे गोपालाः प्रेषितास्त्वया ।
नगरे प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥ इति ।

**षोडशशततमे —**

ततो मारुतिरपि सत्वरमाविश्य नगरीं —

**ददर्श शशिना हीनां सातङ्कामिव रोहिणीम् ।**
**वृक्षमूले निरानन्दां राक्षसीभिस्समावृताम् ॥**

निभृतः प्रणतः प्रह्वः सोऽभिगम्याभिवाद्य च ।
रामस्य वचनं सर्वमाख्यातुमुपचक्रमे ॥

आर्ये जनकनन्दिनि कुशलिना सहलक्ष्मणसुहृद्वर्गेण वशीकृतलंकादुर्गेणाऽऽरचित-समुद्रसेतुसर्गेण विभीषणसात्कृतलङ्केन हततापसतपकलकेन तव शोकतिमिरशशाङ्केन नरकेसरिणा स्वामिना तव कुशलनिवेदनायाहमिह सम्प्रेषित‧ ।

वैदेहि कुशलं रामः सहसुग्रीवलक्ष्मणः ।
कुशलं त्वाह सिद्धार्थो हतशत्रुररिंदमः ॥

रावणश्च हत‧ शत्रुः लङ्का चेयं वशे स्थिता ।
विभीषणविधेयं हि लंकैश्वर्यमिदं कृतम् ॥

तदाश्वसिहि विश्वस्ता स्वगृहे परिवर्तसे ।
अयं चाभ्येति संहृष्टस्त्वद्दर्शनसमुत्सुक‧ ॥

एवमुक्ता समुत्पत्य सीता शशिनिभानना ।
प्रहर्षेणाऽवरुद्धा सा व्याजहार न किञ्चन ॥

तदन्वाञ्जनेयेन किंनिमित्तमिदमप्रतिजल्पनमिति पृष्टा सीता —

अब्रवीत्परमप्रीता हर्षगद्गदया गिरा ।
प्रियमेतदुपश्रुत्य भर्तुर्विजयसंश्रितम् ॥

प्रहर्षवशमापन्ना निर्वाक्याऽस्मि क्षणान्तरम् ।
नहि पश्यामि सदृशं चिन्तयन्ती प्लवङ्गम ॥

मत्प्रियाख्यानकस्येह तव प्रत्यभिनन्दनम् ।

अनेन हर्षातिशये प्रतिवचनं न स्फुरतीऽति सूचितम् । तथा च वनपर्वणि अर्जुनवृत्तान्तमाख्यातुं स्वर्गादागतं लोमशं प्रति धर्मपुत्र‧ —

न हर्षात्संप्रपश्यामि वाक्यस्यास्योत्तरं क्वचित् ॥ इति ।

हिरण्यं वा सुवर्णं वा रत्नानि विविधानि च ।
राज्यं वा त्रिषु लोकेषु नैतदर्हति भाषितम् ॥

तद्वचनमाकर्ण्य संतुष्टेन मारुतिना,

तवैतद्वचनं सौम्ये सारवत् स्निग्धमेव च ।
रत्नौघाद्विविधाच्चापि देवराज्याद्विशिष्यते ॥

अनेन स्वामिसत्कारः सर्वोत्कृष्ट इति सूचितम् । तथा चोद्योगे —

राजा यदा सत्कुरुते मनुष्यं सर्वान् गुणानेकगुणोतिभाति ।

इति । इत्यभिहिता सीता,

ततः शुभतरं वाक्यमुवाच पवनात्मजम् ।
अपि लक्षणसंपन्नं माधुर्यगुणभूषणम् ॥

बुद्ध्या ह्यष्टांगया युक्तं त्वमेवार्हसि भाषितुम् ।
श्लाघनीयोऽनिलस्य त्वं पुत्रः परमधार्मिकः ॥

बलं शौर्यं श्रुतं सत्त्व विक्रमो दाक्ष्यमेव च ।
तेजः क्षमा धृतिः स्थैर्य विनीतत्वं न संशयः ॥

तदनु आञ्जनेयेन रक्षणाय राक्षसराजनिक्षिप्तानां त्वदुपद्रवकारिणीनां राक्षसीनां वक्षोविक्षोभणनखविदारणकर्णनासाच्छेदनादिना त्वदाज्ञया वधं विधातुमिच्छामीति पृष्टा सीता,

उवाच धर्मसहितं हनूमन्तं यशस्विनी ।
राजसंश्रयवश्यानां कुर्वतीनां पराज्ञया ॥

विधेयानां च दासीनां कः कुप्येद्वानरोत्तम ।
भाग्यवैषम्ययोगेन पुरा दुश्चरितेन च ॥

मयैतत्प्राप्यते सर्वं स्वकृतं ह्युपभुज्यते ।
प्राप्तव्यं तु दशायोगं मयैतदिति निश्चितम् ॥

दासीनां रावणस्याहं मर्षयामीह दुर्बला ।
अयं व्याघ्रसमीपे तु पुराणो धर्मसंहितः ॥

ऋक्षेण गीतः श्लोको मे तं निबोध प्लवङ्गम ।
न परः पापमादत्ते परेषां पापकर्मणाम् ॥

समयो रक्षितव्यस्तु संतश्चारित्रभूषणाः ।
पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम ॥

कार्यं करुणमार्येण न कश्चिन्नापराध्यति ।

अनेन महात्मानः परकृतोपद्रवं स्वप्रारब्धायत्तं मन्यन्त इति सूचितम् । उपद्रवः प्रारब्धाधीन इत्यत्र प्राचीना —

सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा ।
अहं करोमीति वृथाभिमानः स्वकर्मसूत्रग्रथितो हि लोकः ॥ इति ।

लोकहिंसाविहाराणां रक्षसां कामरूपिणाम् ।
कुर्वतामपि पापानि नैव कार्यमशोभनम् ॥

तदनु हनूमता, सदृशतरमिदमुक्तवती भवती । तत्प्रसीद प्रतिसंदिश मां राघव-समीपगमनायेत्युक्ता सीता,

अब्रवीद्द्रष्टुमिच्छामि भर्तारं वानरोत्तम ।

तदाकर्ण्य मारुतिः,

हर्षयन् मैथिलीं वाक्यमुवाचेदं महाद्युतिः ।
पूर्णचन्द्राननं रामं द्रक्ष्यस्यार्ये सलक्ष्मणम् ॥

स्थितमित्रं हतामित्रं शचीव त्रिदशेश्वरम् ।
युक्ता रामस्य भवती धर्मपत्नी यशस्विनी ॥

प्रतिसंदिश मां देवि गमिष्ये यत्र राघवः ।

अनेन महापुरुषस्य धार्मिकस्य रामस्य ईदृशी धर्मशीला त्वं उचिता भार्येत्युक्त्या दम्पत्योर्धार्मिकत्वे सर्वे पुरुषार्थाः सिद्ध्यन्तीति सूचितम् । तथा च **मनुः** —

यत्रानुकूलं दाम्पत्यं त्रिवर्गस्तत्र एधते ॥ इति ।

**वनपर्वणि** यक्षप्रश्नेऽपि —

यदा धर्मश्च भार्या च परस्परवशानुगौ । तदाधर्मार्थकामानां त्रयाणामपि सङ्गमः ॥ इति

तामेवमुक्त्वा राजन्तीं सीतां साक्षादिव श्रियम् ।
आजगाम महावेगाद्धनूमान् यत्र राघवः ॥

**सप्तदशशततमे —**

तमुवाच महाप्राज्ञमभिगम्य प्लवङ्गमः । यन्निमित्तोऽयमारम्भः कर्मणां च फलोदयः ॥
तां देवीं शोकसंतप्तां मैथिलीं द्रष्टुमर्हसि । मैथिली विजयं श्रुत्वा तव हर्षमुपागमत् ॥
पूर्वकात्प्रत्ययाच्चाहमुक्तो विश्वस्तया तया । भर्तारं द्रष्टुमिच्छामि कृतार्थं सहलक्ष्मणम् ॥
इति ।

तदनु रामस्तद्वचनाकर्णनेन व्यथितहृदयः मेदिनीमेवावलोकयन् शिरस्स्नातामलंकृतामचिरादुपस्थापयेति विभीषणमाज्ञापयामास ।

तदनु विभीषणेनाऽऽवेदितरामाज्ञा सीता ,

**अस्नाता द्रष्टुमिच्छामि भर्तारं राक्षसाधिप ।**

इत्यवदत ।

अनेन विपदि भर्तृप्रवासे समागतं पतिं दृष्ट्वैव स्नानप्रसाधनादिकं कर्तव्यमिति सूचितम् । अत एव **वनपर्वणि** नलोपाख्याने नलेन वियुक्ता दमयन्ती यावन्नलदर्शनं मलिनवेषेणैव स्थितेति प्रतिपादितम् —
तथैव मलदिग्धाङ्गीं परिष्वज्य शुचिस्मिताम् । सुचिरं पुरुषव्याघ्रस्तस्थौ शोकपरिप्लुतः ॥ इति

**तस्यास्तद्वचनं श्रुत्वा प्रत्युवाच विभीषणः ।**
**यदाह रामो भर्ता ते तत्तथा कर्तुमर्हसि ॥**

**तस्य तद्वचनं श्रुत्वा मैथिली भर्तृदेवता ।**
**भर्तृभक्तिव्रता साध्वी तथेति प्रत्यभाषत ॥**

अनेन सुखापेक्षया भर्त्राज्ञापरिपालनमेव श्रेष्ठमिति सूचितम् । तथाच **वनपर्वणि** कुन्तीं प्रति पाण्डुः —

भर्ता भार्यां राजपुत्रि धर्म्यं वाऽधर्म्यमेव वा ।
यद्ब्रूयात्तत्तथा कार्यमिति धर्मविदो विदुः ॥ इति ।

**आनुशासनिके** उमामहेश्वरसंवादेऽपि —

यद्यकार्यमधर्मं वा यदि वा प्राणनाशनम् । पतिर्ब्रूयाद्दरिद्रो वा व्याधितो वा कथञ्चन ॥
आपन्नो रिपुसंस्थो वा ब्रह्मशापार्दितोऽपि वा ।
आपद्धर्माननुप्रेक्ष्य तत्कार्यमविशङ्कया ॥ इति ।

ततः सीतां शिरस्स्नातां युवतीभिरलङ्कृताम् ।
महार्हाभरणोपेतां महार्हाम्बरधारिणीम् ॥

आरोप्य शिबिकां दीप्तां परार्ध्याम्बरसंवृताम् ।
रक्षोभिर्बहुभिर्गुप्तामाजहार विभीषणः ॥

सोऽभिगम्य महात्मानं ज्ञात्वाऽपि ध्यानमास्थितम् ।
प्रणतश्च प्रहृष्टश्च प्राप्तां सीतां न्यवेदयत् ॥

तामागतामुपश्रुत्य रक्षोगृहचिरोषिताम् ।
हर्षो दैन्यं च रोषश्च त्रयं राघवमाविशत् ॥

अत्रात्यन्तदुर्गमे देशे प्रबलतरेण शत्रुणा नीता सीता तद्वधं कृत्वा पराक्रमेण आनीतेति हर्षः। मय्यनुरक्ता रावणं धिक्कृत्य एतावत्कालं दुःखेन राक्षसकृतनतर्जनादिकं सोढ्वा मदर्थे क्लेशमनुभूतवती, एना प्रति कथं परुषभाषणपरित्यागादिकं कर्तव्यमिति दैन्यं। मया विजने वने रक्षणाय स्थापितं मद्भक्तं लक्ष्मणमपि मदीयाज्ञामुल्लंघ्य परुषभाषणादिना तिरस्कृत्य रावणवशङ्गतयाऽनया प्राणसंशयितयुद्धादिकं मम संप्रापितमिति रोषः।

ततः पार्श्वगतं दृष्ट्वा सविमर्शं विचारयन् ।
विभीषणमिदं वाक्यं प्रहृष्टो राघवोऽब्रवीत् ॥

राक्षसाधिपते सौम्य नित्यं मद्विजये रत ।
वैदेही संनिकर्षं मे शीघ्रं समुपगच्छतु ॥

स तद्वचनमाज्ञाय राघवस्य विभीषणः ।
तूर्णमुत्सारणे यत्नं कारयामास सर्वतः ॥

कञ्चुकोष्णीषिणस्तत्र वेत्रझर्झरपाणयः ।
उत्सारयन्तः पुरुषाः समन्तात्परिचक्रमुः ॥

ऋक्षाणां वानराणां च राक्षसानां च सर्वशः ।
वृन्दान्युत्सार्यमाणानि दूरमुत्तस्थुस्तदा ॥

तेषामुत्सार्यमाणानां सर्वेषां ध्वनिरुत्थितः ।
वायुनोद्धर्तमानस्य सागरस्येव निस्वनः ॥

उत्सार्यमाणांस्तान् दृष्ट्वा समन्ताज्जातसंभ्रमान् ।
दाक्षिण्यात्तदमर्षाच्च वारयामास राघवः ॥

संरब्धश्चाब्रवीद्रामश्चक्षुषा प्रदहन्निव ।
विभीषणं महाप्राज्ञं सोपालम्भमिदं वचः ॥

किमर्थं मामनादृत्य क्लिश्यतेऽयं त्वया जनः ।
निवर्तयैनमुद्योगं जनोऽयं स्वजनो मम ॥

अनेन महापुरुषाः स्वल्पमपि भूताना स्वप्रयुक्तमुपद्रवं न सहन्त इति सूचितम् । तथाचोद्योगे विदुरः —
अतीव गुणसंपन्नो न जातु विनयान्वित. । सुसूक्ष्ममपि भूतानामुपमर्दमुपेक्षते ॥ इति ।

न गृहाणि न वस्त्राणि न प्राकारास्तिरस्क्रियाः ।
नेदृशा राजसत्कारा वृत्तमावरणं स्त्रियाः ॥

अनेन गृहवस्त्रतिरस्करण्याद्यावरणापेक्षया शीलमावरणमावश्यकमिति सूचितम् । तथाच वनपर्वणि नलोपाख्याने —
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः । आत्मानमात्मना सत्यो जितस्वर्गा न संशयः ॥
प्राणांश्चारित्रकवचान् धारयन्तीह सत्स्त्रिय । इति ।

व्यसनेषु न कृच्छ्रेषु न युद्धे न स्वयंवरे ।
न क्रतौ न विवाहे च दर्शनं दूष्यते स्त्रियाः ॥

सैषा युद्धं गता चैव कृच्छ्रे महति संस्थिता ।
दर्शनेऽस्या न दोषस्स्यान्मत्समीपे विशेषतः ॥

तदानय समीपं मे शीघ्रमेनां विभीषण ।
सीता पश्यतु मामेषा सुहृद्गणवृतं स्थितम् ॥

एवमुक्तस्तु रामेण सविमर्शो विभीषणः ।
रामस्योपानयत्सीतां संनिकर्षं विनीतवत् ॥

ततो लक्ष्मणसुग्रीवौ हनूमांश्च प्लवङ्गमः ।
निशम्य वाक्यं रामस्य बभूवुर्व्यथिता भृशम् ॥

कलत्रनिरपेक्षैश्च इङ्गितैरतिदारुणैः ।
अप्रीतमिव सीतायां तर्कयन्ति स्म राघवम् ॥

लज्जया त्ववलीयन्ती स्वेषु गात्रेषु मैथिली ।
विभीषणेनानुगता भर्तारं साऽभ्यवर्तत ॥

सा वस्त्रसंरुद्धमुखी लज्जया जनसंसदि ।
रुरोदासाद्य भर्तारमार्यपुत्रेति भाषिणी ॥

अनेन कुलस्त्रीणा लज्जा भूषणमिति सूचितम् । तथाच **प्राचीना** —

सलज्जा गणिका नष्टा निर्लज्जा च कुलाङ्गना ॥ इति ।

**अन्यदा** भूषणं पुंसः शमो लज्जेव योषिताम्। पराक्रमः परिभवे वैयात्य सुरतेष्विव ॥ इति

विस्मयाच्च प्रहर्षाच्च स्नेहाच्च पतिदेवता ।
उदैक्षत मुखं भर्तुः सौम्य सौम्यतरानना ॥

अत्र रावणगृहीताया मम असभावितं रामदर्शनं लब्धमिति विस्मयः । एकाकी वनगोचरोऽपि सन् इत्थं निखिलमित्रपरिवारसहितः प्रबलतरं रावणं हतवानिति हर्षः । पातिव्रत्याद्भर्तरि स्नेहः इति ।

अथ समपनुदन् मनःक्लमं सा सुचिरमदृष्टमुदीक्ष्य वै प्रियस्य ।
वदनमुदितपूर्णचन्द्रकान्तं विमलशशाङ्कनिभानना तदाऽसीत् ॥

**अष्टादशशततमे** —

तां तु पार्श्वस्थितां प्रह्वां रामः संप्रेक्ष्य मैथिलीम् ।
हृदयान्तर्गतक्रोधो व्याहर्तुमुपचक्रमे ॥

एषासि निर्जिता भद्रे शत्रून् जित्वा मया रणे ।

अत्र शत्रुं जित्वा निर्जितासीति प्रतिपादनेन केवलंप्रायो जयो न भवति परापहृत-वस्तुलाभसहित एव जयो जय इति सूचितम् । अत एव वस्तुलाभसहितमेव जयं जयत्वे-नोक्त्वा प्रेषितवान् **विराटपर्वणि** उत्तरः —

आचक्षध्वं विजयं पार्थिवस्य भग्नाः परे विजिताश्चापि गावः । इति ।

पौरुषाद्यदनुष्ठेयं तदेतदुपपादितम् ।

अनेन परैरपहृतं वस्तु क्षत्रियेण पराक्रम्य जैतव्यमित्युक्तम् । अत एव परापहृतं राज्यं विक्रमेण संपादयेति **उद्योगे** पाण्डवं प्रत्युक्तवती कुन्ती —

क्षत्रियोऽसि क्षतात्त्राता बाहुवीर्योपजीविता । पित्र्यमंशं महाबाहो निमग्नं पुनरुद्धर ॥

इति । **गदापर्वण्यपि** धर्मपुत्रं प्रति भीम —

यस्तु कर्ताऽस्य वैरस्य निकृत्या निकृतप्रिय । सोयं वै निहतः शेते पृथिव्या पृथिवीपते ॥
सेयं रत्नसमाकीर्णा मही सवनपर्वता । उपावृत्ता महाराज त्वामद्य निहतद्विषम् ॥ इति ।

**गतोऽस्म्यन्तममर्षस्य धर्षणां परिमार्जता ।**
**अवमानश्च शत्रुश्च मया युगपदुद्धृतौ ॥**

अनेन क्षत्रियाणां शत्रुभिरवमतिप्रसक्तौ तद्धननेन स्वावमतिः परिहर्तव्येति सूचितम्। अत एव भार्याया केशग्रहणादिनाऽवमति कृतवतो दुश्शासनस्य हननं भीमसेनेन स्वावमतिपरिहाराय कृतमिति प्रतिपादितं **कर्णपर्वणि** —

स्मृत्वा च केशग्रहणं च देव्या वस्त्रापहारं च रजस्वलायाः ।
अनागसो भर्तृपराङ्मुखाया दुःखानि दत्तान्यपि विप्रचिन्त्य ॥

असिं समुद्यम्य सितं सुधारं कण्ठं पदाक्रम्य च वेपमानम् ।
ततो निपात्यास्य शिरोऽपहृत्य तेनासिना तव पुत्रस्य राजन् ॥

तदनु कृष्णार्जुनौ प्रति भीमः —

दुःशासने यद्रणे संश्रुतं मे तद्वै सत्यं कृतमद्येह वीरौ ।
अद्यैव दास्याम्यपरं द्वितीयं दुर्योधनं यज्ञपशुं विशस्य ॥
शिरो मृदित्वा च पदा दुरात्मनः शान्तिं लप्स्ये कौरवाणां समक्षम् ॥ इति।

**अद्य मे पौरुषं दृष्टमद्य मे सफलः श्रमः ।**
**अद्य तीर्णप्रतिज्ञत्वात्प्रभवामीह चात्मनः ॥**

अनेन दुस्तरप्रतिज्ञानिबर्हणानन्तरं अर्जुनस्य श्लाघनं कृष्णेन कृतमिति प्रतिपादितं **द्रोणपर्वणि** –

ततो राजन् हृषीकेशः संग्रामशिरसि स्थितम् । तीर्णप्रतिज्ञं बीभत्सुं परिष्वज्येदमब्रवीत् ॥

दिष्ट्या संपादिता जिष्णो प्रतिज्ञा महती त्वया ॥

दिष्ट्या च निहतः पापो वृद्धक्षत्रः सहात्मजः । धार्तराष्ट्रबलं प्राप्य देवसेनाऽपि भारत ॥

सीदेत समरे जिष्णो नात्र कार्या विचारणा।
न तं पश्यामि लोकेषु चिन्तयन् पुरुषं क्वचित् ॥

त्वदृते पुरुषव्याघ्र यदेतद्योधयेद्बलम्। न च वीर्यं बलं चैव रुद्रशक्रान्तकोपमम् ॥

नेदृशं शक्नुयात्कश्चिद्रणे कर्तुं पराक्रमम्। यादृशं कृतवानद्य त्वमेकः शत्रुतापनः ॥

एवमेव हते कर्णे सानुबन्धे दुरात्मनि। वर्धयिष्यामि भूयस्त्वा विजितारिं हतद्विषम् ॥ इति

**या त्वं विरहिता नीता चलचित्तेन रक्षसा।**
**दैवसंपादितो दोषो मानुषेण मया जितः ॥**

अनेन दैवात्प्राप्तं दोषं पौरुषेण परिहरेदिति सूचितम्। तथाचायोध्याकाण्डे रामं प्रति लक्ष्मणः —

दैवं पुरुषकारेण यः समर्थः प्रबाधितुम्। न दैवेन विपन्नार्थः पुरुषस्सोऽवसीदति ॥

वीराः संभावितात्मानो न दैवं पर्युपासते ॥ इति।

**संप्राप्तमवमानं यस्तेजसा न प्रमार्जति।**
**कस्तस्य पुरुषार्थोऽस्ति पुरुषस्याल्पतेजसः ॥**

अनेन परकृतावमतिं पौरुषेणाऽप्रतिकुर्वतो जननमेव व्यर्थमित्युक्तम्। तथाच **प्राचीनाः** –

माजीवन्यः परावज्ञादुःखदग्धोऽपि जीवति। तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥ इति

**लङ्घनं च समुद्रस्य लङ्कायाश्चावमर्दनम्।**
**सफलं तस्य तच्छ्लाघ्यमद्य कर्म हनूमतः ॥**

**युद्धे विक्रमतश्चैव हितं मन्त्रयतश्च मे।**
**सुग्रीवस्य ससैन्यस्य सफलोऽद्य परिश्रमः ॥**

अनेन कार्यसाधकानां गुणास्समये समये स्तोतव्याः अन्यथा स्वस्य कृतघ्नतादोषो भवेदिति सूचितम्।

तथाच **द्रोणपर्वणि** घटोत्कचगुणस्तुतिं कृतवान् कृष्णं प्रति धर्मः –

विदितो मे महाबाहो धर्माणां परमा गतिः। ब्रह्महत्त्यासमं तस्य यः कृतं नावबुध्यते ॥

मदर्थं दुष्करं कर्म कृतं तेन महात्मना। भक्तश्च मे महाबाहो प्रियोऽस्याऽहं प्रियश्च मे ॥

गन्धमादनयात्रायां दुर्गेभ्यश्चापि तारिता ।
पाञ्चाली च परिश्रान्ता पृष्ठेनोद्वहताऽऽत्मना ॥ इति ।

इत्येवं ब्रुवतस्तस्य सीता रामस्य तद्वचः ।
मृगीवोत्फुल्लनयना बभूवाश्रुपरिप्लुता ॥

पश्यतस्तां तु रामस्य भूयः क्रोधो व्यवर्धत ।
स बध्वा भ्रुकुटीं वक्त्रे तिर्यक्प्रेक्षितलोचनः ॥

अब्रवीत्परुषं सीतां मध्ये वानररक्षसाम् ।
यत्कर्तव्यं मनुष्येण धर्षणां परिमार्जता ॥

तत्कृतं सकलं सीते शत्रुहस्तादमर्षिणा ।
निर्जिता जीवलोकस्य तपसा भावितात्मना ॥

अगस्त्येन दुराधर्षा मुनिना दक्षिणेव दिक् ।

अत्र इयता प्रबन्धेन प्रतिपादितः सर्वोऽपि मदर्थ इत्येव सीताया बुद्धिर्भवेत्; सा माभूदित्याह—

विदितश्चास्तु भद्रं ते योऽयं रणपरिश्रमः ।
स तीर्णस्सुहृदां वीर्यान्न त्वदर्थं मया कृतः ॥

रक्षता तु मया वृत्तमपवादं च सर्वशः ।
प्रख्यातस्यात्मवंशस्य न्यङ्गं च परिरक्षता ॥

निर्जितासि मया सीते शत्रुं जित्वा महारणे ।

अत्र सुहृदां प्रभावेण कृतो रणपरिश्रमः स्वस्यापवादपरिहाराय कुलकलंकपरिहाराय स्ववृत्तरक्षणाय च कृत' नतु त्वदर्थमित्युक्त्या महतामुत्कृष्टवस्तुलाभापेक्षया अकीर्तिपरिहारः कीर्तिसंपादनं चोत्कृष्टमिति सूचितम् ।' तथा चोद्योगे कीर्तिरधिकेत्यस्य—

यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम् ।
राशिवर्धनमात्रः स नैव स्त्री न पुनः पुमान् ॥

श्रुतेन तपसा चापि श्रिया वा विक्रमेण वा ।
जनान्योऽभिभवत्यन्यान् कर्मणा हि स वै पुमान् ॥ इति ।

दाने तपसि शौर्ये वा यस्य नोच्चारितं यशः । विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥

मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान्। ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम् ॥
इति च।

प्राप्तचारित्रसंदेहा मम प्रतिमुखे स्थिता।
दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढम् ॥

तद्गच्छ ह्यभ्यनुज्ञाता यथेष्टं जनकात्मजे।
एता दश दिशो भद्रे कार्यमस्ति न मे त्वया ॥

नन्वत्र निष्ठुरभाषणपूर्वकं सीतायाः परित्यागरूपाप्रियाचरणं कृतवान् राम इत्यवगम्यते, तदसंगतं, धर्मादिमूलभूताया भार्याया अप्रियाचरणस्यायुक्तत्वात्। तथा **चादिपर्वणि**—
सुसंरब्धोऽपि रामाणां न कुर्यादप्रियं नरः। रतिं प्रीतिं च धर्मं च तास्वायत्तमवेक्ष्य हि ॥
इति चेत्, न, सुसंरब्धोऽपि रामाणामिति वचनस्य असंदिग्धचारित्रस्त्रीविषयत्वात्। चारित्रसंदेहे तु परित्याग उचित एव। अत एव चारित्रसंदेहेन दुष्यन्तेन शकुन्तला-परित्यागः कृत इति प्रतिपादितमादिपर्वणि —
अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे। विशेषतो मत्सकाशे दुष्टतापसि गम्यताम् ॥ इति।

कः पुमान् हि कुले जातः स्त्रियं परगृहोषिताम्।
तेजस्वी पुनरादद्यात्सुहृल्लेखेन चेतसा ॥

अनेन परगृहोषिता स्त्री महाकुलप्रसूतेन न ग्राह्येति कथनात् स्त्रीणां परगृहवासोऽनुचित इति सूचितम्। तथा च **प्राचीनाः** कुलस्त्रीमधिकृत्य—
पदन्यासो गेहाद्बहिरहिफणारोपणसमो वचो लोकालभ्यं कृपणधनतुल्यं मृगदृशः।
निजावासादन्यद्भवनमपरद्वीपतुलितं पुमान् यः कान्ताद्विधुरिव चतुर्थीसमुदितः ॥ इति।

सुवृत्तमसुवृत्तं वाप्यहं त्वामद्य मैथिलि।
नोत्सहे परिभोगाय श्वावलीढं हविर्यथा ॥

अनेन श्वावलीढं न भोक्तव्यमिति सूचितम्। तथा **चापस्तंबः** अभोज्यमित्युपक्रम्य पदा वोपहतं सिचा वा शुना वा इति।

रावणांकपरिभ्रष्टां दृष्टां दुष्टेन चक्षुषा।
कथं त्वां पुनरादद्यां कुलं व्यपदिशन् महत् ॥

अनेन परगृहवासः स्त्रीणां चारित्रनाशक इति सूचितम् । तथा च **मनुः** —

पानं दुर्जनसंसर्गः पत्याच विरहोऽटनम् । स्वप्नोऽन्यगेहवासश्च नारीणा दूषणानिषट् ॥ इति

**तदर्थं निर्जितामेवं यशः प्रत्याहृतं मया ।**
**नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामिति ॥**

**इति प्रत्याहृतं भद्रे मयैतत्कृतबुद्धिना ।**
**लक्ष्मणे भरते वा त्वं कुरु बुद्धिं यथासुखम् ॥**

**सुग्रीवे वानरेन्द्रे वा राक्षसेन्द्रे विभीषणे ।**
**निवेशय मनः सीते यथावत्सुखमात्मनः ॥**

**न हि त्वां रावणो दृष्टवा दिव्यरूपां मनोरमाम् ।**
**मर्षयेतचिरं सीते स्वगृहे परिवर्तिनीम् ॥**

अनेन दुष्टः स्वसनिहितां सुन्दरीं पतिव्रतामपि दृष्ट्वा मोहं प्राप्नोतीति सूचितं तथा च **विराटपर्वणि** सैरंध्रीं प्रति सुदेष्णा —

मूर्ध्नि त्वां वासयेयं वै संशयो मे न विद्यते ।
न चेदिच्छति राजा त्वा गच्छेत् सर्वेऽप्यचेतसा ॥

स्त्रियो राजकुलेयाश्च याश्चेमा मम वेश्मनि ।
प्रसक्तास्त्वां निरीक्षंते पुमांसं कं न मोहये. ॥

वृक्षांश्चावस्थितान् पश्य य इमे मम वेश्मनि ।
तेऽपि त्वां संनमन्तीव पुमांसं कं न मोहयेः ॥

राजा विराटः सुश्रोणि दृष्ट्वा वपुरमानुषम् । विहाय मां वरारोहे गच्छेत्सर्वेण चेतसा ॥

राजवेश्मनि ते सुभ्रु गेहे तु स्यात्तथा मम । यथाच कर्कटी गर्भमाधत्ते मृत्युमात्मनः ॥

तथाविधमहं मन्ये वासं तव शुचिस्मिते ॥ इति ।

**ततः प्रियार्हश्रवणा तदप्रियं प्रियादुपश्रुत्य चिरस्य मैथिली ।**
**मुमोच बाष्पं सुभृशं प्रवेपिता गजेन्द्रहस्ताभिहतेव वल्लकी ॥**

एकोनविंशतिशततमे —

तदनु अश्रुनपूर्वं पतिपरुषवचनमसहमाना वैदेही वाक्च्छल्यैस्सशल्यामङ्गयष्टिमभि-धून्वती परिमृज्य च शोकमेव बाष्प सगद्गदमेवमुवाच —

किं मामसदृशं वाक्यमीदृशं श्रोत्रदारुणम् ।
रूक्षं श्रावयसे वीर प्राकृतः प्राकृतामिव ॥

अत्र प्राकृत' प्राकृतामिव अशदृशं रूक्षं वदसीत्युक्तया सतीषु रूक्षं न भाषेते-त्युक्तम् । तथा चादिपर्वणि शकुन्तला—

सुसंक्रुद्धोऽपि रामाणां न कुर्यादप्रिय नरः।
रतिंप्रीतिं च धर्मं च तास्वायत्तमवेक्ष्य हि ॥ इति ।

न तथास्मि महाबाहो यथा त्वमवगच्छसि ।
प्रत्ययं गच्छ मे स्वेन चारित्रेणैव ते शपे ॥

पृथक्स्त्रीणां प्रचारेण चारित्रं परिशंकसे ।
परित्यजेमां शङ्कां तु यदि तेहं परीक्षिता ॥

यद्यहं गात्रसंस्पर्शं गतास्मि विवशा प्रभो ।
कामकारो न मे तत्र दैवं तत्रापराध्यति ॥

मदधीन तु यत्तन्मे हृदयं त्वयि वर्तते ।
पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरा ॥

अत्र मददीनं हृदयं त्वय्येव स्थितं गात्रं तु पराधीनमन्येन बलात्कारेण स्पृष्टं तत्र मम को वाऽपराध इत्युक्तया अनुरागपूर्वतया परपुरुषदर्शनस्पर्शनादिकं दोषाधायकं नतु याद्दच्छिकं तथा प्राप्तमिति सूचितम् । अत एवानुरागपूर्वकं दर्शनं स्पर्शनं च निषेधति **गौतमः** —''स्त्रीप्रेक्षणालंभने मैथुनशंकाया' इति

**वासिष्ठेऽपि —**

मनसैव कृतं राम न शरीरकृतं कृतम् । येनैवालिंग्यते कान्ता तेनैवालिंग्यते सुता ॥ इति।

अत एव अनुरागेण द्रौपदीस्पर्शनात् कीचकः पापिष्ठोः जातः, अनुरागाभावेन च द्रौपद्याः दोषो न कश्चित्प्रतिपादित इति ।

**सह संवृद्धभावाच्च संसर्गेण च मानद ।**
**यद्यहं ते न विज्ञाता हता तेनास्मि शाश्वतम् ॥**

अनेन चिरसहवासेनैव शीलं ज्ञानऽयमिति सूचितम् । तथा च **भारते**—

शीलं संवसताज्ञेयं तच्च कालेन भूयसा । इति

**प्रेषितस्ते यदा वीरो हनूमानवलोककः ।**
**लङ्कास्थाऽह त्वया वीर किं त्वया न विसर्जिता ॥**

**प्रत्यक्षं वानरेन्द्रस्य तद्वाक्यसमनन्तरम् ।**
**त्वया संत्यक्तया वीर त्यक्त स्याज्जीवितं मया ॥**

**न वृथा ते श्रमोऽयं स्यात्संशये न्यस्य जीवितम् ।**
**सुहृज्जनपरिक्लेशो न चाय निष्फलस्तव ॥**

अनेन बह्वायासं कर्म फलनिश्चये सत्येव कुर्वन्ति नतु संदेहादिति सूचितम् । अत एव शास्त्रप्रामाण्य निश्चयेन फलं स्वर्गादिकं निश्चित्य यागादौ प्रवृत्तिं वदन्ति सर्वतांत्रिकाः उक्तंच **भट्टपादैः**—

सर्वस्यापि हि शास्त्रस्य कर्मणो वाऽपि कस्यचित् । यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ॥

अथातो धर्मजिज्ञासासूत्रमाद्यमिदं कृतम् ।
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥ इति ।

**त्वया तु नरशार्दूल क्रोधमेवानुवर्तता ।**
**लघुनेव मनुष्येण स्त्रीत्वमेव पुरस्कृतम् ॥**

अत्र क्रोधमेवानुवर्तता त्वया मदीयं चारित्रं न विचारितं किंतु सामान्येन मयि दोषं स्थापयसीत्युक्त्या क्रुद्धः सदसद्विचारणासमर्थ इति स्त्रियोजात्या दुष्टा भवन्तीति सूचितम् । तथाच **वनपर्वणि**— द्रौपदीं प्रति युधिष्ठिरः—

वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित् ।
न कार्यमस्ति क्रुद्धस्य नाकार्यं विद्यते तथा ॥ इति ।

जात्या स्त्रियो दुष्टा इत्येतच्च **आनुशासनिके** नारदं प्रतिपञ्चचूडा—

न स्त्रीभ्यः किञ्चिदन्यद्वै पापीयस्तरमस्ति वै ।
स्त्रियो हि मूलं दोषाणां तथा त्वमपि वेत्थ हि ॥ इति ।

**अपदेशेन जनकादुत्पत्तिर्वसुधातलात् ।**
**मम वृत्तं च वृत्तज्ञ बहु ते न पुरस्कृतम् ॥**

अनेन उत्कृष्टजनिमतां दुष्टभावो न कदापि भवतीति सूचितम् । अतएवोद्योगे भगवद्यानें धृतराष्ट्रं प्रति कुरुकुलप्रभवस्य तवेदमनुचितमिति भगवान्—

इदं ह्यद्य कुलं श्रेष्ठं सर्वराजसु भारत । श्रुतवृत्तोपसंपन्नं सर्वैः समुदितं गुणैः ॥
कृपाऽनुकम्पा कारुण्यमानृशंस्यं च भारत । तथार्जवं क्षमा सत्यं कुरुष्वेतद्विभाव्यते ॥
तस्मिन्नेवंविधे राजन् कुले महति तिष्ठति । त्वन्निमित्तं विशेषेण नेह युक्तमसांप्रतम् ॥ इति

**न प्रमाणीकृतः पाणिर्बाल्ये बाल्येन पीडितः ।**
**मम भक्तिश्च शीलं च सर्वं ते पृष्ठतः कृतम् ॥**

अत्र पाणिग्रहणं मम भक्तिः शीलं चेत्यखिलमपि न पुरस्कृतमित्युक्त्या विनीतायाः अदुष्टायाः भार्यायाः परित्यागे दोषोऽस्तीति सूचितम् । तथाच **दक्षः**—

अदुष्टां विनतां भार्यां यौवने यः परित्यजेत् ।
सप्तजन्म भवेत्स्त्रीत्वं वैधव्यं च पुनः पुनः ॥ इति ।

**एवं ब्रुवाणा रुदती बाष्पगद्गदभाषिणी ।**
**अब्रवील्लक्ष्मणं सीता दीनं ध्यानपरं स्थितम् ॥**

**चितां मे कुरु सौमित्रे व्यसनस्यास्य भेषजम् ।**
**मिथ्यापवादोपहता नाहं जीवितुमुत्सहे ॥**

अत्र सकलजनमान्यया सीतया नाहमकीर्तिसहिता जीवामि अचिराच्चितां विरचय्याग्निप्रवेशायेत्युक्त्या लोकमान्यस्यापकीर्तिर्मरणादधिकेति सूचितम् । तथा च **गीतायां**—

संभावितस्य चाकीर्तिर्मरणादतिरिच्यते इति ।

**अप्रीतस्य गुणैर्भर्तुस्त्यक्ताया जनसंसदि ।**
**या क्षमा मे गतिर्गन्तुं प्रवेक्ष्ये हव्यवाहनम् ॥**

**एवमुक्त स वैदेह्या लक्ष्मणः परवीरहा ।**
**अमर्षवशमापन्नो राघवाननमैक्षत ॥**

**स विज्ञाय तु तच्छन्दं रामस्याकारसूचितम् ।**
**चितां चकार सौमित्रिर्मते रामस्य वीर्यवान् ॥**

अधोमुखं ततो रामं शनैः कृत्वा प्रदक्षिणम् ।
उपासर्पत वैदेही दीप्यमानं हुताशनम् ॥

प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ।
बद्धांजलिपुटा चेदमुवाचाग्निसमीपतः ॥

यथा मे हृदयं नित्यं नापसर्पति राघवात् ।
तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥

यथा मां शुद्धचारित्रां दुष्टां जानाति राघव ।
तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥

आदित्यो भगवान् वायुर्दिशश्चन्द्रस्तथैव च ।
अहश्चापि तथा संध्ये रात्रिश्च पृथिवी तथा ॥

यथान्येपि विजानन्ति तथा चारित्रभूषिताम् ।
तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥

एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम् ।
विवेश ज्वलनं दीप्तं निस्संगेनांऽतरात्मना ॥

अनेन सकलदेवतासाक्षिकतयैव शपथः कर्तव्य इति सूचितम् । तथाच **याज्ञवल्कयः —**

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापोहृदयं मनश्च ।
अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥

एह्येहि भगवन् धर्म अस्मिन् दिव्ये समाविश ।
सहितो लोकपालैश्च स्वादित्यमरुत्स्वद्गणैः ॥

त्वमग्नेसर्वभूतानामन्तश्चरति पावक । साक्षीव पुण्यपापेभ्यो ब्रूहि सत्यं करे मम ।
त्वं मुखं सर्वदेवाना त्वं मुखं ब्रह्मवादिनाम् । जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम् ॥
पापं पुनासि वै यस्मात् तस्मात्पावक उच्यते । पापेषु दर्शयात्मानं अर्चिष्मान् भव पावक ॥
अथवा शुद्धभावेषु शीतो भव हुताशन । त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ॥
त्वमग्ने सर्वं जानीषे न विदुर्यानि मानुषाः । व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ॥

तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि । इति ॥

वनपर्वणि नलोपाख्यानेऽपि—

न मामर्हसि कल्याण दोषेण परिशंकितुम । य संचरति लोकेस्मिन् भूतसाक्षी सदागतिः ॥
एष मुंचतु मे प्राणान् यदि पाप चराम्यहम् । तथा चरति तिग्मांशुः परेण भुवनं सदा ॥
स मुंचतु मे प्राणान् यदि पापं चराम्यहम् । यः संचरति लोकेस्मिन्नन्तश्चरति साक्षिवत् ॥
स मुंचतु मे प्राणान् यदि पापं चराम्यहन् । एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्तिवै ॥
ते ब्रुवन्तु यथातथ्यं एते वाद्य त्यजन्तु माम् ॥ इति ।

जनस्स महांस्तत्र बालवृद्धसमाकुलः ।
ददर्श मैथिलीं तत्र प्रविशन्तीं हुताशनम् ॥

सा तप्तनवहेमाभा तप्तकाञ्चनभूषणा ।
पपात ज्वलनं दीप्तं सर्वलोकस्य संनिधौ ।
ददृशुस्तां महाभागां प्रविशन्तीं हुताशनम् ॥

सीतां कृत्स्नास्त्रयो लोका पुण्यामाज्याहुतीमिव ।
प्रचुक्रुशुस्स्त्रियस्सर्वास्तां दृष्ट्वा हव्यवाहने ॥

पतन्तीं संस्कृतां मन्त्रैर्वसोर्धारामिवाध्वरे ।
ददृशुस्तां ततो लोका देवगन्धर्वदानवाः ॥

शप्तां पतन्तीं निरये त्रिदिवाद्देवतामिव ।
तस्यामग्निं विशन्त्यां तु हाहेति विपुलस्स्वनः ॥

रक्षसां वानराणां च संबभूवाऽद्भुतोपमः ।

विंशतिशततमे —

ततो हि दुर्मना रामः श्रुत्वैव वदतां गिरः ।
दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः ॥

अत्र रावणगृहोषितायास्सीतायाः असंशोध्य ग्रहणे अपवादो भवेदिति तत्परिहारायाग्निप्रवेशोऽनुमते तत्रापि अपवादो मम आगत इति रामः क्लेशं कृतवानिति प्रतिपादनात् अविचारेणापि लोकैराहितोऽपवादो निंदितः परिहर्तव्य इति सूचितम् । अत एव कृष्णेन मिथ्याभिशापोऽपि परिहृत इति प्रतिपादितं हरिवंशे —

वासुदेवस्तु निर्जित्य जाम्बवन्तं महाबलम्। मणिं स्यमन्तकं चैव जग्राहात्मविशुद्धये॥
एवं स मणिमाहृत्य विशोध्यात्मानमच्युतः। ददौ सत्राजिते तं वै सर्वसात्वतसंसदि॥

एवं मिथ्याभिशस्तेन कृष्णेनामित्रघातिना।
आत्मा विशोधितः पापाद्विनिर्जित्य स्यमतकम्॥ इति।

ततो वैश्रवणो राजा यमश्चामित्रकर्शन।
सहस्राक्षो महेन्द्रश्च वरुणश्च परन्तप॥

षडर्धनयनः श्रीमान् महादेवो वृषध्वजः।
कर्ता सर्वस्य लोकस्य ब्रह्मा ब्रह्मविदां वरः॥

एते सर्वे समागम्य विमानैः सूर्यसंनिभैः।
आगम्य नगरीं लङ्कामभिजग्मुश्च राघवम्॥

ततः सहस्राभरणान् प्रगृह्य विपुलान् भुजान्।
अब्रुवन् त्रिदशश्रेष्ठाः प्राञ्जलिं राघवं स्थितम्॥

कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानवतां वरः।
उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने।

अत्र सीता शुद्धा वा न वेति संशयमुच्छेत्तुं सर्वे देवाः समागता इत्यवगमात् महापुरुषाणां दुर्निवारसंशयप्राप्तौ देवा एव निवारयन्तीति सूचितम्। अत एव दमयन्तीचारित्रसंशयं वायुः परिहृतवानिति प्रतिपादितं वनपर्वणि —

एवमुक्ते ततो वायुरन्तरिक्षादभाषत। नैषा कृतवती पापं नल सत्यं ब्रवीमि ते॥ इति।

कथं देवगणश्रेष्ठमात्मानं नावबुध्यसे।
ऋतधामा वसुः पूर्वं वसूनां त्वं प्रजापतिः॥

त्वं त्रयाणां हि लोकानामादिकर्ता स्वयंप्रभुः।
रुद्राणामष्टमो रुद्रः साध्यानामपि पञ्चमः॥

अश्विनौ चापि ते कर्णौ चन्द्रसूर्यौ च चक्षुषी।
अन्ते चादौ च लोकानां दृश्यसे त्वं परन्तप॥

उपेक्षसे च वैदेहीं मनुष्यः प्राकृतो यथा।

अत्र सर्वैरपि देवैस्समागत्य सर्वात्मकेन सर्वज्ञेन त्वया सीता शुद्धेति ज्ञातमेव। एवंसति किमित्युपेक्षस इति स्वरूपोद्बोधनेन कथनात् पूज्यं प्रति इदमित्थं कुरु इति न नियोक्तव्यं किंतु स्वरूपोद्बोधनादिना बहुमत्यैव वक्तव्यमिति सूचितम्। तथा **चापस्तबः**— 'नामधेयग्रहणप्रेषणानीति गुरोर्वर्जयेत्' इति।

> **इत्युक्तो लोकपालैस्तैस्स्वामी लोकस्य राघवः।**
> **अब्रवीत्त्रिदशश्रेष्ठान् रामो धर्मभृतां वरः॥**
>
> **आत्मानं मानुषं मन्ये रामं दशरथात्मजम्।**
> **योऽहं यस्य यतश्चाहं भगवांस्तद्ब्रवीतु मे॥**

अत्र देवैः परमात्मस्वरूपे बोधितेऽपि पुनरपि रामेण स्वस्वरूपप्रश्नकरणात् देहाभिमानवतां मनुष्यशरीरवतां आपाततः स्वरूपप्रतिपादनमात्रेण अज्ञाननिवृत्तिर्नभवतीति सूचितम्।

अत एव आत्मस्वरूपं श्रुतवतोऽपि श्वेतकेतोर्भूय एव मा भगवान्विज्ञापयत्विति पुनः पुनः प्रश्नः **छांदोग्ये** प्रसिद्धः। अत एव एतत्त्वेव ते भूयोनुव्याख्यास्यामि वसापराणि द्वात्रिंशतं वर्षाणीत्यादिना प्रजापतिना बहुधा उपदेशः कृत इत्यवगम्यते। अत एव निदाघस्यापि ऋभुणा पुनः पुनरुपदेशः कृत इत्यवगम्यते **विष्णुपुराणे** पराशरः—

इत्युक्ते मौनिनं भूयश्चिंतयानं महीपतिम्। प्रत्युवाचाथ विप्रोऽसावद्वैतांतर्गतां कथाम्॥

**ब्राह्मणः**—

श्रूयतां नृपशार्दूल यद्गीतं ऋभुणा पुरा। अवबोधं जनयता निदाघस्य द्विजन्मनः॥
ऋभुर्नामाऽभवत्पुत्रो ब्रह्मणः परमेष्ठिनः। विज्ञाततत्त्वसद्भावो निसर्गादेव भूपते॥
तस्य शिष्यो निदाघोऽभूत्पुलस्त्यतनयः पुरा। प्रादादशेषविज्ञानं तमस्मै परमं मुदा॥
अवाप्तज्ञानतंत्रस्य सीदद्वैतभावनां। स ऋभुस्तर्कयामास निदाघस्य नरेश्वर।
देविकायास्तटे वीरनगरं नाम वै पुरम्। समृद्धमतिरम्यं च पुलस्त्येन निवेशितम्॥
रम्योपवनपर्यन्ते स तस्मिन् पार्थिवोत्तम। निदाघो नाम योगज्ञ ऋभुशिष्योऽवसत्पुरा॥
दिव्ये वर्षसहस्रेऽथ समतीते तु तत्पुरम्। जगाम स ऋभुश्शिष्यं निदाघमवलोककः॥
स तस्य वैश्वदेवान्ते द्वारालोकनगोचरे। स्थितस्तेन गृहीतार्घ्यो निजवेश्म प्रवेशितः॥
प्रक्षालितांघ्रिपाणि तु कृतासनपरिग्रहम्। उवाच स द्विजश्रेष्ठ भुज्यतामिति चादरम्॥

ऋभुरुवाच —

भो विप्रवर्य भोक्तव्यं यदन्नं भवतो गृहे । तत्कथ्यतां कदन्नेषु न प्रीतिस्सततं मम ॥

निदाघः —

सक्तुयावकपाक्यानामपूपानां च मे गृहे । यद्रोचते द्विजश्रेष्ठ तत्तद्भुंक्ष्व यदृच्छया ॥

ऋभुः —

कदन्नानि द्विजेतानि मृष्टमन्नं प्रयच्छ मे । संयावपायसादीनि द्रप्सफेनिलवन्ति च ॥

निदाघः —

हेहे शालिनि मद्गेहे यत्किञ्चिदतिशोभनम् । भक्षोपसाधनं मृष्टं तेनास्यान्नं प्रसाधय ॥

इत्युक्ता तेन सा पत्नी मृष्टमन्नं द्विजस्य यत् । प्रसाधितवती तद्वै भर्तुर्वचनगौरवात् ॥

तद्भुक्तवन्तमिच्छातो मृष्टमन्नं महामुनिम् । निदाघ प्राह भूपाल प्रश्रयावनतस्स्थितः ॥

अपि ते परमा तृप्तिरुत्पन्ना तुष्टिरेव च । अपि ते मानस स्वस्थमाहारेण कृतं द्विज ॥

क्व निवासो भवान् विप्र क्व वा गन्तुं समुद्यतः ।
आगम्यते च भवता यतस्तच्च द्विजोच्यताम् ॥

ऋभुरुवाच—

क्षुद्यस्य तस्य भुक्तेऽन्ने तृप्तिर्ब्राह्मण जायते । न मे क्षुद्भवत्तृप्ति. कस्मान्मां द्विज पृच्छसि ॥

वह्निना पार्थिवे धातौ क्षपिते क्षुत्समुद्भवः । भवत्यंभसि च क्षीणे नृणा तृष्णा च जायते ॥

क्षुत्तृष्णे देहधर्माख्ये न ममैते यतो द्विज । ततः क्षुत्सभवाभावात्तृप्तिरस्त्येव मे सदा ॥

मनसस्स्वस्थता तुष्टिश्चित्तधर्मानिमान् द्विज । मन्यसे यस्य तत्पृच्छ पुमानेभिर्न युज्यते ॥

क्व निवासस्तथेत्युक्तं क्व गन्तासीति यत्त्वया । कुतश्चागम्यतेत्यत्र त्रितयेऽपि निबोध मे ॥

पुमान् सर्वगतो व्यापी आकाशवदसंशयः । कुतः कुत्र क्व गन्तासीत्येतदप्यर्थवत्कथम् ॥

सोऽहं न गन्ता नागन्ता नैकदेशनिकेतनः । त्वं चान्ये च न च त्वं च नान्येऽन्ये नाहमप्यहम् ॥

मृण्मयं हि गृहं यद्वन्मृदालिप्तं स्थिरं भवेत् । पार्थिवोऽयं तथा देहः पार्थिवैः परमाणुभिः ॥

यवगोधूममुद्गादिघृततैलं पयो दधि । गुडाः फलादीनि तथा पार्थिवाः परमाणवः ॥

तदेतद्भवता ज्ञात्वा मृष्टामृष्टविचारि यत् । तन्मनः समतालंबि कार्यं साम्यं हि मुक्तये ॥

ब्राह्मणः —

इत्याकर्ण्य वचस्तस्य परमार्थाश्रितं नृप । प्रणिपत्य महाभागो निदाघो वाक्यमब्रवीत् ॥

प्रसीद मद्धितार्थाय कथ्यतां यस्त्वमागतः । नष्टो मोहस्तवाकर्ण्य वचांस्येतानि मे द्विज ॥

ऋभुरुवाच—

ऋभुरस्मि तवाचार्य प्रज्ञादानाय ते द्विज । इहागतोऽहं यास्यामि परमार्थस्तवोदितः ॥

एवमेकमिदं विद्धि न भेदी सकलं जगत् । वासुदेवाभिधानस्य स्वरूपं परमात्मनः ॥

ब्राह्मणः —

तथेत्युक्तो निदाघेन प्रणिपातपुरस्सरम् । पूजितः परया भक्त्या इच्छात प्रययावृभु ॥

पराशरः —

ऋभुर्वर्षसहस्रे तु समतीते नरेश्वर । निदाघज्ञानदानाय तदेव नगरं ययौ ॥

नगरस्य बहिः सोऽपि निदाघ ददृशे मुनि. । महाजनपरीवारे पुरं विशति पार्थिवे ॥

दूरस्थितं महाभागं जनसमर्दवर्जितम् । क्षुत्क्षामकण्ठमायान्तमरण्यात्ससमित्कुशम ॥

दृष्ट्वा निधाघं स ऋभुरुपगम्याऽभिवाद्य च । उवाच कस्मादेकान्ते स्थीयते भवता द्विज ॥

निदाघः —

भो विप्र जनसंमर्दो महानेष नरेश्वर. । प्रविविक्षु पुरं रम्यं तेनात्र स्थीयते मया ।

ऋभुः —

नराधिपोत्र कतमः कतमश्चेतरो जनः । कथ्यतां मे महाभाग त्वमभिज्ञो मतो मम ॥

निदाघः —

योऽयं गजेन्द्रमुन्मत्तमद्रिशृङ्गसमुच्छ्रितम् । अधिरूढो नरेन्द्रोऽयं परिलोकस्तथेतरः ॥

ऋभुः —

एतौ हि गजराजानौ युगपद्दर्शितौ मम । भवता न विशेषेण पृथक्चिह्नोपलक्षणौ ॥

तत्कथ्यतां महाभाग विशेषो भवताऽनयोः । ज्ञातुमिच्छाम्यहं कोऽत्र गजः को वा नराधिपः ॥

निदाघः —

गजो योऽयमधो ब्रह्मन्नुपर्यस्यैव भूपतिः । वाह्यवाहनसंबन्धं को न जानाति वै द्विज ॥

ऋभुः —

जानाम्यहं यथा ब्रह्मंस्तथा मामवबोधय । अधःशब्दनिगद्यं किं किंचोर्ध्वमभिधीयते ॥

इत्युक्त. सहसाऽऽरुह्य निदाघः प्राह तं ऋभुम् । श्रूयतां कथयाम्येष यन्मां त्वं परिपृच्छसि ॥

उपर्यहं यथा राजा त्वमधः कुंजरो यथा । अवबोधाय ते ब्रह्मन् दृष्टान्तो दर्शितो मया ॥

**ऋभुः —**

त्वं राजेव द्विजश्रेष्ठ स्थितोऽहं गजवद्यदि । तदेव त्वं समाचक्ष्व कतमस्त्वमहं तथा ॥

**ब्राह्मणः —**

इत्युक्तस्तत्परस्तस्य प्रगृह्य चरणावुभौ । निदाघः प्राह भगवानाचार्यस्त्वं ऋभुर्ध्रुवम् ॥

नान्यस्याद्वैतसंस्कारसंस्कृतं मानस तथा । यथाचार्यस्य तेन त्वा मन्ये प्राप्तमहं गुरुम् ॥

**ऋभुः —**

तवोपदेशदानाय पूर्वशुश्रूषणादृत. । गुरुस्तेऽहमृभुर्नाम्ना निदाघ समुपस्थितः ॥

तदेतदुपदिष्टं ते सक्षेपेण महामते । परामार्थसारभूतं यत्तदद्वैतमशेषतः ॥

**ब्राह्मणः —**

एवमुक्त्वा ययौ विद्वान् निदाघं स ऋभुर्गुरुः । निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥

सर्वभूतान्यभेदेन ददृशे स तदात्मनः । तथा ब्रह्म ततो मुक्तिमवाप परमां द्विजः ॥

तथा त्वमपि धर्मज्ञ तुल्यात्मरिपुबान्धवः । भज सर्वगतं ज्ञानमात्मानमवनीपते ॥

सितनीलादिभेदेन यथैकं दृश्यते नभः । भ्रान्तदृष्टिभिरात्माऽपि तथैकस्सन् पृथक्पृथक् ॥

एकः समस्तं यदिहास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥

इतीरितस्तेन स राजवर्यः तत्याज भेदं परमार्थदृष्टिः ।
स चापि जातिस्मरणात्प्रबोध. तत्रैव जन्मन्यपवर्गमाप ॥

इति भरतनरेन्द्रतत्त्ववृत्ति कथयति यश्च शृणोति भक्तियुक्तः ।
स विमलमतिनुन्नमोहजालो भवति न ससरणेषु मुक्तियोग्यः ॥ इति ।

नन्वत्र श्रीरामभद्रस्य स्वस्वरूपापरिज्ञानं मनुष्यत्वभावना चावगम्यते, तदसङ्गतं ।

सीता लक्ष्मीर्भवान् विष्णुर्देवः कृष्णः प्रजापतिः ।
वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम् ॥

इत्यत्रैव **युद्धकाण्डे** ब्रह्मवचनेन,

शशाप स महाक्रुद्धो विष्णुं परबलार्दनम् । यस्मादवध्या मे भार्यां अवधीः क्रोधमूर्च्छितः ॥

तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन ।

**इत्युत्तरकाण्डे** भृगुशापप्रतिपादकदुर्वाससो वचनेन —

त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया ।

इति देवैः संप्रार्थितो विष्णुः,

पितरं रोचयामास तदा दशरथं नृपम् ।

इति बालकाण्डवचनेन च रामस्य विष्णुत्वावगमात् वशीकृतमायस्य सर्वज्ञस्य परमेश्वरस्य स्वरूपावारकज्ञानानुपपत्ते,

अक्षय्यं मधुहन्तारं जानामि त्वां सुरोत्तमम् । धनुषोऽस्य परामर्शात्स्वस्ति तेऽस्तु परंतप ॥

इति बालकाण्डे रामं प्रति परशुरामवचनेन च —

किमात्मानं महात्मानमात्मानं नावबुध्यसे ।

इति युद्धकाण्डे मायासीताविनाशजनितशोकाकुलहृदयं रामभद्रं समाश्वासयतो लक्ष्मणस्य वचनेन परमात्मस्वरूपज्ञापनाच्च,

शक्त्या ब्राह्मया हि सौमित्रिस्ताडितस्तु स्तनान्तरे ।
विष्णोरचिन्त्यं स्वं भागमात्मानं प्रत्यनुस्मरन् ॥

आश्वस्तश्च विशल्यश्च लक्ष्मणश्शत्रुसूदनः । विष्णोर्भागममीमांस्यमात्मानं प्रत्यनुस्मरन् ॥

इति युद्धकाण्डवचनैस्तदंशभूतस्य लक्ष्मणस्य स्वस्वरूपज्ञानावगमेन रामे स्वरूपसधानस्यानुक्तसिद्धत्वाच्चेति चेदुच्यते, सत्यं, वशीकृतमायस्य न मायावरणं सभवति, तथापि —

तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम् । अवध्यं दैवतैर्विष्णो समरे जहि रावणम् ॥

इति ब्रह्मादिसकलदेवप्रार्थनया संकल्पपूर्वकमङ्गीकृतमनुष्यभावस्य स्वस्वरूपापरिज्ञानमनुष्यत्वाभिमानयोरावश्यकत्वात् । ननु उक्तवचनमनुष्यत्वावश्यंभावेऽपि अज्ञानसद्भावे प्रमाणाभाव इति चेन्न । स्वभावतोऽशरीरस्यात्मनो मनुष्यत्वस्य मनुष्यशरीरसबन्धनिमित्ततया तदुपपादकत्वेन मिथ्याज्ञानावश्यंभावात् । शरीरसंबन्धस्य मिथ्याज्ञाननिमित्तत्वं च शारीरकसमन्वयभाष्ये सूत्रे — सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात् न ह्यात्मनः शरीराभिमानलक्षणं मिथ्याज्ञानं मुक्त्वा अन्यतः सशरीरत्वं शक्यं कल्पयितुं नित्यमशरीरत्वमकर्मनिमित्तत्वादित्यवोचामेति । तथा च सिद्धं स्वरूपावारकमज्ञानम् । अत एव—

न च कौतूहलं कार्यं सखित्वं प्रति राघव । कृतकर्मा रणे राम सखित्वमनुवेत्स्यसि ॥

इत्यस्मिन्नेव काण्डे गरुडवचनमुपपन्नम् । अत्र हि रावणवधसमनन्तरं स्वसखित्वनियामकमात्मनो विष्णुत्वमभिज्ञास्यसीति प्रतिपादनात् रावणवधात् प्राग्रामभद्रेण स्वस्वरूपं न

ज्ञातव्यं, मानुषभावेनैव रावणवधः कर्तव्य इति गरुडतात्पर्यमवगम्यते। अत एव च विश्वामित्रप्रभृतिभिः ऋषिभिः तपोबलेन रामस्य विष्णुस्वरूपं जानद्भिरपि प्रथमतः विष्णुस्वरूपत्वाज्ञापनेनैव रावणवधोपयुक्तं अस्त्रादिकं प्रदाय रावणवधानन्तरमेव विष्णुस्वरूपत्वं प्रख्यापितम्। रावणवधात्पूर्वं ऋषीणां स्वरूपाभिज्ञानं च **बालकाण्डे** दशरथं प्रति विश्वामित्रवचने—

अहं वेद्मि महात्मानं रामं सत्यपराक्रमम्।
वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः॥ इति।

पित्रा दशरथेनापि रावणवधात्पूर्वं रामस्य विष्णुस्वरूपं न ज्ञातं, अनन्तरमेव ज्ञातं। तथा च अत्रैव युद्धकाण्डे रावणवधानन्तरं दशरथवचनम्—

इदानीं तु विजानामि यथा सौम्य सुरेश्वरैः। वधार्थं रावणस्येह विहितं पुरुषोत्तम॥ इति।

रावणवधानन्तरमेव विष्णुस्वरूपत्वज्ञानं च **उत्तरकाण्डे** रामं प्रत्यगस्त्यवचने—
नान्योऽस्ति रक्षसां हन्ता सुरारीन्देवकण्टकान्। ऋते नारायणं देवं शङ्खचक्रगदाधरम्।
भवान्नारायणो देवश्चतुर्बाहुस्सनातनः। राक्षसं हन्तुमुत्पन्नो ह्यजेयः प्रभुरव्ययः॥
इति। रावणस्यापि रामे मनुष्यत्वबुद्धिरेव।

विदितं मानुषं मन्ये रामं दशरथात्मजम्।

मानुषेणास्मि निर्जित इत्यादिना मनुष्यत्वेनैव व्यवहारात्। **विष्णुपुराणेऽपि**—मनुष्यत्वभावनैव प्रतिपादिता। तथा हि मैत्रेय उवाच—

हिरण्यकशिपुत्वे च रावणत्वे च विष्णुना। अवाप निहतो भोगानप्राप्यानमरैरपि॥
न लयं तत्र तेनैव निहतः स कथं पुनः। संप्राप्तः शिशुपालत्वे सायुज्यं शाश्वते हरौ॥
एतदिच्छाम्यहं श्रोतुं सर्वधर्मभृतां वर। कौतूहलपरेणैतत्पृष्टो मे वक्तुमर्हसि॥

**श्रीपराशर उवाच**—

दैत्येश्वरस्य वधायाखिललोकोत्पत्तिस्थितिविनाशकारिणा अपूर्वतनुग्रहणं कुर्वता नृसिंहरूपमाविष्कृतम्। तत्र च न हिरण्यकशिपोर्विष्णुरयमित्येतन्मनस्यभूत्। निरतिशयपुण्यसंभूतमेतत्सत्त्वमिति रजउद्रेकप्रेरितो ग्रसति तद्भावनायोगात् ततोऽवाप्तवधहेतुः किं निरतिशयामेवाखिलत्रैलोक्याधिकारिणीं दशाननत्वे भोगसंपदमवाप। नातस्तस्मि-

अनादिनिधने परब्रह्मभूते भगवत्यनालंबने मनसस्तल्लभ्यम् । दशाननस्त्वेष्यनङ्गपराधीनतया जानकीसक्तचेतसो दाशरथिरूपधारिणस्तद्रूपदर्शनमेवासीत् । नायमच्युत इत्यासक्तिः विपद्यतोऽन्तःकरणस्यमानुषबुद्धिरेव केवलमस्याभूत् । पुनरप्यच्युतविनिपातमात्रफलमखिल-भूमण्डलश्लाघ्यचेदिराजकुले जन्माव्याहतैश्वर्यं शिशुपालत्वेप्यवाप । तत्र त्वमखिला-नामेव भगवन्नाम्ना त्वंकारकर्ताऽभूत् ततश्च त्वंकारकृनाना तेषामशेषाणामेवाच्युतनाम्ना-मनवरतमनेकजन्मसंवर्धितविद्वेषानुबन्धिचित्तो निन्दनतर्जनादिषूच्चारणमकरोत् तच्च स्वरूप-मुत्फुल्लपद्मदलामलायताक्षमत्युज्ज्वलपीतवस्त्रधारि अमलकिरीटकेयूरकटकाभिशोभितमुदारपीवर चतुर्बाहुशङ्खचक्रगदाधरमतिप्ररूढवैरानुभावादटन भोजनस्थानासनशयनादिष्ववशेषावस्थान्तरेषु नैवापययावस्यात्मचेतसः । ततश्च तमेवाक्रोशेषूच्चारयंस्तमेव हृदये धारयन्नात्मवधाया-धावत् भगवतश्चक्रांशुमालोज्ज्वलमक्षयतेजस्स्वरूपं परब्रह्मभूतमपगतद्वेषादिदोषं भगवन्त-मद्राक्षीत् । तावच्च भगवच्चक्रेण व्यापादितस्तत्स्मरणदग्धाखिलाघसंचयो भगवताऽन्तमुपनीत-स्तस्मिन्नेव लयमुपययौ ।

एतत्तवाखिलं मयाभिहितं अयं हि भगवान् कीर्तितः संस्मृतश्च द्वेषानु-बन्धेनाप्यखिलसुरादिदुर्लभं फलं प्रयच्छति किमुत सम्यग्भक्तिमतः अत एवोक्तं सर्वज्ञात्ममुनिभिः —

संकल्पपूर्वकमभूद्रघुनन्दनस्य नाहं विजान इति कञ्चन कालमेतत् ।
आत्मोपदेशमुपलभ्य निमित्तमात्रं तच्चोत्ससर्ज स कृते सति देवकार्ये ॥ इति ।

अत. रामस्य रावणं हन्तुं प्रवृत्तस्य रामस्य वध्यस्य रावणस्य च विष्णुभाव-परिज्ञानं नास्त्येव अन्यथा स्वरूपज्ञाने देवैरवध्यस्य रावणस्य रामेण वध एव न स्यात् । देवैरवध्यत्वं विष्णववध्यत्वं **चोत्तरकाण्डे** —

न तावदेव दुर्वृत्तः शक्यो दैवतदानवैः । हन्तुं युधि समासाद्य वरदानेन दुर्जयः ।
नैवाहं प्रतियोत्स्यामि रावणं राक्षसाधिपम् ॥
अनिहत्य रिपुं विष्णुर्न हि प्रतिनिवर्तते । दुर्लभश्चैष कामोद्य वरमासाद्य राक्षसः ॥

इति । **वनपर्वण्यपि रावणः** —

गन्धर्वदेवासुरतो यक्षराक्षसतस्तथा । सर्पकिन्नरभूतेभ्यो न मे भूयात्पराभवः ॥

**ब्रह्मोवाच** —

य एते कीर्तितास्सर्वे न तेभ्योऽस्ति भयं तव । ऋते मनुष्याद्भद्रं ते तथा तद्विहितं मया ॥

इति। **बालकाण्डेऽपि** —

नाकीर्तयदवज्ञानात्तद्रक्षो मानुषांस्तदा। तस्मात्स मानुषाद्वध्यो मृत्युर्नान्योऽस्य विद्यते॥
तत्र त्वं मानुषो भूत्वा प्रवृद्धं लोककण्टकम्। अवध्यं दैवतैर्विष्णो समरे जहि रावणम्॥

अत्रैव **युद्धकाण्डे** रावणवाक्यमपि —

इदं तद्ब्रह्मणो घोरं वाक्यं मामभ्युपस्थितम्। मानुषेभ्यो विजानीहि भयं त्वमिति तत्तथा॥
देवदानवगन्धर्वैर्यक्षराक्षस पन्नगैः। अवध्यत्वं मया प्राप्तं मानुषेभ्यो न याचितम्॥
विदितं मानुषं मन्ये रामं दशरथात्मजम्॥ इति।

तथा च आवश्यकमनुष्यत्वभावनानुगुणतया अचिन्त्यशक्तिमायावरणं रावणवधपर्यन्तं वक्तव्यमेव।

यच्च परशुरामेण लक्ष्मणेन च बोधनात् रामस्य स्वरूपानुसन्धानमवश्यं भावीति तदनुपपन्नं। रामस्य रावणवधात्प्राक् उक्तरीत्या मनुष्यभावनाया एव वक्तव्यत्वेन तदनुरोधेन वचनद्वयमपि अन्यपरमिति व्याख्येयम्।

तथा हि—परशुरामो हि रामस्य विष्णुत्वमजानन्नेव द्वन्द्वयुद्धे प्रवृत्तः धनुःपरामर्शनेनामानुषशक्तिमेनं ज्ञात्वा पश्चात्तपसा विष्णुरेवायमित्यवगत्यैवमुक्तवान्।

अक्षय्यं मधुहन्तारं जानामि त्वां सुरोत्तमम्। धनुषोऽस्य परामर्शात्स्वस्ति तेऽस्तु परन्तप॥

इति। रामस्तु धनुषः परामर्शाद्भीतेन परशुरामेण स्तुतिर्मम कृतेत्यवगतवानिति परशुरामवचनमुपपन्नम्।

मायासीताविनाशजनितशोकसमये किमात्मानं महात्मानमिति लक्ष्मणवचनं तात्कालिकदुःखनिवृत्त्यर्थतया आत्मानुसन्धानाभिप्रायकत्वेनावगतमिति मन्यमानस्य रामस्य स्वरूपाननुसंधानोपपत्तेः। आत्मानुसन्धानस्य दुःखनिवर्तकत्वं च **छान्दोग्ये**— "तरति शोकमात्मवित्" इति। यत्तु रामांशस्य लक्ष्मणस्य स्वरूपानुसंधानसत्त्वे रामस्य तदनुक्तसिद्धमिति तन्न, लक्ष्मणवध्यानां इन्द्रजिदादीनां मनुष्यवध्यत्वनियमाभावेन सत्यपि लक्ष्मणस्य स्वरूपानुसंधाने बाधकाभावात्, रामे तु रावणवधपर्यन्तं स्वरूपतिरोधानेन मनुष्यत्वभावनाया एव वक्तव्यत्वात्। वस्तुतस्तु लक्ष्मणस्यापि विष्णुभागानुसंधानस्य मूर्छाकालीनत्वेन स्वस्थावस्थायां स्वरूपसन्धानं नास्त्येव। अत एव 'आत्मानं प्रत्यनुस्मरन् आश्वस्तश्च विशल्यश्च' इति मूर्छाकालिकदुःखनिवृत्तिकालीनमेवात्मानुसन्धानं प्रतिपादितम्।

नन्वेवमपि 'योऽहं यश्च यतश्चाहं तद्भवान् प्रब्रवीतु मे' इति रामप्रश्नः तदनन्तरं कर्ता सर्वस्य लोकस्येत्याद्युपदेशश्चानुपपन्न रावणवधानन्तरं अज्ञाननिवर्तकस्वरूपज्ञानस्य स्वत एव सिद्धत्वादिति चेन्न, सर्वत्र मनुष्यत्वाभिमानवतः उपदेशेनैव स्वरूपज्ञानस्य सपादनीयत्वात्। तथा च श्रुतिः— 'आचार्यवान् पुरुषो वेद अनन्यप्रोक्ते गतिरत्र नास्ति' इति। अतएव रामस्यापि अज्ञाननिवर्तकज्ञानं आचार्योपदेशेनैव जातमिति प्रतिपादितं **द्वादशमञ्जरी**व्याख्याने—

> इति नरकृतमोहे राघवे विष्णुतैव स्वयमविदुषि राधयाह्वये पार्थतैव।
> नवविदि दशमात्मज्ञे च तत्सत्यतैव स्फुरति च सिद्धा ब्रह्मताऽऽचार्यवाक्यैः॥

**तोटकाचार्या अपि —**

> द्वयमप्यविरोधि शरीरभृतो वचनीयमिदं रघुनन्दनवत्।
> उपदेशमपेक्ष्य सदात्मगतिः परमात्मसतत्वकता च सदा॥

किं बहुना? रामः रावणवधपर्यन्तं अङ्गीकृतमनुष्यभावो विष्णुर्ब्रह्मोपदेशेन मानुषभावं परित्यज्य स्वस्वरूपमवगतवानिति नैवाश्चर्यकरं। सद्रूपस्य ब्रह्मणः तेजोऽब्वादिक्रमेण सृष्टभौतिकशरीरे जीवरूपेणानुप्रविष्टस्य ससारित्वं तस्यैव तत्त्वमसीत्याद्याचार्योपदेशेन पुनः स्वरूपप्राप्तिरिति सर्ववेदान्तसिद्धान्तः। तथा च **छान्दोग्ये** अष्टमाध्याये — मघवन् मर्त्यं वा इदं शरीरं आत्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः इति।

अत्र भाष्यं — अशरीरस्वभावोप्यात्मा आत्तौ वै अहमेव शरीरं शरीरमेवाहमित्यविवेकेन। अत एव सशरीरस्सन् आत्तो ग्रस्तः प्रियाप्रियाभ्यां। प्रसिद्धमेदत्। सशरीरस्य सतः न ह वै प्रियाप्रिययोर्बाह्यविषयसंयोगवियोगनिमित्तयोः बाह्यविषयसंयोगवियोगौ ममेति मन्यमानस्य सतः अपहतिर्विनाश उच्छेदः सन्ततिरूपयोर्नास्तीति तं पुनर्देहवच्छरीरस्वरूपविज्ञानेन निवर्तिताविवेकविज्ञानं अशरीरं सन्त प्रियाप्रिये न स्पृशत इति। अविद्यया संसारावस्थायां शरीरसाम्यमापन्नो अहममुष्य पुत्रो जातो जीर्णः मनुष्य इत्येवंप्रकारं प्रजापतिनैव मघवान् क्रमेण नासि त्वं देहेन्द्रियादिधर्मा तत्त्वमसीति प्रतिबोधितः देहादिवैलक्षण्यमात्मनो रूपमवगम्य देहात्मभावनां हित्वा स्वेन रूपेणाभिनिष्पद्यत इति च। किं च मनुष्यशरीरवतां तात्कालिकप्रयोजनार्थतया संपादितमप्यात्मज्ञानं न स्थायि भवति। अत

एवं भगवता कृष्णेन युद्धेऽर्जुनं प्रवर्तयितुं प्रदर्शितस्याप्यात्मस्वरूपस्य कालान्तरे पुनः प्रश्ने कृते विस्मृतमेव तदित्युक्तम् आश्वमेधिके अर्जुनं प्रति वासुदेवेन —

श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम्। धर्मं स्वरूपिण पार्थ सर्वलोकांश्च सात्वतान्॥
अबुध्या नाग्रहीर्यत्त्वं तन्मे सुमहदप्रियम्। न च साद्यः पुनर्भूय स्मृतिर्मे संभविष्यति।
नूनमश्रद्दधानोऽसि दुर्मेधा ह्यसि पाण्डव॥
न च शक्य पुनर्वक्तुं अशेषेण धनञ्जय। स हि धर्मस्सुपर्याप्तो ब्रह्मणः पदवेदने॥
न शक्य तन्मया भूयस्तथा वक्तुमशेषत.। परं हि ब्रह्म कथितं योगयुक्तेन तन्मया॥ इति।

तस्माद्विष्णुस्वरूपस्यापि रामस्य संकल्पपूर्वकं देवकार्यार्थतया परिगृहीतमानुषभावस्य स्वरूपावरणप्रश्नोपदेशादिकमुपपन्नम्।

इति ब्रुवन्तं काकुत्स्थं ब्रह्मा ब्रह्मविदां वरः।
अब्रवीच्छृणु मे राम सत्यं सत्यपराक्रम॥

भवान्नारायणो देव श्रीमान् चक्रायुधो विभुः।
एकशृंगो वराहस्त्वं भूतभव्यसपत्नजित्॥

अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघव।
लोकानां त्व परो धर्मो विष्वक्सेनश्चतुर्भुजः॥

शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः।
अजितः खड्गधृग्विष्णुः कृष्णश्चैव बृहद्बलः॥

सेनानीर्ग्रामणीश्च त्वं बुद्धिः सत्वं क्षमा दमः।
प्रभवश्चाप्ययश्च त्वं उपेन्द्रो मधुसूदनः॥

इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणान्तकृत्।
शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः॥

सहस्रशृंगो वेदात्मा शतजिह्वो महर्षभः।
त्वं त्रयाणां हि लोकानामादिकर्ता स्वयंभुवः॥

सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः।
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः परन्तपः॥

प्रभवं निधनं वा ते न विदुः को भवानिति ।
दृश्यसे सर्वभूतेषु ब्राह्मणेषु च गोषु च ॥

दिक्षु सर्वासु गगने पर्वतेषु वनेषु च ।
सहस्रचरणः श्रीमान् शतशीर्षस्सहस्रदृक् ॥

त्वं धारयसि भूतानि वसुधां च सपर्वताम् ।
अन्ते पृथिव्यास्सलिले दृश्यसे त्वं महोरगः ॥

त्रीन् लोकान् धारयन् राम देवगन्धर्वदानवान् ।
अहं ते हृदयं राम जिह्वा देवी सरस्वती ॥

देवा गात्रेषु रोमाणि निर्मिता ब्रह्मणा प्रभो ।
निमेषस्तेऽभवद्रात्रिरुन्मेषस्तेऽभवद्दिवा ॥

संस्कारास्तेऽभवन् वेदा न तदस्ति त्वया विना ।
जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम् ॥

अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षणः ।
त्वया लोकास्त्रयः क्रान्ता पुराणैर्विक्रमैस्त्रिभिः ॥

महेन्द्रश्च कृतो राजा बलिं बध्वा महासुरम् ।
सीता लक्ष्मीर्भवान् विष्णुर्देवः कृष्णः प्रजापतिः ॥

वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम् ।
तदिदं नः कृतं कार्यं त्वया धर्मभृतां वर ॥

निहतो रावणो राम प्रहृष्टो दिवमाक्रम ।
अमोघं बलवीर्यं ते अमोघास्ते पराक्रमाः ॥

अमोघं दर्शनं राम न च मोघस्तव स्तवः ।
अमोघास्ते भविष्यन्ति भक्तिमन्तश्च ये त्वयि ॥

ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम् ।
प्राप्नुवन्ति सदा कामानिह लोके परत्र च ॥

इममार्षस्तवं दिव्यमितिहासं पुरातनम् ।
ये नराः कीर्तयिष्यन्ति नास्ति तेषां पराभवः ॥

एकविंशतिशततमे —

> एतच्छ्रुत्वा शुभं वाक्यं पितामहसमीरितम्।
> अंकेनादाय वैदेहीमुत्पपात विभावसुः॥

नन्वत्राग्निः सीतामंके गृहीत्वा रामाय दत्तवानित्युक्तं तदप्ययुक्तम्, स्त्रीणां परपुरुषस्पर्शस्य निन्दितत्वात् परपुरुषगृहवासादिदोषेण परित्यक्तायाः पुनरग्निनांकधारणेन तस्य दोषस्य स्थिरीकरणात्। रावणांकपरिभ्रष्टां कथमादद्यामित्युक्तवता रामेणापि कथमिदमंगीकृतम्? पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरा इति परस्पर्शं निन्दितवती सीता कथं वा तदंगीकृतवती? अग्निर्वा कथं परस्त्रियमंके कृतवानिति चेन्नैष दोषः, स्त्रीणां गुरुजनपुत्रादिस्पर्शस्यादोषत्वात्, अग्नेः सीतापितृत्वेन गुरुत्वात् तत्स्पर्शो न दोषाय। अत एव विवाहसमये पितुरंकगताया एव विवाह उक्तो **बोधायनगृह्ये**-अनुनयन्त्येतमग्निमथैनां पितुरंकादुद्वहन्ति गुरोर्वा ये वध्व इति। **प्राचीना अपि**—

अपशंकमंकपरिवर्तनोचिता चलिताः पुरः पतिमुपैतुमात्मजाः॥ इति।

अत एवान्यान् विहाय घटोत्कच एव पुत्रत्वान्मातरं वहत्वित्युक्तवान् धर्मराजो **वनपर्वणि**-

धर्मज्ञो बलवान् शूरः शक्तो राक्षसपुंगवः। भक्तोऽस्मानौरसः पुत्रो भीम गृह्णातु मातरम्॥

> वहन्तु राक्षसा विप्रान् यथा श्रान्तान् यथा कृशान्।
> त्वमप्यमरसङ्काश वह कृष्णां घटोत्कच॥ इति।

अग्नेः सीतापितृत्वं च अग्निभार्याया पृथिव्यास्सकाशादुत्पन्नत्वात्। अग्निभार्यात्वं च पृथिव्याः **तैत्तिरीयश्रुतौ**— यमस्य स्वमोषधिद्रव्यं वेदिस्तरणार्थं यमपत्नीसकाशाद्गृहीतं तच्च न प्रत्यर्पितं तद्वृद्ध्युपोषणेन प्रत्यर्पयामीति यत्कुसीदप्रतीतमिति मन्त्रतात्पर्यार्थं प्रदर्शयता ब्राह्मणेनोक्तं अग्निर्वाव यम इयं यमीति। तत्र **भट्टभास्करीयम्**—अग्निर्यम इयं पृथिवी यमस्य स्त्री यमी इति। अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या इति मन्त्रान्तरं च। अतः पित्राग्निना अंके स्थापनं सीतयाऽपि तदङ्गीकरणं तथा दत्तायाः सीतायाः रामेणांगीकरणं च युक्तमेव। अत्र अंकेनेत्येतच्च दक्षिणांकाभिप्रायं दक्षिणांकस्यैवापत्यस्थानत्वात्। वामाङ्कस्तु स्त्रीस्थानमेव **एतच्चादिपर्वणि** प्रतीपराजस्याङ्कमाश्रिता गङ्गा दक्षिणोरूपवेशनेन अपत्यस्थानाश्रयणात् स्त्रीत्वेन न ग्राह्या वामाङ्क एव स्त्रीस्थानमिति प्रतिपादनेन स्पष्टीकृतम्—

रूपशीलगुणोपेता गंगा स्त्रीरूपधारिणी । उत्तीर्य सलिलात्तस्माद्दर्शनीयतमाकृतिः ॥
अधीयानस्य राजर्षेर्दिव्यरूपा मनस्विनी । दक्षिणं सालसंकाशमूरुं भेजे शुभानना ॥

तदनु राज्ञा किमर्थमागमनमिति पृष्टा गंगा,

त्वामहं कामये राजन् कुरुश्रेष्ठ भजस्व माम् । इत्यवदत् । प्रतीपः —

त्वया निवृत्तमेतत्तु यन्मां चोदयसि प्रियम् । अन्यथा प्रतिपन्नं मां नाशयेद्धर्मविप्लवः ॥
प्राप्य दक्षिणमूरुं मे त्वमाश्लिष्टा वरांगने । अपत्यानां स्नुषाणां च भीरु विद्ध्येनदासनम् ॥

सव्योरुः कामिनीभोग्यस्त्वया च स विसर्जितः ।
तस्मादहं नाचरिष्ये त्वयि कामं वरांगने ॥ इति ।

**उत्तस्थौ मूर्तिमानाशु गृहीत्वा जनकात्मजाम् ।**
**तरुणादित्यसङ्काशां तप्तकाञ्चनभूषणाम् ॥**

**रक्तांबरधरां बालां नीलकुञ्चितमूर्धजाम् ।**
**अक्लिष्टमाल्याभरणां तथारूपां मनस्विनीम् ॥**

अत्र अग्निप्रवेशेऽपि पतिव्रतायास्सीतायाः अक्लिष्टमाल्याभरणत्वप्रतिपादनात् पतिव्रतानां पञ्चमहाभूतान्यपि प्रतिकूलं नाचरन्तीति सूचितम् । तथा च **स्कान्दे** —

बिभ्यत्पतिव्रतास्पर्शं कुरुते भानुमानपि । सोमो गन्धवहश्चापि स्वपावित्र्याय नान्यथा ॥

इति । **आनुशासनिके** सुदर्शनोपाख्याने सुदर्शनं प्रति यमः —

न चास्ति शक्तिस्त्रैलोक्ये कस्यचित् पुरुषोत्तम ।
पतिव्रतामिमां साध्वीं तवोद्वीक्षितुमप्युत ॥

इति । अग्निप्रवेशेऽप्यदाहः शुद्धिज्ञापक इति च सूचितम् । तथा च **छांदोग्ये** —

पुरुषं सोम्योत हस्तगृहीतमानयंत्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोनृताभिसंधोऽनृतमात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ॥

अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते सत्याभिसन्धस्सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते इति ।

**ददौ रामाय वैदेहीमङ्के कृत्वा विभावसुः ।**
**अब्रवीच्च तदा रामं साक्षी लोकस्य पावकः ।**

एषा ते राम वैदेही पापमस्या न विद्यते ।
नैव वाचा न मनसा नानुध्यानान्न चक्षुषा ॥

सुवृत्ता वृत्तशौण्डीरा न त्वामतिचचार ह ।
रावणेनापनीतैषा वीर्योत्सिक्तेन रक्षसा ॥

त्वया विरहिता दीना विवशा निर्जनाद्वनात् ।
रुद्धा चान्तःपुरे गुप्ता त्वच्चित्ता त्वत्परायणा ।
रक्षिता राक्षसैः संघैर्विकृतैर्घोरदर्शनैः ॥

प्रलोभ्यमाना विविधं भर्त्स्यमानाऽपि मैथिली ।
नाचिन्तयत तद्रक्षस्त्वद्गतेनान्तरात्मना ॥

विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघव ।
न किञ्चिदभिधातव्यं अहमाज्ञापयामि ते ॥

अत्र अग्निमुखेन शुद्धेति परिज्ञानात् चारित्रसन्देहे तत्कर्मसाक्षिणो महाभूतस्य मुखादेव शुद्धता ज्ञातव्येति सूचितम् । अत एव **वनपर्वणि** नलोपाख्याने —

एवमुक्ते ततो वायुरन्तरिक्षादभाषत । नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ॥

राजन् शीलनिधिस्फीतो दमयन्त्यासुरक्षित. ।
साक्षिणो रक्षिणश्चास्या वयं त्रीनपि वत्सरान् ॥

उपपन्ना त्वया भैमी त्वं च भैम्या महीपते ।
नात्र शंका त्वया कार्या संगच्छ सह भार्यया ॥

ततो ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह । तदद्भुततमं दृष्ट्वा नलो राजाऽथ भारत ॥

दमयन्त्यां विशंकां ता व्यपाकर्षदरिन्दमः ॥ इति ।

**आदिपर्वण्यपि** शकुन्तलाचारित्रसदेहवन्तं दुष्यन्तं प्रति अशरीरिवाक्यम् —

अथान्तरिक्षाद्दुष्यन्तं वागुवाचाऽशरीरिणी ।
ऋत्विक्पुरोहिताचार्यैर्मन्त्रिभिश्च समावृतम् ॥

त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला । तस्माद्भरस्व दुष्यन्त पुत्रं शाकुन्तलं नृप ॥

अभूतिरेषा यत्त्यक्त्वा जीवेज्जीवन्तमात्मजम् ।
तच्छ्रुत्वा पौरवो राजा व्याहृतं त्रिदिवौकसाम् ॥

पुरोहितममात्यांश्च संप्रहृष्टोऽब्रवीदिदम् । शृण्वन्त्वेतद्भवन्तोऽस्य देवदूतस्य भाषितम् ॥
अहं चाप्येवमेवैनं जानामि स्वयमात्मजम् । यद्यहं वचनादेव गृह्णीयामिममात्मजम् ॥
भवेद्धि शंक्यो लोकस्य नैव शुद्धो भवेदयम् । तां विशोध्य तदा राजा देवदूतेन भारत ॥
हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ॥ इति ।

नन्वत्र देवैः ब्रह्मणा च परमात्मस्वरूपत्वबोधनाद्रामेणापि परमात्मभूतेन सीता शुद्धेति ज्ञानाच्च सीतायाः परिग्रहसंभवे पुनः इयं सीता शुद्धा ग्राह्येति अग्निप्रार्थनं किमर्थमित्याशङ्कायामाह —

एवमुक्तो महातेजा धृतिमान् दृढविक्रमः ।
अब्रवीत् त्रिदशश्रेष्ठं रामो धर्मभृतां वरः ॥

अवश्यं त्रिषु लोकेषु न सीता पापमर्हति ।
दीर्घकालोषिता चेयं रावणान्तःपुरे शुभा ॥

बालिशः खलु कामात्मा रामो दशरथात्मजः ।
इति वक्ष्यन्ति मां सन्तो जानकीमविशोध्य हि ॥

अनन्यहृदयां भक्तां मच्चित्तपरिरक्षिणीम् ।
अहमप्यवगच्छामि मैथिलीं जनकात्मजाम् ॥

प्रत्ययार्थं तु लोकानां त्रयाणां सत्यसंश्रयः ।
उपप्रेक्षे स वैदेहीं प्रविशन्तीं हुताशनम् ॥

इमामपि विशालाक्षीं रक्षितां स्वेन तेजसा ।
रावणो नातिवर्तेत वेलामिव महोदधिः ॥

न हि शक्तः स दुष्टात्मा मनसाऽपि हि मैथिलीम् ।
प्रधर्षयितुमप्राप्तां दीप्तामग्निशिखामिव ॥

नेयमर्हति चैश्वर्यं रावणान्तःपुरे शुभा ।
अनन्या हि मया सीता भास्करेण प्रभा यथा ॥

विशुद्धा त्रिषु लोकेषु मैथिली जनकात्मजा ।
न हि हातुमियं शक्या कीर्तिरात्मवता यथा ॥

अवश्यं तु मया कार्यं सर्वेषां वो वचो हितम् ।
स्निग्धानां लोकमान्यानामेवं च ब्रुवतां हितम् ॥

अनेन सन्देहे सति महता वचनेनैव ग्राह्यमिति सूचितम् । तथाच **प्राचीनाः**—

अपि स्वैराचारैः कलुषमिनरेषा शमयतां परश्लाघायत्ता भवति महता स्वेषु शुचिता ।
अहल्यावैकल्यक्षपणपदरेणोरपि विभोः प्रमाणं वैदेहीचरितपरिशुद्धौ हुतवहः ॥

इतीदमुक्त्वा विहितं महाबलैः प्रशस्यमानः स्वकृतेन कर्मणा ।
समेत्य रामः प्रियया महाबलः सुखं सुखार्होऽनुबभूव राघवः ॥

**द्वाविंशत्यधिकशततमे**—

एतच्छ्रुत्वा शुभं वाक्यं राघवेण सुभाषितम् ।
इदं शुभतरं वाक्यं व्याजहार महेश्वरः ॥

पुष्कराक्ष महाबाहो महावक्ष परन्तप ।
दिष्ट्या कृतमिदं कर्म त्वया शस्त्रभृतां वर ॥

दिष्ट्या सर्वस्य लोकस्य प्रवृत्तं दारुणं तमः ।
अपावृत्तं त्वया संख्ये राम रावणजं भयम् ॥

आसाद्य भरतं दीनं कौसल्यां च यशस्विनीम् ।
कैकेयीं च सुमित्रां च दृष्ट्वा लक्ष्मणमातरम् ॥

प्राप्य राज्यमयोध्यायां नन्दयित्वा सुहृज्जनम् ।
इक्ष्वाकूणां कुले वंशं स्थापयित्वा महाबल ॥

इष्ट्वा तुरगमेधेन प्राप्य चानुत्तमं यशः ।
ब्राह्मणेभ्यो धनं दत्त्वा त्रिदिवं गन्तुमर्हसि ॥

अत्र ब्रह्मोपदेशेन स्वस्य परमात्मस्वरूपत्वावगमानन्तरमपि अवश्यकर्तव्यराज्यपरिपालनाश्वमेधादिक्रतुदानादिकं कृत्वा अनन्तरं त्रिदिवं गन्तुमर्हतीत्येतदर्थके एतच्छुभतरं वाक्यमिति शिववचने तरप्प्रत्ययप्रयोगादुत्पन्नात्मतत्त्वज्ञानस्यापि कर्मपरित्यागापेक्षया तत्करणमेव श्रेय इति सूचितम् । तथा च **गीतायाम्**—

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः । यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥
निश्चयं शृणु मे तत्र ज्ञाने भरतसत्तम । यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ॥
नियतस्य तु सन्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागः तामसः परिकीर्तितः ॥

इति । ननु,

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥

इति वचनेन ज्ञानिनः कर्मसामान्यस्य निषेधावगमात्,

कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ।

इत्यादीनि वचनानि अनुत्पन्नतत्त्वज्ञानविषयाण्येव । तथा च ब्रह्मकृतोपदेशेन संजाततत्त्वज्ञानस्य कथं कर्माणि कर्तव्यत्वेनोपदिष्टानि? कथं वा इदं शुभतरं वाक्यमिति तरप्प्रत्ययेनातिशयितत्वं कर्मकरणस्येति चेदुच्यते —

ज्ञानिनः कर्मकरणप्रयुक्तातिशयाभावेऽपि लोकानुग्रहार्थतयाऽवश्यं तेनापि कर्माणि कर्तव्यान्येव । तथा च **गीतायाम्** —

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन । न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥
तस्मादसक्तः सततं कार्यं कर्म समाचर । असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥
कर्मणैव हि संसिद्धिमास्थिता जनकादयः । लोकसंग्रहमेवाऽपि संपश्यन् कर्तुमर्हसि ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् । न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ॥
जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥ इति ।

विशिष्य रामेण धर्मसंस्थापनार्थतया अवतीर्णेन राज्यं परिपालयता वर्णाश्रमोचितानि कर्माणि स्वाभाविकानि कर्तव्यान्येव । अन्यथा,

राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । प्रजास्तमनुवर्तन्ते यथा राजा तथा प्रजाः ॥

इति न्यायेन राजमतानुसारिणो लोकाः धर्मविलङ्घनेन विनष्टा भवेयुः । तथा च **गीतायाम्**

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन । नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोकाः न कुर्यां कर्म चेदहम् । संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ।

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ॥
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः । शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ॥
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ।
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ॥
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् । कृषिगोरक्षवाणिज्यं वैश्यं कर्म स्वभावजम् ॥
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् । स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ॥
स्वकर्मनिरतश्शुद्धिं यथा विन्दति तच्छृणु । यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ॥
स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः ।
श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ।
सहजं कर्म कौंतेय सदोषमपि न त्यजेत् ॥ इति ।

अत आत्मज्ञानवतोऽपि रामस्य कर्माणि कर्तव्यानीति महादेवकृत उपदेश उपपन्न एव ।

**एष राजा विमानस्थः पिता दशरथस्तव ।**
**काकुत्स्थ मानुषे लोके गुरुस्तव महायशाः ॥**

**इन्द्रलोकं गतः श्रीमान् त्वया पुत्रेण तारितः ।**
**लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय ।**

अत्र कर्माणि कर्तव्यानि दानानि देयानीति प्रतिपाद्य पितृनमस्कारः कर्तव्य इति प्रतिपादनं पितृपूजनेन विना कृतं सर्वं कर्म व्यर्थं भवेदतस्तत्परिहाराय पितृनमस्कारोऽवश्यं कर्तव्य इत्येतदभिप्रायकम् । पितृपूजनेन सर्वे धर्माः सिद्ध्यन्ति तेन विना सकलधर्मानुष्ठानं निष्फलं भवति । तथाच मनुः —
त्रिष्वप्रमाद्यन्नेतेषु ब्रह्मलोकं समश्नुते । सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ॥
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः । तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा ॥
तेषु हि त्रिषु तुष्टेषु तपः सर्वमवाप्यते ॥
इति । **वनपर्वणि** धर्मव्याधोपाख्यानेऽपि —
अतन्द्रितः कुरु क्षिप्रं मातापित्रोर्हि पूजनम् । अतः परमहं धर्मं नान्यं पश्यामि किंचन ॥

तपस्वी त्वं महात्मा च धर्मे च निरतस्सदा । सर्वमेतदपार्थं ते क्षिप्रं तौ च प्रसादय ॥
एतौ मे परमं ब्रह्मन् पिता माता च दैवतम् । पिता माता च भगवन्नेतौ मे दैवतं परम् ॥

यद्दैवतेभ्यः कर्तव्यं तदेताभ्या करोम्यहम् ॥ इति ।

**अयोध्याकाण्डे** रामवाक्यमपि —

यतोमूलं नरः पश्येत्प्रादुर्भावमिहात्मनः । कथं तस्मिन्न वर्तेत प्रत्यक्षे सति दैवते ॥
स्वाधीनं समतिक्रम्य पितर मातरं गुरुम् । अस्वाधीनं कथ दैवं प्रकारैरभिराध्यते ॥ इति

महादेववचः श्रुत्वा काकुत्स्थः सहलक्ष्मणः ।
विमानशिखरस्थस्य प्रणाममकरोत्प्रभुः ॥

दीप्यमानं स्वया लक्ष्म्या विरजोऽम्बरधारिणम् ।
लक्ष्मणेन सह भ्राता ददर्श पितरं विभुः ॥

हर्षेण महताविष्टो विमानस्थो महीपतिः ।
प्राणैः प्रियतरं दृष्ट्वा पुत्रं दशरथस्तदा ॥

आरोप्याङ्कं महाबाहुर्वरासनगतः प्रभुः ।
बाहुभ्यां संपरिष्वज्य ततो वाक्यं समाददे ॥

न मे स्वर्गो बहुमतः संमानश्च सुरर्षिभिः ।
त्वया राम विहीनस्य सत्यं प्रतिश्रृणोमि ते ॥

अनेन सत्पुत्रः स्वर्गः सुखकरः इति सूचितम् । तथाच **हरिवंशे रुक्मिणीं प्रति कृष्णः** —

कुपुत्रो नरको यस्मात् सुपुत्रस्स्वर्ग एव हि ॥ इति ।

कैकेय्या यानि चोक्तानि वाक्यानि वदतां वर ।
तव प्रव्राजनार्थानि स्थितानि हृदये मम ॥

त्वां तु दृष्ट्वा कुशलिनं परिष्वज्य सलक्ष्मणम् ।
अद्य दुःखाद्विमुक्तोऽस्मि नीहारादिव भास्करः ॥

तारितोऽहं त्वया पुत्र सुपुत्रेण महात्मना ।
अष्टावक्रेण धर्मात्मा तारितो ब्राह्मणो यथा ॥

अत्र अष्टावक्रस्य दृष्टान्तत्वेन ग्रहणं पितृकृतापकारं सोढ्वा पितृतारकस्य रामस्य स एवानुरूपदृष्टान्त इत्येतदभिप्रायकम्। पितुरपराधं सोढ्वापि पितरमन्यानपि तारितवानष्टावक्र इत्येतत् वनपर्वणि —

उद्दालकस्य कियतः शिष्य एको नाम्ना कहोड इति विश्रुतोऽभूत्।
तस्मै प्रादात्सद्य एव श्रुतञ्च भार्यां वै दुहितरं स्वां सुजाताम्॥

तस्या गर्भस्समभवदग्निकल्पस्सोऽधीयानं पितरं चाभ्युवाच।
सर्वां रात्रिमध्ययनं करोषि नेदं पितः सम्यगिवोपवर्तते॥

उपालब्धः शिष्यमध्ये महर्षि स तं कोपादुदरस्थं शशाप।
यस्मात्कुक्षौ वर्तमानो ब्रवीषि तस्माद्वक्रो भवितास्यष्टकृत्वः॥

इत्यभिधाय पूर्णगर्भया धनरहितया भार्यया जनकयज्ञे धनान्यार्जयितुं याहीत्युक्तस्तत्रत्येन वादिना बन्दिना वादे पराजित्य अप्सु निमज्जितोऽभूत्। ततश्चोत्पन्नोऽष्टावक्रो द्वादशे वर्षे पितरं बन्दिना निर्जितं मातृवचनादवगत्य मातुलेन श्वेतकेतुना सह जनकयज्ञं गच्छन् मध्येमार्गं प्रोत्सार्यमाणो वाक्यं निजगाद —

अन्धस्य पन्था बधिरस्य पन्थास्स्त्रियः पन्था भारवहस्य पन्थाः।
राज्ञः पन्था ब्राह्मणेनासमेत्य समेत्य तु ब्राह्मणस्यैव पन्थाः॥

राजा — पन्था अयं तेऽद्य मयाऽतिसृष्टो येनेच्छसि त्वं तेन कामं व्रजस्व।
न पावको विद्यते वै लघीयानिन्द्रोऽपि नित्यं नमते ब्राह्मणानाम्॥

इति राज्ञा प्रदिष्टेन पथा द्वारदेशमागतो बालानभिज्ञप्रवेशो न कर्तव्यः वृद्धा एव प्रवेशनीया इति समाज्ञप्तैर्बन्दिनिदेशकरैर्द्वारपालैः प्रतिषिद्धस्तानेवमवोचत् —

यद्यत्र वृद्धेषु कृतः प्रवेशो युक्तं प्रवेष्टुं मम द्वारपाल।
वयं हि वृद्धाश्चरितव्रताश्च वेदप्रभावेण समन्विताश्च॥

शुश्रूषवश्चापि जितेन्द्रियाश्च ज्ञानागमे चापि गताः स्म निष्ठाम्।
न बाल इत्यवमन्तव्यमाहुर्बालोऽप्यग्निर्दहति स्पृश्यमानः॥

द्वारपालः —

सरस्वतीमीरय वेदजुष्टामेकाक्षरां बहुरूपां विराजम्।
अङ्गात्मानं समवेक्षस्व बालं किं श्लाघसे दुर्लभो वै मनीषी॥

अष्टावक्र उवाच —

न ज्ञायते कायवृद्ध्या विवृद्धिर्यथाऽष्ठीला शाल्मलेः संप्रवृद्धा ।
ह्रस्वोऽल्पकायः फलितो विवृद्धो यश्चाफलस्तस्य न वृद्धभावः ॥

द्वारपाल उवाच —

वृद्धेभ्य एवेह मतिं स्म बाला गृह्णन्ति कालेन भवन्ति वृद्धाः ।
नहि ज्ञानमल्पकालेन शक्यं तस्माद्बाल स्थविर इव प्रभाषसे ॥

अष्टावक्र उवाच —

न तेन स्थविरो भवति येनास्य पलितं शिरः ।
बालोऽपि यः प्रजानाति तं देवास्स्थविरं विदुः ॥

न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः । ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥

ततश्च राजानं यज्ञं च स्तुवन् जनकेन च बालोऽयं ज्ञानतस्स्थविर इति कारितप्रवेश —

एवमष्टावक्रः समितौ हि गर्जन् जातक्रोधो बन्दिनमाह राजन् ।
उक्ते वाक्ये चोत्तरं मे ब्रवीहि वाक्यस्य चाप्युत्तरं ते ब्रवीमि ॥

बन्द्युवाच —

एक एवाग्निर्बहुधा समिध्यते एकस्सूर्यः सर्वमिदं विभाति ।
एको वीरो देवराजोऽरिहंता यमः पितॄणामीश्वरश्चैक एव ॥

अष्टावक्रः —

द्वाविन्द्राग्नी चरतो वै सहायौ द्वौ देवर्षी नारदपर्वतौ च ।
द्वावश्विनौ द्वे रथस्यापि चक्रे भार्यापती द्वौ विहितौ विधात्रा ॥

बन्दी —

त्रिः सूयते कर्मणा वै प्रजेयं त्रयो युक्ता वाजपेयं वहन्ति ।
अध्वर्यवस्त्रिसवणानि तन्वते त्रयो लोकास्त्रीणि ज्योतींषि चाहुः ॥

अष्टावक्रः —

चतुष्टयं ब्राह्मणानां निकेतनं चत्वारो वर्णा यज्ञमिमं वहन्ति ।
दिशश्चतस्रो वर्णचतुष्टयं च चतुष्पदा गौरपि शश्वदुक्ता ।

बन्दी —

पञ्चाग्नयः पञ्चपदा च पंक्तिः यज्ञा पञ्चैवाप्युत पञ्चेन्द्रियाणि।
दृष्टा वेदे पञ्चचूडाप्सराश्च लोके ख्यातं पञ्चनदं च पुण्यम्॥

अष्टावक्र उवाच —

षडाधाने दक्षिणामाहुरेके षड्वै चेमे ऋतवः कालचक्रम्।
षडिन्द्रियाण्युत षट्कृत्तिकाश्च षट् साद्यस्काः सर्ववेदे च दृष्टाः॥

बन्द्युवाच —

सप्त ग्राम्याः पशवः सप्त वन्याः सप्त छन्दांसि क्रतुमेकं वहन्ति।
सप्तर्षयः सप्त चार्हणानि सप्ततन्त्री प्रथिता चैव वीणा॥

अष्टावक्रः —

अष्टौ शाणाः शतमानं वहन्ति तथाष्टपादः शरभः सिंहघाती।
अष्टौ वसून् शुश्रुम देवतासु यूपश्चाष्टाश्रिर्विहितः सर्वयज्ञे॥

बन्दी —

नवैवोक्ताः सामिधेन्यः पितॄणां तथा प्राहुर्नवयोगं निसर्गम्।
नवाक्षरा बृहती सम्प्रदिष्टा नवैव योगा गणनामेति शश्वत्॥

अष्टावक्रः —

दिशो दशोक्ताः पुरुषस्य लोके सहस्रमाहुर्दशपूर्णं शतानि।
दशैव मासान् बिभ्रति गर्भवत्यो दशैरेकादशदाशा दशार्हाः॥

बन्दी —

एकादशैकादशिनः पशूनां एकादशैवात्र भवन्ति यूपाः।
एकादश प्राणभृतां विकारा एकादशोक्ता दिवि देवेषु रुद्राः॥

अष्टावक्रः —

संवत्सरं द्वादशमासमाहुर्जगत्याः पादो द्वादशैवाक्षराणि।
द्वादशाहः प्राकृतो यज्ञ उक्तो द्वादशादित्यान् कथयन्तीह धीराः॥

बन्दी —

त्रयोदशी तिथिरुक्ता प्रशस्ता त्रयोदशी द्वीपवती मही च।
एतावदुक्त्वा विरराम बन्दी श्लोकस्यार्धं व्याजहाराष्टवक्रः॥

अष्टावक्रः —

त्रयोदशाहानि ससारकेशी त्रयोदशान्यतिच्छन्दांसि चाहुः ।
ततो महानुदतिष्ठन्निनादस्तूष्णींभूतं बन्दिनं तं निशम्य ।
तस्मिंस्तथा सङ्कुले वर्तमाने स्फीते यज्ञे जनकस्योत्तराज्ञः ॥

अष्टावक्रं पूजयन्तोऽभ्युपेयुर्विप्राः सर्वे प्राञ्जलयः प्रतीताः ।
अनेनैव ब्राह्मणाः शुश्रुवांसो वादे जित्वा सलिले मज्जिताः प्राक् ॥

तानेव धर्मानयमद्य बन्दी प्राप्नोतु गृह्याशु निमज्जयैनम् ।

बन्दी —

अहं पुत्रो वरुणस्य राज्ञस्तत्रास सत्रं द्वादशवार्षिकं वै ।
सत्रेण ते जनकतुल्यकालं तदर्थं ते प्रहिता मे द्विजाग्र्याः ॥

ते तु सर्वे वरुणस्योत यज्ञं द्रष्टुं गता इममायान्ति भूपः ।
अष्टावक्रं पूजयेः पूजनीयं यस्य हेतोर्जनितारं समेष्ये ॥

ततस्ते पूजिता विप्रा वरुणेन महात्मना । उदतिष्ठंस्तदा सर्वे जनकस्य समीपतः ॥

कहोडः —

इत्यर्थमिच्छन्ति सुतान् जना जनककर्मणा ।
यदहं नाशकं कर्तुं तत्पुत्रः कृतवान् मम ॥

उताबलस्य बलवानुत बालस्य पण्डितः । उत वाविदुषो विद्वान् पुत्रो जनक जायते ॥

अष्टावक्रः पितरं पूजयित्वा संपूजितो ब्राह्मणैस्तैर्यथावत् ।
प्रत्याजगामाश्रममेव चाग्र्यं जित्वा सौतिं सहितो मातुलेन ॥

ततोऽष्टावक्रं मातुरथान्तिके पिता नदीं समङ्गां शीघ्रमिमां विशेति ।
प्रोवाच चैनं स तथा विवेश समैरंगैश्चापि बभूव सद्यः ॥ इति ।

**इदानीं त्वां विजानामि यथा सौम्य सुरेश्वरैः ।**
**वधार्थं रावणस्येह विहितं पुरुषोत्तम ॥**

**सिद्धार्था खलु कौसल्या या त्वां राम गृहागतम् ।**
**वनान्निवृत्तं संहृष्टा द्रक्ष्यते शत्रुसूदन ॥**

**सिद्धार्था खलु ते राम नरा ये त्वां पुरीं गतम् ।**

जलार्द्रमभिषिक्तं च द्रक्ष्यंति वसुधाधिपम् ॥

अनुरक्तेन बलिना शुचिना धर्मचारिणा ।
इच्छेयं त्वामहं द्रष्टुं भरतेन समागतम् ॥

चतुर्दश समा सौम्य वने निर्यातितास्त्वया ।
वसता सीतया सार्धं लक्ष्मणेन च धीमता ॥

निवृत्तवनवासोऽसि प्रतिज्ञा सफला कृता ।
रावणं च रणे हत्वा देवास्ते परितोषिताः ॥

कृतं कर्म यशश्श्लाघ्यं प्राप्तं ते शत्रुसूदन ।
भ्रातृभिस्सह राज्यस्थो दीर्घमायुरवाप्नुहि ॥

इति ब्रुवाणं राजानं रामः प्रांजलिरब्रवीत् ।
कुरु प्रसादं धर्मज्ञ कैकेय्या भरतस्य च ॥

सपुत्रां त्वां त्यजामीति यदुक्ता कैकेयी त्वया ।
स शापः कैकेयीं घोरः सपुत्रां न स्पृशेत्प्रभो ॥

अनेन सत्पुरुषास्स्वस्मिन्नपकाराचरणप्रयुक्ततया प्रसक्तं अपकारिष्वप्युपद्रवं प्रयत्नेन स्वयं परिहरन्तीति सूचितम् । अत एव प्रह्लादस्योपद्रवकरणाय पुरोहितप्रयुक्तया कृत्यया दह्यमानान् पुरोहितान् प्रह्लादस्स्वयमेव मोचयामास इति विष्णुपुराणे —

इत्युक्तास्तेन ते क्रुद्धा दैत्यराजपुरोहिताः । कृत्यामुत्पादयामासुर्ज्वालामालोज्ज्वलाननाम् ॥

तदनु पुरोहितैः प्रह्लादे नियोजिता,

तानेव सा जघानाशु कृत्या नाशं जगाम च ।
कृत्यया दह्यमानांस्तान् विलोक्य स महामतिः ॥

त्राहि कृष्णेत्यनन्तेति वदन्नभ्यवपद्यत । सर्वव्यापिन् जगद्रूप जगत्स्रष्टर्जनार्दन ॥

पाहि विप्रानिमानस्माद्दुस्सहान्मन्त्रपावकात् ॥ इति ।

स तथेति महाराजो राममुक्त्वा कृताञ्जलिम् ।
लक्ष्मणं च परिष्वज्य पुनर्वाक्यमुवाच ह ॥

रामं शुश्रूषता भक्त्या वैदेह्या सह सीतया ।

कृता मम महाप्रीतिः प्राप्तं धर्मफलं च ते ॥

धर्मं प्राप्स्यसि धर्मज्ञ यशश्च विपुलं भुवि ।
रामे प्रसन्ने स्वर्गं च महिमानं तथैव च ॥

रामं शुश्रूषस्व भद्रं ते सुमित्रानन्दवर्धन ।
रामः सर्वस्य लोकस्य शुभेष्वभिरतस्सदा ॥

एते सेन्द्रास्त्रयो लोकाः सिद्धाश्च परमर्षयः ।
अभिगम्य महात्मानमर्चन्ति पुरुषोत्तमम् ॥

एतत्तदुक्तमव्यक्तमक्षरं ब्रह्म निर्मितम् ।
देवानां हृदयं सौम्य गुह्यं रामः परन्तपः ।
अवाप्तं धर्मचरण यशश्च विपुल त्वया ॥

अत्र 'रामं शुश्रूषता भक्त्या वैदेह्या सह सीतया' इत्यनेन ज्येष्ठभ्रातृशुश्रूषणेन विपुलं यशः उत्तमो धर्मश्चावाप्येत इति सूचितम् । तथा चोशना —

यो वासयति वा सूते येन विद्योपदिश्यते । ज्येष्ठभ्राता च भर्ता च पञ्चैते गुरवस्तथा ॥

आत्मनः सर्वयत्नेन प्राणत्यागेन वा पुनः । पूजनीया विशेषेण पञ्चैते भूतिमिच्छता ॥

राजधर्मेऽपि —

शुश्रूषते यः पितरं न चासूयेत्कथञ्चन । मातरं भ्रातरं वापि गुरुमाचार्यमेव च ॥

तस्य राजन् फलं विद्धि स्वर्लोके स्थानमर्चितम् ।
न च पश्येत नरकं गुरुशुश्रूषयाऽऽत्मवान् ॥ इति ।

स तथोक्त्वा महाबाहुर्लक्ष्मणं प्राञ्जलिं स्थितम् ।
उवाच राजा धर्मात्मा वैदेहीं वचनं शुभम् ॥

कर्तव्यो न तु वैदेहि मन्युस्त्यागमिमं प्रति ।
रामेण त्वद्विशुध्द्यर्थं कृतमेतद्धितैषिणा ॥

अनेन भर्त्रा विप्रियाचरणेऽपि तस्मिन् कोपं न कुर्यादिति सूचितम् । तथाच स्कान्दे पतिव्रतामधिकृत्य —

आकृष्टापि न चाक्रोशेत्ताडिताऽपि प्रसीदति ।
आहूता गृहकार्याणि त्यक्त्वा गच्छति सादरा ॥ इति ।

न त्वं सुभ्रूः समाधेया पतिशुश्रूषणं प्रति ।
अवश्यं तु मया वाच्यं एष ते दैवतं परम् ॥

तथा चाश्रमवासिके —

विदितं हि यथा सर्वं लोकवृत्तमिदं तव । विदिते चाऽपि वक्तव्यं सुहृद्भिरनुरागतः ॥ इति

इति प्रतिसमादिश्य पुत्रौ सीतां तथा स्नुषाम् ।
इन्द्रलोकं विमानेन ययौ दशरथो ज्वलन् ॥

त्रयोविंशतितमे —

तदनु महेन्द्रो रामचन्द्रमुवाच —

अमोघं दर्शनं राम तवास्माकं परन्तप ।
प्रीतियुक्तोऽस्मि तेन त्वं ब्रूहि यन्मनसेच्छसि ॥

अनेन देवानां दर्शनममोघमित्युक्तम् । अतएवादिपर्वणि कुन्तीं प्रति सूर्यवचनम् —

अमोघं दर्शनं मह्यं आहूतश्चास्मि ते शुभे । वृथाह्वानाद्धि ते भीरु दोषो हि स्यादसंशयम् ॥

इति । इत्यभिहितो रामः,

मम हेतोः पराक्रान्ता ये गता यमसादनम् ।
ते सर्वे जीवितं प्राप्य समुत्तिष्ठन्तु वानराः ॥

मत्कृते विप्रयुक्ता ये पुत्रैर्दारैश्च वानराः ।
मत्प्रियेष्वनुरक्ताश्च न मृत्युं गणयन्ति च ॥

त्वत्प्रसादात् समेयुस्ते वरमेतदहं वृणे ।
नीरुजो निर्व्रणांश्चैव संपन्नबलपौरुषान् ॥

गोलांगूलांस्तथैवर्क्षान् द्रष्टुमिच्छामि मानद ।
अकाले चापि मुख्यानि मूलानि च फलानि च ॥

नद्यश्च विमलास्तत्र तिष्ठेयुर्यत्र वानराः ।

अत्र स्वहितप्रार्थनामकृत्वा स्वोपकारिणा वानराणा हितप्रार्थनात्स्वप्रयोजनापेक्षया स्वाश्रितप्रयोजनमेवाधिकमिति सूचितम् । अत एव यक्षप्रश्ने वनपर्वणि धर्मेण मूर्तिमता वरं वृणीष्वेति पृष्टः धर्मपुत्रः स्वकीयस्य ब्राह्मणस्याभीष्टमरणिलाभमेव प्रथमं प्रार्थितवानित्युक्तम् —

अरणीसहितं यस्य मृगोऽभ्यादाय गच्छति ।
तस्याग्नयो न लुप्येरन् प्रथमोऽस्तु वरो मम ॥ इति ।

तदनु तथैव भवत्विति महेन्द्रेण कथिते,

ततस्समुत्थितास्सर्वे सुप्त्वेव हरियूथपाः ।
बभूवुर्वानरास्सर्वे किमेतदिति विस्मिताः ॥

नन्वत्र रामः स्वार्थतया पराक्रम्य युद्धे मृतान् वानरान् देवताप्रार्थनेन पुनरानीतवानित्यवगम्यते. तदसंगतम् । तथाहि–किमंत्यसंस्काराकरणप्रयुक्तनया स्वधर्मजन्यलोकान्तरप्राप्तिरहितानामन्तराल एव स्थितानां पुनरानयनं, अथवा युद्धमरणप्रयुक्तनया पुण्यलोकं गतानामेव पुनरानयनमिति ? नाद्यः, युद्धे मृतानामकृतेऽपि च संस्कारे अव्यवधानेन उत्तमलोकप्राप्त्यवगमेनान्तरालाऽवस्थानायोगात् । तथाच राजधर्मे —

आहवे तु हतं शूरं न शोचेत कदाचन । न ह्यन्नमुदकं तस्य न स्नानं नाप्यशौचकम् ॥
हतस्य कर्तुमिच्छन्ति तस्य लोकान् शृणुष्व मे । वराप्सरसहस्राणि शूरमायोधने हतम् ॥
त्वरमाणानि धावन्ति मम भर्ता भवेदिति ।

स्त्रीपर्वण्यपि धृतराष्ट्रं प्रति धर्मः —

छिद्यमानाः शितैः शस्त्रैः क्षत्रधर्मपरायणाः । गतास्ते ब्रह्मसदनं हता वीरास्सुवर्चसः ॥

इति । कालिदासोऽपि —

कश्चिद्द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य ।
वामाङ्गसंसक्तसुराङ्गनस्सन् नृत्यत्कबन्धं समरे ददर्श ॥ इति ।

न द्वितीयः,

ननु स्वर्गादयं लोकः काम्यते स्वर्गवासिभिः ।

इति द्रोणपर्वण्यपि व्यासवचनेन उत्तमलोकं गतानां पुनर्मनुष्यलोके अनाकांक्षावगमेन वानराणामपि उत्कृष्टलोके निरतिशये दिव्योपभोगमुपभुञ्जानाना दुःखबहुले निकृष्टतरे मनुष्यलोके वानरभावेनानयनस्यासंमनतया परमकारुणिकस्य रामस्य तदनिष्टाचरणायोगात्; नच पुनरावर्तत इति श्रुतिविरोधाच्च ।

तस्मात्स्वर्गगतं पुत्रमर्जुनस्य हते रणे । न चेहानयितुं शक्यं किंचिदप्राप्यमीहितम् ॥

इति द्रोणपर्वणि धर्मपुत्रं प्रति व्यासवचनेन परलोक गतानां पुनरानयनस्य दुर्घटत्वावगमाच्च । तथाच रामेण कथ वानरानयनमिति चेत्;

सत्यं उत्तमलोकगताना निरतिशयसुखप्राप्तिरिति । अथापि महापुरुषा स्वेष्टजनदुःखं न सहन्ते । अत एव भगवान् विष्णुः स्वकीयाना देवानां ऋषीणा च दु खनिरसनाय तिर्यङ्मनुष्यादिशरीरमपि निकृष्ट परिगृह्य दुष्टनिग्रहाधीनं तेषां दु खनिरसनं कृतवान् । एवं च सति रामः स्वकार्याय युद्धे त्यक्तप्राणवानरसबन्धिना स्त्रीपुत्रादीना दु खनिरसनं वानराणामानयनेन कथं न कुर्यात् । तस्मात्परलोकं गतानामपि वानराणामानयनेन तदीयस्त्रीपुत्रादिदुःखनिरसनं रामकृतं युक्तमेव । ब्रह्मलोकादागमनं वानराणामनिष्टं च न भवत्येव । ययातिनहुषप्रभृतीनामिव दुष्कृतवशात्पुनर्मनुष्यलोकागमनं चेत् दुःखकरत्वेनानिष्टकरत्वेन अनिष्टं स्यात् । न तादृशं वानरानयनं, किंतर्हि, विष्णोरिव स्वकीयानां दुःखापनयनार्थमागमनं ततश्च कञ्चित्कालं स्थित्वा स्वकीयाना दु खापनयनानन्तरं पुनरुत्तरलोकगमनं संभवत्येव । अतो न तेषामनिष्टकरमानयनम् ।

न च पुनरावर्तत इति श्रुतिरपि केवलकर्मिणां धूमादिमार्गेण परलोकं गतानामिव न पुनः संसारप्राप्तिरित्येतत्परं नत्वितरलोकगमनमात्रनिषेधपरम् । तथात्वे "तेषां सर्वेषु लोकेषु कामचारो भवति" इति श्रुतिविरोधात् । नच पुनरानयनमशक्यमिति व्यासवचनविरोधः, तस्य दुष्करं तदानयनमित्येतदभिप्रायकत्वात् । तथाच युद्धे मृतानां वानराणां पुनरानयनं प्रार्थयमानं रामं प्रति इन्द्रवचनम् —

महानेष वरस्तात त्वयोक्तो रघुनन्दन ।
द्विर्मया नोक्तपूर्वं हि तस्मादेतद्भविष्यति ॥

इति । अतएव कौरवस्त्रीणां दुःखापनयनाय तपोव्ययेनैव युद्धे मृतानां कौरवाणामानयनं कृत्वा दुःखापनयनं विधाय व्यासेन पुनस्ते स्वस्थानं प्रेषिता इति प्रतिपादितमाश्रमवासिके —

अथ कदाचिद्रणहतान् दुर्योधनादीनुद्दिश्य शोचतो धृतराष्ट्रस्य गान्धारीप्रभृतीनां कौरवस्त्रीणा च दुःखापनोदाय समागतो व्यासस्तमित्थमवोचत् —

तदुच्यतां महाराज कं कामं प्रददामि ते ।
प्रवणोऽस्मि वरं दातुं पश्य मे तपसः फलम् ॥

इति । तदाकर्णनेन संतुष्टहृदयो धृतराष्ट्रः व्यासं महर्षिमित्थमाचचक्षे —

धन्योऽस्म्यनुगृहीतश्च सफलं जीवितं च मे । दर्शनादेव भवता पूतोऽहं नात्र संशय ॥
किंतु तस्य सुदुर्बुद्धेर्मन्दस्यापनये भृशम् । दूयते मे मनो नित्यं स्मरतः पुत्रगर्धिनः ॥
राजानश्च महात्मानो नानाजनपदेश्वराः । आगम्य मम पुत्रार्थे सर्वे मृत्युवशं गताः ॥
भीष्मं शान्तनवं वृद्धं द्रोणं च द्विजसत्तमम् । मम पुत्रेण मूढेन पापेन सुहृदा द्विषा ॥
क्षयं नीतं कुलं दीप्तं पृथिवीराज्यमिच्छता । एतत् सर्वमनुस्मृत्य दह्यमानो दिवानिशम् ॥
न शान्तिमधिगच्छामि दुःखशोकसमाहतः ॥ इति ।

तदनु पतिपरिदेवनाकर्णनविदीर्णहृदया गान्धारी एवमुवाच —

श्वशुरं बद्धनयना देवी प्राञ्जलिरुत्थिता । न शेते वसतीस्सर्वा धृतराष्ट्रो महामुने ॥
लोकानन्यान् समर्थोऽसि स्रष्टुं सर्वं तपोबलात् ।
किमु लोकान्तरगतान् राज्ञो दर्शयितुं सुतान् ॥
इयं च द्रौपदी कृष्णा हतज्ञातिसुता भृशम् ।
शोचत्यतीव सर्वासां स्नुषाणां दयिता स्नुषा । तथा कृष्णस्य भगिनी सुभद्रा भद्रभाषिणी ॥
सौभद्रवधसन्तप्ता भृशं शोचति भामिनी । इयं च भूरिश्रवसो भार्या परमसंमता ॥
भर्तुर्व्यसनशोकार्ता भृशं शोचति भामिनी । यस्यास्तु श्वशुरो धीमान् बाह्लीकः स कुरूद्वहः ॥
निहतः सोमदत्तश्च पित्रा सह महारणे । श्रीमतोऽस्य महाबुद्धेः सङ्ग्रामेष्वपलायिनः ॥
पुत्रस्य ते पुत्रशतं निहतं यद्रणाजिरे । तस्य भार्याशतमिदं दुःखशोकसमाहतम् ॥
पुनः पुनर्वर्धयानं शोकं राज्ञो ममैव च । तेनारंभेण महता मामुपास्ते महामुने ॥
ये च शूरा महात्मानः श्वशुरा मे महारथाः । सोमदत्तप्रभृतयः कानु तेषां गतिः प्रभो ॥
तव प्रसादाद्भगवन् विशोकोऽय महीपतिः । यथा स्याद्भविता चाहं कुन्ती चेयं वधूस्तव ॥

इति । तदनु कुन्ती प्रच्छन्नया कन्यावस्थाजनितं ज्येष्ठं पुत्रं कर्णं द्रष्टुमिच्छामीति आचचक्षे । तदखिलमप्याकर्ण्य सतुष्टहृदयो महर्षिः इदमाह —

भद्रे द्रक्ष्यसि गांधारि पुत्रान् भ्रातॄन् सखींस्तथा ।
वधूश्च पतिभिस्सार्धं निशि सुप्तोत्थितानिव ॥
कर्णं द्रक्ष्यति कुन्ती च सौभद्रं चापि यादवी ।
द्रौपदी पञ्चपुत्रांश्च पितॄन् भ्रातॄंस्तथैव च ॥

पूर्वमेवैष हृदये व्यवसायोऽभवन्मम । यदास्मि चोदितो राज्ञा भवत्या पृथयैव च ॥
न ते शोच्या महात्मानः सर्व एव नरर्षभा । क्षत्रधर्मपराः सन्तः तथाहि निधनं गताः ॥
यच्चैव हृदि सर्वेषा दुःखमेतच्चिरं स्थितम् । तदद्य व्यपनेष्यामि परलोककृताद्भयात् ॥

सर्वे भवन्तो गच्छन्तु नदीं भागीरथीं प्रति ।
तत्र द्रक्ष्यथ तान् सर्वान् ये हतास्मिन् रणाजिरे ॥

तदनु यथानिदेशं निखिलपरिवारेण गङ्गाकूलमुपगतवति धृतराष्ट्रे महर्षि. भागीरथी-जलमवगाह्य परलोकगतान् भीष्मद्रोणदुर्योधनप्रमुखान् कौरवानन्यानपि लोकान्तरं गतानाजुहाव । तदनु,

सर्वे भासुरदेहास्ते समुत्तस्थुर्जलात्तत । यस्य वीरस्य यो वेषः यो ध्वजो यच्च वाहनम् ॥
तेन तेन व्यदृश्यन्त समुपेता नराधिपा । दिव्यांबरधरास्सर्वे सर्वे भ्राजिष्णुकुण्डलाः ॥
निर्वैरा निरहङ्कारा विगतक्रोधमत्सराः । गन्धर्वैरुपगीयन्तस्स्तूयमानाश्च बन्दिभि ॥
दिव्यमाल्यांबरधरा वृताश्चाप्सरसा गणै । धृतराष्ट्रस्य च तदा दिव्यं चक्षुर्नराधिप ॥
मुनिः सत्यवतीपुत्र. प्रीतः प्रादात्तपोबलात् । दिव्यज्ञानबलोपेता गान्धारी च यशस्विनी ॥
ददर्श पुत्रान् तान् सर्वान् ये ये चापि मृधे हताः । तदद्भुतमचिंत्यं च सुमहद्रोमहर्षणम् ॥
विस्मितः स जनः सर्वः ददर्शानिमिषेक्षणः । तदुत्सवमदोदग्रं हृष्टनारीनराकुलम् ॥

आश्चर्यभूतं ददृशे चित्रं पटगतं यथा ॥

धृतराष्ट्रस्तु तान् सर्वान् पश्यन् दिव्येन चक्षुषा । मुमुदे भरतश्रेष्ठः प्रसादात्तस्य वै मुनेः ॥

समागतास्ताः पितृभिः भ्रातृभि पतिभिस्सुतैः ।
मुदं परमिकां प्राप्य नार्यो दुःखमथात्यजन् ॥
एकां रात्रिं विहृत्यैव ते वीरास्ताश्च योषितः ।
आमन्त्र्यान्योन्यमाश्लिष्य ततो जग्मुर्यथागतम् ॥

ततो विसर्जयामास लोकांस्तान् मुनिपुङ्गवः । क्षणेनान्तर्हिताश्चैव प्रेक्षतामेव तेऽभवन् ॥

अवगाह्य महात्मानः पुण्यां भागीरथीं नदीम् ।
सरथाः सध्वजाश्चैव स्वानि वेश्मानि भेजिरे ॥

देवलोकं ययुः केचित् केचिद्ब्रह्मसदस्तथा । केचिच्च वारुणं लोकं केचित्कौबेरमाप्नुवन् ॥

ततो वैवस्वतं लोकं केचिच्चैवाप्नुवन्नृपा ।
राक्षसानां पिशाचानां केचिच्चाप्युत्तरान् कुरून् ॥

विचित्रगतयश्चान्ये यानैश्चाप्यामरैस्सह ।

आजग्मुस्ते महात्मानः सवाहाः सपदानुगा । गतेषु तेषु सर्वेषु सलिलस्थो महामुनिः ॥

धर्मशीलो महातेजा कुरूणां हितकृत्तदा । तत प्रोवाच तास्सर्वाः क्षत्रिया निहतेश्वराः ॥

या याः पतिकृतान् लोकानिच्छन्ति परमास्स्त्रियः ।
ता जाह्नवीजलं क्षिप्रं अवगाहंत्वतन्द्रिताः ॥

ततस्तस्य वचः श्रुत्वा श्रद्दधाना वराङ्गना । श्वशुरं समनुज्ञाप्य विविशुर्जाह्नवीजलम् ॥

विमुक्ता मानुषैर्देहैस्ततस्ता भर्तृभिस्सह । समाजग्मुस्तदा साध्व्यः सर्वा एव विशांपते ॥

एवं क्रमेण सर्वास्ता शीलवत्यः पतिव्रताः । प्रविश्य क्षत्रिया मुक्ता जग्मुर्भर्तृसलोकताम् ॥

दिव्यरूपसमायुक्ता दिव्याभरणभूषिताः । दिव्यमाल्यांबरधराः यथाऽऽसां पतयस्तथा ॥

ताः शीलगुणसंपन्ना विमानस्था गतक्लमाः । सर्वाः सर्वगुणोपेताः स्वस्थानं प्रतिपेदिरे ॥

यस्य यस्य तु यः कामः तस्मिन् काले बभूव ह ।
तं तं विसृष्टवान् व्यासः वरदो धर्मवत्सलः ॥

तच्छ्रुत्वा नरदेवानां पुनरागमनं नराः । जहृषुर्मुदिताश्चासन् नानादेशगतानपि ॥

प्रियैस्समागमस्तेषां यः सम्यक् शृणुयान्नरः । प्रियाणि लभते नित्यं इह च प्रेत्य चैव हि ॥

इष्टबान्धवसंयोगमनायासमनामयम् । यश्चैतच्छ्रावयेद्विद्वान् विदुषो धर्मवित्तमः ॥

स यश प्राप्नुयाल्लोके परत्र च शुभा गतिम् । स्वाध्याययुक्ता मनुजास्तपोयुक्ताश्च भारत ॥

साध्वाचारा दमोपेता दाननिर्धूतकल्मषाः । ऋजवः शुचयः शान्ता हिंसाऽनृतविवर्जिताः ॥

आस्तिकाश्श्रद्दधानाश्च धृतिमन्तश्च मानवाः ।
श्रुत्वाऽऽश्चर्यमिदं पर्व ह्यवाप्स्यन्ति परां गतिम् ॥

इत्याश्रमवासिके

सौतिरुवाच —

एतच्छ्रुत्वा नृपो विद्वान् हृष्टोऽभूज्जनमेजयः। पितामहाना सर्वेषां गमनागमनं तदा ॥

अब्रवीच्च मुदा युक्तः पुनरागमनं प्रति। कथं नु त्यक्तदेहाना पुनस्तद्रूपदर्शनम् ॥

इत्युक्तः स द्विजश्रेष्ठो व्यासशिष्यः प्रतापवान्। प्रोवाच वदता श्रेष्ठस्तन्नृपं जनमेजयम् ॥

वैशंपायन उवाच —

अविप्रणाशः सर्वेषा कर्मणामिति निश्चयः। कर्मजानि शरीराणि तथैवाकृतयो नृप ॥

महाभूतानि नित्यानि भूताधिपतिसंश्रयात्। तेषा च नित्यसंवासो न विनाशो वियुज्यताम् ॥

अनायासकृतं कर्म सत्यश्रेष्ठः फलागमः। आत्मा चैभिस्समायुक्तः सुखदुःखमुपाश्नुते ॥

अविनाश्यस्तथाप्युक्तः क्षेत्रज्ञ इति निश्चयः। भूतानामात्मगोभावो यथाऽसौ न वियुज्यते ॥

यावन्न क्षीयते कर्म तावत्तस्य स्वरूपता। क्षीणकर्मा नरो लोके रूपान्यत्वं नियच्छति ॥

नानाभावास्तथैकत्वं शारीरं प्राप्य संहता। भवन्ति ते तथा नित्याः पृथग्भावं विजानताम् ॥

अश्वमेधे श्रुतिश्चेयं अश्वसंज्ञपनं प्रति। लोकान्तरगता नित्यं प्राणा नित्यं शरीरिणाम् ॥

अहं हितं वदाम्येतत्प्रियं चेत्तव पार्थिव।

देवयाना हि पन्थानश्श्रुतास्ते यज्ञसंस्तरे। आहृतो यत्र यज्ञस्ते तत्र देवाहितांस्तव ॥

यदा समन्विता देवाः पशूनां गमनेश्वराः।
गतिमन्तश्च तेनेष्टा नान्ये नित्या भवन्त्युत ॥

नित्येऽस्मिन् पञ्चके वर्गे नित्ये चात्मनि पूरुषः।
अस्य नानासमायोगं यः पश्यति स वृथामतिः ॥

वियोगे शोचतेऽत्यर्थं स बाल इति मे मतिः।
वियोगे दोषदर्शी यः संयोगं स विसर्जयेत् ॥

असङ्गे सङ्गमो नास्ति दुःखं भुवि वियोगजम्। परंपरज्ञस्त्वपरो नाभिमानादुदीरिताः ॥

अपरज्ञः परां बुद्धिं ज्ञात्वा मोहाद्विमुच्यते। अदर्शनादापतितः पुनश्चादर्शनं गतः ॥

नाहं तं वेद्मि नासौ मां न च मेऽस्ति विरागता। येन येन शरीरेण करोत्ययमनीश्वरः ॥

तेन तेन शरीरेण तदवश्यमुपाश्नुते। मानसं मनसाऽऽप्नोति शारीरं च शरीरवान् ॥

इति। अनेन च विद्यमानशरीराणां पुनरानयनसंभवेऽपि निश्शेषं कुम्भकर्णभक्षितशरीराणां

वानराणां कथमानयनमिति शंकाऽपि निरस्ता। अनाशिततत्तत्कर्मवशेन नित्यानां भूतानां परस्परसंयोगस्य शरीरोत्पत्तेः तत्र जीवानुप्रवेशस्य च भारतोक्तरीत्या संभवात्। तस्मात् स्वजनदुःखापनयनाय परलोकं गतानामपि वानराणामानयनं रामकृतं युक्तमेव इति।

काकुत्स्थं परिपूर्णार्थं दृष्ट्वा सर्वे सुरोत्तमाः।
ऊचुस्ते प्रथमं श्रुत्वा स्तवार्हं सहलक्ष्मणम्॥

गच्छायोध्यामितो वीर विसर्जय च वानरान्।
मैथिलीं सांत्वयस्वैनामनुरक्तां तपस्विनीम्॥

शत्रुघ्नं च महात्मानं मातृः सर्वाः परन्तप।
भ्रातरं पश्य भरत त्वच्छोकाद्व्रतचारिणम्॥

अभिषेचय चात्मानं पौरान् गत्वा प्रहर्षय।
एवमुक्त्वा तमामन्त्र्य रामं सौमित्रिणा सह॥

विमानैस्सूर्यसंकाशैर्हृष्टा जग्मुस्सुरा दिवम्।
अभिवाद्य च काकुत्स्थः सर्वास्तान् त्रिदशेश्वरान्।
लक्ष्मणेन सह भ्रात्रा वासमाज्ञापयत्तदा॥

ततस्तु सा लक्ष्मणरामपालिता महाचमूर्हृष्टजना यशस्विनी।
श्रिया ज्वलन्ती विरराज सर्वतो निशा प्रणीतेव हि शीतरश्मिना॥

**चतुर्विंशतिपञ्चविंशतिशततमयोः —**

तां रात्रिमुषितं रामं सुखोत्थितमरिन्दमम्।
अब्रवीत्प्राञ्जलिर्वाक्यं जय पृष्ट्वा विभीषणः॥

अनेन राजानं जयाशीर्भिर्वर्धयित्वैव पृच्छेदिति सूचितम् तथाच **कामन्दकः —**

जयाज्ञापय जीवेति नाथ देवेति चादरात्। आज्ञामस्य प्रतीच्छन्तो भृत्याः कुर्युरुपासनम्॥

स्नानानि चाङ्गरागाणि वस्त्राण्याभरणानि च।
चन्दनानि च दिव्यानि माल्यानि विविधानि च॥

अलङ्कारविदश्चेमा नार्यः पद्मनिभेक्षणाः ।
उपस्थितास्त्वां विधिवत्स्नापयिष्यन्ति राघव ॥

तदधुना सत्वरं समुत्तिष्ठतु भवानिति विभीषणेनाभिहितो रामः तमेवमुवाच —

हरीन् सुग्रीवमुख्यांस्त्वं स्नानेनाभिनिमन्त्रय ।
स तु ताम्यति धर्मात्मा मम हेतोः सुखोचितः ॥

सुकुमारो महाबाहुः कुमारः सत्यसंश्रवः ।
तं विना कैकयीपुत्रं भरतं धर्मचारिणम् ॥

न मे स्नानं बहुमतं वस्त्राण्याभरणानि च ।

अनेन महापुरुषाः संप्राप्तमैश्वर्यं भ्रातृभिर्विना न भुञ्जते किंतु तैस्सह भुंजत इति सूचितम्। अतएव स्वर्गसुखमपि भ्रातृभिर्विना न भोक्ष्ये इत्युक्तं धर्मराजेन **स्वर्गारोहणिके** —

न तैरहं विना रंस्ये भ्रातृभिर्ज्ञातिभिस्तदा ।
किं मे भ्रातृविहीनस्य स्वर्गेऽपि सुरसत्तम ॥ इति ।

भ्रातृभिस्सह भोक्तव्यमित्यत्र **राजधर्मे** व्यासवचनम् —

धर्ममर्थं च कामं च भ्रातृभिस्सह भारत ।
अनुभूय तत पश्चात् प्रस्थाताऽसि विशापते ॥ इति ।

अहमितः साकेतपुरं प्रयातुमिच्छामि, अतिदुर्गोऽयं मार्गः कथं लंघनीय इति ब्रुवाणं रामं विभीषण एवमुवाच — पुष्पकं नाम कामग विमानमधिरुह्य अह्नाय स्वनगरमभिगंतासि ।

अहं ते यद्यनुग्राह्यो यदि स्मरसि मे गुणान् ।
अर्चितः सर्वकामैस्त्वं ततो राम गमिष्यसि ॥

प्रीतियुक्तस्तु मे राम ससैन्यः ससुहृद्गणः ।
सत्क्रियां विहितां तावद्गृहाण त्वं मयोद्यताम् ॥

अनेन यत्प्रसादाद्राज्यप्राप्तिः स सर्वोपचारैः पूजनीय इति सूचितम्। अत एव जरासंधेन कारागृहे निरुद्धा राजानः जरासंधहननेन स्वस्वराज्यप्रदातारं कृष्णं पूजितवन्त इति प्रतिपादितं **सभापर्वणि** —

ततस्सुप्रीतमनसस्ते नृपा भरतर्षभ। रत्नभाजं च दाशार्हं चक्रुस्ते पृथिवीश्वरा ॥

इति। **आश्वमेधिकेऽपि** कृष्णप्रसादात्प्राप्तराज्यो युधिष्ठिरः कृष्णं रत्नादिभिः पूजितवानिति प्रतिपादितम् —

गच्छ रत्नान्युपादाय विविधानि वसूनि च। यच्चाप्यन्यन्मनोज्ञं ते तदप्यादत्स्व सात्वत ॥

इयं च वसुधा कृत्स्ना प्रसादात्तव केशव।
अस्मानुपगता वीर निहताश्चापि शत्रव ॥ इति।

**प्रणयाद्बहुमानाच्च सौहृदेन च राघव।**
**प्रसादयामि प्रेष्योऽहं न खल्वाज्ञापयामि ते ॥**

अनेन महत्सु कर्तव्यमर्थं विज्ञापयेन्न त्विदमित्थं कुर्विति नियुञ्जीतेति सूचितम्। तच्च प्राक् प्रपञ्चितम्।

इति तेन सादरमनुनीयमानो राम एवमुवाच — भवत्कृतसाचिव्येन उत्तमेन सौहृदेन च पूजितोऽस्मि। तदधुना तीव्रनरनियमकालपालननिरत,

**तन्तु मे भ्रातरं द्रष्टुं भरतं त्वरते मनः।**
**कौसल्यां च सुमित्रां च कैकेयीं च यशस्विनीम् ॥**

**गुरूंश्च सुहृदश्चैव पौरांश्च तनयैस्सह।**

अनेन इष्टजनान् विहाय कार्यार्थतया विदेश गतस्य सिद्धे कार्ये अचिरादेव सुहृज्जनाभिलाषो भवति। एवमभिलषितवन्त झटिति सुहृज्जनः प्रेषयेच्चेति सूचितम्। अत एव कौरववधे पाण्डवानां साहाय्याचरणानन्तरं पाण्डवास्तवोपदेशेनाप्यनुगृह्य पितरं द्रष्टुमिच्छामीति कृष्णेनाभिहिते अर्जुनवचनाद्धर्मराजः कृष्णं पितृदर्शनाय झटिति प्रेषितवानिति प्रतिपादित**माश्वमेधिके**। अर्जुनं प्रति वासुदेवः —

मया तु भरतश्रेष्ठ चिरं दृष्टः पिता प्रभु। तमहं द्रष्टुमिच्छामि समते तव फाल्गुन ॥

अर्जुन —

अयं चिरोषितो राजन् वासुदेवः प्रतापवान्। भवन्तं समनुज्ञाप्य पितरं द्रष्टुमिच्छति ॥

स गच्छेदभ्यनुज्ञातो भवता यदि मन्यसे। आनर्तनगरं वीर तदनुज्ञातुमर्हसि ॥

युधिष्ठिरः —

पुण्डरीकाक्ष भद्रं ते गच्छ त्वं मधुसूदन। पुरीं द्वारवतीमद्य द्रष्टुं शूरसुतं विभो ॥

रोचते मे महाबाहो गमनं तव केशव। मातुलश्चिरदृष्टो मे त्वया देवी च देवकी ॥
समे त्वं मातुलं गत्वा बलदेवं च माधव। आनर्तानवलोक्य त्वं पितरं च महाभुज ॥
वृष्णींश्च पुनरागच्छेर्हयमेधे ममानघ ॥ इति।

उपस्थापय मे क्षिप्रं विमानं राक्षसेश्वर।
कृतकार्यस्य मे वासः कथंस्विदिह संमतः ॥

अनेन स्वगृहं विहाय प्रयोजनार्थमन्यत्र गतः प्रयोजने सिद्धे तत्र चिरकालं न वसेदिति सूचितम्। अत एव कृष्ण करवीरपुराधिप सृगालं विजित्याभिषिच्य च तद्राज्ये तत्सुतं झटिति परावृत्त इति प्रतिपादितं हरिवंशे —
अभिषिच्य सृगालस्य करवीरपुरे सुतम्। कृष्णस्तदहरेवाशु प्रस्थानं समरोचयत् ॥
रथेन हरियुक्तेन तेन युद्धार्जितेन च। केशव प्रस्थितोऽध्वानं वृत्रहा त्रिदिवं यथा ॥
इति। तदनु कनकविरचितरम्यहर्म्योपेतं प्रतप्तकाञ्चनमञ्चासनपरिष्कृतं पुष्पभूषितं पुष्पकमुपस्थाप्य किं करोमीति वदन्तं बद्धाञ्जलिपुटं विभीषणमित्थमवोचत्।

कृतप्रयत्नकर्माणो विभीषण वनौकसः।
रत्नैरर्थैश्च विविधैर्भूषणैश्चापि पूजय ॥

सहैभिरजिता लंका निर्जिता राक्षसेश्वर।
हृष्टैः प्राणभयं त्यक्त्वा संग्रामेष्वनिवर्तिभिः ॥

त इमे कृतकर्माणः पूज्यतां सर्ववानराः।

अनेन प्राणानप्यविगणय्य कार्यं साधितवन्तः शूराः दानमानादिसत्कारैः पूजनीया इति सूचितम्। तथा च भारते —
कृते कर्मणि राजेन्द्र पूजयेद्धनसचयैः। कच्चिद्बलस्य ते मुख्याः सर्वे युद्धविशारदाः ॥
दृष्टापदाना विक्रान्तास्त्वया सत्कृत्य मानिताः ॥ इति च।

त्यागिनं संग्रहीतारं सानुक्रोशं यशस्विनम्।
यतस्त्वामवगच्छन्ति ततः संबोधयाम्यहम् ॥

अत्र उचितविषये दाता त्वं, उचितधनादिसंग्राहकश्च। अतः प्राणानप्यविगणय्य मच्छत्रुनिबर्हणे तव राज्यप्राप्तौ च साहाय्यं कृतवतां पूजनीयानामेतेषां पूजने नियोजया-

मीत्युक्त्या स्वाभिलषितकार्याय तदभिज्ञ एव नियोक्तव्य इति सूचितम् । तथा च कामन्दके —

यो यदर्थं तु विजानाति तं तत्र विनियोजयेत् ॥ इति ।

हीनं रतिगुणैस्सर्वैरभिहन्तारमाहवे ।
त्यजन्ति नृपतिं सैन्यास्सं विन्नास्ते नरेश्वरम् ॥

अत्र सेनासौख्यसंपादकदानमानादिगुणवर्जितं प्राणहानिकरे युद्ध एव केवलं पुनः पुनर्नियोक्तारं योधास्त्यजन्तीत्युक्तम् । तथा च कामन्दके —

आजीव्यस्सर्वभूताना राजा पर्जन्यवद्भवेत् । निराजीव्यं त्यजन्त्येनं शुष्कं वृक्षमिवांडजाः ॥
अर्थार्थी जीवलोकोऽयं ज्वलन्तमुपसर्पति । क्षीणक्षीरां निराजीव्यां वत्सस्त्यजति मातरम् ॥
इति । इत्युपदिश्य धनकनकभूषणादिभि विभीषणसंमानितान् मुदिताश्च तान् वनचारिणः पश्यन् संतुष्टमानसो राम सीतया लक्ष्मणेन चाधिरुह्य तद्विमानं सुग्रीवप्रमुखानेवमुवाच —

मित्रकार्यं कृतमिदं भवद्भिर्वानरोत्तमाः ।
अनुज्ञाता मया सर्वे यथेष्टं प्रतिगच्छत ॥

यत्तु कार्यं वयस्येन सुहृदा वा परंतप ।
कृतं सुग्रीव तत्सर्वं भवताऽधर्मभीरुणा ॥

स्वराज्ये वस लङ्कायां मया दत्ते विभीषण ।
अयोध्यां प्रतियास्यामि राजधानीं पितुर्मम ॥ इति ।

तदनु भवता सह वयमपि समागम्य नगरीं,

दृष्ट्वा त्वामभिषेकार्द्रं कौसल्यामभिवाद्य च ।
अचिरेणागमिष्यामः स्वान् गृहान् नृपतेः सुत ॥

इति वदतो वानरान्,

अब्रवीद्राघवः श्रीमान्ससुग्रीवविभीषणान् ।
प्रियात्प्रियतरं लब्ध यदहं ससुहृज्जन ॥

सर्वैर्भवद्भिः सहितः प्रीतिं लप्स्ये पुरीं गतः ।

अनेन शत्रुहननजनितहर्षेण पुरीं प्रविशन्तं राजानं सुहृदः सहैव गच्छेयुरिति सूचितम्। अत एव सृगालवधानन्तरं निखिलसुहृज्जनपरिवृतावेव मधुरां प्रविष्टौ रामकृष्णाविति प्रतिपादितं हरिवंशे —

प्रविशन्त पुरीं रम्यां गोविन्दं राममेव च। अनुजग्मुर्यदुगणाः शक्रं देवगणा इव ॥ इति।

क्षिप्रमारोह सुग्रीव विमानं वानरैस्सह।
त्वमध्यारोह सामात्यो राक्षसेन्द्र विभीषण ॥

इति तावदादिश्य, यथासुखमसबाधमधिरुह्योपविष्टैः तैरभिपूर्णं सौवर्णं तद्विमानं तूर्णमुत्पतेत्याज्ञापयामास ॥

षड्विंशतिशततमे —

अनुज्ञातं तु रामेण तद्विमानमनुत्तमम्।
उत्पपात महामेघः श्वसनेनोद्धतो यथा ॥

पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः।
अब्रवीन्मैथिलीं सीतां रामः शशिनिभाननाम् ॥

कैलासशिखराकारे त्रिकूटशिखरे स्थिताम्।
लङ्कामीक्षस्व वैदेहि निर्मितां विश्वकर्मणा ॥

अत्र रावणवधानन्तरं सीताया अपवादपरिहाराय निष्ठुरभाषणाग्निप्रवेशोपेक्षणादिना क्लेशमुत्पाद्य अनन्तरं तदुपशमनार्थं लङ्कादिविषयप्रदर्शनेन सतोषकरणात् धार्मिका महापुरुषाः धर्मविरोधं इष्टजने नैष्ठुर्याचरणेनापि परिहृत्य तत्प्रयुक्तं क्लेशं विषयान्तर-प्रदर्शनेन चाटूक्त्या निराकुर्वन्तीति सूचितम् ॥

अत एव दमयन्तीकृतभर्त्रन्तरवरणयत्नश्रवणेन कुपितो नलः तां नैष्ठुर्यं श्रावयित्वा तत्प्रयुक्तक्लेशं स्ववृत्तार्थकथनेन निराकृतवानिति प्रतिपादितं वनपर्वणि —

कथं नु नारी भर्तारमनुरक्तमनुव्रतम्। उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित् ॥

ततस्तौ सहितौ रात्रीं कथयन्तौ पुरातनम्। वने विचरतं सर्वमूषतुर्मुदितौ नृप ॥ इति।

अत एव दुष्यन्तः शकुन्तलां सपुत्रां स्वसमीपमागतां निर्भर्त्स्य तदीयशपथानन्तरं तां परिसांत्व्य वासोदानादिभिः पूजितवानिति प्रतिपादितमादिपर्वणि —

असत्यवचना नार्यः कस्ते श्रद्धास्यते वचः ।
विश्वामित्रो ब्राह्मणत्वे लुब्धः कामवशं गतः ॥

मेनकाऽप्सरसा श्रेष्ठा महर्षीणां पिता च ते । तयोरपत्यं कस्मात्त्वं पुंश्चलीव प्रभाषसे ॥

अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे । विशेषतो मत्सकाशे दुष्टतापसि गम्यताम् ॥

अथान्तरिक्षे दुष्यन्तं वागुवाचाशरीरिणी । भरस्व पुत्रं दुष्यन्त मावमंस्थाः शकुन्तलाम् ॥

तां विशोध्य ततो राजा दैवतैस्समहर्षिभिः । हृष्ट प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ॥

तां चैव भार्यां दुष्यन्त पूजयामास सर्वतः । अब्रवीच्चैव ता राजा सांत्वपूर्वमिदं वचः ॥

लोकस्यायं परोक्षस्तु संबन्धो नौ पुराऽभवत् ।
कृतो लोकसमक्षोऽयं संबन्धो वै त्वया सह ॥

तस्मादेतन्मया देवि त्वच्छुद्ध्यर्थं विचारितम् ।
मन्यते चैव लोकस्ते स्त्रीभावान्मयि सगतम् ॥

यच्च कोपितयाऽत्यर्थं त्वयोक्तोऽस्म्यप्रियं प्रिये ।
प्रणयिन्या विशालाक्षि तत्क्षान्तं ते मया शुभे ॥

तामेवमुक्त्वा राजर्षिर्दुष्यन्तो महिषीं प्रियाम् ।
वासोभिरन्नपानैश्च पूजयामास भारत ॥ इति ।

**एतदायोधनं पश्य मांसशोणितकर्दमम् ।**
**हरीणां राक्षसानां च सीते विशसनं महत् ॥**

**अत्र दत्तवरः शेते प्रमाथी राक्षसेश्वरः ।**
**तव हेतोर्विशालाक्षि रावणो निर्जितो मया ॥**

**कुंभकर्णोऽत्र निहतः प्रहस्तश्च निशाचरः ।**
**धूम्राक्षश्चात्र निहतो वानरेण हनूमता ॥**

**विद्युन्माली हतश्चात्र सुषेणेन महात्मना ।**
**लक्ष्मणेनेन्द्रजिच्चात्र रावणिर्निर्जितो रणे ॥**

**अंगदेनात्र निहतो विकटो नाम राक्षसः ।**
**विरूपाक्षश्च दुष्प्रेक्षो महापार्श्वमहोदरौ ॥**

अकंपनश्च निहतो बलिनोऽन्ये च राक्षसाः ।
त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ ॥

युद्धोन्मत्तश्च मत्तश्च राक्षसप्रवरौ हतौ ।
निकुम्भश्चैव कुंभश्च कुंभकर्णात्मजावुभौ ॥

वज्रदंष्ट्रश्च दंष्ट्रश्च बहवो राक्षसा हताः ।
मकराक्षश्च दुर्धर्षो मया युधि निपातितः ॥

कंपनश्चात्र निहतः शोणिताक्षश्च वीर्यवान् ।
यूपाक्षश्च प्रजङ्घश्च निहतोऽत्र महाहवे ॥

विद्युज्जिह्वोऽत्र निहतो राक्षसो भीमदर्शनः ।
यज्ञशत्रुश्च निहतः सुप्तघ्नश्च महाबलः ॥

सूर्यशत्रुश्च निहतो ब्रह्मशत्रुस्तथापरः ।
अत्र मन्दोदरी नाम भार्या तं पर्यदेवयत् ॥

सपत्नीनां सहस्रेण सास्रेण परिवारिता ।
एतत्तु दृश्यते तीर्थं समुद्रस्य वरानने ॥

यत्र सागरमुत्तीर्य तां रात्रिमुषिता वयम् ।
एष सेतुर्मया बद्धः सागरे सलिलार्णवे ॥

तव हेतोर्विशालाक्षि नलसेतुस्सुदुष्करः ।
पश्य सागरमक्षोभ्यं वैदेहि वरुणालयम् ॥

अपारमभिगर्जन्तं शङ्खशुक्तिनिषेवितम् ।
हिरण्यनाभं शैलेन्द्रं काञ्चनं पश्य मैथिलि ॥

त्वदर्थं यो हनुमते भित्वा सागरमुद्गतः ।
एतत्कुक्षौ समुद्रस्य स्कन्धावारनिवेशनम् ॥

एतत्तु दृश्यते तीर्थं सागरस्य महात्मनः ।
सेतुबन्ध इति ख्यातं त्रैलोक्येन च पूजितम् ॥

एतत्पवित्रमतुलं महापातकनाशनम् ।

अत्र सेतुबन्धस्य ब्रह्महत्यादिमहापातकनाशकत्वमुक्तं। तथा च पराशरः —

सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्या व्यपोहति ॥ इति।

ननु सेतुदर्शनमात्रेण महापातकनिवृत्तौ तत्रैव स्थित्वा पातकमाचरतां खलानामपि पातकनिवृत्तिप्रसंगादिति चेन्न, परिषदुपदिष्टनियमाचरणपूर्वकं सेतुदर्शनस्यैव पातक-निवर्तकत्वात्। तथा च पराशरमाधवीये —

चतुर्विधोपपन्नस्तु विधिवद्ब्रह्मघातके। समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् ॥ इति।

अत्र विधिवदित्युक्तं, कोऽसौ विधिरित्यत आह —

सेतुबन्धपथे भिक्षा चातुर्वर्ण्यात्समाचरेत्। वर्जयित्वा विकर्मस्थान छत्रोपानद्विवर्जितः ॥

भिक्षाप्रकारमाह —

अत्र दुष्कृतकर्मा वै महापातककारकः। गृहद्वारेषु भिक्षार्थं भिक्षार्थी ब्रह्मघातकः ॥

कृत्वा पापं न गूहेत गूह्यमानं विवर्धते ॥ इति।

तस्य मार्गे अवस्थानदेशे विशेषमाह —

गोकुलेषु वसेच्चैव ग्रामेषु नगरेषु च। तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च ॥

निवासस्थोऽपि पापप्रख्यापनं कुर्यात् ॥

येतेषु ख्यापयन्नेतः पुण्यं गत्वा तु सागरम्। दशयोजनविस्तीर्णं शतयोजनमायतम् ॥

रामचन्द्रसमादिष्टं नलसंचयसञ्चितम्। सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति।

सेतुदर्शनानन्तरं कर्तव्यमाह —

सेतुं दृष्ट्वा विशुद्धात्मा ह्यवगाहेतु सागरम्।

एवं च परिषदुक्तप्रकारेण पापप्रख्यापनपुरस्सरं यात्रा कृत्वा सेतौ दृष्टे सति तत्पापक्षय इत्यभिप्रायः इति ॥

स्नानानन्तरं रामेण प्रतिष्ठितं लिङ्गं द्रष्टव्यमित्युक्तं कूर्मपुराणे। रामं प्रति महादेवः—

ये त्वया स्थापितं लिङ्गं द्रक्ष्यन्त्येते द्विजातय। महापातकसंयुक्तास्तेषा पापं विनश्यति ॥

अन्यानि चापि पापानि स्नातस्यात्र महोदधौ।
दर्शनादेव लिङ्गस्य नाशयन्ति न संशयः ॥ इति।

अत्र पूर्वं महादेवः प्रसादमकरोत्प्रभुः।

अनेन महादेव श्रीरामभद्रस्य पूर्वं प्रसादं कृतवानिति प्रतिपादितम् । किमत्र रूढ्या महादेवशब्देन शिवोऽभिधीयते उत महांश्चासौ देवश्चेति योगेन समुद्र इति संदेहे यद्यपि प्रबलया रूढ्या शिवोऽभिधातुं शक्यते, तथापि नचेह तत्संभवति पूर्वं शिवप्रसादस्यानुक्तत्वात् । नच एतदनुवादबलादसिद्धोऽपि शिवप्रसादः कल्प्यत इति वाच्यं, समुद्रप्रसादेनैवोपपत्तौ असिद्धशिवप्रसादकल्पनाया अन्याय्यत्वात् । अत एव आग्नेय्याऽऽग्नीध्रमुपतिष्ठत इत्यत्र अक्लृप्तक्रतुसंबन्धाग्नेयीं परित्यज्य प्रकरणप्रमाणसिद्धक्रतु-संबन्धाग्नेयीग्रहणमेव न्याय्यमित्युक्तं **पूर्वतन्त्रे** । अभ्यधायि च अत्र पूर्वं समुद्रप्रसाद —

विधास्ये राम येनापि विषहिष्येऽप्यहं यथा । ग्राहा न प्रहरिष्यन्ति यावत्सेना तरिष्यति ॥

एव सेतुं महोत्साहः करोतु मयि वानर. । तदहं धारयिष्यामि इति ।

महच्छब्दवाच्यत्वं च समुद्रस्य 'अस्मिन्महत्यर्णवे' इति मन्त्रलिङ्गात्, आपो महद्व्योम जलमित्याद्येकशतमुदकनामानीति **वेदनिघंटौ** महच्छब्दस्य उदकनामत्व-दर्शनाच्च, महांश्चासौ देवश्चेति योगव्युत्पत्त्या समुद्र एवाभिधीयत इति चेदत्रोच्यते — 'महादेवं महापुरुषं वाऽर्चयेत्' इति **कल्पसूत्रात्**, 'वामदेवो महादेवो विरूपाक्ष-स्त्रिलोचनः' इत्य**भिधानकोशाच्च** महादेवशब्देन रूढ्या शिव एवाभिधीयते । रूढिश्च योगाद्बलीयसी । व्यवस्थापितं चैतत् 'अहीनो वा प्रकरणाद्गौण.' इति **तार्तीयाधिकरणे**-

तिस्र एव सायाह्नस्योपसदो द्वादशाहीनस्येति वाक्यमुदाहृत्य न हीनोऽहीन इति योगव्युत्पत्त्या प्रकृतज्योतिष्टोम एव द्वादशोपसत्कताविकल्पेन विधीयत इति पूर्वपक्षं प्रापय्य अह्नः खः क्रताविति अहर्गणे क्रतुविशेषे वाच्ये विहितखप्रत्ययान्ताहीन श्रुत्यवगत-द्वादशाहाद्यहर्गण एव द्वादशोपसत्कत्वं विधीयते रूढेर्बलीयस्त्वादिति ।

अत एव **उत्तरमीमांसायामपि** 'शब्दादेव प्रमित.' इत्यधिकरणे —

अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥

इति मन्त्रप्रतिपाद्योऽगुष्ठमात्रः पुरुषो जीव एव अंगुष्ठमात्रत्वपरिमाणस्य जीवमात्रधर्मतया परमात्मन्यभावादिति प्राप्ते निरंकुशेशितृत्वयोगेन क्लृप्तया च रूढ्या परमात्मासाधारण-ईशानश्रुतिबलेन प्रकृतमन्त्रप्रतिपाद्यः परमात्मैव । परिमाणं च कथंचिद्धृदयाद्यवस्थानमपेक्ष्य परमात्मन्युपपादनीयमिति रूढिनाबलयुक्तमेवाश्रित्य परमात्मपरत्वं व्यवस्थापितम् ।

यच्चोक्तमाग्नेयीन्यायेन क्लृप्तसमुद्रप्रसादपरत्वमेव वक्तव्यमिति तत्रोच्यते — अप्रसिद्धस्यापि शिवप्रसादस्य शिवे महादेवशब्दरूढिबलेन प्रतिपादनसंभवात् । अत एव **पूर्वतन्त्रे** वर्षासु रथकार आदधीतेत्यत्र रथकारशब्दस्य रथं करोतीति योगशक्तिलभ्यं प्रमाणान्तरसिद्धविद्यं त्रैवर्णिकमपहाय,

शूद्राया करणो वैश्यान्माहिष्यो विट्स्त्रिया नृपात् ।
रथकारस्तु माहिष्यात् करण्या यस्य संभवः ॥

इति स्मृतिप्रसिद्धरूढिशक्तिबलेन अक्लृप्तविद्यजातिविशेषपरत्वमेवेति निर्णीतं । तदिहापि महादेवशब्दरूढिबलेनाप्रसिद्धशिवप्रसादकल्पनमपि न्याय्यमेव ॥

वस्तुतस्तु शिवप्रसादोऽपि पूर्वक्लृप्त एव । न हि शिवप्रसादस्य सिद्धत्वे प्राक् प्रतिपादनेन भवितव्यमिति नियमोऽस्ति । तत्तत्काले अप्रतिपादितानामपि पायसादीनां प्रकरणान्तरे सिद्धवत्प्रतिपादनस्य बहुलमुपलम्भात् । यथा **किष्किन्धाकाण्डे** —

परमान्नं तु वैदेह्या ज्ञात्वा दास्यति वासव । यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ॥

तदन्नं मैथिली प्राप्य विज्ञायेन्द्रादिदं त्विति ।
अग्रमुद्धृत्य रामाय भूतले निर्वपिष्यति ॥ इति ।

**यथा वा सुन्दरकाण्डे** —

क्षिप्तामिषीका काकस्य कोपादेकाक्षिशातनीम् ।
मनःशिलायास्तिलको गण्डपार्श्वे निवेशितः ॥
त्वया प्रणष्टे तिलके तं किल स्मर्तुमर्हसि ॥ इति ।

**यथैव चात्र काण्डे** —

अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः ।
अग्निहोत्रेण संस्कारं केन त्वं तु न लप्स्यसे ॥ इति ।

किंच निग्राह्यात्समुद्राद्रामस्य प्रसादप्राप्तिवर्णनमप्यसंगतं । यानि तु समुद्रप्रसाद-परत्वेनोदाहृतानि विधास्ये राम येनापीत्यादीनि वचनानि तानि न प्रसादपराणि ; किंतु अथोवाच रघुश्रेष्ठः सागरं दारुणं वचः । अद्य त्वां शोषयिष्यामि सपातालं महार्णव ॥ शरनिर्दग्धतोयस्य परिशुष्कस्य सागर । मया शोषितगात्रस्य पांसुरुत्पद्यते महान् ॥

मत्कार्मुकविसृष्टेन शरवर्षेण सागर। पारं तेऽद्य गमिष्यन्ति पद्भिरेव प्लवङ्गमाः ॥

इति रामनिर्भर्त्सनेन भीतस्य,

अब्रवीत्प्राञ्जलिर्वाक्यं राघवं शरपाणिनम्।

इति कृताञ्जलिपुटत्वेनावगतस्य प्रातिकूल्याचरणं विना आनुकूल्याचरणपराण्येव। निग्रहेणैव वशं नीतस्समुद्रो नतु प्रसादनेनेत्ययमर्थः रामायणतात्पर्यज्ञाना **प्राचीनानां** वचनादप्यवगम्यते —

स श्रेयांसि बहूनि सन्दिशतु वो वीरः कृपात्मा शुचि-
यैन्नेलान्तजरक्तिमा समतनोदब्धे शराग्रे स्थितिम्।
यद्दीक्षा विमतानुजाय सदयो लङ्काधिपत्यं ददौ
यत्पादाब्जपरागपालिरकरोत्पाषाणमेणीदृशम् ॥

क्षुद्रास्संत्रासमेनं विजहत हरयो भिन्नशक्रेभकुंभा
युष्मद्गात्रेषु लज्जा दधति परममी सायका सपतन्तः।
सौमित्रे तिष्ठ पात्र त्वमपि नहि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥

इति। शिवप्रसादस्तु रामे उचित शिवविष्ण्वो. परस्परं प्रसाद्यप्रसादकभावस्य बहुषु स्थलेषु दर्शनात्। तथाच **द्रोणपर्वणि** —

पार्वत्या सहितं देवं भूतसङ्घैश्च भास्वरैः। स्तूयमानं स्तवैर्दिव्यैर्ऋषिभिर्ब्रह्मवादिभिः ॥

वासुदेवस्तु तं दृष्ट्वा जगाम शिरसा क्षितिम्।
पार्थेन सह धर्मात्मा गृणन् ब्रह्म सनातनम् ॥ इति।

तथा **हरिवंशेऽपि** —

सहोपेत्याह गोविन्दं सांत्वपूर्वमुमापतिः। कृष्ण कृष्ण जगन्नाथ जाने त्वां पुरुषोत्तमम् ॥

तत्प्रसीदाऽभयं दत्तं बाणस्यास्य मया प्रभो।
मया दत्तवरो दैत्यस्तन्नस्त्वा क्षमयाम्यहम् ॥ इति।

प्रपञ्चितश्चायमर्थो विस्तरेण **बालकाण्डे** परशुरामसंवादे। प्रतिपादितश्चात्रैव विस्पष्टं शिवप्रसादः,

ततो वैश्रवणो राजा यमश्चामित्रकर्शनः । सहस्राक्षो महेन्द्रश्च वरुणश्च परंतपः ॥
षडर्धनयनः श्रीमान् महादेवो वृषध्वज । कर्ता सर्वस्य लोकस्य ब्रह्मा ब्रह्मविदां वरः ॥
एते सर्वे समागम्य विमानैस्सूर्यसन्निभैः । आगम्य नगरीं लङ्कामभिजग्मुश्च राघवम् ॥

ततः —

इदं शुभतरं वाक्यं व्याजहार महेश्वर । एष राजा विमानस्थ पिता दशरथस्तव ॥
काकुत्स्थ मानुषे लोके गुरुस्तव महायशा । इन्द्रलोकं गतः श्रीमान् त्वया पुत्रेण तारित ॥
लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय । महादेववच श्रुत्वा काकुत्स्थ. सहलक्ष्मण. ॥

विमानशिखरस्थस्य प्रणाममकरोत्पितुः ॥ इति ।

महादेवप्रसादेन पित्रा मम समागम । इति च ।

तस्मान्महादेवप्रसाद. शिवप्रसाद एव ।

यदि तु शिवापेक्षया उत्कृष्टस्य विष्णो. रामस्य शिवात् प्रसादवर्णनमनुचितमिति मतं, तदा शिवापेक्षया निकृष्टसमुद्रप्रसादवर्णनं वृश्चिकभयात्पलायमानस्य आशीविषमुखनिपतनमनुसरति । एवं सत्यपि यस्य कस्यचित्प्रसादो वा भवतु, शिवसबन्धो माभूदिति यद्युच्येत, एवमपि

पृथिवी सलिलं तेजो वायुराकाश एव च । सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तयः ॥

'या सृष्टिस्स्रष्टुराद्या' इत्यादिवचनै. अष्टमूर्तित्वेनावगतं शिवांशभूतजलात्मकसमुद्रस्य प्रसादवर्णनमपि घट्टकुटीप्रभातवृत्तान्तन्यायेन शिवप्रसाद एव पर्यवस्यतीति शिवप्रसादपरत्वमेव युक्तम् ।

किंच अत्र रामेण प्रतिप्रयाणे पूर्ववृत्तानामर्थानामानुपूर्व्येण कथनावसरे पूर्वशब्दं विहायैव अत्रेति तद्वृत्तान्तं निरूपयता महादेवप्रसादप्रतिपादनावसरे अत्र पूर्वं महादेव इति अधिकस्य पूर्वशब्दस्यापि प्रयोगात् शिवकृतप्रसादद्वयं रामभद्रस्यास्तीति गम्यते । अत्र रावणवधानन्तरं सकलदेवतासंनिधौ शिवकृतः,

एष राजा विमानस्थ पिता दशरथस्तव । लक्ष्मणेन सह भ्रात्रा तमेनमभिवादय ॥
महादेववचः श्रुत्वा काकुत्स्थ. सहलक्ष्मणः । विमानशिखरस्थस्य प्रणाममकरोत्पितुः ॥
इति प्रतिपादित', भरतं प्रति हनुमत्प्रेषणावसरे,

महादेवप्रसादेन पित्रा मम समागमः ।

इत्यनूदितः एकः । न चात्रापि महादेवमहेश्वरशब्दाभ्या शिवो न प्रतिपाद्यत इति वाच्यम्,

षडर्धनयनः श्रीमान् महादेवो वृषध्वज. ।

इति तस्यैव प्रकृतत्वात् ।

'वामदेवो महादेवो विरूपाक्षस्त्रिलोचन' ।' 'क्रतुध्वंसी वृषध्वज.' 'शिवः शूली महेश्वरः' इति नामकोशप्रसिद्ध्या महादेवमहेश्वरशब्दयो' शिववाचकत्वावगमेन,

हरिर्यथैकः पुरुषोत्तम' स्मृतो महेश्वरस्त्र्यम्बक एव नापरः ।
तथा विदुर्मां मुनयश्शतक्रतुं द्वितीयगामी नहि शब्द एष नः ॥

इति **कालिदासवचनेन** असाधारण्यावगमाच्च महादेवमहेश्वरशब्दाभ्यां शिवप्रतिपादनस्यैव युक्तत्वात् एवरूपात् शिवप्रसादात् पूर्वभाविनं शिवप्रसादं अत्र पूर्वं महादेव इत्यभिहितवान् इत्यर्थवर्णनमेव युक्तम् । समुद्रपरत्वे तत्कृतप्रसादद्वयाभावेन पूर्वपदाऽऽनर्थक्यप्रसंगात् । तस्मान्महादेवप्रसादोऽत्र शिवप्रसाद एवेति सिद्धम् ।

इत्थं अत्र पूर्वं महादेव इत्येतस्य पूर्वोत्तरग्रन्थपर्यालोचनया लब्धोऽर्थः प्रतिपादितः ।

**अप्पय्यदीक्षितैः** पुराणान्तरवचनपर्यालोचनया अत्रत्यवचनानामित्थं स्वारस्यं वर्णितम् —

यस्यासतेस्म शिबिरं शिव दक्षिणाग्रे कुक्षिं गते जलनिधेर्नलसेतुक्लृप्त्यै ।
तस्मिन् जगद्विदितभूमनि सेतुबन्धे पूर्वं प्रसन्न इति च त्वयि भक्तिमूचे ॥

यस्य लक्ष्मीकल्पसिद्धस्य सेतुबन्ध इति नाम्ना प्रसिद्धस्य सेतोर्दक्षिणाग्रे समुद्रस्य कुक्षिं गते इदानीन्तननलसेतुनिर्माणाय सेनानिवेश आसते स्म, तस्मिन् लक्ष्मीकल्पसिद्धे महापातकनाशने पवित्रतरे त्रैलोक्यपूजिते सेतुबन्धाख्ये पूर्वं महादेवः प्रसादमकरोत् । अतः श्रीरामभद्रस्य शिवे भक्तिरनादिसिद्धाऽवगता । इदानीन्तननलसेतुव्यतिरिक्तकूर्मपुराणप्रतिपादितपूर्वकल्पसिद्धसेतुबन्धाख्यसेतुविषयत्व एव,

एतत्तु दृश्यते तीर्थं सागरस्य महात्मन. । सेतुबन्ध इति ख्यातं त्रैलोक्येनाभिपूजितम् ॥
एतत्पवित्रमतुलं महापातकनाशनम् । अत्र पूर्वं महादेवः प्रसादमकरोत्प्रभुः ॥

इत्यादिश्लोकैस्त्रैलोक्यपूजितत्वमहापातकनाशकत्वपवित्रत्वादीनां सिद्धवत्प्रतिपादनं संगच्छते।

नूनननलसेतुविषयत्वे तु सिद्धवत्तया त्रैलोक्यपूजितत्वादिप्रतिपादनं असङ्गतं स्यात्। तत्र रामस्य शिवप्रसादः कूर्मपुराणे रामायणोपाख्याने रावणवधानन्तरं प्रतिप्रयाणवृत्तान्तकथने विवृतः —

सेतुमध्ये महादेवमीशानं कृत्तिवाससम्। स्थापयामास लिंगं तत्पूजयामास राघवः ॥

तस्य देवो महादेवः पार्वत्या सह शंकरः। प्रत्यक्षमेव भगवान् दत्तवान् वरमुत्तमम् ॥

ये त्वया स्थापितं लिंगं द्रक्ष्यंते ते द्विजातयः।
महापातकसंयुक्तास्तेषां पापं विनश्यति ॥

अन्यानि चैव पापानि स्नातस्यात्र महोदधौ।
दर्शनादेव लिङ्गस्य नाशं यान्ति न संशयः ॥

यावत्स्थास्यन्ति गिरयो यावदेव च मेदिनी।
यावत्सेतुश्च तावच्च स्थास्याम्यत्र तिरोहितः ॥

स्नानं दानं जपः श्राद्धं भविष्यत्यक्षय पलम। स्मरणादेव लिङ्गस्य दिनपापं प्रणश्यति ॥

इति। एवं च अत्रत्यपूर्वोत्तरवचनपर्यालोचनया उदाहृतकूर्मपुराणवचनपर्यालोचनया च महादेवप्रसादः शिवप्रसाद एवेति सिद्धम्। व्यक्तं चैतन्महापुरुषाणां श्रीकृष्णार्जुनप्रभृतीनामपि शिवमुद्दिश्य तपश्चरणेन पूजादिभिश्च महादेवप्रसादं लब्ध्वैव जयो लब्ध इति प्रतिपादनाद्भारतादिषु। तत्र **हरिवंशे** श्रीकृष्णेन पारिजातहरणे महादेवं संपूज्य तदीयवरप्रसादेनैव इन्द्रजयः प्राप्त इति प्रतिपादितम्। श्रीकृष्णः —

दध्यौ गङ्गां सरिच्छ्रेष्ठां नमस्कृत्य वृषध्वजम्।
अथाययौ विष्णुपदी स्मृता कृष्णेन भारत ॥

संपूज्य ता ततः कृष्णः कृत्वा स्नानमधोक्षजः।
उदकं च गृहीत्वाऽथ बिल्वं च हरिरव्ययः ॥

देवमावाहयामास रुद्रं सर्वेश्वरेश्वरम्। ततः प्राप्तो महादेवस्सोमशेखरवरः प्रभुः ॥

तस्याम्बूपरि बिल्वस्य तथा गङ्गोदकस्य च। तं पारिजातकुसुमैरर्चयामास केशवः ॥

तुष्टाव वाग्भिरीशेशं सर्वकर्तारमीश्वरम् ॥

नान्यस्त्वत्तः परमो देवदेवो जगत्पतिः सुरसंघारिहन्ता।
यस्मादीशो महतामीश्वराणा भर्ता नार्यः प्रीतिदः प्राणदश्च ॥

तस्माद्धि त्वामीश्वरं प्राहुरीशं सन्तो विद्वासः सर्वशास्त्रार्थतत्त्वम् ।
भूतं यस्माज्जगदाद्यं तु वीर त्वत्तोऽव्यक्तादक्षरादक्षरेश ॥

इति संस्तूयमानस्तु भगवान् गोवृषध्वजः । प्रसार्य दक्षिणं हस्तं वासुदेवमथाब्रवीत् ॥
मनीषितानामर्थानां प्राप्तिस्तेऽस्तु सुरोत्तम । पारिजातस्य हर्ता त्वं माभूत्ते मनसि व्यथा ॥
यथा मैनाकमाश्रित्य तपस्त्वमकरोः प्रभो । तथा मम वरं कृष्ण संस्मृत्य स्थैर्यमाप्नुहि ॥
अवध्यस्त्वमजय्यस्त्वमतः शूरतरस्तथा । भवितासीत्यवोचं यत्तत्तथा न तदन्यथा ॥

इति । एवं **वनपर्वण्यपि** साल्ववधार्थं प्रस्थानसमये शिवं प्रणम्य प्रस्थितोऽस्मीति धर्मराजं प्रति भगवानाह —

तैः प्रहृष्टात्मभिर्वीरैराशीर्भिरभिनन्दितः । वाचयित्वा द्विजश्रेष्ठान् प्रणम्य शिरसा भवम् ॥
प्रयतोऽस्मि नरव्याघ्र बलेन महता वृत ॥

इति । एवं भारते सैन्यजयार्थमर्जुनेन इन्द्रकीलपर्वते श्रीशिवमुद्दिश्य नियमेन तपश्चरणपूर्वकं शिवपूजनं कृतं । ततस्तुष्टेन शिवेन पाशुपतादिमहास्त्रोपदेशवरदानादिकं कृतं । शिवप्रसादेनैव तत्सैन्यजयो लब्ध इति प्रतिपादितं **वनपर्वणि** किरातार्जुनीये इन्द्रकीलपर्वतगमनानन्तरं —

रमणीये वनोद्देशे रममाणोऽर्जुनस्तदा । तपस्युग्रे वर्तमानमुग्रतेजा महामनाः ॥
दर्भचीरं निवेश्याऽथ दण्डाजिनविभूषितः । जीर्णं च पतितं भूमौ पर्णं समुपयुक्तवान् ॥
पूर्णे पूर्णे त्रिरात्रे तु मासमेकं फलाशनः । द्विगुणेन हि कालेन द्वितीयं मासमभ्यगात् ॥
तृतीयमपि मासं सः पक्षेणाहारमाहरत् । चतुर्थे त्वथ संप्राप्ते मासे भरतसत्तमः ॥
वायुभक्षो महाबाहुरभवत्पाण्डुनन्दनः । ऊर्ध्वबाहुर्निरालम्बः पादांगुष्ठाग्रधिष्ठितः ॥
सदोपस्पर्शनाच्चास्य बभूवुरमितौजसः । विद्युदम्भोरुहनिभा जटास्तस्य महात्मनः ॥
ततो महर्षयस्सर्वे जग्मुर्देवं पिनाकिनम् । निवेदयिषवः पार्थं तपस्युग्रे समास्थितम् ॥
तं प्रणम्य महादेवं शशंसुः पार्थकर्म तत् ॥

ततः —

पिनाकपाणिर्भगवान् सर्वपापहरो हरः ॥

कैरातं वेषमास्थाय काञ्चनद्रुमसंनिभम् । देव्या सहोमया श्रीमान् समानव्रतशीलया ॥

निप्पपात महार्चिष्मान् दहनो देहवानिव ।

ततः वराहरूपिणं दनोः पुत्रं अर्जुनेन वेध्यतया बाणलक्ष्यीकृतं स्वयं हन्तुमारेभे । ततश्चार्जुनस्य किरातवेषेण परमेश्वरेण सह युद्धमभवत् । ततः,

रुधिरेणाऽऽप्लुताङ्गस्तु पाण्डवो भृशदुःखितः । शरण्यं शरणं गत्वा भगवन्तं पिनाकिनम् ॥

मृण्मयं स्थण्डिलं कृत्वा माल्येनापूजयद्भवम् ।
तच्च माल्यं तदा पार्थः किरातशिरसि स्थितम् ॥

अपश्यत्पाण्डवश्रेष्ठो हर्षेण प्रकृतिं गतः । पपात पादयोस्तस्य ततः प्रीतोऽभवद्भवः ॥

उवाच चैनं वचसा मेघगम्भीरगीर्हरः । जातविस्मयमालोक्य तपःक्षीणाङ्गसंहतिम् ॥

शिवः —

भो भो फाल्गुन तुष्टोऽस्मि कर्मणाऽप्रतिमेन ते ।
शौर्येणानेन धृत्या च क्षत्रियो नास्ति ते समः ॥

समं तेजश्च वीर्यं च ममाद्य तव चानघ । प्रीतस्तेऽहं महाबाहो पश्य मां भरतर्षभ ॥

ददामि ते विशालाक्ष चक्षुः पूर्वऋषिर्भवान् ।
विजेष्यसि रणे शत्रूनपि सर्वान् दिवौकसः ॥

प्रीत्या च तेऽहं दास्यामि यदस्त्रमनिवारितम् ।
त्वं हि शक्तो मदीयं तच्छस्त्रं धारयितुं क्षणात् ॥

अर्जुनः —

भवान् ददाति चेन्मह्यं कामं प्रीत्या वृषध्वज ।
कामये दिव्यमस्त्रं तत् घोरं पाशुपतं प्रभो ॥
यत्तद्ब्रह्मशिरो नाम भीमं रौद्रपराक्रमम् ।

श्रीशिवः —

ददामि तेऽस्त्रं दयितं महत्पाशुपतं विभो । समर्थो धारणे मोक्षे संहारे चासि पाण्डव ॥

नैतद्वेद महेन्द्रोऽपि न यमो न च यक्षराट् ।
वरुणो अथवा वायुः कुतो वेत्स्यन्ति मानवाः ॥

न त्वेतत्सहसा पार्थ मोक्तव्यं पुरुषे क्वचित् । जगद्विनाशयेत्सर्वमल्पतेजसि पातितं ॥

अवध्यो नाम नास्त्यस्य त्रैलोक्ये सचराचरे। मनसा चक्षुषा वाचा धनुषा च निपात्यते॥
प्रीतिमानस्मि ते पार्थ भवान्सत्यपराक्रमः। गृहाण वरमस्मत्तः काङ्क्षितं पुरुषोत्तम॥
न त्वया सदृशः कश्चित् पुमान् मर्त्येपु मानद। दिवि वा विद्यते क्षत्रं तत्प्रधानमरिंदम॥

इति। तथा **द्रोणपर्वणि** अर्जुनेन नतिस्तुत्यादिसमाराधितपरमेश्वरप्रसादाद् जयद्रथवधाय वरो लब्ध इति प्रतिपादितम्। जयद्रथवधे अर्जुनेन कृतां प्रतिज्ञां शिवप्रसादेन विना दुस्तरा मत्वा भगवान् वासुदेवः स्वप्ने साम्बशिवसमीपमर्जुनं नीत्वा स्तुतिनत्यादिना परमेश्वरं तोषयित्वा शिवसकाशात् पूर्वदत्तपाशुपतास्त्रस्मरणवरदानादिकं कारयित्वा जयद्रथ-वधरूपं जयं प्रापितवान् इति प्रतिपादितं **द्रोणपर्वणि** —

ततः प्रीतं भवं ज्ञात्वा स्मृतिमानर्जुनस्तदा। वरमारण्यके दत्तं दर्शनं शंकरस्य च॥
मनसा चिन्तयामास तन्मे संपद्यतामिति।

इति परमेश्वरप्रार्थनामकरोत्।

तस्य तन्मतमाज्ञाय प्रीतः प्रादाद्वरं भवः। तच्च पाशुपतं घोरं प्रतिज्ञायाश्च पालनम्॥
ततः पाशुपतं दिव्यमवाप्य पुनरीश्वरात्। संहृष्टरोमा दुर्धर्षः कृतं कार्यममन्यत॥

एवं जयद्रथेनापि शिवप्रसादेनैव चतुर्णां पाण्डवानां जयः कृत इति प्रतिपादितं तत्रैव —

धृतराष्ट्रः —

किं दत्तं हुतमिष्टं वा किं सुतप्तमथो तपः। सिन्धुराजेन येनैकः पाण्डवान्समवारयत्॥

संजयः —

द्रौपदीहरणे यत्तद्भीमसेनेन निर्जितः। मानात्स तप्तवान्राजा वरार्थी सुमहत्तप.॥
इन्द्रियाणीन्द्रियार्थेभ्यः प्रियेभ्यस्सनिवर्त्य सः। क्षुत्पिपासाऽऽतपसहः कृशो धमनिसंतत.॥
देवमाराधयच्छर्वं गृणन् ब्रह्म सनातनम्। भक्तानुकंपी भगवांश्चक्रे तस्य ततो दयाम्॥
स्वप्नान्तेऽप्यथ चैवाह हरः सिंधुपतेः सुतम। वरं वृणीष्व प्रीतोऽस्मि जयद्रथ किमिच्छसि॥
एवमुक्तस्तु शर्वेण सिन्धुराजो जयद्रथ.। उवाच प्रणतो रुद्रं प्रांजलिर्नियतात्मवान्॥
पाण्डवेयानहं संख्ये भीमवीर्यपराक्रमान्। वारयेयं रथेनैक समस्तानिति भारत॥
एवमुक्तस्तु देवेशो जयद्रथमथाब्रवीत्। ददामि ते वरं सौम्य विना पार्थं धनञ्जयम्॥

वारयिष्यसि संग्रामे चतुरः पाण्डुनन्दनान्। एवमस्त्विति देवेशमुक्त्वाऽबुध्यत पार्थिवः ॥

स तेन वरदानेन दिव्येनास्त्रबलेन च। एक सवारयामास पाण्डवानामनीकिनीम् ॥

इति। पाण्डवैरपि द्वादशवर्षपर्यन्तं वनवासपृथ्वीप्रदक्षिणोत्कृष्टतीर्थयात्रादिमहर्षिदर्शनरूप-तपश्चर्यादिकं कृत्वा युद्धे जयः प्राप्त इति प्रसिद्धम्। एवमितरैरपि तैस्तैर्महापुरुषै-स्तपश्चर्यासमाराधितशिवप्रसादेनैव महाकार्याणि साधितानीति तत्र तत्र प्रतिपादितम् विस्तरभयान्न लिख्यते। अत्रापि सेतुबन्धनात्प्राक् रामेण,

तपसा सेतुबन्धेन सागरोच्छोषणेन वा। सर्वथा सुसमर्थोऽस्मि सागरस्यास्य लंघने ॥

इत्युक्तम्। अत्र हि समुद्रतरणे उपायत्वेन तप.सेतुबन्धसागरशोषणानि प्रतिपादि-तानि। तत्र उच्छोषणेनेत्यनेन समुद्रस्य निग्राह्यत्वमेवावगत। ततस्तु देवताप्रसादनद्वारा फलजनक। प्रसादश्च निग्राह्यात्समुद्रादन्यस्य पूज्यस्यैव वक्तव्यः। रामस्य च,

महादेवप्रसादेन पित्रा मम समागमः।

इति। कण्ठोक्त्या महादेव एव प्रसाद्य इत्येव गम्यते। अत एव **उत्तरकाण्डे** लवणासुर-वधार्थं प्रेषितं शत्रुघ्नं प्रति शिवस्य पूज्यत्वं रामो वदति—

श्रीमतश्शितिकण्ठस्य कृत्यं हि दुरतिक्रमम्।

इति। अतः सागरोल्लंघनादौ साधनीभूतं तपः शिवोद्देशेनैव कृतमित्यर्थवर्णनं युक्तम्। एवञ्च श्रीरामेणापि त्रयोदशसंवत्सरपर्यन्तं वनवासमुनिजनसदर्शनवन्याहारनिषेवण स्वधर्म-भूतदुष्टनिग्रहशिष्टपरिपालनादितपश्चर्यया चतुर्दशे वर्षे ब्रह्मचर्यकेवलकन्दमूलाशनपञ्चमकाला-शनदशमशकाद्यनिवारणादिनियमविशेषेण शिवाराधनेन प्रसाधितात् शिवाद्वरं लब्ध्वा समुद्रतरणरावणादिदुष्टराक्षसवधादिना जयः प्राप्त इति भगवता वाल्मीकिना प्रतिपादितं युक्ततममेव।

पश्यतां पश्यतां नयनोत्सवमातन्वती मदीयधनुर्गुणनिर्यत्ननिर्यद्विशिखविदलिततनो-र्महाबलशालिनो येयं पुरी दरीदृश्यते।

तदाकर्ण्य तारादिसुग्रीवप्रियाभिरितरवनचरजायाभिरपि सममयोध्यापुरप्रवेशमिच्छा-मीति सीतया व्याहृतस्य दशरथसुतस्य वचसा सान्तस्ससंतोषस्सुग्रीवः स्वांतःपुरमासाद्य तारां प्रति सीतापतेर्निदेशमुदीरयामास। अनन्तरमखिलासु निखिलाभरणभरणासहिष्णुतयेव

नतांगलतासु चिरकांक्षितजानकीसाकेतयोरालोकनमद्य फलितमिति प्रदक्षिणपूर्वं विमानमधिरुह्य सीतासमीपमागतासु वानरवनितासु रघुनन्दनो जनकनन्दिनीमुद्दिश्य ऋश्यमूकगिर्यधित्यकामाविश्य पुनः पुनः सुधारसमाधुरीधुरीणा वाणीमभाणीत्। अत्रैव मित्रपुत्रेण सत्रा सगतोऽहं। एतस्मिंश्च देशे मामेकसायकनिहतो वाली शातोऽपि विरोधमजहदिव सुग्रीवपितरं सवितारं भिदन् वीरस्वर्गमगमत्। इतश्च विराजते सततसेवमानमानवगंधर्वकिन्नरपन्नगनिलिपा पंपा। अहो चित्रं अहो रे रे चित्रं व्याकुलीकृतविरहिजनकुलाशानां पलाशानां पटीरगिरितटीकुटीरनटत्पवमाननीयमान नानाप्रसूनधूलिमधूलीधूसरवर्णानां सप्तपर्णानां पथिकजनप्राणहरणबद्धश्रद्धमकरध्वजकृतसहकाराणां सहकाराणां च विटपेषु संचरन् मत्तकोकिल कुहुकुहूनादानुवादकलकलायमानदिक्पारे अस्याः पारे कथमप्यहमचरं तव विप्रयोगसमप्राणयेव। अत्र च शबर्या दत्तानि फलानि त्वदीयाधरमाधुर्यं मुहुर्मुहुस्स्मरन्नाभुंजि। अस्मिंश्च मदीयखड्गः कबन्धप्राणानुबन्धमकरोत्। अस्मिंश्च जटायुः दशकन्धरेण निहतः खेचरत्वं विहायापि खेचरभावमभजत। अस्मिन्नस्माकमाश्रमः स दृश्यते पश्यादृश्यमध्यमे यस्मिंस्त्व रावणेनापहृता सती मध्यभागगतामदृश्यतामखिलावयवेन वहंतीव मया न दृष्टा। इतो मनोहरझरी गोदावरी। एतद्भूतलमेव चक्रीभूतमदीयकोदण्डमौर्वीस्वननिस्सरच्छिलीमुखनिकृत्तशिरसा चतुर्दशसहस्रसेनाध्यक्षपरिवृतखरदूषणत्रिशिरसां रुधिरमांसशल्यमेदुरितं दुरितकृद्भूतप्रेतडाकिनी शाकिनी पिशाचनिशाचरविहारस्थलमभूत्। इत इतश्च कुम्भयोनिसुतीक्ष्णशरभङ्गात्रि महामुनिप्रभृतीनामशेषतपोनिधितती्नां आश्रमाः परस्परं दूरतरा अपि विमानवेगातिशयेन परिसरभाज इव राजन्ते। अस्यां भुवि च विराधवधेन मया सकलराक्षससंहारः प्रारेभे। अत्र च सोऽयमाटीकते चित्रकूटः। यस्मिन्नस्मान् प्रति नेतुमागत भरतमपश्याम। एषा हि यमुनातरंगिणीवेणी दृश्यते त्वदीयवेणीव। अयमेव किल भरद्वाजमुनेरुटजः सततविकसितकुटजः। असावेव खलु संतोषितसकलजनान्तरंगा त्वंगत्तुंगतरंगा गंगा। इह च विभाति मणिमयप्राकारगोपुरं श्रृंगिबेरपुरम्। इतश्च वर्तते गंभीरावर्तवती सरयू द्वीपवती। सैषा च दृश्यते पश्य पश्य नमस्कुरु नमस्कुरु जानकीति याऽम्बरचुम्बिचन्द्रकान्तमणीन्द्रनीलोत्पलनिबद्धचन्द्रशालान्तराल मरकतमय वेदिकानिषण्ण चञ्चरीककबरीकर सरोजकलितकाञ्चनाचितविपञ्चिकासपञ्चममन्द्रानुमन्द्र सारणीतन्त्री समुदञ्चित संचारीमार्गधोरणीस्वरप्रपञ्चतान वितान निशमनकाङ्क्षासमागत सौध विष्वक्परिभ्रमद्गन्धर्वसुपर्वसिद्धसाध्या समस्तसुरासुरैरपि जेतुमसाध्याऽसदयोध्या। ततः,

उत्पत्योत्पत्य ददृशुस्तां पुरीं हर्म्यमालिनीम् ।

ततस्तु तां पाण्डरहर्म्यमालिनीं
विशालकक्ष्यां गजवाजिसंकुलाम् ।
पुरीमयोध्यां ददृशुः प्लवङ्गमाः
पुरीं महेन्द्रस्य यथाऽमरावतीम् ॥ इति ।

सप्तविंशच्छततमे —

ततः,

पूर्णे चतुर्दशे वर्षे पञ्चम्यां भरताग्रजः ।
भारद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिः ॥

ततः स्वेष्टजने स्वपुरे च कुशलं पृच्छते रामाय मुनिरेवमुवाच —

पङ्कदिग्धस्तु भरतो जटिलस्त्वां प्रतीक्षते ।
पादुके ते पुरस्कृत्य सर्वं च कुशलं पुरे ॥

पितृवचनगौरवेण तपोवनमागतस्य निखिलतापसरक्षितुस्तवाऽपि खरदूषणादिनिधन-शूर्पनखीनाशनमारीचबर्हणरावणकृतसीताहरणकबन्धेंधनाशनापंपपालोकन सुग्रीवसङ्गमवालि-निधन सीतापरिमार्गण समीरणात्मजप्रेरण सेतुरचनलङ्कादहनदशाननहननत्रिदशवरप्रदानादिकं सर्वं —

ममैतद्विदितं सर्वं तपसा धर्मवत्सल ।
अहमप्यत्र ते दद्मि वरं शस्त्रभृतां वर ॥

अर्घ्यं प्रतिगृहाणेदमयोध्यां श्वो गमिष्यसि । इति ।

तदनुः रामः स्वपुरीं गच्छतो वर्त्मगतास्तरवः स्वस्तरव इव निस्तुलसर्वर्तुकुसुमरस-भरफलकिसलयप्रकीर्णा भवन्त्विति वरमयाचत ।

अथ परमऋषिवरप्रदानेन पथि सर्वतो योजनानि त्रीणि नन्दनोपमानि वनानि संपश्यन् मुदितमना बभूव ।

अष्टाविंशत्यधिकशततमे—

तदनु रामः समवलोक्याऽयोध्यापुरीं भरतवृत्तान्तविचारणाय हनूमन्तं प्रेषयन्निद-मुवाच। शृंगिबेरपुरं पुरतोऽधिगम्य सम्यग्गुहे च विनिवेद्य च मद्वृत्तान्तं तत्सन्दर्शितपथो नियमेन समवस्थितं भरतमासाद्य निवेद्य जानकीहरणकपीन्द्रसङ्गमवालिसहरणमैथिल्यन्वेषणां-बुधितरणरावणहननादिकम्,

वरदानं महेन्द्रेण ब्रह्मणा वरुणेन च।
महादेवप्रसादेन पित्रा मम समागमम्॥

उपयातं च मां सौम्य भरतस्य निवेदय।
एतच्छ्रुत्वा यमाकारं भजते भरतस्तदा॥

स च ते वेदितव्यस्स्यात् सर्वं यच्चापि मां प्रति।
ज्ञेयास्सर्वेऽपि वृत्तान्ता भरतस्येङ्गितानि च॥

तत्त्वेन मुखवर्णेन दृष्ट्या व्याभाषणेन च।

अनेन इङ्गितादिना पराभिप्रायो ज्ञातव्य इति सूचितम्। तथाच **मनुः**—

बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्। स्वरवर्णेंगिताकारैश्चक्षुषा चेष्टितेन च॥

नेत्रवक्त्रविकारैश्च गृह्यतेऽतर्गतं मनः॥ इति।

सर्वकामसमृद्धं हि हस्त्यश्वरथसंकुलम्।
पितृपैतामहं राज्यं कस्य नावर्जयेन्मनः॥

अत्र ज्येष्ठे सति राज्यमस्माकमनुचितमिति राज्याद्विरक्तो भरत इति निश्चये सत्यपि रामेण सर्वसमृद्धियोगेन पितृपैतामहयोगित्वेन च हेतुना राज्ये भरतस्य लोभेन संभावनाशंकाकरणात् इतरराज्यापेक्षया पित्र्यं राज्यमुत्कृष्टं राज्ञामिति सूचितम्॥

अत एव पित्र्यराज्यस्य इतरराज्यापेक्षया श्रेष्ठत्वात् तदर्थतया प्राणत्यागोऽपि श्लाघ्य इत्युक्तमुद्योगे सजयं प्रति भगवता—

भागः पुनः पाण्डवानां विशिष्टः तन्नोकस्माददीरन् परे वै।
अस्मिन् पदे युध्यतां नो वधोऽपि श्लाघ्यः पित्र्यं परराज्याद्विशिष्टम्॥

एतान् धर्मान् कौरवाणां पुराणानाचक्षीथाः संजय राज्यमध्ये ।
ते चेदस्मिन्निये कर्मणि वर्तमाना आपद्येरन् दिष्टवशेन मृत्युम् ॥

तथा शक्त्या पूरयन्तः स्वकर्म तदप्येषां निधनं स्यात्प्रशस्तम् ॥ इति ।

अत एव पितृपितामहराज्यलोभवशेन सत्यसधोऽपि धर्मपुत्रः धर्मं परित्यज्य असत्यमुक्तवानिति प्रतिपादितं **द्रोणपर्वणि** भीमवाक्ये —

त्वयोक्ते नैव युध्येत जातु राजन् द्विजर्षभ ।
सत्यवान् हि त्रिलोकेऽस्मिन् भवान् ख्यातो जनाधिप ॥

तस्य तद्वचनं श्रुत्वा कृष्णवाक्यप्रचोदितः । भावित्वाच्च महाराज वक्तुं समुपचक्रमे ॥

तमतथ्यभये मग्नो जयासक्तो युधिष्ठिरः । अव्यक्तमब्रवीद्वाक्यं हत. कुञ्जर इत्युत ॥

इति । अर्जुनवचनमपि **तत्रैव** —

उपचीर्णो गुरुर्मिथ्या भवता राज्यकारणात् । धर्मज्ञेन सता नाम सोऽधर्मः सुमहान् कृतः ॥

सर्वधर्मोपपन्नोऽयं मम शिष्यश्च पाण्डवः । नायं वक्ष्यति मिथ्येति प्रत्ययं कृतवांस्त्वयि ॥

शाश्वतं धर्ममुत्सृज्य शिष्येण निहतो गुरुः । पितेव पुत्र सौहार्दात् पितेव हि च धर्मतः ॥

सोऽल्पकालस्य राज्यस्य कारणाद्धातितो गुरुः ।

इति । समृद्धनूतनराज्यप्राप्त्या ऐश्वर्यावलेपेन धार्मिकोऽपि नहुषः धर्मपरित्यागं कृतवानिति प्रतिपादितं **उद्योगे** —

अभिषिक्तश्च राजेन्द्रस्ततो राजा त्रिविष्टपे । धर्मं पुरस्कृत्य सदा सर्वलोकाधिपोऽभवत् ॥

सुदुर्लभं वरं लब्ध्वा प्राप्य राज्यं त्रिविष्टपे ।
धर्मात्मा सततं भूत्वा कामात्मा समपद्यत ॥ इति ।

किं बहुना ? राज्यलक्ष्म्या अवस्थाः विचित्रा दृश्यन्ते । तया गृहीतस्य राज्ञः सत्यधर्मादिपरित्यागपूर्वमुन्मार्गप्रवृत्तिश्च भवतीत्येतन्निरूपितं **कादम्बर्याम्** — राज्यविषतन्द्रीप्रदा राज्यलक्ष्मीः । आलोकयतु तावत् कल्याणाभिनिवेशी लक्ष्मीमेव स्वयमेव । प्रथममियं सुभटखड्गमण्डलोत्पलवनभ्रमरी लक्ष्मीः । क्षीरसागरात्पारिजातपल्लवेभ्यो रागमिंदुशकलादेकान्तवक्रतां उच्चैःश्रवसश्च चलतां कालकूटान्मोहनशक्तिं मदिराया मदं कौस्तुभमणेरतिनैष्ठुर्यमित्येतानि सहवासपरिचयवशाद्विरहविनोदनचिह्नानि गृहीत्वैवोद्गता ।

नह्येवंविधमपरमपरिचितमिह जगति किंचिदस्ति। तथाहि — येनेयमनार्या लब्धाऽपि खलु दुःखेन परिपाल्यते। दृढगुणपाशसदाननिष्पन्दीकृतापि नश्यति। उद्दामभट-साहस्रोल्लसितासिलतापञ्जरविधृताप्यतिक्रामति। मदजलदुर्दिनान्धकारगजघटापरिपालिताऽपि प्रपलायते। न परिचयं रक्षति, नाभिजनमीक्षते, न रूपमालोकयति, न कुलक्रममनुवर्तते, न शीलं पश्यति, न वैदग्ध्यं गणयति, न श्रुतमालोकयति, न धर्ममनुरुध्यते, न त्याग-माद्रियते, न विशेषज्ञतां विचारयति, न सत्यमवबुध्यते, न लक्षणं प्रमाणीकरोति, गन्धर्व-नगरलेखेव पश्यत एव न पश्यति, अद्याप्युपारूढमन्दरपरिवर्तावर्तभ्रांतिजनितसंस्कारेव परि-भ्रमति। कमलिनीचरगव्यतिकरलग्ननलिननालकण्टकक्षतेव न क्वचिन्निर्भरमाबध्नाति पदम्। अतिप्रयत्नविधृताऽपि परमेश्वरगृहेषु गन्धगजगण्डमदमधुमत्तेव परिस्खलति। पारुष्यमिवोप-शिक्षितुमसिधारासु निवसति। वैश्वरूप्यमिव ग्रहीतुमाश्रिता नारायणम्। अप्रत्ययबहुला च दिवसावसानकमलमिव समुचितमूलदण्डकोशमण्डलमपि चुंबति राजकुलम्। लतेव विटपका-नध्यारोहति। गङ्गेव वसुजनन्यपि तरङ्गबुद्बुदचञ्चला, दिवाकरगतिरिव प्रकटितविविध-संक्रान्तिः, पातालगुहेव तमोबहुला, हिडिंबेव भीमसाहसैकहार्यहृदया, प्रावृडिवाचिरद्युति-कारिणी, दुष्टपिशाचिकेव दर्शितानेकपुरुषोच्छ्राया स्वल्पसत्त्वमुन्मत्तीकरोति, सरस्वतीपरि-गृहीतमीर्ष्ययेव नालिंगति, गुणवन्तमपवित्रमिव न स्पृशति, उदारसत्त्वममङ्गलमिव न बहु-मन्यते सुजनमनिमित्तमिव पश्यति, अभिजातमहिमिव लङ्घयति, शूरं कण्टकमिव परिहरति, दातारं दुःस्वप्नमिव न स्मरति, विनीतं पातकिनमिव नोपसर्पति, परस्परविरुद्धं चेन्द्रजालमिव दर्शयन्ती प्रकटयति जगति निजचरितम्। तथाहि — सततमूष्माणमारोपयंत्यपि जाड्यमुप-नयति, उन्नतिमादधानाऽपि नीचस्वभावमाविष्करोति, तोयराशिसंभवाऽपि तृष्णां संवर्धयति, ईश्वरतामादधानाप्यशिवतामातनोति, बलोपचयमाहरंत्यपि लघिमानमापादयति। अमृतसहो-दराऽपि कटुविपाका विग्रहवत्यप्यप्रत्यक्षदर्शना पुरुषोत्तमप्रियाऽपि खलजनप्रिया रेणुमयीव स्वच्छमपि कलुषीकरोति। यथा यथा दीप्यते चेयमतिचपला तथा तथा दीपशिखेव कज्जल-मतिमलिनं कर्म केवलमुद्वमति। तथाहीयं संवर्धनवारिधारा तृष्णाविषवल्लीनां, व्याध-गीतिरिन्द्रियमृगाणां परामर्शधूमलेखा सच्चरितचित्राणां, विभ्रमशय्या मोहदीर्घनिद्राणां, निवासजीर्णवलभी धनमदपिशाचकानां, तिमिरोद्गतिश्शास्त्रदृष्टीनां, पुरस्सरपताका सर्वा-विनयागमानामुत्पत्तिनिम्नगा क्रोधवेगग्राहाणां, पानभूमिर्विषयमधूनां सङ्गीतशाला विकार-

नाट्यानामावासदरी दोषाऽऽशीविषाणामुत्सारणवेललता सत्पुरुषव्यवहाराणां, अकालप्रावृड्-गुणकलहंसानां विसर्पणभूमिर्लोकापवादविषविस्फोटाना प्रस्तावना कपटनाटकस्य कदलिका कामकरिणो वध्यशाला साधुगावस्य राहुजिह्वा धर्मेन्दुमण्डलस्य ॥

नहि तं पश्यामि यो ह्यपरिचितयाऽनया निर्भरमुपगूढो यो वा न विप्रलब्धः। नियतमालेख्यगताऽपि चलति। पुरःस्थिताऽपीन्द्रजालमाचरति, उत्कीर्णाऽपि विप्रलभते। श्रुताऽप्यतिसंधत्ते। चिंतिता वञ्चयति इत्येवंविधयाऽनया दुराचारया कथमपि दैववशेन परिगृहीता विक्लबीभवन्ति राजानः सर्वाविनयानामधिष्ठानतां च गच्छन्ति ॥

अभिषेकसमय एव चैषाममङ्गलकलशैरिव प्रक्षाल्यते दाक्षिण्यम्। अग्निकार्य-धूमेनेव मलिनीभवति हृदयम्। पुरोहितकुशाग्रसंमार्जनैरिवापनीयते क्षान्तिः। उष्णीषपट्ट-बन्धेनेवाच्छाद्यते जनानुरागस्मरणम्। आतपत्रमण्डलेनेवापवार्यते परलोकदर्शनम्। चामरपवनैरिवापह्रीयते सत्यवादिता। वेत्रदण्डैरिवोत्सार्यन्ते गुणाः। जनशब्दकलकलैरिव तिरस्क्रियते साधुवादः। ध्वजपटपल्लवैरिव परामृश्यते यशः ॥

तथाहि — केचिच्छ्रमवशशिथिलित शकुनिगलपुटचपलाभिः खद्योतोन्मेषमुहूर्त-मनोहराभिः मनस्विजनगर्हिताभिः संपद्भिः प्रलोभ्यमाना धनलवलाभावलेपविस्मृतजन्मानो-ऽनेकदोषोपचितेन दुष्टासृजेव रागावेगेन बाध्यमाना विविधविषयपररसग्रासलालसैः पञ्चभिरप्यनेकसाहस्रसंख्यैरिव इन्द्रियैरायास्यमानाः प्रकृतिचपलतया लब्धप्रसरेणैकेनापि शतसहस्रतामिवोपगतेन मनसाऽऽकुलीक्रियमाणा विह्वलतामुपयान्ति, ग्रहैरिव गृह्यन्ते, मन्त्रैरिवाविश्यन्ते, सत्त्वैरिवावष्टभ्यन्ते, वायुनेव विडंब्यन्ते, पिशाचैरिवायास्यन्ते, मर्मभिर्हताश्चासन्नमृत्युरिव मुखभङ्गसहस्राणि कुर्वन्ते, धनोष्मगा पच्यमाना इव विवेष्टन्ते, गाढप्रहाराभिहता इवाङ्गानि न धारयन्ति, कुलीव तिर्यक् परिभ्रमन्ति, अधर्म-भग्नगतयः पङ्गव इव परेण संचार्यन्ते, अनृतविपाकसंजातमुखरोगा इवातिकृच्छ्रेण जल्पन्ति, सप्तच्छदतरव इव रजोविकारैरासन्नवर्तिना शिरःशूलमुत्पादयन्ति। जातुषा इव सोष्माणं न सहन्ते, आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति, कुपितलोचना इव तेजस्विनो नेक्षन्ते। कालसर्पादष्टा इव मन्त्रैरपि न बुद्ध्यन्ते, दुष्टवारणा इव महालानस्तम्भनिश्चलीकृता न गृह्णन्त्युपदेशं, अतितृष्णावेगमूर्छिताः कनकमयमिव सर्वं पश्यन्ति। असय इव पानसवर्धितया रुषा परप्रेरिता विनाशयन्ति साधून् द्वारस्थितान्यपि

फलिनीव दण्डविक्षेपैर्महाकुलानि शातयन्ति । अकालकुसुमप्रवास इव मनोहराकृतयोऽपि लोकविनाशकारिणः श्मशानाग्नय इव रौद्रभूतयः तैमिरिका इव दूरदर्शिनः उपसृष्टा इव क्षुद्राधिष्ठितभवनाश्रूयमाणाः पापेनेवाध्मातमूर्तयो भवन्ति, तदवस्थाश्च व्यसनशतशरव्यतामुपगता वाल्मीकतृणाग्रावस्थितजलबिन्दव इव पतितमपि नात्मानमवगच्छन्ति ॥

अपरे तु स्वार्थनिष्पादनपरैः धनपिशितग्रासगृध्रैरास्थाननलिनीबकैर्द्यूतं विनोद इति, परदाराभिगमनं वैदग्ध्यमिति, मृगया श्रम इति, पानं विलास इति, नित्यप्रमत्तता शौर्यमिति, स्वदारपरित्यागो अव्यसनितेति, गुरुवचनावधीरणमपरप्रेण्यत्वमिति, त्यजितभृत्यतां सुखोपसेव्यत्वमिति, नृत्तगीतवेश्यादिसक्ति रसिकतेति, महापराधानाकर्णनं महानुभावतेति, परिभवसहत्वं स्थैर्येति, स्वच्छन्दता प्रभुत्वमिति, देवतावमाननं महासत्त्वतेति, बन्दिजनख्यातिं यश इति, तरलतामुत्साह इति, अविशेषज्ञतामपक्षपातित्वमिति; दोषानपि गुणपक्षे अध्यारोपयद्भिः अन्तः स्वयमपि हसद्भिः प्रसारणकुशलैर्धूर्तैरमानुषलोकोचिताभिस्स्तुतिभिः प्रतार्यमाणा वित्तमदमत्तचित्तनिश्चेतनतया तथेत्यात्मन्यध्यारोपितालीकाभिमानाः मर्त्यधर्माणोऽपि दिव्यांशावतीर्णा इव सदैवतमिवामानुषमिवात्मानमुत्प्रेक्षमाणाः प्रारब्धदिव्योचितचेष्टानुभावाः सर्वजनस्यापहास्यतामुपयान्ति । आत्मविडम्बनां चानुजीविना जनेन क्रियमाणामभिनन्दन्ति । मनसापि देवताध्यारोपणप्रसारणादसद्भूतसंभावनोपहताश्चान्त प्रविष्टापरभुजद्वयमात्मबाहुयुगलं सभावयन्ति । त्वगन्तरिततृतीयलोचनं स्वं ललाटमाशंकन्ते, दर्शनप्रदानमप्यनुग्रहं गणयन्ति, दृष्टिपातमप्युपकारपक्षे स्थापयन्ति, संभाषणमपि सविभागमिव कुर्वन्ति, आज्ञामपि वरदानं मन्यन्ते, स्पर्शनमपि पावनमाकलयन्ति, मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यो न पूजयन्ति द्विजातीन् न मानयन्ति मान्यान्नार्चयन्त्यर्चनीयान्नाभिवादयन्तेऽभिवादनार्हान्नाभ्युत्तिष्ठन्ति गुरून् ॥

अनर्थकायासान्तरितविषयोपभोगसुखं इत्यपहसन्ति विद्वज्जनं जरावैक्लव्यप्रलपितमिति न पश्यन्ति वृद्धजनोपदेशमात्मप्रज्ञापरिभव इत्यभ्यसूयन्ति सचिवोपदेशाय कुप्यन्ति अहितवादिने सर्वथा समभिनन्दति तमालपंति तं पार्श्वे कुर्वन्ति तं सवर्धयन्ति तं मित्रतामुपनयन्ति तं बहुमन्यन्ते तमाप्तमापादयन्ति तेन सुखमनुतिष्ठन्ते तस्मै ददति तस्माद्बिभ्यति तस्य वचः श्रृण्वन्ति तत्र वर्षन्ति योऽहर्निशमनवरतमुपचरितप्रणामाञ्जलिरधिदैवमिव विगतान्यकर्तव्यस्स्तौति यो वा माहात्म्यमुद्भावयति ॥

किंवा तेषामसांप्रतं येषामतिनृशंसोपदेशमतिनिर्घृणकौटिल्यं शास्त्रं प्रमाणं, अभिचारक्रियाक्रूरप्रकृतयः पुरोधसो गुरवः, परातिसन्धानपराः मन्त्रिण उपदेष्टार, नरपतिसहस्रभुक्तोज्झिताया राजलक्ष्म्यामासक्तिः, मारणात्मकेषु शास्त्रेष्वभियोगः, सहजप्रेमानुरक्ता भ्रातर उच्छेद्यास्तदेवंप्रायोतिकुटिलकष्टचेष्टासहस्रदारुणे राज्यतन्त्रे तस्मिन् महामोहकारिणि च यौवने कुमार तथा प्रयतेथाः यथा नोपहास्यसे जनेन न निन्द्यसे साधुभिर्न धिक्क्रियसे गुरुभिर्नोपालभ्यसे भुजङ्गैर्नावलुप्यसे बकैर्न वञ्च्यसे धूर्तैर्न प्रलोभ्यसे वनिताभिर्न विडम्ब्यसे लक्ष्म्या, न त्याज्यसे सरस्वत्या न नर्त्यसे मदेन नोन्मत्तीक्रियसे मदनेन नाक्षिप्यसे विषयैर्नाकृष्यसे रागेण नापह्रियसे सुखेन ॥

कामं भवान् प्रकृत्यैव धीरः पित्रा च महता प्रयत्नेन समारोपितसंस्कारः तरलहृदयमप्रबुद्धं च मदयन्ति धनानि तथापि भवद्गुणानामसंतोषो मामेव मुखरीकृतवान् इदमेव पुनः पुनरभिधीयसे सचेतनमपि विद्वांसमपि महासत्त्वमपि अभिजातमपि प्रयत्नवन्तमपि पुरुषमियमति दुर्विनीता खलीकरोति लक्ष्मीः इति ॥

तस्मादेतादृशराजलक्ष्मीपरिगृहीतानामतिधार्मिकाणामपि राज्ञां सत्यधर्मातपरिच्युतिदर्शनेन भरते रामेण राज्यलोभशङ्का या कृता सा युक्तैव ।

**संगत्या भरतश्श्रीमान् राज्येनार्थि स्वयं भवेत् ।**
**प्रशास्तु वसुधां कृत्स्नामयोध्यां रघुनन्दनः ॥**

अत्र सङ्गत्या राज्येनार्थी भवेदित्युक्त्या विषयपरिचये सति तस्मिन् वाञ्छा भवतीति सूचितम् । तथा च **गीतायां** —

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते । सङ्गात्सञ्जायते कामः ... ... इति ।

**तस्य बुद्धिं च विज्ञाय व्यवसायं च वानर ।**
**यावन्न दूरं यातास्स्म क्षिप्रमागन्तुमर्हसि ॥**

इति । नन्वत्र रामो भरतस्य राज्यासक्त्यनासक्तिविचारणाय दूर एव स्थित्वा हनूमन्तं प्रेषितवानित्यवगम्यते । तदसंगतम्; स्वेनैव गत्वा तदभिप्रायविचारणे बाधकाभावात् इति चेदुच्यते — साक्षाद्गमने बहुदोषसंभवेन मनुष्यमुखादेव विचारणीयत्वात् । तथाहि-यदि भरतो राज्यं स्वयमेव दद्यात्तदा न विरोधः । यदि तु समृद्धराज्यलोभयुक्तः स्यात्,

अकीर्तिभीतश्च भवेत्तदा किमिदमापतितमिति वैमनस्येनैव राज्यं दातव्यं स्यात् । भ्रातॄणामवमानाचरणं च रामस्यासमतम् ॥

यद्द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत् ।
नाहं तत्प्रतिगृह्णीयां भक्ष्यान् विषकृतानिव ॥

धर्ममर्थं च कामं च पृथिवीं चापि लक्ष्मण ।
इच्छामि भवतामर्थे एतत्प्रतिशृणोमि ते ॥

भ्रातॄणां संग्रहार्थं च सुखार्थं चापि लक्ष्मण ।
राज्यमप्यहमिच्छामि सत्येनायुधमालभे ॥

यद्विना भरतं त्वां च शत्रुघ्नं चापि मानद ।
भवेन्मम सुखं किंचिद्भस्म तत्कुरुतां शिखी ॥

इति **अयोध्याकाण्डे** रामवचनात् । यद्यकीर्तिभयरहितो भरतः राज्याशया युद्धसंनद्धो भवेत् तदा तेन सह रामस्य योद्धव्यमेव स्यात्, पितृपुत्रभ्रात्रादिभिरन्यैर्वा युद्धसंनद्धैर्युद्धायाऽह्वाने कृते तूष्णीमवस्थानस्य क्षत्रियाणामधर्म्यत्वात् । तच्चा**श्वमेधिके** पर्वणि—

श्रुत्वा तु नृपतिं प्राप्तं पितरं बभ्रुवाहनः । निर्ययौ विनयेनाथ ब्राह्मणार्थपुरस्सरः ॥
मणिपूरेश्वरं त्वेवमुपयान्तं धनञ्जयः । नाभ्यनन्दत्स मेधावी क्षत्रधर्ममनुस्मरन् ॥
उवाच च स धर्मात्मा समन्युः फाल्गुनस्तदा । प्रक्रियेयं न ते युक्ता बहिस्त्वं क्षत्रधर्मतः ॥
संरक्ष्यमाणं तुरगं यौधिष्ठिरमुपागतम् । यज्ञियं विषयान्ते मां नायोत्सीः किन्नु पुत्रक ॥
धिक्त्वामस्तु दुर्बुद्धे क्षत्रधर्मबहिष्कृतम् । यो मां युद्धाय सम्प्राप्तं साम्नैव प्रत्यगृह्णथाः ॥

न त्वया पुरुषार्थो हि कश्चिदस्तीह जीवता ।
यस्त्वं स्त्रीवद्यथाप्राप्तं मां साम्ना प्रत्यगृह्णथाः ॥

यद्यहं न्यस्तशस्त्रस्त्वां मागच्छेयं सुदुर्मते । प्रक्रियेयं भवेद्युक्ता तावत्तव नराधम ॥
इति पितुर्वचनमाकर्ण्य,

नमश्चक्रे महातेजा युद्धाय भरतर्षभ । प्रययौ पार्थमुद्दिश्य स राजा बभ्रुवाहनः ॥
इति । तथाच रामस्य अवश्यपरिपालनीयभ्रातृभृत्यबन्धुरूपबहुजनोपद्रव आपद्येत । तच्च रामस्यासंमतम् । सामान्यतः प्रजोपद्रवभीत्या स्वधर्मपरराजसूयं परिहरतो रामभद्रस्य

स्वजनोपद्रवे प्रवृत्त्यनुपपत्ते । तस्माद्भरताभिप्रायमविचार्य तन्निकटगमनं बहुसंकटमिति दूरत एव स्थित्वा तदभिप्रायं ज्ञातुं रामकृतं हनुमत्प्रेषणं युक्तमेव ।

अथ हनूमान् तद्वचनं निशम्य मानुषरूपं बिभ्रदभ्रविक्रमः सोऽप्यभ्रमार्गतः सुपर्णरवत्तूर्णं गङ्गायमुनासमागममतीत्य गत्वा च शृङ्गिबेरं गुहाय रामवृत्तमादितो निवेद्य राममप्यचिरेण सपश्यसीत्युदीर्य ततस्त्वरया रामतीर्थ-वालुकी-गोमतीरुत्तीर्य तत्रत्यं सालवनं तत्र जनपदानपि स्फीतानवलोक्य क्रोशमात्रनः साकेतनगर्या समवस्थितम् ॥

ददर्श भरतं दीनं कृशमाश्रमवासिनम् ।
जटिलं मलदिग्धाङ्गं भ्रातृव्यसनकर्शितम् ॥

फलमूलाशनं दान्तं तापसं धर्मचारिणम् ।
समुन्नतजटाभारं वल्कलाजिनवाससम् ॥

नियतं भावितात्मानं ब्रह्मर्षिसमतेजसम् ।
पादुके ते पुरस्कृत्य शासतं वै वसुन्धराम् ॥

चातुर्वर्ण्यस्य लोकस्य त्रातारं सर्वतो भयात् ।
उपस्थितममात्यैश्च शुचिभिश्च पुरोहितैः ॥

बलमुख्यैश्च युक्तैश्च काषायांबरधारिभिः ।
नहि ते राजपुत्रं तं चीरकृष्णाजिनांबरम् ॥

परिभोक्तुं व्यवस्यन्ति पौरा वै धर्मवत्सलम् ।

अनेन भरते राजनि विषयोपभोगरहिते सति तद्भृत्यैः प्रजाभिश्च तमुल्लंघ्य विषयभोगो न गृहीत इत्युक्त्या प्रजा राजवृत्तमनुसृत्यैव तिष्ठन्तीति सूचितम् । तथाच राजधर्मे —

राज्ञा हि पूजितो धर्मस्ततः सर्वत्र पूज्यते ।
यद्यदाचरते राजा तत्प्रजाभ्यश्च रोचते ॥ इति ।

तं धर्ममिव धर्मज्ञं देहवन्तमिवापरम् ।
उवाच प्राञ्जलिर्वाक्यं हनूमान् मारुतात्मजः ॥

यं दण्डकावनचारिणं पितृमातृवचःकारिणं अनुस्मृत्य मुहुः शोकमोहवेगेन परं ताम्यसि सोऽसौ रामः वानरराजं सुग्रीवं सखायं लब्ध्वा समितौ निहत्य दशाननम्,

**उपयाति समृद्धार्थैः सह मित्रैर्महाबलैः ।**

इत्यवोचत् ।

**एवमुक्तो हनुमता भरतः कैकयीसुतः ।**
**पपात सहसा हृष्टो हर्षान्मोहं जगाम ह ॥**

अनेन हर्षातिशयेन प्रतिवचनासमर्थो भवतीति सूचितम् । तथा च **वनपर्वणि इन्द्रस्त्वां सस्मार इति** वदन्तं लोमशं प्रति युधिष्ठिरः —

न हर्षात्संप्रपश्यामि वाक्यस्यास्योत्तरं क्वचित् । स्मरेद्धि देवराजोऽयं को नामाभ्यधिकस्ततः ॥

इति । ततो भरतो मुहूर्तादुत्थाय प्रियवादिनं पवननन्दनं आनन्दाश्रुभिः समुक्ष्य परिष्वज्य चेदमुवाच —

**प्रियाख्यानस्य ते सौम्य ददामि ब्रुवतः प्रियम् ।**
**गवां शतसहस्रं च ग्रामाणां च शतं परम् ॥**

**सकुंडलाश्शुभाचारा भार्याः कन्याश्च षोडश ।**
**हेमवर्णाः सुनासोरूः शशिसौम्याननास्स्त्रियः ॥**

**सर्वाभरणसंपन्नाः संपन्नाः कुलजातिभिः ।**

अनेन प्रियार्थशंसिने स्ववैभवानुगुण्येन बहुमतिः कर्तव्येति सूचितम् । अत एव नलः समागच्छतीति प्रियाख्यातुः पर्णादस्य दमयन्ती अभीष्टं दत्तवतीति प्रतिपादितं **वनपर्वणि** —

विश्रान्तं तु ततः पश्चात् पर्णादं द्विजसत्तमम् ।
अर्चयामास वैदर्भी धनेनातीव भामिनी ॥ इति ।

**एकोनत्रिंशाधिकशततमे —**

ततो भरतः,

**बहूनि नाम वर्षाणि गतस्य सुमहद्वनम् ।**
**शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम् ॥**

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मा।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥

अनेन अतिक्लेशप्राप्तावपि तत्सोढ्वा जीवनः कदाचिदानन्दोऽपि भविष्यतीति सूचितम्। तथा चापद्धर्मे मूषिकमार्जारसंवादे —

ऐश्वर्यं धनरत्नानि प्राप्य मित्रं निवर्ततताम्। दृष्टा हि पुनरावृत्ति. जीवतामिति नः श्रुतम् ॥

इत्युदीर्य स्वसदिष्टविष्टरोपविष्ट हनूमन्तं कथमजनि समागमो रामभद्रस्य वानरराजेनेत्यपृच्छत्। तदाकर्ण्य हृष्टहृदयो हनूमान् तदिष्टजनचरित्रमतिविचित्रतरमाचचक्षे।

विदित एव भवता पादुकाग्रहणपर्यंतं पूर्वोदन्तः। तदनु मैथिलीवल्लभः शिथिलयितुं निखिलतापसजनकण्टकान् प्रविश्य दण्डकारण्य तूर्णमभिमुखमापतन्तं मुनिजननियमविरोधिनं विराधनामानं यातुधानं निहत्य स्वदर्शनमात्रेण समुदञ्चितपञ्चशराया. शूर्पणखायाः कर्णनासाशातनेन परिकुपितानि खरदूषणप्रमुखानि चतुर्दशरक्षस्सहस्राणि निर्दयमेक एव मर्दयामास। ततस्तदाकर्ण्य कुपितहृदयेन दशमुखेन मायामृगरूपधारिमारीचमुखेन सुदूरं रामलक्ष्मणावपवाह्य लङ्कापुरीं प्रापिता सीता विचेतुमितस्ततस्सञ्चरन् सानुजो रामः रावणनिकृत्तपक्षपक्षिराजं सद्गतिं प्रापय्य कृतसुग्रीवसख्यः तदनन्तरमतिबलिनमपि वालिनं निहत्य सुग्रीवं तद्राज्याधिपमकरोत्। तदनुचापि सुग्रीवेण सीतागवेषणाय दिशि दिशि प्रस्थापितेषु वानरयूथपेषु अहमेक एवोदधिमुल्लंघ्यावलोक्य च रावणान्तःपुरगतां सीतां अक्षप्रभृतिरक्षःक्षपणेन तत्रत्यभवनऽऽदीपनेन च आकुलीकृत्य लङ्कां तूर्णमेव रामाभ्यर्णमुपगतोऽस्मि। ततश्च मद्वचनादवगतसमस्तवृत्तान्तः ससैन्येन सुग्रीवेण सह नलविरचितसेतुना समुद्रमुत्तीर्य संनिरुध्य लङ्कापुरीं निहत्य च सगणं रावणं समवाप्य च मैथिलीम्,

स शक्रेण समागम्य यमेन वरुणेन च।
महेश्वरस्वयंभूभ्यां तथा दशरथेन च ॥

तैश्च दत्तवरः श्रीमानृषिभिश्च समागतः।
सुरर्षिभिश्च काकुत्स्थो वरान् लेभे परन्तप ॥

स तु दत्तवरः प्रीत्या मुनिभिश्च समागतः।
पुष्पकेण विमानेन किष्किंधामभ्युपागमत् ॥

तं गङ्गां पुनरागम्य वसन्तं मुनिसन्निधौ।
अविघ्नं पुष्ययोगेन श्वो रामं द्रष्टुमर्हसि ॥

त्रिंशाधिकशततमे —

श्रुत्वा तु परमानन्दं भरतः सत्यविक्रमः ।
हृष्टमाज्ञापयामास शत्रुघ्नं परवीरहा ॥

दैवतानि च सर्वाणि चैत्यानि नगराणि च ।
सुगन्धमाल्यैर्वादित्रैरर्चन्तु शुचयो नराः ।
सूतास्स्तुतिपुराणज्ञाः सर्वे वैतालिकास्तथा ॥

सर्वे वादित्रकुशलाः गणिकाश्चापि सङ्घशः ।
राजदारास्तथाऽमात्याः सैन्याः सेना गणाङ्गनाः ॥

ब्राह्मणाश्च सराजन्याः श्रेणीमुख्यास्तथागताः ।
अभिनिर्यान्तु रामस्य द्रष्टुं शशिनिभाननम् ॥

अनेन राज्ञो नगरप्रवेशे नगरीमलकुर्यात्पुरवासिभिः राजा प्रत्युद्गम्यश्चेति सूचितम् ॥

अत एव सृगालवधानन्तरं मथुरां प्रविशन्तौ रामकृष्णौ पुरालङ्कारपूर्वकं पुरवासिभिः प्रत्युद्गतावित्युक्तं हरिवंशे —

नगरीं मधुरां प्राप्तौ वसुदेवसुतावुभौ । ततः प्रत्युद्गतास्सर्वे यादवा यदुनन्दनौ ॥
सबला हृष्टमनस उग्रसेनपुरोगमाः । श्रेण्यः प्रकृतयश्चैव मन्त्रिणश्च यथोचिताः ॥
सबालवृद्धा सा चैव पुरी समभिवर्तत । नन्दितूर्याण्यवाद्यन्त स्तूयेतां पुरुषोत्तमौ ॥

रथ्याः पताकमालिन्यो भासन्ते स्म समन्ततः ।
हृष्टाः प्रमुदिताः सर्वा पुरी परमशोभिता ॥

अक्रूरस्सात्यकिश्चैव मन्त्रिणश्च यथोचिताः । भ्रात्रोस्तयोरागमने यथैवेन्द्रमहे तथा । इति ।

तदनु भरतः निम्नोन्नतभूभागसमीकरणेन शीतलतरचन्दनोदकसेचनेन कुवलय-कमलरसालकिसलयकोरकाकलिततोरणेन प्रतिगृहद्वारमाबद्धपुण्ड्रक्रमुकजम्भलनारिकेलफल-कदलीस्तम्भादिना समुच्छ्रितपताकाभिः पुरमलंकुर्विति शत्रुघ्नमादिश्य करधृतदधिमधुलाज-मोदकसांकुरधान्यपात्रपूर्णकुम्भाभि समलकृताभिर्वारवनिताभिः परिष्कृतासु मार्गनगरवीथीषु समलंकृतगजवाजिरथाधिरूढैः महारथैरनुगम्यमानः पुत्रदर्शनलालसाः स्वमातृवसिष्ठप्रमुखान् पुरोहितान् सुमन्त्रप्रमुखान् मन्त्रिमुख्यांश्च पुरस्कृत्य,

आर्यपादौ गृहीत्वा तौ शिरसा धर्मकोविदः ।
प्रत्युद्ययौ ततो रामं महात्मा सचिवैस्सह ॥

अथ हनुमदावेदितोदन्तः श्रवणजनितानन्दाश्रुजलविलुलितलोचननिरतिशयभक्तिभरितं भरतमालोकयन्तं रामम्,

ददृशुस्तं विमानस्थं नराः सोममिवांबरे ।
प्राञ्जलिर्भरतो भूत्वा प्रहृष्टो राघवोन्मुखः ॥

ववन्दे प्रणतो रामं मेरुस्थमिव भास्करम् ।

अथ रामेण विमानमवतार्य सादरमङ्कमारोप्य गाढमाश्लिष्टो भरतः सौमित्रिमासाद्य समभिवाद्य जानकीं सुग्रीवविभीषणादीन् स्वागतकुशलप्रश्नादिना यथोचितमभिपूज्य परिष्वज्य च सुग्रीवमित्थमाचचक्षे —

त्वमस्माकं चतुर्णां वै भ्राता सुग्रीव पञ्चमः ।
सौहृदाज्जायते मित्रमपकारोऽरिलक्षणम् ॥

अनेन उपकारो मित्रलक्षणं अपकारोऽरिलक्षणमित्युक्तम् । **कामन्दके** —

उपकारफलं मित्रमपकारोऽरिलक्षणम् ।

इति । ततः —

रामो मातरमासाद्य विषण्णां शोककर्शिताम् ।
जग्राह प्रणतो भूत्वा मनो मातुः प्रसादयन् ॥

अभिवाद्य सुमित्रां च कैकेयीं च यशस्विनीम् ।
स मातॄश्च तदा सर्वाः पुरोहितमुपागमत् ॥

नन्वत्र भर्तृशुश्रूषणतत्परां कौसल्यां सुमित्रां चापहाय भर्तृनिष्ठाचरणप्रयुक्तापयशश्शालिन्यां कैकेय्यां यशस्विनीमिति विशेषणमयुक्तमिति चेन्न; उक्तापयशशालित्वेऽपि सकललोककण्टकरावणवधहेतुत्वप्रयुक्तातिशयितयश शालित्वेन यशस्विनीमिति विशेषणस्य युक्तत्वात् । अत एव मातृनिन्दापरं भरतं प्रति रावणवधनिमित्तभूतमिदं कैकेयीकृतरामविवासनं श्रेयस्करमेवेत्यभिप्रायेणावगतनिखिललोकवृत्तान्तो महर्षिर्भरद्वाजः । **अयोध्याकाण्डे** —

रामप्रव्राजनं ह्येतच्छुभोदर्कं भविष्यति ।

इत्युक्तत्वात् । भरतोऽपि निखिलराजोपचारपूजिते पादुके रामपादयोः सयोज्य कृताञ्जलि-रेवमवोचत् —

एतत्ते रक्षितं राजन् राज्यं निर्यातितं मया ।
अद्य जन्म कृतार्थं मे संवृत्तश्च मनोरथः ॥

यस्त्वां पश्यामि राजानं अयोध्यां पुनरागतम् ।
अवेक्षतां भवान् कोशं कोष्ठागारं पुरं बलम् ॥

भवतस्तेजसा सर्वं कृतं दशगुणं मया ।

अनेन स्वस्य प्राप्तं राज्यं गुरवे निवेदनीयमिति सूचितम् । अत एव निखिल-कौरवनिषूदनेन स्वस्य प्राप्तं राज्यं धृतराष्ट्राय निवेदयामास धर्मराज इत्युक्तम् । **राजधर्मे** —

धृतराष्ट्राय तद्राज्यं गान्धार्यै विदुराय च । निवेद्य स्वस्थवद्राजन्नास्ते राजा युधिष्ठिरः ॥

इति । इति वदता भरतेन सह समागम्य तदाश्रमं अवतीर्य च विमानवरात्,

अब्रवीत्तु तदा रामस्तद्विमानमनुत्तमम् ।
वह वैश्रवणं देवं अनुजानामि गम्यताम् ॥

अनेन यदीयं यद्वस्तु अन्येन हृतं तत्स्वयं निर्जितं चेदपि तस्मै दातव्यमिति सूचितम् । अत एव विरोचनहृतं विष्णुकिरीटं स्वपराक्रमनिर्जितमपि विष्णवे दत्तवान् वैनतेय इति प्रतिपादितं **हरिवंशे** —

सुप्तस्य शयने दिव्ये क्षीरोदे वरुणालये । विष्णोः किरीटं दैत्येन हृतं वैरोचनेन वै ॥

वैनतेयो नभोऽध्वानमतिचक्राम वेगितः । मोक्षयित्वा किरीटं तु वैष्णवं पतता वरः ॥

चिक्षेप खं गतो मौलिं विष्णोश्शिरसि हृष्टवत् । इति ।

वासुदेवस्तु निर्जित्य जाम्बवन्तं महाबलम् । मणिं स्यमन्तकं चैव जग्राहात्मविशुद्धये ॥

ददौ सत्राजिते तं वै सर्वसात्त्वतसंसदि ॥

इति च । ततो यथानिर्देशं वैश्रवणनिकटं गते विमानवरे,

पुरोहितस्यात्मसखस्य राघवो बृहस्पतेः शक्र इवामराधिपः ।
निपीड्य पादौ पृथगासने शुभे सहैव तेनोपविवेश वीर्यवान् ॥ इति ।

एकत्रिंशाधिकशततमे —

शिरस्यञ्जलिमाधाय कैकेय्यानन्दवर्धनः ।
बभाषे भरतो ज्येष्ठं रामं सत्यपराक्रमम् ॥

अनेन राजनिकटे बद्धाञ्जलिपुट एव संभाषणं कुर्यादिति सूचितम् । अत एव भगवता कृष्णेन धर्मराजनिकटे बद्धाञ्जलिपुटेनैव संभाषणं कृतमिति प्रतिपादितं **कर्णपर्वणि —**

ईषदुत्स्मयमानस्तु कृष्णो राजानमब्रवीत् । युधिष्ठिरं हतामित्रं कृताञ्जलिरथाच्युतः ॥ इति ।

पूजिता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ॥

अत्र पूर्वार्धे इक्ष्वाकूणां पारम्पर्येण ज्येष्ठस्यैव राज्यमिति न्यायप्राप्तं राज्यं मम दत्त्वा चतुर्दशवत्सरवनवासेन पितुरानृण्यं संपादयता त्वया मम माता पूजिता इति प्रतिपादनेन भरतस्य राज्ये स्वत्वं प्रतीयते । उत्तरार्धेन च यथा त्वमददास्तथैव पुनस्तुभ्यं ददामीति प्रतिपादनेन रामस्यैव राज्यं भरते निक्षिप्तमिति प्रतीयते; यथापूर्वदानस्य निक्षेपधर्मत्वात् । तथा च **मनुः —**

यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः ।
स तथैव गृहीतव्यो यथा दायस्तथा ग्रहः ॥ इति ।

तथा च तदिदं राज्यस्य निक्षेपरूपत्वं स्वत्वं च परस्परविरुद्धं उपभोगेन विना केवलं परिपालनीयत्वरूपनिक्षेपत्वस्य उपभोगादियोग्यत्वरूपस्वत्वस्य च परस्पराऽसमानाधिकरणत्वात् । न चैतद्विरोधपरिहारार्थं पूर्वार्धस्य परिपालनीयत्वसाधर्म्येण निक्षेपपरत्वमेवास्त्विति वाच्यम् । तथा सति भरतराज्यार्थं कैकेयीवरप्रार्थनं, दशरथकृतं भरतराज्यदानं, पित्राज्ञया रामकृतराज्यप्रदानं, भरतेन राज्यग्रहणे अनृतवचनप्रयुक्ततया दशरथस्य नरको भवेदिति प्रतिपादनं, तदङ्गीकृत्य भरतेन राज्यकरणे वरद्वयनिर्वाहे सति दशरथस्य स्वर्गप्राप्तिप्रतिपादनं प्रियाख्यात्रे हनूमते भरतकृतग्रामादिदानवचनं इत्येतत्सर्वं विरुध्येत । तत्र दशरथं प्रति कैकेयीवरप्रार्थनं **अयोध्याकाण्डे —**

वरौ यौ मे त्वया दत्तौ तदा देव महीपते। तौ तावदहमद्यैव वक्ष्यामि शृणु मे वचः॥
योऽभिषेकसमारम्भो राघवस्योपकल्पितः। अनेनैवाभिषेकेण भरतो मेऽभिषिच्यताम्॥

यो द्वितीयो वरो देव दत्तः प्रीतेन मे त्वया।
तदा देवासुरे युद्धे तस्य कालोऽयमागतः॥

नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः। चीराजिनजटाधारी रामो भवतु तापसः॥

इत्यादिना। दशरथकृतवरप्रदानमयोध्याकाण्डे —

धर्मबन्धेन बद्धोऽस्मि नष्टा च मम चेतना। अहं राघव कैकेय्या वरदानेन मोहितः॥

भरतश्च महाबाहुरयोध्या पालयिष्यति।

इत्यादिना। भरताय रामकृतराज्यप्रदानमयोध्याकाण्डे —

मया निसृष्टो भरतो महीमिमा सशैलषण्डा सपुरीं सकाननाम्।
शिवां सुसीमामनुशास्तु केवलं त्वया यदुक्तं नृपतेस्तथास्तु तत्॥

इति। भरतेन अनङ्गीकरणे दशरथस्य नरकप्रतिपादनमयोध्याकाण्डे —

एवं राजर्षयस्सर्वे प्रतीना राजनन्दन। तस्मात्त्राहि नरश्रेष्ठ पितरं नरकात्प्रभो॥

इति। भरतेन राज्यकरणं च,

स काममनवाप्यैव रामपादावुपस्पृशन्। नन्दिग्रामेऽकरोद्राज्यं समागमनकांक्षया॥

इति। (बालकाण्डे वचनेनच) वरद्वयनिर्वाहे सति दशरथस्य स्वर्गप्राप्तिश्च —

सदानृणमिमं राम वयमिच्छामहे पितुः। अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः॥

इत्ययोध्याकाण्डे ऋषिवचनेन।

एष राजा विमानस्थः पिता दशरथस्तव। इन्द्रलोकं गतः श्रीमान् त्वया पुत्रेण तारितः॥

इति। प्रियाख्यात्रे दानं च —

प्रियाख्यानस्य ते सौम्य ददामि ब्रुवतः प्रियम्।
गवां शतसहस्रं च ग्रामाणां च शतं परम्।
सकुण्डलाः शुभाचारा भार्याः कन्याश्च षोडश॥

इत्यादिना। एवं च उदाहृतैतद्वचनानुसारेण "पूजिता मामिका माता" इति पूर्वार्धस्य दानोपभोगोपयोग्यत्वरूपस्वत्वापादकदानपरत्वमेव वक्तव्यम्। तथाच विरोधस्तदवस्थ एव इति चेन्न; निक्षेपस्वत्वयोः समयबन्धाभावस्थले विरोधेऽपि समयबन्धानुरोधेन उभयविधत्वाविरोधात्। समयबन्धविशेषश्च,

चतुर्दशे हि संपूर्णे वर्षे हि रघुनन्दन। न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् ॥
तथेति च प्रतिज्ञाय संपरिष्वज्य सादरम्। शत्रुघ्नं च परिष्वज्य भरतं चेदमब्रवीत् ॥
अनेन धर्मशीलेन वनात्प्रत्यागतः पुनः। भ्रात्रा सह भविष्यामि पृथिव्याः पतिरुत्तमः ॥
इति वचनेनावगम्यते। अत एव हर्यश्वदिवोदासौशीनरविश्वामित्रेषु गालवेन एकैकपुत्रोत्पादनकालमवधीकृत्य दत्ताया ययातिकन्यायाः माधव्याः अवधिकाले पुनर्ग्रहणात् निक्षेपरूपत्वं दानं चावगम्यते उद्योगे — पुरा किल विश्वामित्रादधिगतसकलविद्यो गालवः कमाहरामि गुर्वर्थमिति विश्वामित्रं पुनः प्रार्थयामास। तदाकर्ण्य महर्षिणा,
एकतश्श्यामकर्णानां शतान्यष्टौ ददस्व मे। हयानां चन्द्रशुभ्राणां गच्छ गालव माचिरम् ॥
इत्युक्तः अलभ्यं गुर्वर्थमवगत्य,
प्रतिश्रुत्य करिष्येति कर्तव्यं तदकुर्वतः। मिथ्यावचनदग्धस्य इष्टापूर्तं प्रणश्यति ॥
इत्यादिधर्मविरोधं विचिन्त्य खिद्यमानमानसः तत्कालसमागतेन प्रियसुहृदा गरुडेन,
ऋते च धनमश्वानां नावाप्तिर्विद्यते तव। ययातिर्नाम राजर्षिर्नाहुषः सत्यविक्रम ॥
स दास्यति मया चोक्तो भवता चार्थितस्स्वयम्। एवं गुरुधनं विद्वन् दानेनैव व्यशोधय ॥
इति अनुनीय तन्निकटं नीतोऽभूत्। ययातिरपि सविनयं सविनताननयं गालवं संपूज्य तन्मुखादेवावगतसकलवृत्तान्तस्तमिदमाह —
अभिगम्य हताशो हि निवृत्तो दहते कुलम्। नातः परं वैनतेय किंचित्पापिष्ठमुच्यते ॥
तस्माच्चतुर्णां वर्णानां स्थापयित्री सुता मम। माधवी नाम ताक्ष्र्येय सर्वधर्मप्रपादिनी ॥

अस्याः शुल्कं प्रदास्यन्ति नृपा राज्यमपि ध्रुवम्।
किंपुनश्श्यामकर्णानां हयानां द्वे चतुश्शते ॥
स भवान् प्रतिगृह्णातु ममैनां माधवीं सुताम्।

इति। तदाकर्ण्य उपलब्ध त्वयेदमश्वानां द्वारमित्यभिधाय यथागत गते पतगराजे ययातिदत्तां तां कन्या परिगृह्य,
प्रजाभिकामं संपन्नं कुर्वाणं तप उत्तमम्। तमुपागम्य विप्रोऽसौ हर्यश्वं गालवोऽब्रवीत् ॥
कन्येयं मम राजेन्द्र प्रसवैः कुलवर्धिनी। इयं शुल्केन भार्यार्थे हर्यश्व प्रतिगृह्यताम् ॥

हर्यश्वश्च सकललक्षणसंपन्नां कल्याणगुणाभिरामां रामां तामवलोक्य अस्यां चक्रवर्ती पुत्रो भविष्यतीति चिन्तयन्,

ब्रूहि शुल्कं द्विजश्रेष्ठ समीक्ष्य विभवं मम ॥

इत्यवदत्। गालवेनापि एनस्यामात्मार्थे पुत्रानुत्पादय। एकतश्श्यामकर्णानामश्वानामष्ट-शतं गुर्वर्थं देहीत्युक्तो हर्यश्वः,

उवाच गालवं दीनो राजर्षिर्मुनिसत्तमम्। द्वे मे शते सन्निहिते हयानां यद्विधास्तव॥

सोऽहमेकमपत्यं वै जनयिष्यामि गालव। एतच्छ्रुत्वा तु सा कन्या गालवं वाक्यमब्रवीत् ॥

मम दत्तो वरः कश्चित्केनचिद्ब्रह्मवादिना। प्रसूत्यन्ते प्रसूत्यन्ते कन्यैव त्वं भविष्यसि ॥

स त्वं ददस्व मा राज्ञे प्रतिगृह्य हयोत्तमान्।
नृपेभ्यो हि चतुर्भ्यस्तु पूर्णान्यष्टौ शतानि ते ॥

भविष्यन्ति तथा पुत्रा मम चत्वार एव च। एवमुक्तस्तु स मुनिः कन्यया गालवस्तदा ॥

हर्यश्वं पृथिवीपालमिदं वचनमब्रवीत्। इयं कन्या वरश्रेष्ठ हर्यश्व प्रतिगृह्यताम् ॥

चतुर्भागेन शुल्कस्य जनयस्वैकमात्मजम्। प्रतिगृह्य च तां कन्यां गालवं प्रतिनन्द्य च ॥

समये देशकाले च लब्धवान् सुतमीप्सितम्।
अथ काले पुनर्धीमान् गालवः प्रत्युपस्थितः ॥
उपसंगम्य चोवाच हर्यश्वं प्रीतमानसम्।

जातो नृप सुतस्तेऽयं बालभास्करसंनिभः। कालो गन्तुं नृपश्रेष्ठ भिक्षार्थमपरं नृपम् ॥

हर्यश्वः सत्यवचने स्थितः स्थित्वा च पौरुषे। दुर्लभत्वाद्धयानां च प्रददौ माधवीं पुनः ॥

एवं तां कन्यां परिगृह्य तया सह काशीश्वरं दिवोदासनामानमपरं राजानं समेत्य,

गालवः प्रसवस्यार्थे तं नृपं पर्यचोदयत्।

दिवोदासः—

श्रुतमेतन्मया पूर्वं किमुक्त्वा विस्तरं द्विज। काङ्क्षितो हि ममैषोऽर्थः श्रुत्वैतद्द्विजसत्तम ॥

स एव विभवोऽस्माकमश्वानामस्ति गालव। अहमप्येकमेवास्यां जनयिष्यामि पार्थिवम् ॥

तथेत्युक्त्वा द्विजश्रेष्ठः प्रादात्कन्यां महीपतेः।
विधिपूर्वं च तां राजा कन्यां प्रतिगृहीतवान् ॥

रेमे तस्यां कुरुश्रेष्ठ प्रभावत्यां यथा रविः। स्वाहायां च यथा वह्निर्यथा शच्यां च वासवः ॥

यथा चन्द्रश्च रोहिण्यां ऊर्मिलायां यथा यमः।
वरुणश्च यथा गौर्यां यथा ऋध्यां धनेश्वरः।

यथा नारायणो लक्ष्म्यां जाह्नव्यां च यथोदधि. ॥

यथा रुद्रश्च रुद्राण्यां यथा वेद्यां पितामह'। अदृश्यन्त्या च वासिष्ठो वसिष्ठश्चाक्षमालया ॥

च्यवनश्च सुकन्यायां पुलस्त्यः संध्यया यथा ।
अगस्त्यश्चापि वैदर्भ्यां सावित्र्या सत्यवान्यथा ॥

यथा भृगुः पुलोमाया अदित्यां कश्यपो यथा ।
रेणुकायां यथर्चीको हैमवत्या च कौशिकः ॥

बृहस्पतिश्च ताराया शुक्रश्च शतपर्वया। यथा भूत्यां भूतपतिः उर्वश्यां च पुरूरवाः ॥

ऋचीकस्सत्यवत्या च सरस्वत्या यथा मनुः ।
शकुन्तलायां दुष्यन्तो धृत्या धर्मश्च शाश्वत ॥

दमयन्त्यां नलश्चैव सत्यवत्या च नारद'। जरत्कारुर्जरत्कार्वां यथा चाश्वपतिर्जयाम् ॥

मेनकाया यथोर्णायुस्तुम्बुरुश्चैव रम्भया। वासुकि' शान्तशीर्षायां कुमार्यां च धनञ्जयः ॥

वैदेह्या च यथा रामो रुक्मिण्या च जनार्दनः। तया तु रममाणस्य दिवोदासस्य भूपतेः ॥

माधवी जनयामास पुत्रमेकं प्रतर्दनम् ।
ततो गालवस्तां कन्या दिवोदासात्परिगृह्य च,

जगाम भोजनगरं द्रष्टुमौशीनरं नृपम्। तमुवाचाथ गत्वा च नृपति सत्यविक्रमम् ॥

इयं कन्या सुतौ द्वौ ते जनयिष्यति पार्थिवौ ।
एकतः श्यामकर्णाना देयं मह्यं चतुश्शतम् ॥

गुर्वर्थोऽयं समारंभो न हयैर्हि कृत्यमस्ति मे। अनपत्योऽसि राजर्षे पुत्रौ जनय पार्थिवौ ॥

तेन पुत्रप्लवेन त्वमात्मानं चैव तारय। न प्रजाफलभोक्ता हि राजर्षे पात्यते दिवः।

स याति नरकं घोरं यत्र गच्छंत्यनात्मजाः। उशीनरः प्रतिवचो ददौ तस्य नराधिपः ॥

शते द्वे तु ममाश्वानामीदृशाना द्विजोत्तम। अहमप्येकमेवास्यां जनयिष्यामि गालव ॥

पुत्रवद्भिर्गतं मार्गं गमिष्यामि परैरहम्। मौल्येनापि समं कुर्यां तवाहं द्विजसत्तम ॥

पौरजानपदार्थं तु ममार्थो नात्मभोगतः ॥

इत्यभिधाय तामिमां कन्यां प्रतिग्रहेण स्वीयां कृत्वा तस्यामुत्पादितेनापत्येन पुत्रवतां धर्मं साधयिष्यामीत्यभिसंधाय पारक्येन वस्तुना संपादितो धर्मः न स्वफलाय भवतीति गालवमाह —

कामतो हि धनं राजा पारक्यं यः प्रयच्छति ।
न स धर्मेण धर्मात्मा युज्यते यशसा नच ॥
सोऽहं प्रतिगृहीष्यामि ददात्वेतां भवान्मम ।

इति । ततस्ता कन्यां प्रतिगृह्य,

रेमे स तां समासाद्य कृतपुण्य इव श्रियम् ।
ततोऽस्य समये जज्ञे पुत्रो बालरविप्रभः ॥
शिबिर्नाम्ना भुवि ख्यातो यः स पार्थिवसत्तमः ।

ततो गालवं पुनर्द्विशताश्वसंपादनायाऽन्यं राजानं प्रति गन्तुं प्रयत्नवन्तमालोक्य तत्कालसमागतः सुपर्णः,

प्रयत्नस्ते न कर्तव्यो नैव सपत्स्यते तव ।

इमामश्वशताभ्यां वै द्वाभ्यां तस्मै निवेदय । विश्वामित्राय धर्मात्मन् षड्भिरश्वशतैस्सह ॥

इत्यवदत् । गालवोऽपि तथैव सुपर्णेन सह विश्वामित्रमुपागम्य,

अश्वाना काङ्क्षितार्थानां षडिमानि शतानि वै । शतद्वयकृते कन्या भवता प्रतिगृह्यताम् ॥
अस्यां राजर्षिभिः पुत्राः जाता वै धार्मिकास्त्रयः । चतुर्थं जनयत्वेक भवानपि नरोत्तम ॥
पूर्णानीह शतान्यष्टौ तुरगाणा भवन्तु ते । भवतो ह्यनृणो भूत्वा तपः कुर्यां यथासुखम् ॥

इत्यब्रवीत् । ततः,

विश्वामित्रस्तु तं दृष्ट्वा गालवं पक्षिणा सह । कन्यकां तां वरारोहामिदमित्यब्रवीद्वचः ॥
किमियं पूर्वमेवेह मम दत्ता न गालव । पुत्रा ममैव चत्वारो भवेयुः कुलपावनाः ॥

प्रतिगृह्णामि ते कन्यामेकपुत्रफलाय वै ।

अश्वाश्चाश्रममासाद्य चरन्तु मम सर्वतः । तया स रममाणोऽथ विश्वामित्रो महामुनिः ॥
आत्मार्थं जनयामास माधव्यां पुत्रमष्टकम् । जातमात्रं सुतं तं तु विश्वामित्रो महाद्युतिः ॥
प्रयोज्यार्थैस्तथा धर्मैस्तैरश्वैः समयोजयत् । अथाष्टकः पुरं प्रायात्तथा सोमपुरप्रभम् ॥

निर्यात्य कन्या शिष्याय कौशिकोऽपि वनं ययौ ।
गालवोऽपि सुपर्णेन सह निर्यात्य दक्षिणाम् ॥

मनसाऽति प्रतीतेन कन्यामिदमुवाच ह । जातो दानपतिः पुत्रस्तथा पूरुस्त्वयापरः ॥
सत्यधर्मरतश्चान्यो यज्वा चापि तथापरः । तदागच्छ वरारोहे तारितस्ते पिता सुतैः ॥

चत्वारश्चैव राजानस्तथा चाहं सुमध्यमे । गालवस्त्वभ्यनुज्ञाय सुपर्णं पन्नगाशनम् ॥
गालवः प्रययौ शीघ्रं ययातिं नहुषात्मजम् । तस्मै समर्प्य तां कन्या प्रययौ वनमेव च ॥
इति । तस्मात् अश्वाष्टशतीसपादनपर्यन्तं ययातिदत्ताया माधव्या गालवस्वत्ववत् एकैक-पुत्रोत्पत्तिपर्यन्तं च हर्यश्वदिवोदासौशीनरविश्वामित्राणा स्वत्ववच्च सकेतितकालापगमे पुनः प्रदानेन निक्षेपरूपत्वस्वत्ववच्च भरतस्य चतुर्दशसंवत्सरपर्यन्तं राज्ये स्वत्व तत्कालापगमे यथावत्पुनः प्रदानेन निक्षेपरूपत्वं च, इत्युभयरूपत्वमुपपन्नमेव ॥

**धुरमेकाकिना न्यस्तामृषभेण बलीयसा ।**
**किशोरीव गुरु भारं न वोढुमहमुत्सहे ॥**

**वारिवेगेन महता भिन्नसेतुरिव क्षरन् ।**
**दुर्बन्धनमिदं मन्ये राज्यच्छिद्रमसंवृतम् ॥**

अनेन राज्यपरिपालनस्य दृष्टादृष्टदोषबहुलत्वात् समर्थेन धर्मज्ञेनैव राज्यं परिपाल-नीयं, तेन च इहलोके कीर्तिः परत्र स्वर्गादिफलप्राप्तिश्च भवति, अन्यथा अधर्मेण राज्य-परिपालने ऐहिकामुष्मिकं दु खं भवेदिति सूचितम् ।

तथा च धर्मेण राज्यपरिपालनस्य ऐहिकामुष्मिकफलहेतुत्वमुक्तं **यमस्मृतौ** —
एवं धर्मप्रवृत्तस्य राज्ञो दण्डधरस्य च । यशोऽस्मिन् वर्धते लोके स्वर्गे वासस्तथाऽक्षयः ॥
इति । अधर्मेण राज्यपरिपालनस्य ऐहिकामुष्मिकदुःखप्रदत्वमुक्तं **मनुना** —
अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चाधिगच्छति ॥ इति ।

**यथा चारोपितो वृक्षो जातश्चान्तर्निवेशने ।**
**महांश्च सुदुरारोहो महास्कन्ध प्रशाखवान् ॥**

**शीर्येत पुष्पितो भूत्वा न फलानि प्रदर्शयन् ।**
**तस्य नानुभवेदर्थं यस्य हेतोस्स रोप्यते ॥**

**एषोपमा महाबाहो त्वमर्थं वेत्तुमर्हसि ।**
**यद्यस्मान्मनुजेन्द्रस्त्वं भक्तान् भृत्यान्न शाधिहि ॥**

अनेन समर्थेन त्वया भक्तभृत्यपरिपालनार्थं राज्यपरिपालनाऽकरणे सति यत्नेन संवर्धितस्य फलकाले विशीर्णस्य वृक्षस्येव जन्म व्यर्थं भवेत् इत्युक्त्या राज्ञां प्रजापरिपालनं मुख्यो धर्म इत्युक्तम् ।

तथा चापस्तम्बः — अभिषिक्तस्य राज्ञः प्रजापालनं परमो धर्मः इति । **विष्णुपुराणेऽपि —**

धरित्रीपालनेनैव कृतकृत्यो महीपतिः । इति ।

**जगद्द्याभिषिक्तं त्वामनुपश्यतु सर्वतः ।**
**प्रतपन्तमिवादित्यं मध्याह्ने दीप्ततेजसम् ॥**

अनेन राज्ञो राज्याभिषेकेण राजत्वे सपन्ने प्रतपत आदित्यस्येव सर्वातिशायि तेजो भवतीति सूचितम् । तथा च मनुः —

इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च । ईशवित्तेशयोश्चैव मात्राण्याहृत्य शाश्वतीः ॥
यस्मादेषां सुरेन्द्राणां मात्राभिर्निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥

तपसाऽऽदित्यवच्चैव चक्षूंषि च मनांसि च ।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥
सोऽग्निर्भवति वायुश्च सोऽर्कस्सोमस्स धर्मराट् ॥ इति ।

**तूर्यसङ्घातनिर्घोषैः काञ्चीनूपुरनिस्वनैः ।**
**मधुरैर्गीतशब्दैश्च [1]प्रतिबुध्यस्व शेष्व च ॥**

अनेन राज्ञः स्वापकाले प्रबोधकाले च तूर्यादिवाद्यघोषाः कर्तव्या इति सूचितम् । तथा च मनुः —
तत्र भुक्त्वा पुनः किञ्चित्तूर्यघोषैः प्रहर्षितः । संविशेच्च यथाकाममुत्तिष्ठेद्विगतक्लमः ॥ इति

**यावदावर्तते चक्रं यावती वा वसुन्धरा ।**
**तावत्त्वमिह सर्वस्य स्वामित्वमभिवर्तय ॥**

**भरतस्य वचः श्रुत्वा रामः परपुरञ्जयः ।**
**तथेति प्रतिजग्राह निषसादासने च सः ॥**

**ततश्शत्रुघ्नवचनान्निपुणाः श्मश्रुवर्धकाः ।**
**सुखहस्ताः सुशीघ्राश्च राघवं पर्युपासते ॥**

**पूर्वं च भरते स्नाते लक्ष्मणे च महाबले ।**
**सुग्रीवे वानरेन्द्रे च राक्षसेन्द्रे विभीषणे ॥**

---

1 (प्रतिबुध्यस्व राघव) इति पाठान्तरम्

विशोधितजटः स्नातो वस्त्रमाल्यानुलेपनः ।
महार्हवसनो रामः तस्थौ तत्र श्रिया ज्वलन् ॥

प्रतिकर्म च रामस्य कारयामास वीर्यवान् ।
लक्ष्मणस्य च लक्ष्मीवान् इक्ष्वाकुकुलवर्धन ॥

अनेन सप्राप्त सुखं भ्रातृभिस्सह भोक्तव्यं उत्सवदिने बन्धुभिस्सह मङ्गलस्नानगन्धमाल्यवस्त्रभूषणधारणादिकं कर्तव्यमिति सूचितम् । तत्र प्राप्त सुखं भ्रातृभिस्सह भोक्तव्यमित्येतद्राजधर्मे युधिष्ठिरं प्रति व्यासः —

धर्ममर्थं च कामं च भ्रातृभिस्सह भारत । अनुभूय ततः पश्चात् प्रस्थितस्य विशांपते ॥

इति । मङ्गलस्नानादिकं कर्तव्यमित्येतच्च ज्योतिषिके —

अब्दादौ मित्रसंयुक्ते मङ्गलस्नानमाचरेत् । वस्त्रैराभरणैर्देहमलंकृत्य यथाविधि ॥ इति ।

प्रतिकर्म च सीतायास्सर्वा दशरथस्त्रियः ।
आत्मनैव तदा चक्रुर्मनस्विन्यो मनोहरम् ॥

ततो वानरपत्नीनां सर्वासामेव शोभनम् ।
चकार यत्नात्कौसल्या प्रहृष्टा पुत्रवत्सला ॥

ततः शत्रुघ्नवचनात्सुमंत्रो नाम सारथिः ।
योजयित्वाऽभिचक्राम रथं सर्वाङ्गशोभनम् ॥

अर्कमण्डलसंकाशं दिव्यं दृष्ट्वा रथोत्तमम् ।
आरुरोह महाबाहुः रामस्सत्यपराक्रमः ॥

सुग्रीवो हनुमांश्चैव महेन्द्रस्य समद्युती ।
स्नातौ दिव्यांबरधरौ जग्मतुः शुभकुण्डलौ ॥

वराभरणसंपन्ना ययुस्ताः शुभकुण्डला ।
सुग्रीवपत्न्यः सीता च द्रष्टुं नगरमुत्सुकाः ॥

अयोध्यायां तु सचिवा राज्ञो दशरथस्य ये ।
पुरोहितं पुरस्कृत्य मन्त्रयामासुरर्थवत् ॥

**अशोको विजयश्चैव सुमन्त्रश्चैव सङ्गताः।**
**मन्त्रयन् रामवृध्द्यर्थं वृध्द्यर्थं नगरस्य च॥**

अनेन मन्त्रविचारेण कृतं राजकार्यं समृद्धं भवतीति सूचितम्। तथाच **राजधर्मे —**

मन्त्रिणां मन्त्रमूलं हि राज्ञो राष्ट्रं विवर्धते। इति।

**सर्वमेवाभिषेकार्थं जयार्हस्य महात्मनः।**
**कर्तुमर्हसि रामस्य यद्यन्मङ्गलपूर्वकम्॥**

**इति ते मन्त्रिणस्सर्वे संदिश्य तु पुरोहितम्।**
**नगरान्निर्ययुस्तूर्णं रामदर्शनबुद्धयः॥**

**हरियुक्तं सहस्राक्षो रथमिन्द्र इवानघः।**
**प्रययौ रथमास्थाय रामो नगरमुत्तमम्॥**

**जग्राह भरतो रश्मीन् शत्रुघ्नश्छत्रमाददे।**
**लक्ष्मणो व्यजनं तस्य मूर्ध्नि संपर्यवीजयत्॥**

**श्वेतं च वालव्यजनं जग्राह परितःस्थितः।**

अत्र राज्यार्हैः भ्रातृभिर्भरतादिभिः राम एक एव राजा वयं तदधीना इति ज्ञापयितु सारथ्यछत्रधारणादिना परिचर्याकरणात् ज्येष्ठमेकमेव राजानं विधाय इतरे राज्यसविभागार्हाः भ्रातरस्तदधीनास्सन्त ज्येष्ठं परिचरेयुरिति सूचिनम्॥

अत एव कौरवजयानन्तरं पट्टाभिषेकाय पुरप्रवेशसमये रथमारुह्य गच्छतो धर्मराजस्य छत्रचामरादिधारणेन भीमार्जुनादयः परिचर्यां कृतवन्त इति प्रतिपादितं **राजधर्मे —**

प्रविविक्षुस्स धर्मात्मा कुन्तीपुत्रो युधिष्ठिरः। आरुरोह यथा देवः सोमोऽमृतमयं रथम्॥
जग्राह रश्मीन् कौन्तेयः भीमो भीमपराक्रमः। अर्जुनः पाण्डरं छत्रं धारयामास भानुमत्॥
ध्रियमाणं तु तच्छत्रं पाण्डरं राजमूर्धनि। शुशुभे सारसाकीर्णं सितमभ्रमिव श्रिया॥
चामरे व्यजने त्वस्य वीरौ जगृहतुस्तदा। चन्द्ररश्मिप्रभे शुभ्रे माद्रीपुत्रावलङ्कृतौ॥

ते पञ्च रथमास्थाय भ्रातरस्समलङ्कृताः ।
भूतानीव समस्तानि राजन् ददृशिरे तदा ॥ इति ।

ऋषिसंघैस्तदाकाशे देवैस्सह मरुद्गणैः ।
स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः ॥

ततश्शत्रुंजय नाम कुञ्जरं पर्वतोपमम् ।
आरुरोह महातेजाः सुग्रीवः प्लवगर्षभः ॥

नवनागसहस्राणि ययुरास्थाय वानराः ।
मानुषान् विग्रहान् कृत्वा सर्वाभरणभूषिताः ॥

शङ्खशब्दप्रणादैश्च दुन्दुभीनां च निस्वनैः ।
प्रययौ पुरुषव्याघ्रः तां पुरीं हर्म्यमालिनीम् ॥

ददृशुस्ते समायान्त राघवं सपुरस्सरम् ।
विराजमानं वपुषा रथेनातिरथं तदा ॥

ते वर्धयित्वा काकुत्स्थं रामेण प्रतिवन्दिताः ।
अनुजग्मुर्महात्मानं भ्रातृभिः परिवारितम् ॥

अमात्यैर्ब्राह्मणैश्चैव तथा प्रकृतिभिर्वृतः ।
श्रिया विरुरुचे रामो नक्षत्रैरिव चन्द्रमाः ॥

स पुरोगामिभिस्तूर्यैः तालस्वस्तिकपाणिभिः ।
प्रव्याहरद्भिर्मुदितैर्मङ्गलानि ययौ वृतः ॥

अक्षतं जातरूपं च गावः कन्यास्तथा द्विजाः ।
नरा मोदकहस्ताश्च रामस्य पुरतो ययुः ॥

अनेन राज्ञामुत्सवसमये प्रकृतिभिर्मङ्गलद्रव्यहस्ताभिर्भवितव्यमिति सूचितम् । तथा च राजधर्मे —

ततः प्रकृतयस्सर्वाः पुरस्कृत्य पुरोहितम् । ददृशुर्धर्मराजानमादाय बहुमङ्गलम् ॥ इति ।

**सख्यं च रामस्सुग्रीवे प्रभावं चानिलात्मजे ॥**

**वानराणां च तत्कर्म राक्षसानां च तद्बलम् ।**
**विभीषणस्य च संयोगमाचचक्षेऽथ मन्त्रिणाम् ॥**

अत्र कार्यकर्तॄणां प्रयासस्य इतरेषु प्रशंसनात् अन्यैरपि स्वकार्ये प्रयासं कुर्वतां प्रत्यवायपरिहाराय स्वेष्टजनमध्ये श्लाघनीय इति सूचितम् ॥

अत एव धर्मराजः स्वोपकारकस्य घटोत्कचस्य गुणश्लाघनं कृतवान् वासुदेवं प्रति इत्यवगम्यते **द्रोणपर्वणि** वासुदेवं प्रति युधिष्ठिरः—

मदर्थं दुष्करं कर्म कृतं तेन महात्मना । स्वभावाद्या च मे प्रीतिः सहदेवे जनार्दन ॥
सैव मे द्विगुणा प्रीती राक्षसेन्द्रे घटोत्कचे । विदिता मे महाबाहो धर्माणां परमा गतिः ॥
ब्रह्महत्याः फलं तस्य यः कृतं नावबुध्यते ॥ इति ।

अत्र सख्य च रामस्सुग्रीव इत्यादिना रामो मन्त्रिभिरपृष्ट एव पुरप्रवेशात्प्राङ्-मध्येमार्गं सुग्रीवसख्यहनूमत्प्रभाववानरपराक्रमादिकमुक्तवान् । तदयुक्तं, नापृष्टः कस्यचिद्ब्रूयात् इति धर्मशास्त्रनिषिद्धस्य अपृष्टोत्तरस्य महापुरुषैरवक्तव्यत्वात् तथात्वे च स्वस्य चापलमेव प्रकटितं स्यादिति चेद् उच्यते, वानराणा प्रभावाकथने अभिज्ञो रामः किमिति कुलपरंपरागतान् पित्रादिभिबहुमातान् कार्यनिर्वाहकान् सजातीयानस्मान् अपुरस्कृत्य नवीनान् जात्या निकृष्टान् चपलान् वानरान् अस्मत्संनिधाने बहुमन्यत इति शङ्कया दुःखितास्सन्तः स्वस्वकर्तव्ये शिथिलादरा भवेयुः ।

अपूज्या यत्र पूज्यन्ते पूज्या यत्रावमानिताः ।
तत्र त्रीणि प्रवर्तन्ते दुर्भिक्षं मरणं भयम् ॥ इति,

समासमाभ्यां विषमसमे पूजातः इति च धर्मशास्त्रमविचार्याचातुर्येण कृतमिति दोषं चैवापादयेयु ; अभिज्ञो रामस्तिर्यग्भिर्वानरैस्सख्यं कृतवानित्युपहासं च कुर्युः; कथिते तु तत्प्रभावे तद्वचनान्नैते साधारणवानरवत् चलचित्तत्वादिदोषयुक्ताः किंतु स्थिरबुद्धयः शौर्यवीर्यौदार्यसमयोचितज्ञत्वस्थिरबुद्धित्वादिगुणयुक्ताः प्राणानपि तृणीकृत्य निखिलदेवदानवाद्यसाध्यमपि कर्म कृतवन्तः । रामेण च 'त्वं राजा भव भरत स्वयं नराणां वन्यानामहमपि राजराण्मृगाणाम् ।' इति चित्रकूटे सकलजनसमक्षं प्रतिज्ञातस्य चतुर्दशसंवत्सरपरिमितवन्यराजत्वस्य निर्वाहाय वानरैस्सह सख्यं विधाय देवादिभिरसाध्यमपि रावणवधादिराजकृत्यं वानरैर्वन्यैरेव साधितम् । कृतकार्याणां तेषां च बहुमत्यकरणं प्रत्य-

बाधाधायकमिति तत्परिहाराय बहुमतिरपि कृता इति जानन्तः संतुष्टाः समाहित-चित्ताश्च भवेयुः इत्येतदर्थं मध्येमार्ग सुग्रीवमख्यादिकथनं युक्तमेव । अत एवास्माद्राम-वचनादधिगतरामप्रभावाणां विज्ञातवानरकर्मणां मन्त्रिपुरोहितप्रमुखाना संतोषातिशयेन विस्मयं प्रतिपादयति भगवान् वाल्मीकिः —

श्रुत्वा तु विस्मयं जग्मुरयोध्यापुरवासिनः ।

एवं वानराणां पराक्रमं स्वेष्टजनेषु कथयता रामेण संतोषोऽप्युत्पादितः —

श्रुत्वा तु विस्मयं जग्मुरयोध्यापुरवासिनः ।
द्युतिमानेतदाख्याय रामो वानरसंवृतः ॥

हृष्टपुष्टजनाकीर्णामयोध्यां प्रविवेश ह ।
ततो ह्यभ्युच्छ्रयन् पौराः पताकास्ते गृहे गृहे ॥

ऐक्ष्वाकाध्युषितं रम्यमाससाद पितुर्गृहम् ।
पितुर्भवनमासाद्य प्रविश्य स महात्मनः ॥

कौसल्यां च सुमित्रां च कैकेयीं चाभ्यवादयत् ।

अत्र गृहप्रवेशोत्सवे रामेण मातॄणां नमस्काराऽऽचरणात् उत्सवेषु गुरुजननमस्कारः कर्तव्य इति सूचितम् । तथा च कालिदासः —

इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ ।
प्रणेमतुस्तौ पितरौ प्रजाना पद्मासनस्थाय पितामहाय ॥ इति ।

अथाब्रवीद्राजसुतो भरतं धर्मिणां वरम् ।
अर्थोपहितया वाचा मधुरं रघुनन्दनः ॥

यच्च मद्भवनं श्रेष्ठं साशोकवनिकं महत् ।
मुक्तावैडूर्यसंकीर्णं सुग्रीवस्य निदर्शय ॥

तस्य तद्वचनं श्रुत्वा भरतस्सत्यविक्रमः ।
पाणौ गृहीत्वा सुग्रीवं प्रविवेश स्वमालयम् ॥

ततस्तैलप्रदीपांश्च पर्यंकास्तरणानि च ।
गृहीत्वा विविशुः क्षिप्रं शत्रुघ्नेन प्रचोदिताः ॥

अनेन स्वगृहमागतस्येष्टजनस्य निवासार्थं गृहप्रदर्शनादिना उपचारः कर्तव्य इति सूचितम्। तथा च सभापर्वणि —

दहुस्तेषामावसथान् धर्मराजस्य शासनात्।
बहुभक्षान्वितान् राजन् दीर्घिकावृक्षशोभितान्॥

तथा धर्मात्मजः पूजा चक्रे तेषां महात्मनाम्।
सत्कृताश्च यथोद्दिष्टान् जग्मुरावसथान्नृपाः॥ इति।

**उवाच स महातेजाः सुग्रीवं राघवानुजः।**
**अभिषेकाय रामस्य दूतानाज्ञापय प्रभो॥**

**सौवर्णान् वानरेन्द्राणां चतुर्णां चतुरो घटान्।**
**ददौ क्षिप्रं स सुग्रीवः सर्वरत्नविभूषितान्॥**

**यथा प्रत्यूषसमये चतुर्णां सागरांभसाम्।**
**पूर्णैर्घटैः प्रतीच्छध्वं तथा कुरुत वानराः॥**

**एवमुक्ता महात्मानो वानरा वारणोपमाः।**
**उत्पेतुर्गगनं शीघ्रं गरुडा इव शीघ्रगाः॥**

**जाम्बवांश्च हनूमांश्च वेगदर्शी च वानरः।**
**ऋषभश्चैव कलशान् जलपूर्णानथाहरन्॥**

**पूर्वात्समुद्रात्कलशं जलपूर्णमथानयत्।**
**सुषेणस्सत्वसंपन्नः सर्वरत्नविभूषितम्॥**

**ऋषभो दक्षिणात्तूर्णं समुद्राज्जलमाहरत्।**
**गवयः पश्चिमात्तोयं आजहार महार्णवात्॥**

**रत्नकुम्भेन महता शीत मारुतविक्रमः।**
**उत्तराच्च जलं शीघ्रं गरुडानिलविक्रमः॥**

**आजहार स धर्मात्मा नलः सर्वगुणान्वितः।**
**ततस्तैर्वानरश्रेष्ठैरानीतं प्रेक्ष्य तज्जलम्॥**

अभिषेकाय रामस्य शत्रुघ्न सचिवैस्सह ।
पुरोहिताय श्रेष्ठाय सुहृद्भ्यश्च न्यवेदयत् ॥

ततः स प्रयतो वृद्धो वसिष्ठो ब्राह्मणैः सह ।
रामं रत्नमये पीठे सहसीतं न्यवेशयत् ॥

वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ।
कात्यायन सुयज्ञश्च गौतमो विजयस्तथा ॥

अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना ।
सलिलेन सहस्राक्षं वसवो वासवं यथा ॥

ऋत्विग्भिः ब्राह्मणैः पूर्वं कन्याभिर्मन्त्रिभिस्तथा ।
योधैश्चैवाभ्यषिञ्चंस्ते संप्रहृष्टाः सनैगमाः ॥

सर्वौषधिरसैश्चापि दैवतैर्नभसि स्थितैः ।
चतुर्भिर्लोकपालैश्च सर्वैर्देवैश्च सङ्गतैः ॥

अनेन उत्तमासने महिष्या सह राजानमुपवेश्य नदीनदसमुद्रेभ्यः समाहृतैः पुण्यैर्जलैर्मन्त्रिपुरोहितप्रभृतयोऽभिषिचेयुरिति सूचितम् । तथा च **बोधायनः**—

अथोदित आदित्ये भद्रासनं निधाय तस्मिन् व्याघ्रचर्मास्तीर्य तस्मिन्प्राङ्मुख उपवेश्य हेमकलशानादायापोहिष्ठा मयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिर्गृह्णाति अवते हेलमुदुत्तममिति द्वाभ्यां आनो भद्रा इत्यादि दशाभिषिंचत्यब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिरन्यैश्च पवित्रमन्त्रैरथ शृङ्गकोशैश्चाभिषिंचत्यपां यो द्रवणो रसस्तमाहम अमुष्यायणायत्यजसे श्रियै यशसे ब्रह्मवर्चसायन्नाद्यायाभिषिंचामीति समुत्कृष्टे समुत्क्रोशन्ति समानयामुख्यस्य विमार्जनादेतस्मिन् काले राजवाहनमभिषिंचेत्स्नपयित्वा ब्राह्मणेभ्यो निष्कसहस्रं दासीशतं ददाति स्वस्त्ययनं वाचयित्वा मकुटं पट्टं वा करोति अग्ने यशस्विन् यशसे समर्पयेति अथ दुन्दुभिशब्दं करोति दुन्दुभीन् समाघ्नन्तीति ब्राह्मणं प्रदक्षिणीकृत्य स्वराष्ट्रमनुपालयेत्याह भगवान् बोधायन इति ॥

अत्र च रत्नमयपीठ उपवेशनात्प्राक् कर्तव्या देवताप्रार्थना अग्निहोत्र उपवासादयः सर्वेऽपि अत्र रामस्य कारिता अपि अयोध्याकाण्डे विस्तरेणोक्ता इति अत्र न निरूपिता भगवता **वाल्मीकिना** ।

ब्रह्मणा निर्मितं पूर्वं किरीटं रत्नभूषितम् ।
अभिषिक्तः पुरा येन मनुस्तं दीप्ततेजसम् ॥

तस्यान्ववाये राजानः क्रमाद्येनाभिषेचिताः ।
किरीटेन ततः पश्चात्कल्पयित्वा यथाविधि ॥

सभायां हेमवर्णायां शोभितायां महाधनैः ।
रत्नैर्नानाविधैश्चैव चित्रितायां सुशोभनै ॥

नानारत्नमये पीठे वसिष्ठेन महात्मना ।
ऋत्विग्भिर्ऋषिभिश्चैव सहितेनाभिषेचित ॥

अत्र अभिषेककर्मणि मुकुटं बन्धनीयमित्युक्तम् । मुकुटं पट्टं बध्नीतेति बोधायनसूत्रे इति ।

छत्रं तु तस्य जग्राह शत्रुघ्नः पाण्डरं शुभम् ।
श्वेतं च वालव्यजनं सुग्रीवो वानरेश्वरः ॥

अपरं चन्द्रसंकाशं राक्षसेन्द्रो विभीषणः ।
मालां ज्वलन्तीं वपुषा काञ्चनीं शतपुष्कराम् ॥

राघवाय ददौ वायुर्वासवेन प्रचोदित ।
सर्वरत्नसमायुक्तं मणिभिश्च विभूषितम् ॥

मुक्ताहारं नरेन्द्राय ददौ शक्रप्रचोदितः ।

अत्र सर्वरत्नसमायुक्तमित्यनेन नवविधरत्नसमलङ्कृतत्वं मुक्ताहारस्योक्तम् । नवविधत्वं च रत्नानां रत्नशास्त्रे —

मुक्ताप्रवालवैडूर्यवज्रनीलानि गारुडम् । पद्मरागं पुष्परागं गोमेदकमतः परम् ॥

नवरत्नानि भूषाणां भासयन्ति सदा नरान् ।

रत्नोत्पत्तिस्थानानि आगस्त्ये रत्नशास्त्रे —

बलो नामाभवच्छ्रीमान्दानवेन्द्रो महाबलः ।

तस्यास्थि वज्रं दशनाश्च मुक्तास्तथा च रक्तं खलु पद्मरागः ।
रोमाणि वैडूर्यमिति प्रसिद्धं प्रवालमासीत्पिशितं महात्मनः ॥

नेत्रं महानीलमभूत्प्रशस्तं पित्तं च गारुत्मतरत्नमासीत् ।
आसीत्कफस्तस्य च पुष्परागो मेदश्च गोमेदकनामधाप ॥ इति ।

मुक्ताफलोत्पत्तिस्थानानि —

करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि ।
मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥

तद्भेदाश्च तत्रैव —

जलजास्स्थलजाश्चेति मुक्ताजातिर्द्विधा मता ।

वज्रघातप्रकीर्णा या दन्तपंक्तिर्बलस्य तु । सा तु त्रयोदशस्थाने विप्रकीर्णाऽभवत्तदा ॥

वराहस्य च दंष्ट्राया फणे च पन्नगाशिनाम् ।
करिदन्ते बलाकाना कण्ठे स्त्रीणा तथैव च ॥

शङ्खे मत्स्ये घने चैव वंशे पुण्ड्रेक्षुपर्वसु ।
शालिस्तम्भे च शुक्तौ च भुजे खरजवाजिनः ॥ इति ।

तथा —

नारीबलाककण्ठाभ्यां भुजात्खरजवाजिनः ।
श्चिभ्यो जाताश्च मुक्तास्तु न सत्येवातिदुर्लभाः ॥ इति ।

एतेषां रत्नानां साधारणा दोषाः —

प्रवालः कृमिभग्नश्चेद्वर्जनीयः प्रयत्नतः । वैडूर्यं बिन्दुसयुक्तं न धार्यं शुभमीप्सुभिः ॥
वज्रं पर्युदिकायुक्तं बिंदुयुक्तं विवर्जयेत् । मरतं पेटकयुतं न धार्यं शुभमिच्छता ॥

**भारद्वाजस्मृतौ —**

बिंद्वावर्ततुषात्रासरेखाकलङ्ककीलकाः । सप्तैते कथिता दोषा रत्नशास्त्रविशारदैः ॥
जम्बूफलवदाकारस्तत्र चूचुकसंनिभः । चूडामणिवदाकारो बालवत्सस्य शृङ्गवत् ॥
अयं चतुर्विधो बिंदुस्स्त्रीसततिविनाशकृत् । शंखमस्तसंकाश सरिद्भ्रणीभृतोपमः ॥
आवर्तो द्विप्रकारोऽयं सदा विभ्रमकारकः । गोधूमचूर्णसदृशो व्याप्य रत्नं समंततः ॥
आस्ते तत्तुषसंज्ञोऽयं सर्वेषांऽगकृशप्रदः । त्रासाख्यत्रुटितप्रख्यः शुक्त्यभ्यंतररुक्समः ॥
त्रासः स द्विप्रकारोऽयं त्राससंजननस्सदा । रविरश्मिसमाकारसूत्रपातवदाकृतिः ॥
वर्षपातवदाकारा त्रिधा रेखाऽतिकष्टदा । कलंकः कृष्णलोहाभः कृष्णाभ्रसदृशाकृतिः ॥

शिखिपिछसमाकारः त्रिधैतदपि नाशकृत् । कीलकः कीलवत्तिष्ठेत् सर्वदा हृदयार्तिकृत् ॥
एवं रत्नेषु दोषाणां लक्षणं समुदाहृतम् । कासस्त्रासश्च बिन्दुश्च रेखा च गलगर्भता ॥
सर्वरत्नेष्वमी पञ्च दोषाः साधारणा मताः ॥

अथ साधारणा दोषा निरूप्यन्ते । तत्र मुक्तानां दोषास्तत्रैव —

काकपाणिस्रवन्नील पार्श्वस्फोटस्तथानलः । नीलवर्गोऽथ दद्रुस्तु यामलो रक्तबिन्दुकः ॥
एते न धारणे योग्या धर्तुर्हानिप्रदाः सदा ।

उत्पलपरिमले —

रूक्षाङ्गं निर्जलं श्यामं ताम्राक्षं लवणोपमम् ।
अर्धशुद्धं च विकटं ग्रन्थिलं मौक्तिकं त्यजेत् ॥

अथ प्रवालदोषा —

पाडरं धूमरं रूक्षं सव्रणं कोटरान्वितम् । निर्भारं शुद्धवर्णं च प्रवालं नेष्यतेऽष्टधा ॥
इति । वैडूर्यस्य —

श्यामतोयसमच्छायं चिबिडं लघुकर्कशम् । सत्यगर्भोत्तरीयं च वैडूर्यं नैव शस्यते ॥

गारुत्मतस्य —

कठिनं कर्कशं नीलं पाण्डु कृष्णं सलाघवम् ।
चिबिडं विकचं कृष्णं रूक्षं तार्क्ष्ये न शस्यते ॥

इति । पुष्परागस्य —

निष्प्रभं कर्कशं रूक्षं पीतधाम नतोन्नतम् ।
कपिल करिलं पाण्डु पुष्परागं परित्यजेत् ॥ इति ।

गोमेदस्य —

विच्छायं लघु रूक्षाम्लं चिबिडं पटलान्वितम ।
निष्प्रभं पीतकाचाभं गोमेदं न शुभावहम् ॥ इति ।

एवं दोषा निरूपिताः । अथ गुणा निरूप्यन्ते । तत्र मौक्तिकगुणाः —

सुतारत्वं सुवृत्तत्वं नैर्मल्यं घनता तथा । स्निग्धताऽस्फुटितत्वं च षड्गुणाः परिकीर्तिताः ॥

**उत्पलपरिमले तु —**

ह्लादि श्वेतं लघु स्निग्धं रश्मिमन्निर्मलं महत् ।

ख्यातं तोयप्रभं वृत्तं मौक्तिकं न तथाऽशुभम् ॥ इति।

प्रवालस्य —

पक्कबिंबफलच्छायं वृत्तायतमथो समम्। स्निग्धमव्रणकं स्थूलं प्रवालं सप्तधा मतम् ॥

इति। वैडूर्यस्य —

वैडूर्यं श्यामशुभ्राभं समं स्वच्छं गुरु स्फुटम्। अम शुभ्रोत्तरीयेण गर्भितं शुभमीरितम् ॥

इति। वज्रस्य —

वज्रं तु त्रिविधं प्रोक्तं नरो नारी नपुंसकम्।

पूर्वं पूर्वं महाश्रेष्ठ रसवीर्यविपाकतः। अष्टाश्रं अष्टफलकं षट्कोणमतिभासुरम् ॥

निर्गतेन्द्रधनुर्वारिधरं पुंवज्रमुच्यते। तदेव चिबिडाकारं स्त्रीवज्रं वर्तुलायतम् ॥

वर्तुलं कर्णकोणाग्र किंचिद्गुरु नपुंसकम्। स्त्रीपुंनपुंसकं वज्रं योज्यं स्त्रीपुंनपुंसके ॥

व्यत्यासान्नैव फलदं पुवज्रेण विना क्वचित्। श्वेतादिवर्णभेदेन तदेकैकं चतुर्विधम् ॥

ब्रह्मक्षत्रियविट्शूद्रं स्वस्ववर्णैश्शुभप्रदम्।

न्यायोऽयं भैरवेनोक्तः पदार्थेष्वखिलेष्वपि ॥ इति।

नीलस्य —

एकच्छायं गुरु स्निग्धं स्वच्छं पिण्डितविग्रहम्।

मृदुमध्योल्लसज्ज्योति सप्तधा नीलमुत्तमम् ॥

इति। गारुडस्य —

गारुत्मतं मरतकमयोगर्भ हरिन्मणि। गाढमुल्लसितं चैव पेशलं वित्तदं तथा ॥

मृदु च पृथुकं चेति षड्विधोऽयं हरिन्मणिः। इति।

हरिद्वर्णं गुरु स्निग्धं स्फुटरश्मिचयं शुभम्।

मसृणं भासुरं तार्क्ष्यं गात्र सप्तगुणं मतम् ॥ इति।

पद्मरागस्य —

पद्मरागो रविमणिः शृङ्गारी हारनायकः। सलोहितो जातरङ्गः कुरुविन्दोऽतिलोहितः ॥

सौगंधिको मरालस्स्यान्नीलगन्धी तु धूमलः। पक्कदाडिमबीजाभं माणिक्यं शिखरं मतम् ॥

तत्तु पल्लवरागस्स्यात्पल्लवेन समप्रभम् ॥ इति।

पुष्परागस्य लक्षणम् —

पुष्परागं गुरु स्निग्धं स्वच्छं स्थूलं समं मृदु । कर्णिकारप्रसूनाभं मसृणं सुखमष्टधा ॥

**स्थलान्तरे —**

हेमच्छायं शिरोवृत्तं ज्योतिरङ्गारनिर्मलम् ।
कान्त्या मनोहरं स्निग्धं पुष्परागं प्रशस्यते ॥ इति ।

गोमेदस्य लक्षणम् —

सुस्वच्छं गोजलच्छायं स्वच्छं स्निग्धं घनं गुरु ।
निर्दलं मसृणं दीप्तं शस्तं गोमेदमष्टधा ॥ इति ।

उक्तानां नवरत्नानां धारणे फलमुक्तं **ब्रह्मपुराणे —**

तत्र मुक्ताफलस्य —

सुतारत्वं सुवृत्तत्वं नैर्मल्यं घनता तथा । स्निग्धतास्फुटितत्वं च षड्गुणाः परिकीर्तिताः ॥
ईदृक्सर्वगुणोपेतं मौक्तिकं येन धार्यते । तस्यायुर्वर्धते लक्ष्मीरलक्ष्मीश्च विनश्यति ॥ इति

प्रवालस्य धारणे फलम् —

पक्वबिंबफलच्छायं जपाकुसुमसंनिभम् । शुकतुण्डसमच्छायं प्रवालमतिशोभनम् ॥
एवं प्रवालं निर्दोषं कामिन्यश्च विशेषतः । धारयेयुः सुखायुष्यसुपुत्रारोग्यसिद्धये ॥ इति ।

वैडूर्यधारणे फलं —

वेणुपत्रबिडालाक्षि शिखिकण्ठसमद्युति । दक्षिणं प्रसृतच्छायं ब्राह्मणं कथयन्ति हि ॥
सव्यप्रसृतजीवं तु वैडूर्यं क्षत्रमुच्यते । पश्चाद्विसर्पिजीवं तु वैडूर्यं शूद्र उच्यते ॥
नित्यमेतानि पूज्यानि मतिमान् धारयेन्नृप ॥ इति ।

वज्रधारणे फलं —

वज्रं साभरणैर्युक्तं बिभ्राणो रणमूर्धनि । अक्षतः परशस्त्रेण नृपतिर्विजयी भवेत् ॥
अल्पदेशाधिपः पृथ्वीं लभते सागरांबराम् । दारिद्र्यमुरगो वह्निः पिशाचा भूतयोनयः ॥
तथा मृत्युरपि प्रेक्ष्य दूरे परिहरन्ति तम् । इति ।

नीलस्य धारणे फलं —

यस्य मध्यगता भाति नीलस्येन्द्रायुधप्रभा । तमिन्द्रनीलमित्याहुर्महार्घं भुवि दुर्लभम् ॥
यस्तु वर्णस्य भूरित्वात् क्षीरे शतगुणाधिकम् । नीलता जनयेत्सद्यः स महानील उच्यते ॥
उक्तलक्षणसंपन्नाः वर्णशोभासमन्विताः । धृतास्तु नीलमणयः सर्वमङ्गलदायिनः ॥ इति ।

मरकतस्य धारणे फलं —

गाढं दूर्वादलश्यामं तुलसीदलसुप्रभम् । कलमाग्रदलप्रख्यं प्रोक्तं मरकतं शुभम् ॥ इति ।

शुभगुणगणयुक्तं दोषसंघैर्विहीनं मरकतमवनीन्द्रो धारयन् रत्नवर्यम् ।

जयति रिपुमहीपानाहवे वारणेन्द्रान् बहुभिरपि हयौघैः पत्तिसंघैश्च युक्तान् ॥ इति

पद्मरागस्य धारणे फलम् —

ऊर्ध्वरश्मिरधोरश्मिः पार्श्वरश्मिर्यथाक्रमात् । पद्मरागस्स विज्ञेय उत्तमो मध्यमोऽधमः ॥

गोभूमिविद्याकन्याना दातुर्वाजिमखस्य च । कर्तुश्च पुण्यमाप्नोति जातरङ्गस्य धारणात् ॥

धारयेत्कुरुविन्दं यः स सम्राट् भवति ध्रुवम् ।

दोषहीनमथ लक्षणैर्युतं पद्मरागमणिमुद्वहन्ति ये ।

तेऽत्र रत्नमधिपं प्रयान्ति च स्थेयसी च कमलां सरस्वतीम् ॥ इति ।

पुष्परागस्य धारणे फलम् —

हेमच्छायं शिरोवृत्तं ज्योतिरङ्गारनिर्मलम् । कान्त्या मनोहरं स्निग्धं पुष्परागं प्रशस्यते ॥

तत्पुष्परागं यो धत्ते स भवेद्विजयी नृपः । इति ॥

गोमेदकधारणे फलम् —

मधुबिन्दुसमच्छायं गोमूत्राज्यसमप्रभम् । हेमरक्तं गुरु स्वच्छं स्निग्धं गोमेदकं स्मृतम् ॥

तद्रत्नधारणं पुंसा पवित्रं पापनाशनम् ॥ इति ।

युक्तानि वज्रवरमौक्तिकपद्मरागगारुत्मतोपलसुरेश्वररत्नवर्यैः ।

धार्याणि भूपतिभिराभरणानि लक्ष्मीसौभाग्यदान्यपररत्नकृतानि नैव ॥ इति ।

रत्नानामितोऽप्यवान्तरभेदाः दोषाः गुणाश्च तेषा फलविशेषाश्च बहुषु ग्रन्थेषु बहुलमुपलभ्यन्ते विस्तरभयान्न लिख्यन्ते ।

रामेण धृता च माला महापुरुषेण इन्द्रेण प्रेषितत्वात् वायुना आनीतत्वात् रामेण धृतत्वाच्च पूर्वोक्तरत्नदोषरहिता रत्नगुणयुक्ता चेत्यवगम्यते ॥

अत्र महापुरुषस्य रामस्य पट्टाभिषेकसमये इन्द्रेण माला प्रेषितेति प्रतिपादनात् अन्यैरपि सामन्तैरिष्टजनैश्च राजाभिषेकसमये उपायनानि दातव्यानीति सूचितम् ।

अत एव युधिष्ठिरस्य राजसूयाभिषेके सामन्तराजभिरुपायनानि आनीतानीति प्रतिपादितं **सभापर्वणि** —

आहृतं भूमिपालैर्हि वसुमुख्यैस्ततस्ततः ।
ऐलान् वैलान् पार्षदंशान् जातरूपपरिष्कृतान् । प्रावाराजिनमुख्यांश्च काबोजः प्रददौ बहून् ॥
अङ्गा वङ्गाश्च पुण्ड्राश्च शालवत्या गयास्तथा । सुजातयः श्रेणिमन्तः श्रेयांसः शस्त्रधारिणः ॥
आहर्षुः क्षत्रिया वित्तं शतशोऽजातशत्रवे । अन्यैश्चोपाहृतान्यत्र रत्नानीह महात्मभिः ॥
राजा चित्ररथो नाम गान्धर्वो वासवानुगः । शतानि चत्वार्यददद्धयानां वातरंहसाम् ॥
तुम्बुरुस्तु प्रमुदितो गान्धर्वो वाजिनां शतम् । आम्रपत्रसवर्णानामददद्धेममालिनाम् ॥
जवसत्त्वोपपन्नानां वयस्थानां नराधिप । बलिं च कृत्स्नमादाय पाण्डवेभ्यो न्यवेदयत् ॥
वासुदेवोऽपि वार्ष्णेयो मानं कुर्वन् किरीटिनः ।
अददद्गजमुख्यानां सहस्राणि चतुर्दश ॥ इति ।

**प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ।**
**अभिषेके तदर्हस्य तदा रामस्य धीमतः ॥**

**भूमिः सस्यवती चैव फलवन्तश्च पादपाः ।**
**गन्धवन्ति च पुष्पाणि बभूवू राघवोत्सवे ॥**

अनेन यस्मिन् राज्ये धार्मिको राजाऽभिषिच्यते तद्राज्यं वर्धत इति सूचितम् । अत एव गवां राज्ये उपेन्द्रत्वेन अभिषिक्ते श्रीकृष्णे गवां समृद्धिः प्रतिपादिता **विष्णुपुराणे** । इन्द्रः —

अथोपवाह्यमादाय घण्टामैरावताद्गजात् । अभिषेकं तदा चक्रे पवित्रजलपूर्णया ॥
क्रियमाणाभिषेके तु गावः कृष्णस्य तत्क्षणात् ।
प्रस्नवोद्भूतदुग्धार्द्रां सद्यश्चक्रुर्वसुन्धराम् ॥ इति ।

**सहस्रशतमश्वानां धेनूनां च गवां तथा ।**
**ददौ शतं वृषान् प्रीतो द्विजेभ्यो मनुजर्षभः ॥**

**त्रिंशत्कोटिहिरण्यस्य ब्राह्मणेभ्यो ददौ पुनः ।**
**नानाभरणवस्त्राणि महार्हाणि च राघवः ॥**

**अर्करश्मिप्रतीकाशां काञ्चनीं मणिविग्रहाम् ।**
**सुग्रीवाय स्रजं दिव्यां प्रायच्छन्मनुजर्षभः ॥**

वैडूर्यमणिचित्रे च वज्ररत्नविभूषिते ।
वालिपुत्राय धृतिमान् अङ्गदायाङ्गदे ददौ ॥

अनेनाभिषेकसमये ब्राह्मणेभ्यो बहुविधानि दानानि स्वेष्टजनानां वस्त्राभरण-दानादिना बहुमतिश्च कर्तव्येति सूचितम् । अत एवाभिषिक्तेन युधिष्ठिरेण बहु दत्तं ब्राह्मणेभ्यः बहुमताश्च स्वेष्टजनाः भूषणादिभिरिति प्रतिपादितं **राजधर्मे** —

धौम्यं गुरुं पुरस्कृत्य ज्येष्ठं पितरमेव च । सुमनोमोदकै रत्नैर्हिरण्येन च भूरिणा ॥
गोभिर्वस्त्रैश्च राजेन्द्र विविधैश्च किमिच्छकैः । तथानुजीवतो भृत्यान् सुश्रितानतिथीनपि ॥
कामैः संतर्पयामासुः कृपणा अपि सत्कृताः । पुरोहिताय धौम्याय प्रादादयुतशस्तथा ॥
धनं सुवर्णं रजतं वासासि विविधानि च । युयुत्सोर्धृतराष्ट्रस्य पूजां चक्रे महायशाः ॥ इति

**कालिदासोऽपि** —

स तावदभिषेकान्ते स्नातकेभ्यो ददौ वसु ।
यावत्तेषा समाप्येरन् यज्ञास्सर्वस्वदक्षिणाः ॥ इति ।

मणिप्रवरजुष्टं च मुक्ताहारमनुत्तमम् ।
सीतायै प्रददौ रामश्चन्द्ररश्मिसमप्रभम् ॥

अरजे वाससी दिव्ये शुभान्याभरणानि च ।
अवेक्षमाणा वैदेही प्रददौ वायुसूनवे ॥

अवमुच्यात्मनः कण्ठाद्धारं जनकनन्दिनी ।
अवैक्षत हरीन्सर्वान् भर्तारं च मुहुर्मुहुः ॥

अनेन स्वकीयस्यापि वस्तुनः भर्तुरनुज्ञया दानं स्त्रीणां प्रशस्ततरमिति सूचितम् ।
तथाच **कात्यायनः**—

न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यमात् ।
स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनाज्ञया ॥ इति ।

तामिङ्गितज्ञस्संप्रेक्ष्य बभाषे जनकात्मजाम् ।
प्रदेहि सुभगे हारं यस्य तुष्टासि भामिनि ॥

पौरुषं विक्रमो बुद्धिर्यस्मिन्नेतानि सर्वदा ।
ददौ स वायुपुत्राय तं हारमसितेक्षणा ॥

अत्र स्वधृतमुत्तमहारमवमुच्य वीक्षितवती सीतां प्रति रामेण पौरुषं विक्रमो बुद्धिर्यस्मिन्नेतानि नित्यशस्तिष्ठन्ति, यस्य च त्वं तुष्टाऽसि तस्मै त्वं प्रयच्छेत्युक्तत्वात् उत्तमबहुमानः गुणाढ्यस्य उत्तमपुरुषस्यैव कर्तव्य इति सूचितम्। तथा च **मनुः**—

उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम्॥ इति।

**हनूमांस्तेन हारेण शुशुभे वानरर्षभः।**
**चन्द्रांशुचयगौरेण श्वेताभ्रेण यथाऽचलः॥**

**ततो द्विविदमैन्दाभ्यां नीलाय च परन्तपः।**
**सर्वान् कामगुणान्वीक्ष्य प्रददौ वसुधाधिपः॥**

**सर्ववानरवृद्धाश्च ये चान्ये वानरेश्वराः।**
**वासोभिर्भूषणैश्चैव यथार्हं प्रतिपूजिताः॥**

**विभीषणोऽथ सुग्रीवो हनूमान् जांबवांस्तथा।**
**सर्ववानरमुख्याश्च रामेणाक्लिष्टकर्मणा॥**

अनेन स्वेष्टजनानां महत्त्वानुगुणतया पूजा कर्तव्येति सूचितम्। **तथा च सभापर्वणि** युधिष्ठिरं प्रति **भीष्मः**—

क्रियतामर्हणं राज्ञां यथार्हमिति भारत॥ इति।

**यथार्हं पूजितास्सर्वैः कामै रत्नैश्च पुष्कलैः।**
**प्रहृष्टमनसस्सर्वे जग्मुरेव यथागतम्॥**

**दृष्ट्वा सर्वे महात्मानं ततस्ते प्लवगर्षभाः।**
**विसृष्टाः पार्थिवेन्द्रेण किष्किन्धामभ्युपागमन्॥**

**सुग्रीवो वानरश्रेष्ठो दृष्ट्वा रामाभिषेचनम्।**
**लब्ध्वा कुलधनं राजा लङ्कां प्रायाद्विभीषणः॥**

**स राज्यमखिलं शासन्निहतारिर्महायशाः।**
**राघवः परमोदारः शशास परया मुदा।**
**उवाच लक्ष्मणं रामो धर्मज्ञं धर्मवत्सलम्॥**

**आतिष्ठ धर्मज्ञ मया सहेमां गां पूर्वराजाध्युषितां बलेन।**

तुल्यं मया त्वं पितृभिर्धृतायां तां यौवराज्ये धुरमुद्वहस्व ॥

सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम्।
नियुज्यमानो भुवि यौवराज्ये ततोऽभ्यषिञ्चद्भरतं महात्मा॥ इति।

नन्वत्र राज्याभिषिक्तो रामः समीपवर्तिनं लक्ष्मणं यौवराज्याभिषेकाय बहुधा अनुनीय लक्ष्मणेऽनङ्गीकुर्वति सति भरतं यौवराज्ये अभ्यषिचयत् इति प्रतिपादितम्। तदिदमयुक्तं, ज्येष्ठे भरते यौवराज्याभिषेकार्हे विद्यमाने तं विहाय कनिष्ठं लक्ष्मणं प्रति रामकृतस्य यौवराज्याभिषेकप्रार्थनस्य धर्मविरुद्धत्वादिति चेत्सत्यम्; रामस्तावत्,

धर्ममर्थं च कामं च पृथिवीं चापि लक्ष्मण। इच्छामि भवतामर्थे एतत्प्रतिशृणोमि ते ॥

इत्यादिवचनैः प्राप्ते राज्यादौ भ्रातृभिस्सहैव स्वस्योपभोक्तृत्वं प्रतिज्ञातवान्। अतस्तन्निर्वाहार्थं इदानीं प्राप्तराज्यो रामः क्रमेण यथोचितं भ्रातृभ्यो राज्यं दातुं प्रवृत्तः सन् उपस्थितं यौवराज्यं ज्येष्ठाय भरताय देयमाहोस्वित् बाल्यमारभ्य कृतशुश्रूषाय लक्ष्मणाय देयमिति संशय्य ज्येष्ठक्रममाहृत्य यद्यपि भरताय राज्यं दातुमुचितं, तथापि तस्मिन् पक्षे लक्ष्मणाय शत्रुघ्नवत् स्वतन्त्रराज्यं दातव्यं स्यात्। तच्च स्वतन्त्रराज्यं,

परवानस्मि काकुत्स्थ त्वयि वर्षशतं स्थिते।

इति आरण्यकाण्डस्थलक्ष्मणवचनपर्यालोचनया स्वसंनिधौ स्थित्वा स्वशुश्रूषणमेव करिष्यामीति, स्वतन्त्रो न भवामीति वदन् लक्ष्मणः नाङ्गीकरिष्यति। यौवराज्यं तु स्वतन्त्रं न भवति। स्वसंनिधौ स्थित्वा स्वशुश्रूषणाविरोधेन परिपालयितुं योग्यमिति मन्यमानो लक्ष्मणः तदङ्गीकरिष्यति। स्वदत्तस्य वनाशयौवराज्यस्य स्वशुश्रूषणाविरोधेन चतुर्दशसंवत्सरपर्यन्तं निर्वहणात्। भरतस्तु,

पुरा भ्रातः पिता नस्सन् मातरं ते समुद्वहन्। मातामहे समश्रौषीद्राज्यशुल्कमनुत्तमम् ॥
इति वचनेन,

भरतश्च महाबाहुरयोध्यां पालयिष्यति।

इति वचनेन च स्वतन्त्रराज्यार्हत्वेनावगत स्वाज्ञया चतुर्दशसंवत्सरपर्यन्तं स्वतन्त्रराज्यमनुभूतवान्। इदानीमपि स मया स्वतन्त्रं राज्यं दत्तं चेदङ्गीकरिष्यतीति निश्चित्य लक्ष्मणमेव प्रथममनुनीतवान्। अतो न रामे धर्मविरुद्धाचरणाशङ्का।

किञ्च रामेण तावत् स्वस्य राज्याभिषेकप्रसक्तिकाले,

लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुन्धराम् ।
द्वितीयं मेऽन्तरात्मानं त्वामियं श्रीरुपस्थिता ॥

सौमित्रे भुंक्ष्व भोगांस्त्वं इष्टान्राज्यफलानि च ।
जीवितं च हि राज्यं च त्वदर्थमभिकामये ॥

इति लक्ष्मणं प्रत्यभिहितं, वनगमनोत्तरकालं युवराजकार्यमपि कारितम् । तस्मादिदानीं न्यायतः तदीयं यौवराज्यं तस्यैव रामेण दातुमुचितं नतु तत आच्छिद्य भरताय दातुं शक्यम् । तथात्वे पूर्वदत्तापहारप्रसङ्गात् । दत्तापहारस्य दोषत्वं च **नृसिंहपुराणे —**

अहो राघव राजेन्द्र सप्तकल्पानुजीव्यहम् । न शृणोषि न पश्यामि स्वयं दत्तापहारिणम् ॥

**कूर्मपुराणेऽपि —**

विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिन । कृष्णा सर्पा प्रजायन्ते भक्तदत्तापहारका' । इति

**यमोऽपि —**

प्रतिश्रुत्नाप्रदानेन दत्तस्य हरणेन च । जन्मप्रभृति यत्पुण्यं तत्सर्वं विप्रणश्यति ॥

**यमोऽपि —**

प्रतिश्रुताप्रदानेन दत्तस्य हरणेन तु । सप्तजन्म भवेद्रोगी दरिद्रो व्याधिपीडितः ॥

**भारतेऽपि —**

ये हरन्त्यवनीं भक्तदत्ता स्वेन परैरपि । हरो हरिर्धनं तेषां पुरं देशं च हारयेत् ॥ इति ॥

अतः सत्यपि ज्येष्ठे भरते कनिष्ठस्य लक्ष्मणस्य रामकृतः यौवराज्यानुनयो युक्त एव ।

**पौण्डरीकाश्वमेधाभ्यां वाजपेयेन चासकृत् ।**
**अन्यैश्च विविधैर्यज्ञैरयजत्पार्थिवर्षभः ॥**

**राज्यं दशसहस्राणि प्राप्य वर्षाणि राघव ।**
**शताश्वमेधानाजह्रे सदश्वान् भूरिदक्षिणान् ॥**

**आजानुलंबबाहुस्स महास्कन्धः प्रतापवान् ।**
**लक्ष्मणानुचरो रामः पृथिवीमन्वपालयत् ॥**

**राघवश्चापि धर्मात्मा प्राप्य राज्यमनुत्तमम् ।**
**ईजे बहुविधैर्यज्ञैस्ससुहृद्भ्रातृबान्धव ॥**

अत्र राज्ञा राज्यप्राप्त्यनन्तरं यज्ञादिकमवश्यं कर्तव्यमिति सूचितम्। तथा च राजधर्मे —

अजातशत्रो धर्मेण कृत्स्ना ते वसुधा जिता।
तां जित्वा न वृथा राजन् परित्यक्तुमिहार्हसि॥
तस्मात्पार्थ महायज्ञैर्यजस्व बहुदक्षिणैः।
यज्ञाय सृष्टानि धनानि धात्रा यज्ञः सृष्टः पुरुषो रक्षितश्च।
तस्मात्सर्वं यज्ञ एवोपयोज्य धनं ततोऽनन्तर एव कामः॥ इति॥
जित्वारीन् क्षत्रधर्मेण प्राप्य राज्यमकण्टकम्।
विजितार्थो मनुष्येन्द्र यज्ञदानपरो भवेत्॥ इति च॥

न पर्यदेवन् विधवा नच व्यालकृतं भयम्।
न व्याधिजं भयं चासीत् रामे राज्यं प्रशासति॥

निर्दस्युरभवल्लोको नानर्थं कश्चिदस्पृशत्।
नच स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते॥

सर्वं मुदितमेवासीत्सर्वो धर्मपरोऽभवत्।
राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम्॥

आसन्वर्षसहस्राणि तथा पुत्रसहस्रिणः।
निरामया विशोकाश्च रामे राज्यं प्रशासति॥

नित्यपुष्पा नित्यफलास्तरवस्तत्र पुष्पिताः।
कालवर्षी च पर्जन्यः सुखस्पर्शश्च मारुतः॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा लोभविवर्जिताः।
स्वकर्मसु प्रवर्तन्ते तुष्टास्स्वैरेव कर्मभिः॥

आसन् प्रजा धर्मपरा रामे शासति नानृताः।
सर्वे लक्षणसंयुक्ताः सर्वे धर्मपरायणा॥

दशवर्षसहस्राणि दशवर्षशतानि च।
भ्रातृभिस्सहितः श्रीमान् रामो राज्यमकारयत्॥

अत्र प्रजाना चिरजीवित्वनिरामयत्वस्वधर्मनिरतत्वादयः तरूणां नित्यपुष्प-

फलस्वादयो धर्माः रामे राज्यं प्रशासति प्रतिपादिताः । एते च कृतयुगधर्माः । तदुक्तं राजधर्मे —

भवेत्कृतयुगे धर्मो नाधर्मो विद्यते क्वचित् । व्याधयो न भवन्त्यत्र नाल्पायुर्दृश्यते नरः ॥
विधवा न भवन्त्यत्र नृशंसो नाभिजायते ।

एतेषां च कृतयुगधर्मत्वं कण्ठरवेण प्रतिपादितं बालकाण्डे —

प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः । निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥
न पुत्रमरणं किंचिद्द्रक्ष्यन्ति पुरुषा क्वचित् ।
नार्यश्चाऽविधवा नित्यं भविष्यन्ति पतिव्रताः ।
न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः ॥
न वातजं भयं किञ्चिन्नापि ज्वरकृतं तथा । न चापि क्षुद्भयं तत्र न तस्करभयं तथा ॥
नगराणि च राष्ट्राणि धनधान्ययुतानि च । नित्यं प्रमुदितास्सर्वे यथा कृतयुगे तथा ॥ इति ॥

तथाच रामे राज्यं प्रशासति त्रेतायुगे एव कृतयुगधर्माः प्रवर्तन्त इति प्रतिपादितं भवति ॥

नन्वेतदसंगतं, युगधर्माणां व्यवस्थितत्वेन युगान्तरे युगान्तरधर्माणां प्रवृत्त्यसंभवात्। कृतयुगादीना धर्मभेदाः तेषां व्यवस्थाश्च स्मृतीतिहासपुराणेषु श्रूयन्ते । तथा च मनुः—

अरोगास्सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः । कृतत्रेतादिषु ह्येषा वयो ह्रसति पादशः ॥
वेदोक्तमायुर्मर्त्यानां आशिषश्चैव कर्मणाम् । भवन्त्यनुयुगं लोके प्रभावश्च शरीरिणाम् ॥

आयुः चतुर्वर्षशतादि, आयुषः फलानि प्रभावः शापानुग्रहादिशक्तिः अनुयुगं युगानुरूपेण पूर्णानि हीनानि हीनतराणि हीनतमानीत्यर्थः ॥

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे । अन्ये कलियुगे नृणां युगह्रासाऽनुरूपतः ॥
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥

परं प्रधानम् ।

अभिगम्योत्तमं दानं आहूयैव तु मध्यमम् । अधमं याचमानाय सेवादानं तु निष्फलम् ॥
अभिगम्य कृते दानं त्रेतास्वाहूय दीयते । द्वापरे याचमानाय सेवया दीयते कलौ ॥
त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् । द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे ॥

पतितो यस्मिन्देशे निवसेत् तं देशं वर्जयेत् । कुलत्यागो नाम पतितस्य कुले भोजनाद्यप्रवृत्तिः । कर्तृत्यागः संभाषणादिवर्जनम् ॥

कृते संभाषणादेव त्रेतायां स्पर्शनेन च । द्वापरे त्वन्नमादाय कलौ पतति कर्मणा ॥

कृते तत्क्षणिकः शापः त्रेतायां दशभिर्दिनैः । द्वापरे चैकमासेन कलौ संवत्सरेण तु ॥

कृते त्वस्थिगताः प्राणास्त्रेतायां मांसमाश्रिताः । द्वापरे रुधिरं चैव कलौ त्वन्नादिषु स्थिताः ॥

जितो धर्मो ह्यधर्मेण सत्यं चैवानृतेन च । जिताश्चोरैस्तु राजानस्त्रीभिश्च पुरुषाः कलौ ॥

सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति । कुमार्यश्च प्रसूयन्ते तस्मिन् कलियुगे सदा ॥

अधर्मस्य जयो नाम पादत्रयोपेतत्वम् । एकेन पादेन वर्तमानत्वं धर्मस्य पराजयः । तथा **माधवीये पराशरः**—

कृते चतुष्पात्सकलो निर्व्याजोपाधिजीवितः । वृषः प्रतिष्ठितो धर्मो मनुष्येष्वभवत्सदा ॥

पुरा धर्मः पादविहीनस्तु त्रिभिरंशैः प्रतिष्ठितः ।
त्रेतायां द्वापरेऽर्धेन व्यामिश्रो धर्म इष्यते ॥

त्रिपादहीनस्तिष्ये तु पादमात्रेण तिष्ठति ॥

इति । **वनपर्वणि** भीमं प्रति हनूमान्—

कृतं नाम युगं तात यत्र धर्मस्सनातनः । कृतमेव न कर्तव्यं तस्मिन् काले युगोत्तमे ॥

न तत्र धर्मास्सीदन्ति क्षीयन्ते न च वै प्रजाः ।
ततः कृतयुगं नाम कालेन गुणतां गतम् ॥

देवदानवगन्धर्वयक्षराक्षसपन्नगाः । नासन्कृतयुगे तात तदा न क्रयविक्रयः ॥

न सामऋग्यजुर्वर्णाः क्रिया नासीच्च मानवी ।
अभिध्याय फलं तत्र धर्मस्संन्यास एव च ॥

न तस्मिन् युगसंसर्गो व्याधयो नेन्द्रियक्षयः ।
नासूया नापि रुदितं न दर्पो नापि वैकृतम् ॥

न विग्रहः कुतस्तन्द्री न द्वेषो न च पैशुनम् ।
न भयं नापि संतापो न चेर्ष्या नच मत्सरः ॥

तपः परमकं ब्रह्म स गतिर्योगिनां परा । आत्मा च सर्वभूतानां शुक्लो नारायणस्तदा ॥

ब्राह्मणाः क्षत्रिया वैश्याश्शूद्राश्च कृतलक्षणाः । कृते युगे समभवन् स्वकर्मनिरताः प्रजाः ॥

समाश्रयं समाचारं समज्ञानं च केवलम् । तदा हि समकर्माणो वर्णा धर्मानवाप्नुवन् ॥
एकदेवे समायुक्ता एकमन्त्रविधिक्रिया । पृथग्धर्मास्त्वेकवेदा धर्ममेकमनुव्रता ॥
चातुराश्रम्ययुक्तेन कर्मणा कालयोगिना । अकामफलसंयोगात्प्राप्नुवन्ति परां गतिम् ॥
आत्मयोगे समायुक्तो धर्मोऽयं कृतलक्षणः । कृते युगे चतुष्पादः चातुर्वर्ण्यस्य शाश्वतः ॥
एतत्कृतयुगं नाम त्रैगुण्यपरिवर्जितम् । त्रेतामपि निबोध त्वं यस्मिन् सत्रं प्रवर्तते ॥
पादेन ह्रसते धर्मो रक्ततां याति चाच्युतः । सत्यप्रवृत्ताश्च नराः क्रिया धर्मपरायणाः ॥

ततो धर्माः प्रवर्तन्ते धर्म्याश्च विविधाः क्रियाः ।
स्वधर्मस्थाः क्रियावन्तो नरास्त्रेतायुगेऽभवन् ॥

द्वापरे च युगे धर्मो द्विभागोनः प्रवर्तते । विष्णुर्वै पीतता याति चतुर्धा वेद एव च ॥
ततोऽन्ये च चतुर्वेदास्त्रिवेदाश्च तथापरे । द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथापरे ॥
एवं शास्त्रेषु भिन्नेषु बहुधा नीयते क्रिया । तपोदानप्रवृत्ता च राजसी भवति प्रजा ॥
एकवेदस्य चाज्ञानाद्वेदास्ते बहवः कृताः । सत्त्वस्य चेह विभ्रंशात्सत्ये कश्चिदवस्थितः ॥
सत्यात्प्रच्यवमानानां व्याधयो बहवोऽभवन् । कामाश्चोपद्रवाश्चैव तदा वै दैवकारिताः ॥
यैरर्द्यमानास्सुभृशं तपस्तप्यन्ति मानवा । कामकामास्स्वर्गकामा यज्ञास्तन्वन्ति चापरे ॥
एवं द्वापरमासाद्य प्रजाः क्षीयन्ति धर्मतः । पादेनैकेन कौन्तेय धर्मः कलियुगे स्थितः ॥
तामसं गुणमासाद्य कृष्णो भवति केशवः । वेदाचाराः प्रशाम्यन्ति धर्मयज्ञक्रियास्तथा ॥
ईतयो व्याधयस्तन्द्रीदोषाः क्रोधादयस्तथा । उपद्रवाश्च वर्तन्ते आधयः क्षुद्भयं तथा ॥
युगेष्वावर्तमानेषु धर्मो व्यावर्तते पुनः । लोके क्षीणे क्षयं यान्ति भावा लोकप्रवर्तकाः ॥
युगक्षयकृता धर्माः प्रधानानि विकुर्वते । एतत्कलियुगं नाम अचिराद्यत्प्रवर्तते ॥

युगानुवर्तनं त्वेतत्कुर्वन्ति चिरजीविनः ॥ इति ।

तत्रैव धर्मराजं प्रति मार्कण्डेयः —

कृते चतुष्पात्सकलो निर्व्याजोपाधिवर्जितः । वृषः प्रतिष्ठितो धर्मो मनुष्येष्वभवत्पुरा ॥
अधर्मपादविद्धस्तु त्रिभिरंशैः प्रतिष्ठितः । त्रेतायां द्वापरेऽर्धेन व्यामिश्रो धर्म उच्यते ॥
त्रिभिरंशैरधर्मस्तु लोकानाक्रम्य तिष्ठति । तामसं युगमासाद्य तदा भरतसत्तम ॥
चतुर्थांशेन धर्मस्तु मनुष्यानुपतिष्ठति । आयुर्वीर्यमथो बुद्धिर्बलं तेजश्च पाण्डव ॥
मनुष्याणामनुयुगं ह्रसतीति निबोध मे । राजानो ब्राह्मणा वैश्याः शूद्राश्चैव युधिष्ठिर ॥

व्याजैर्धर्म चरिष्यन्ति धर्मवैतंसिका नरा । सत्यं सक्षेप्स्यते लोके नरैः पण्डितमानिभिः ॥
सत्यहान्या ततस्तेषामायुरल्पं भविष्यति । आयुषः प्रक्षयाद्विद्यां न शक्ष्यंत्युपजीवितुम् ॥
विद्याहीनानविज्ञानात् लोभोऽप्यभिभविष्यति। लोभक्रोधपरा मूढाः कामासक्ताश्च मानवाः ॥
वैरबन्धा भविष्यन्ति मध्याश्चान्त्या न सशयः । ईदृशो भविता लोके युगान्ते पर्युपस्थिते ॥
वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकाः । भार्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये ॥
मत्स्यामिषेण जीवन्तो दुहन्तश्चाप्यजैडकम् । गोषु नष्टासु पुरुषा भविष्यन्ति युगक्षये ॥

अन्योन्यं परिमुष्णन्तो हिंसयन्तश्च मानवाः ।
अजपा नास्तिकाः स्तेना भविष्यन्ति युगक्षये ॥

सरित्तीरेषु कुद्दालैर्वापयिष्यन्ति चौषधीः । ताश्चाप्यल्पफलास्तेषा भविष्यन्ति युगक्षये ॥
श्राद्धे दैवे च पुरुषा ये ये नित्यं धृतव्रताः । तेऽपि लोभसमायुक्ता भोक्ष्यन्तीह परस्परम् ॥

पिता पुत्रस्य भोक्ता च पितुः पुत्रस्तथैव च ।
अतिक्रान्तानि भोज्यानि भविष्यन्ति युगक्षये ॥
न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः ।
न पक्ष्यन्ति न होष्यन्ति हेतुवादविमोहिताः ॥

एकहायनवत्साश्च योजयिष्यन्ति मानवाः । पुत्रः पितृवधं कृत्वा पिता पुत्रवधं तथा ॥
निरुद्वेगो बृहद्वादी न निन्दामुपलप्स्यते । म्लेच्छभूतं जगत्सर्वं निष्क्रियं यज्ञवर्जितम् ॥
भविष्यति निरानन्दमनुत्सवमथो तथा । प्रायशः कृपणानीह तथा बन्धुमतामपि ॥
विधवाना च वित्तानि हरिष्यन्तीह मानवा. । स्वल्पवीर्यबलाः स्तब्धा लोभमोहपरायणाः ॥
तत्कथादानसंतुष्टा दुष्टानामपि मानवाः । परिग्रहं करिष्यन्ति पापाचारपरिग्रहाः ॥
समाह्वयन्तः कौन्तेय राजानः पापबुद्धयः । परस्परवधोद्युक्ता मूर्खाः पण्डितमानिनः ॥
भविष्यन्ति युगस्यान्ते क्षत्रिया लोककण्टकाः । अरक्षितारो लुब्धाश्च मानाहङ्कारदर्पिताः ॥
केवलं दण्डरुचयो भविष्यन्ति युगक्षये । आक्रम्याक्रम्य साधूनां दारांश्चैव धनानि च ॥
भोक्ष्यन्ते निरनुक्रोशा रुदतामपि भारत । न कन्यां याचते कश्चिन्नापि कन्या प्रदीयते ॥
स्वयंग्राहा भविष्यन्ति युगान्ते समुपस्थिते । राजानश्चाप्यसंतुष्टाः परार्थान्मूढचेतसः ॥
सर्वोपायैर्हरिष्यन्ति युगान्ते पर्युपस्थिते । म्लेच्छीभूतं जगत्सर्वं भविष्यति न संशयः ॥
हस्तो हस्तं परिमुषेद्युगान्ते पर्युपस्थिते । सत्यं संक्षिप्यते लोके नरैः पण्डितमानिभिः ॥

स्थविरा बालमतयो बालास्स्थविरबुद्धय । भीरुस्तथा शूरमानी शूरा भीरुविषादिनः ॥
न विश्वसन्ति चान्योन्यं युगान्ते पर्युपस्थिते । एकाहार्ययुगं सर्वं लोभमोहव्यवस्थितम् ॥

अधर्मो वर्धते तत्र न तु धर्मः प्रवर्तते ।
ब्राह्मणाः क्षत्रिया वैश्या न शिष्यन्ति जनाधिप ॥

एकवर्णस्तदा लोको भविष्यति युगक्षये । न क्षंस्यति पिता पुत्रं पुत्रश्च पितरं तथा ॥
भार्याश्च पतिशुश्रूषां करिष्यन्ति न काश्चन । पेयवान्ना जनपदा गोधूमान्नास्तथैव च ॥
तान् देशान् संश्रयिष्यन्ति युगान्ते पर्युपस्थिते । स्वैराचारास्तु पुरुषा योषितश्च विशाम्पते ॥
अन्योन्यं न सहिष्यन्ति युगान्ते पर्युपस्थिते । म्लेच्छभूतं जगत्सर्वं भविष्यति युधिष्ठिर ॥

न श्राद्धैस्तर्पयिष्यन्ति दैवतानीह मानवाः ।
न कश्चित्कस्यचिच्छ्रोता न कश्चित्कस्यचिद्गुरुः ॥

तमोग्रस्तस्तदा लोको भविष्यति नराधिप । परमायुश्च भविता तदा वर्षाणि षोडश ॥
ततः प्राणान्विमोक्ष्यन्ति युगान्ते समुपस्थिते । पञ्चमे वाऽथ षष्ठे वा वर्षे कन्या प्रसूयते ॥
सप्तवर्षाष्टवर्षाश्च प्रजायन्ति नरास्तदा । पत्यौ स्त्री तु तदा राजन् पुरुषो वा स्त्रियं प्रति ॥
युगान्ते राजशार्दूल न तोषमुपयास्यति । अल्पद्रव्या वृथालिङ्गा हिंसा च प्रभविष्यति ॥
न कश्चित्कस्यचिद्दाता भविष्यति युगक्षये । अट्टशूला जनपदाश्शिवशूलाश्चतुष्पथाः ॥
प्रमदाः केशशूलिन्यो भविष्यन्ति युगक्षये । म्लेच्छाचाराः सर्वभक्षाः दारुणाः सर्वकर्मसु ॥
भाविनः पश्चिमे काले मनुष्या नात्र संशयः । क्रयविक्रयकाले च सर्वैः सर्वस्य वञ्चनम् ॥
युगान्ते भरतश्रेष्ठ वित्तलोभात्करिष्यति । ज्ञानानि चाप्यविज्ञाय करिष्यन्ति क्रियास्तथा ॥
आत्मच्छन्देन वर्तन्ते युगान्ते समुपस्थिते । स्वभावात्क्रूरकर्माणश्चान्योन्यमभिशंसिनः ॥
भवितारो जनास्सर्वे संप्राप्ते युगसंक्षये । आरामाश्चैव वृक्षाश्च नाशयिष्यन्ति निर्दयाः ॥

भविता संशयो लोके जीवितार्थस्य देहिनाम् ।
तथा लोभाभिभूताश्च भविष्यन्ति नरा नृप ॥

ब्राह्मणांश्च हनिष्यन्ति ब्राह्मणस्वोपभोगिनः । हाहाकृता द्विजाश्चैव भयार्ता वृषलार्दिताः ॥

त्रातारमलभन्तो वै भ्रमिष्यन्ति महीमिमाम् ।
जीवितान्तकराः क्रूराः रौद्राः प्राणिविहिंसकाः ॥

यदा भविष्यन्ति नराः तदा सक्षेप्स्यते युगम् ।
आश्रयिष्यन्ति च नदीः पर्वनान् विषमाणि च ॥

प्रधावमाना वित्रस्ता द्विजा कुरुकुलोद्वह । दस्युभिः पीडिता राजन् काका इव द्विजोत्तमाः ॥

कुराजभिश्च सतत करभारप्रपीडिताः । धैर्यं त्यक्त्वा महीपाल दारुणे युगसंक्षये ॥

विकर्माणि करिष्यन्ति शूद्राणा परिचारका । शूद्रा धर्मं प्रवक्ष्यन्ति ब्राह्मणाः पर्युपासकाः ॥

श्रोतारश्च भविष्यन्ति प्रामाण्ये चाऽव्यवस्थिताः ।
विपरीतश्च लोकोऽयं भविष्यत्यधरोत्तरः ॥

एडूकान् पूजयिष्यन्ति वर्जयिष्यन्ति देवता ।
शूद्राः परिचरिष्यन्ति न द्विजान् युगसक्षये ॥

देवस्थानेषु चैत्येषु नागानामालयेषु च । एडूकचिह्ना पृथिवी न देवगृहभूषिता ॥

भविष्यन्ति युगे क्षीणे तद्युगं तस्य लक्षणम् । यदा रौद्रा धर्महीना मांसादाः पानपास्तथा ॥

भविष्यन्ति नरा नित्यं तदा सक्षेप्स्यते युगम् ।
पुष्पं पुष्पे यदा राजन् फले वा फलमाश्रितम् ॥

जनिष्यति महाराज तदा सक्षेप्स्यते युगम् । अकालवर्षी पर्जन्यो भविष्यति युगे गते ॥

अक्रमेण मनुष्याणां भविष्यन्ति तदा क्रिया । विरोधमथ यास्यन्ति वृषला ब्राह्मणैस्सह ॥

मही म्लेच्छजनाकीर्णा भविष्यति ततोऽचिरात् ।
करभारभयाद्विप्रा भजिष्यन्ति दिशो दश ॥

निर्विशेषा जनपदास्तदा विष्टिकरार्दिताः । आश्रमानुपयास्यन्ति फलमूलोपजीविनः ॥

एवं पर्याकुले लोके मर्यादा न भविष्यति । दिशः प्रज्वलिताः सर्वा नक्षत्राण्यप्रभाणि च ॥

ज्योतींषि प्रतिकूलानि वाताः पर्याकुलास्तथा । उल्कापाताश्च बहवो महाभयनिदर्शकाः ॥

षड्भिरन्यैश्च सहितो भास्करः प्रतपिष्यति । तुमुलाश्चापि निर्ह्रादा दिग्दाहाश्चापि सर्वशः ॥

कबन्धान्तर्हितो भानुरुदयास्तमने तदा । अकालवर्षी भगवान् भविष्यति सहस्रदृक् ॥

सस्यानि च न रोक्ष्यन्ति युगान्ते पर्युपस्थिते । अभीक्ष्णं क्रूरवादिन्यः परुषा रुदितप्रियाः ॥

भर्तॄणां वचने चैव न स्थास्यन्ति तदा स्त्रियः । पुत्राश्च मातापितरौ हनिष्यन्ति युगक्षये ॥

सूदयिष्यन्ति च पतीन् स्त्रियः पुत्रानुपाश्रिताः । अपर्वणि महाराज सूर्यं राहुरुपैष्यति ॥

युगान्ते हुतभुक् चापि सर्वतः प्रज्वलिष्यति । पानीयं भोजनं चापि याचमानास्तथाऽध्वगाः ॥
न लप्स्यन्ते निवासं च निस्नृताः पथि शेरते ।
निर्घाता वायसा नागाः शकुना समृगद्विजाः ॥
रूक्षा वाचो विमोक्ष्यन्ति युगान्ते समुपस्थिते ।
अथ देशान् दिशश्चापि पत्तनानि पुराणि च ॥
क्रमश संश्रयिष्यन्ति युगान्ते समुपस्थिते । हा तात हा सुतेत्येवं सदा वाचस्सुदारुणाः ॥
विक्रोशमानाश्चान्योन्यं जनो गा पर्यटिष्यति । ततस्तुमुलसघाते वर्तमाने युगक्षये ॥
द्विजातिपूर्वको लोकः क्रमेण प्रभविष्यति । ततः कालान्तरे तस्मिन् पुनर्लोकविवृद्धये ॥
भविष्यति पुनर्दैवमनुकूलं यदृच्छया । यदा चन्द्रश्च सूर्यश्च तथा शुक्रबृहस्पती ॥
एकराशौ समेष्यन्ति प्रपत्स्यति तदा कृतम् ।
कालवर्षी च पर्जन्यो नक्षत्राणि शुभानि च ॥
प्रदक्षिणा गृहाश्चापि भविष्यन्त्यनुलोमगाः । क्षेमं सुभिक्षमारोग्यं भविष्यति निरामयम् ॥
कल्की विष्णुयशा नाम द्विजः कालप्रचोदित । उत्पत्स्यते महावीर्यो महाबुद्धिपराक्रमः ॥
संभूतः संभलग्रामे ब्राह्मणावसथे शुभे । मनसा तस्य सर्वाणि वाहनान्यायुधानि च ॥
उपस्थास्यन्ति योधाश्च शस्त्राणि कवचानि च ।
स धर्मविजयी राजा चक्रवर्ती भविष्यति ॥
स चेमं संकुलं लोकं प्रसादमुपनेष्यति । उत्थितो ब्राह्मणो दीप्त. क्षयान्तकृदुदारधीः ॥
संक्षेपस्य हि सर्वस्य युगस्य परिवर्तक. । स सर्वत्र गतान् क्षुद्रान् ब्राह्मणैः परिवारितः ॥
उत्सादयिष्यति तदा सर्वान् म्लेच्छगणान्द्विजः ॥ इति ।

**विष्णुपुराणेऽपि —**

वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम् । न यजुस्सामऋग्वर्गविनिष्पादनहेतुकी ॥
विवाहा न कलौ धर्म्या न शिष्यगुरुसस्थितिः । न दांपत्यक्रमो नैव वह्निदेवात्मकः क्रमः ॥
यत्र यत्र कुले जातो बली सर्वेश्वरः कलौ । सर्वेभ्य एव वर्णेभ्यो योग्य. कन्यावरो धनी ॥
येन केनैव योगेन द्विजातिर्दीक्षितः कलौ । यैव सैव च मैत्रेय प्रायश्चित्तं कलौ क्रियाः ॥
सर्वमेव कलौ शास्त्रं यस्य यद्वचनं द्विज । देवताश्च कलौ सर्वाः सर्व. सर्वस्य चाश्रमः ॥
उपवासस्तथायासो वित्तोत्सर्गः तपः कलौ । धर्मो यथा वा रुचितैरनुष्ठानैरनुष्ठितः ॥

वित्तेन भविता पुंसां स्वल्पेनार्थमदः कलौ । स्त्रीणां रूपमदश्चैव केशैरेव भविष्यति ॥
सुवर्णमणिरत्नादौ क्षयं नीते तथाम्बरे । कलौ स्त्रियो भविष्यन्ति तदा केशैरलंकृताः ॥

परित्यक्ष्यन्ति भर्तारं वित्तहीनं तथा स्त्रियः ।
भर्ता भविष्यति कलौ वित्तवानेव योषिताम् ॥

यो यो ददाति बहुलं स स स्वामी तथा नृणाम् ।
स्वामित्वहेतुसम्बन्धो भविताऽभिजने तथा ॥

गृहान्ता द्रव्यसघाता द्रव्यान्ता च तथा मतिः ।
अर्थाश्चात्मोपभोगान्ता भविष्यन्ति कलौ युगे ॥

स्त्रियः कलौ भविष्यन्ति स्वैरिण्यो ललितस्पृहाः ।
अन्यायार्जितवित्तेषु पुरुषाश्च स्पृहालवः ॥

अभ्यर्थितोऽपि सुहृदा स्वार्थमेव निरीक्ष्यते ।
पणार्धार्धार्थमात्रेऽपि करिष्यन्ति कलिं द्विज ॥

समानपौरुषं चेतो भावि विप्रेषु वै कलौ । क्षीरप्रदानसबन्धि भावि गोषु च गौरवम् ॥
अनावृष्टिभयप्रायाः प्रजा क्षुद्भयकारका । भविष्यति तदा हृष्टा गगनासक्तदृष्टयः ॥
कन्दपर्णफलाहारास्तापसा इव मानवा । आत्मान घातयिष्यन्ति वृथावृष्ट्यातिदुःखिताः ॥
दुर्भिक्षमेव सततं सदा क्लेशमनीश्वरा. । प्राप्स्यन्ति व्याहतसुखप्रमोदा मानवाः कलौ ॥
अस्नानभोजनं नाग्निर्देवतातिथिपूजनम् । भविष्यन्ति कलौ प्राप्ते न च पिण्डोदकक्रिया ॥
लोलुपा ह्रस्वदेहाश्च बह्वन्नादानतत्पराः । बहुप्रजल्पभाग्याश्च भविष्यन्ति कलौ स्त्रियः ॥
कुर्वन्त्यो गुरुभर्तॄणां आज्ञा भिन्दन्त्यनावृता. । स्वपोषणपराः क्षुद्रा देहसंस्कारवर्जिताः ॥
परुषानृतभाषिण्यो भविष्यन्ति कलौ स्त्रियः । दु शीला दुष्टशीलेषु कुर्वन्त्यः सततं स्पृहाम् ॥
असद्वृत्ता भविष्यन्ति पुरुषेषु कुलाङ्गनाः । वेदादानं करिष्यन्ति वटवश्चाकृतव्रताः ॥

गृहस्थाश्च न भोक्ष्यन्ति न दास्यन्त्युचितान्यपि ॥

वनवासा भविष्यन्ति ग्रामकामपरिग्रहाः । भिक्षवश्चापि मित्रादिस्नेहसंबन्धयन्त्रिताः ॥
अरक्षितारो भर्तारः शुल्कव्याजेन पार्थिवाः । हारिणो जनवित्तानां सप्राप्ते तु कलौ युगे ॥

यो योश्वरथनागाढ्यः स स राजा भविष्यति ।
यश्च यश्चाबल सर्वः स स भृत्यः कलौ युगे ॥

वैश्याः कृषिवाणिज्यादि संत्यज्य निजकर्म यत् ।
शूद्रवृत्त्या प्रपत्स्यन्ति कारुकर्मोपजीविनः ॥

भैक्षवृत्त्या तथा शूद्राः प्रव्रज्यालिङ्गिनोऽधमाः ।
पाषण्डसंश्रया वृत्तिमाश्रयिष्यन्ति सत्कृताः ॥

दुर्भिक्षकरपीडाभिरतीवोपद्रुता जनाः । गोधूमान्नयवान्नाढ्यं देशं यास्यन्ति दुःखिताः ॥
वेदमार्गे प्रलीने च पाषण्डाढ्ये ततो जने । अधर्मवृद्ध्या लोकानामल्पमायुर्भविष्यति ॥
अशास्त्रविहितं घोरं तप्यमानेषु वै तपः । नरेषु नृपदोषेण बालमृत्युर्भविष्यति ॥
भवित्री योषितां सूतिः पञ्चषट्सप्तवार्षिकी । नवाष्टादशवर्षाणां मनुष्याणां तथा कलौ ॥

पलितोद्भवश्च भविता तथा द्वादशवार्षिकः ।
नातिजीवति वै कश्चित्कलौ वर्षाणि विंशतिम् ॥

अल्पप्रज्ञा वृथालिङ्गा दुष्टान्तःकरणाः कलौ । यतस्ततो विनंक्ष्यन्ति कालेनाल्पेन मानवाः ॥
यथा यथा हि पाषण्डवृद्धिर्मैत्रेय लक्ष्यते । तथा तथा कलेर्वृद्धिरनुमेया विचक्षणैः ॥
प्रारम्भाश्चावसीदन्ति यथा धर्मकृता नृणाम् । तथानुमेयं प्राधान्यं कलेर्मैत्रेय पण्डितैः ॥
यदा यदा न यज्ञानामीश्वरः पुरुषोत्तमः । इज्यते पुरुषैर्यज्ञैस्तदा ज्ञेयं कलेर्बलम् ॥
न प्रीतिर्वेदवादेषु पाषण्डेषु यथा रतिः । कलेर्वृद्धिस्तथा प्राज्ञैरनुमेया द्विजोत्तम ॥
कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम् । नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता जनाः ॥

स्वल्पोम्बुवृष्टिः पर्जन्यः सस्यं स्वल्पफलं तथा ।
फलं तथाल्पसारं च विप्र प्राप्ते कलौ युगे ॥

शाणप्रायाणि वस्त्राणि शमीप्राया महीरुहाः ।
शूद्रप्रायास्तथा वर्णा भविष्यन्ति कलौ युगे ॥

अणुप्रायाणि धान्यानि अजप्रायं तथा पयः । भविष्यन्ति कलौ प्राप्ते उशीरं चानुलेपनम् ॥
श्वश्रूश्वशुरभूयिष्ठा गुरवश्च नृणां कलौ । श्यालाद्या हारिभार्याश्च सुहृदो मुनिसत्तम ॥

कस्य माता पिता कस्य यथा कर्मात्मकः पुमान् ।
इतीवोदाहरिष्यन्ति श्वशुरानुगता नराः ॥

वाङ्मनःकर्मकैर्दोषैरभिभूताः पुनः पुनः । नराः पापान्यनुदिनं करिष्यन्त्यल्पमेधसः ॥

निस्सत्यानामशौचानां निर्ह्रीकाणां तथा द्विजः ।
यद्यद्दुःखायते सर्वं कलिकाले भविष्यति ॥

निःस्वाध्यायवषट्कारस्वधास्वाहाविवर्जिते । तदा प्रविरलो धर्मः क्वचिल्लोके विवत्स्यति ॥

तत्राल्पेनैव यत्नेन पुण्यस्कन्धमनुत्तमम् । करोति य. कृतयुगे क्रियते महता हि सः ॥

कूर्मपुराणेऽपि —

राजानः शूद्रभूयिष्ठाः ब्राह्मणान्घातयन्ति च । भ्रूणहत्या वीरहत्या प्रजायेत प्रजासु वै ॥

विनिन्दन्ति महादेवं ब्रह्माणं पुरुषोत्तमम् । आम्नायं धर्मशास्त्राणि पुराणानि कलौ युगे ॥

शुक्लदन्ताजिताक्षाश्च मुण्डाः काषायवाससः ।
शूद्रा धर्मं चरिष्यन्ति युगान्ते समुपस्थिते ॥

ताडयन्ति द्विजेन्द्रांश्च शूद्रा राजोपसेविनः ।
सेवन्ते ब्राह्मणास्तत्र स्तुवन्ति स्तुतिभिः कलौ ॥

अध्यापयन्ति वै वेदान् शूद्राणा शूद्रसेवकाः ।
पठन्ति वैदिकानर्थान्नास्तिका योगमास्थिताः ॥

तपोयज्ञफलाना च विक्रेतारो द्विजोत्तमाः । यतयश्च भविष्यन्ति शतशोऽथ सहस्रशः ॥

नाशयन्ति ह्यधीतानि नाधिगच्छन्ति चानघ । गायन्ति लौकिकैर्गानैः देवतानि नराधिप ॥

वामा. पाशुपताचारास्तथा वै पाञ्चरात्रिकाः ।
भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा ॥

अन्यत्रापि —

मुखं दग्धं परान्नेन हस्तौ दग्धौ प्रतिग्रहात् ।
मनो दग्धं परस्त्रीभिर्ब्रह्मशापः कुतः कलौ ॥ इति ॥

तथा चेत्थं व्यवस्थितत्वेनावगतेषु युगधर्मेषु कृतयुगधर्माश्रितायां कथं प्रतिपादिता इति चेत् सत्यम् । केवलं धर्मप्रधाने राजनि सति कालस्य कृतत्वं तत्र चतुष्पाद्धर्मस्य प्रवृत्तिः । राज्ञो धर्मबुद्धिह्रासानुगुणतया त्रेतादीनि युगानि तद्धर्माश्च प्रवर्तन्त इति, युगानां कृतत्वादिकं तद्धर्मप्रवृत्तिश्च राजाधीनैव । तदुक्तं **राजधर्मे** —

कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥

दण्डनीत्या यदा राजा सम्यक्कार्त्स्न्येन वर्तते । तदा कृतयुगं नाम कालश्रेष्ठः प्रवर्तते ॥
भवेत्कृतयुगे धर्मो नाधर्मो विद्यते क्वचित् । सर्वेषामेव वर्णानां नाधर्मे रमते मतिः ॥
योगक्षेमाः प्रवर्तन्ते प्रजानां नात्र संशयः । वैदिकानां च कर्माणि भवन्ति द्विगुणान्युत ॥
ऋतवश्च सुखास्सर्वे भवन्त्युत निरामयाः । प्रसीदन्ति नराणां च स्वरवर्णमनांसि च ॥
व्याधयो न भवन्त्यत्र नाल्पायुर्दृश्यते नरः । विधवा न भवन्त्यत्र नृशंसो नाभिजायते ॥
अकृष्टपच्या पृथिवी भवन्त्योषधयस्तथा । त्वक्पत्रफलमूलानि वीर्यवन्ति भवन्ति च ॥
नाधर्मो विद्यते तत्र धर्म एव तु केवलः । इति कार्तयुगानेतानंशान् विद्धि युधिष्ठिर ॥
दण्डनीत्या यदा राजा त्रीनंशाननुवर्तते । चतुर्थमंशं संत्यज्य तदा त्रेता प्रवर्तते ॥
अशुभस्य चतुर्थांशः त्रीनंशाननुवर्तते । कृष्टपच्यैव पृथिवी भवत्यल्पफला तथा ॥

दण्डनीतिं समुत्सृज्य यदा कार्त्स्न्येन भूमिपः ।
प्रजाः क्लिश्नात्ययोगेन प्रवर्तेत तदा कलिः ॥

कलावधर्मो भूयिष्ठो धर्मो भवति न क्वचित् । सर्वेषामेव वर्णानां स्वधर्माच्च्यवते मनः ॥
शूद्रा भैक्षेण जीवन्ति ब्राह्मणाः परिचर्यया । योगक्षेमस्य नाशश्च वर्तते वर्णसङ्करः ॥
वैदिकानि च कर्माणि भवन्ति विगुणान्युत । ऋतवो न सुखास्सर्वे भवन्त्यामयिनस्तथा ॥
ह्रसंति च मनुष्याणां स्वरवर्णमनांसि च । व्याधयश्च भवन्त्यत्र म्रियन्ते च गतायुषः ॥
विधवाश्च भवन्त्यत्र नृशंसा भवति प्रजाः । क्वचिद्वर्षति पर्जन्यः क्वचित्सस्यं प्ररोहति ॥

रसाः सर्वे क्षयं यान्ति यदा नेच्छति भूमिपः ।
प्रजाः संरक्षितुं सम्यग् दण्डनीति समाहितः ॥

राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च । युगस्य तु चतुर्थस्य राजा भवति कारणम् ॥
कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते । त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते ॥
प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते । ततो वसति दुष्कर्मा नरके शाश्वतीस्समाः ॥

प्रजानां कल्मषे मग्नोऽकीर्तिं पापं च विन्दति ।
दण्डनीतिं तिरस्कृत्य विजानन् क्षत्रियस्सदा ॥
अनवाप्तं च लिप्सेत लब्धं च परिपालयेत् ।
लोकस्य सीमान्तकरी मर्यादा लोकभाविनी ॥

सम्यङ् नीता दण्डनीति यथापिता ।
यस्या भवन्ति भूतानि तद्विद्धि भरतर्षभ ॥

एष एव परो धर्मो यद्राजा दण्डनीतिमान् । तस्मात्कौरव धर्मेण प्रजाः पालय नीतिमान् ॥

एवंवृत्तः प्रजा रक्षन् स्वर्गं जेतासि दुर्जयम् । कृतः त्रेता द्वापरश्च कलिश्च भरतर्षभ ॥

राजवृत्तानि सर्वाणि राजैव युगमुच्यते ॥ इति ।

अनुभूयते च इदानीं प्रत्यक्षतोऽपि एकस्मिन्नेव देशे यदा धर्मप्रवृत्तो राजा भवति तदा तत्रत्या जना अपि धार्मिका एव भवन्ति; अधर्मिष्ठे चेत्तस्मिन् जना अपि तादृशा एव भवन्ति ।

इत्थमेव कलियुगत्वाविशेषेऽपि यस्मिन्देशे राजा धार्मिको राजा धर्मतः प्रजाः सम्यक् परिपालयति तत्रत्या जना अपि तादृशाः । यत्र त्वधार्मिको राजा तत्रत्या जना अपि तादृशा एवेति । एवमेव च एकस्यैव राज्ञः यदा धर्मबुद्धिस्तदा तदीये देशे धर्माभिवृद्धिः तस्यैव अधर्मबुद्धौ तदीयदेशे अधर्माभिवृद्धिः । इत्थं च देशकालादीनां धर्माधर्मव्यवस्थापकत्वमुपपन्नमिति राजाधीनैव युगव्यवस्थेति सिद्धम् ॥

अत एव कृतयुगेऽपि अधर्मिष्ठो वेनो राजा युगधर्मोपमर्देन अधर्मं प्रवर्तितवान्; तेन च स्वयमपि नष्टोऽभवदिति प्रतिपादित **मानवे** —

मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ।
स महीमखिलां भुञ्जन् राजर्षिप्रवरः परः ।
वर्णानां संकरं चक्रे कामोपहतचेतनः ॥ इति ।

वेनो विनष्टोऽविनयान्नहुषश्चैव पार्थिवः ॥ इति च ।

**विष्णुपुराणेऽपि** —

सुनीथा नाम या कन्या मृत्योः प्रथमजाऽभवत् ।
अङ्गस्य भार्या या दत्ता तस्यां वेनो व्यजायत ॥

निसर्गादेव मैत्रेय दुष्टभावो व्यजायत ।
अभिषिक्तो यदा राजा स वेनः परमर्षिभिः ॥

घोषयामास च नरान् पृथिव्यां पृथिवीपतिः ।
न यष्टव्यं न दातव्यं न होतव्यं कथञ्चन ।
भोक्ता यज्ञस्य कस्त्वन्यो ह्यहं यज्ञपतिः प्रभुः ॥

ततस्तमृषय पूर्वं सपूज्य पृथिवीपतिम् । ऊचुः सामकलं सम्यङ्मैत्रेय समुपस्थिता ॥
राज्यहेतूपकाराय प्रजाना च हितं परम् । दीर्घसत्रेण देवेशं सर्वयज्ञेश्वरं हरिम् ॥
पूजयिष्याम भद्र ते तत्राशस्ते भविष्यति । यज्ञेन पुरुषो विष्णुर्यज्ञ. सपूजितो नृप ॥
अस्माकं भवतः कामान् सर्वानेव प्रदास्यति । यज्ञैर्यज्ञेश्वरो येषा राष्ट्रे सपूजितो हरि. ॥
तेषा सर्वेप्सितावाप्तिं ददाति नृप भूभृताम् ॥

वेनः —

मत्त कोऽभ्यधिकोऽन्योऽस्ति कश्चाराध्यो ममापर ।
कोऽयं हरिरिति ख्यातो यो वो यज्ञेश्वरो मतः ॥
न दातव्यं न यष्टव्यं न होतव्यं च वै द्विजा. ।

ऋषय ऊचुः —

देह्यनुज्ञां महाभाग मा धर्मो यातु संक्षयम् । हविषां परिणामोऽयं यदेतदखिलं जगत् ॥
इति विज्ञाप्यमानोऽपि स वेनः परमर्षिभिः । यदा ददाति नानुज्ञा प्रोक्तः प्रोक्तः पुनः पुनः ॥
ततस्तमृषयस्सर्वे कोपामर्षसमन्विता. । हन्यना हन्यता पाप इत्यूचुश्च परस्परम् ॥
यो यज्ञपुरुषं विष्णुमनादिनिधनं हरिम् । विनिन्दत्यधमाचारो न स योग्यो भुवः पतिः ॥
इत्युक्त्वा मन्त्रपूतैस्ते कुशैर्मुनिगणा नृपम् । निजघ्नुर्निहतं पूर्वं भगवन्निन्दनादिना ॥ इति

तस्मिन्नेव कृतयुगे धर्मिष्ठे नले राजनि तद्भयात्कलिः विभीतकमाश्रितवानिति प्रतिपादितं **वनपर्वणि** —

निषधेषु महीपालो वीरसेन इति श्रुतः । तस्य पुत्रोऽभवन्नाम्ना लोकधर्मार्थकोविदः ॥
ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपति । यो वेदधर्मानखिलान् यथावच्चरितव्रतः ॥
यस्मिन् सत्यं धृतिर्दानं तप. शौचं दमः शमः । ध्रुवाणि पुरुषव्याघ्रे लोकपालसमप्रभे ॥
एवंगुणं नृपं यो वै कामयेच्छपितुं कले ।
कृच्छ्रे स नरके मज्जेदगाधे विपुले ह्रदे ॥
नलो नामारिदमनः पुण्यश्लोक इति स्मृतः ।
ब्रह्मण्यो वेदविद्वाग्मी पुण्यकृत्सोमपोऽग्निमान् ॥
यष्टा दाता च योद्धा च सम्यक् चैव प्रशासिता ।
स शप्तुमैच्छत्कुपितो निषधाधिपतिः कलिम् ॥

तमुवाच कलिर्भीतो वेपमानः कृताञ्जलिः ।
कोप सऋच्छ नृपते कीर्ति दास्यामि ते पराम् ॥

शरण त्वा प्रपन्नोऽस्मि शृणु चेदं वचो मम ।
ये च त्वा मनुजा लोके कीर्तयिष्यन्त्यतन्द्रिताः ॥

मत्प्रसूतं भयं तेषा न कदाचिद्भविष्यति ।
भयार्त शरणं यान्त यदि मा त्वं न शप्स्यसे ॥

एवमुक्तो नलो राजा न्ययच्छत्कोपमात्मन ।
ततो भीतः कलिः क्षिप्रं प्रविवेश विभीतकम् ॥ इति ।

**नैषधेऽपि —**

वेदानुद्रदता तत्र मुखादाकर्णयन् पदम् । न प्रसारयितुं कालः कलिः पदमपारयत् ॥

नलराजधान्यामध्येतृगा वेदपदानि शृण्वन् कलि स्वकीयं पदं न प्रसारयितुं समर्थो बभूवेत्यर्थः ॥

श्रुतिपाठकवक्त्रेभ्यस्तत्राकर्णयतः क्रमम् । क्रमः सकुचितस्तस्य पुरे दूरमवर्तत ॥

वेदाध्येतृणां मुखेभ्य. पदद्वयसहितारूपं क्रममाकर्णयतः कलेः पादविन्यासलक्षणः क्रमः सकुचितः सन् नगरद्वार एवावस्थित इत्यर्थ. ॥

तावद्गतिर्धृताटोपा पादयोस्तेन सहिता । न वेदपाठकण्ठेभ्यो यावदश्रावि सहिता ॥

अध्येतृमुखाद्वेदसहिता शृण्वतः कलेः पादयोः ससंभ्रमा गतिः न संहिता न संगता ; गतिस्तम्भोऽभूदित्यर्थः ॥

तस्य होमाज्यगन्धेन नासा नाशमिवागमम् । विततान दृशौ नासौ क्रतुधूमकदर्थिते ॥

तस्मिन्पुरे होमगन्धेन कलेः घ्राणेन्द्रियं नाशमगमदिव । क्रतुधूमेनान्धीकृते लोचने अपि नोन्मीलयति स्म ॥

अतिथीनां पदाम्भोभिरहः प्रत्यतिपिच्छले । अंगणे गृहिणां तत्र खलेनानेन चस्खले ॥

गृहस्थानामंगणे प्रत्यहमतिथिप्रक्षालनोदकेन अतिपंकिले धूर्तेन कलिना स्खलितमित्यर्थः ।

पुटपाकमसौ प्राप क्रतुशुष्ममहोष्मभिः । तत्प्रत्यङ्गमिवाकर्त्ति पूर्तोर्मिव्यजनानिलैः ॥

क्रतुपावकसंतापैर्गूढपाकं कलिः प्राप्त इव । पूर्तानां वापीनां तटाकानां ऊर्मिव्यजनपवनैः कलेरंगं निकृत्तमभूदित्यर्थः ।

पितॄणां तर्पणे वर्णैः कीर्णाद्वेश्मनि वेश्मनि । कालादिव तिलात्कालाद्दूरमत्र सदाऽत्रसत् ॥

प्रतिगृहं पितृश्राद्धादौ रक्षोहननाय चातुर्वर्ण्येन प्रकीर्णात्कृष्णतिलात् मृत्योरिव कलिः भीतोऽभूदित्यर्थः ।

यज्ञयूपवनां जज्ञौ स पुरं शंकुशंकुलाम् । जनर्धर्मवनैः कीर्णां व्यालक्रोडीकृता च ताम् ॥

यज्ञीययूपैः धार्मिकजनैश्च सपूर्णां पुरीं कलिः शङ्कुशूलादिभिः व्यालैश्च समाक्रान्तामिव दुरासदां ज्ञातवानित्यर्थ ॥

स्नातॄणां तिलकैर्मेने स्वमन्तर्दीर्णमेव स । कृपाणीभूय हृदयं प्रविष्टैरिव तस्य तैः ॥

स्नायिना तिलकैः खड्गैरिव अन्तः प्रविष्टैः स्वहृदयं विदीर्णं मेने इत्यर्थ ॥

पुमांसं मुमुदे तत्र विन्दन् मिथ्यावदां वदम् ।
स्त्रियं प्रति तथा वीक्ष्य तमथ म्लानवानयम् ॥

तत्र पुरे कलिः अनृतवादिनि आश्रयलाभाशया मुमुदे । तच्चानृतं वचनं स्त्रीषु अनिषिद्धां नर्मोक्ति ज्ञात्वा म्लानो बभूव ॥

स पार्श्वमशकद्गन्तुं न वराकः पराकिणाम् । मासोपवासिनां छायालङ्घने घनमस्खलत् ॥

तुच्छः कलिः पराकं द्वादशाहोपवासं कुर्वता समीपगमने समर्थो नासीत् । मासोपवासिनां छायालङ्घने भृशमस्खलत् । दुरासदत्वात्तपस्विनामिति भाव ॥

आवाहितां द्विजैस्तत्र गायत्रीमर्कमण्डलात् ।
स सन्निदधतीं पश्यन् दृष्टनष्टोऽभवद्भिया ॥

द्विजैः संध्योपासनसमये समाहूतां सूर्यमण्डलात् समागतां गायत्रीं देवीं दृष्ट्वा सद्य एव नष्ट इत्यर्थः ।

स गृहे गृहिणां पूर्णे वने वैखानसैर्घने ।
यत्याधारेऽमरागारे क्वापि न स्थानमानशे ॥

तत्र पुरे गृहवनदेवालयेषु गृहस्थवानप्रस्थभिक्षुकैराक्रान्तेषु स कलिः स्थानं न लेभ इत्यर्थः ।

क्वापि नापश्यदन्विष्यन् हिंसामात्मप्रियाममौ ।
स्वमित्रं तत्र न प्रापदपि मूर्खमुखे कलिम् ॥

कलिः स्वप्रियां वृथाहिंसां कुत्रापि नापश्यत् । स्वमित्रं कलहमपि मूर्खमुखे न लेभ इत्यर्थः ।

हिंसागवीं मखे वीक्ष्य रिरंसुर्धावति स्म सः ।
सा तु सौम्य वृषासक्ता खरं दूरान्निरामनम् ॥

सोमयागे अनुबन्ध्यायाः गोर्हिंसामवलोक्य सत्वरमागतः दुष्टकलिः सोमयागधर्मार्थतया तया निरस्तो बभूव । तरुणवृषासक्तया गवा खरो निरस्तो गम्यते ॥

मौनेन व्रतनिष्ठाना स्वाक्रोशं म यते स्म स । वंद्यवन्दारुभिर्जज्ञौ स्वशिरश्च पदा हतम् ॥

मुनीना वाङ्मयमौनं स्वशापं गुर्वभिवादनममन्यत स्वशिरसि पदाघातं मेने ॥

मुनीनां स बृसी पाणौ पश्यन्नाचान्तमाण स । मेने धनैरमी हन्तुं शप्तुं मामङ्घ्रिरुद्यताः ॥

मौञ्जीधृतो धृताषाढानाशशङ्क स वर्णिन ।
रज्ज्वाऽमी बन्धुमायान्ति हन्ति दण्डेन मा ततः ॥

मौञ्जीर्मेखला पालाशदण्डांश्च बिभ्रतो ब्रह्मचारिणः पश्यन् कलिः मां पाशेन बध्त्वा दण्डेनाहन्तुममो समायान्तीति मेने ।

दृष्ट्वा पुरः पुरोडाशमासीदुत्रास दुर्मनाः । मन्वान. फणिनीस्तत्र स मुमोचाक्षि च स्रुचः ॥

यागार्थमासन्नान् पुरोडाशान् अवलोक्य तान् स्वताडनार्थपाषाणान् स्रुचश्च भुजगीर्मन्वान अतिभयेन विह्वलो बभूव बाष्पं च मुमोच ।

मुमुदे मदिरादानं विन्दन्नेष द्विजन्मनः । दृष्ट्वा सौत्रामणीमिष्टिं तं कुर्वन्तमदूषयत् ॥

सुराग्रहं गृह्णन्तं ब्राह्मणमालोक्य अनाचारबुध्या मुमुदे । सौत्रामणिं कुर्वाणं तमवलोक्य वैधत्वात्पर्यतप्यत ।

अपश्यद्यावतो वेदविदां ब्रह्माञ्जलीनसौ । उदडीयन्त तावन्तः तद्रक्ताञ्जलयो हृदः ॥

कलिरध्येतॄणा यावतो ब्रह्माञ्जलिविधानं अपश्यत् तावन्तो रक्ताञ्जलयः अस्य हृदयादुदगच्छन् ।

स्नातकं घातकं जज्ञौ दान्तं मेने कृतान्तवत् । वाचंयमस्य दृष्ट्वैव यमस्येव बिभाय सः ॥

समाप्तविघ्नं स्वहन्तारं तपस्विनं कृतान्तममन्यत । वाचोयमदर्शनेनेव भीतवान् ।

स पाषण्डजनान्वेषी प्राप्नुवन् वेदपण्डितान् । जलार्थीवानलं प्राप्य पापस्तापादपासरत् ॥

वेदबाह्या-वेषी कलिः वेदविदः प्राप्य तत्तेजसा जलार्थी अनलेनेव स तप्तः पापः अपसृतः ।

तत्र ब्रह्मद्रुणं पश्यन्नतिसंतोषमानशे । निर्वर्ण्य सर्वमेध्यस्य यज्वानं ज्वलतिस्म सः ॥

ब्रह्महत्यायां प्रवृत्तमालोक्य सतोषमवाप । सर्वमेधयाजिनं तं ज्ञात्वा स संतापमवाप ।

यतिहस्तस्थितैस्तस्य रांभैरारंभि तर्जना । दुर्जनस्याजनि क्लिष्टिर्गृहिणा वेदयष्टिभिः ॥

यतीनां रांभैर्वेणुदण्डैः गृहिणा वेदयष्टिभि दर्भसहितवेणुदण्डैश्च कलेर्भीतिक्लेशा-वुत्पादिताविति भावः ।

मण्डलत्यागमैच्छद्वीक्ष्य स्थण्डिलशायिनः । पवित्रालोकनादेव पवित्रासमपद्यत ॥

नियमार्थे भूशायिनो दृष्ट्वा कलिः तद्देशत्यागमैच्छत् । विप्रकरस्थितदर्भदर्शनात् पवित्रासं कुलिशत्रासं प्रापत् ।

अपश्यज्जिनमन्विष्यन्नजिनं ब्रह्मचारिणाम् । क्षपणार्थी सदीक्षस्य स चाक्षपणमैक्षत ॥

वेदबाह्याना दैवतं जिनं क्षपणकं चान्विष्यन् ब्रह्मचारिणां कृष्णाजिन अभिषेचनीय-क्रतुदीक्षितकृतदेवनं चावैक्षत । जिनाभावं क्षपणकाभावं चापश्यदित्यर्थान्तरमपि गम्यते ।

जपतां अक्षमालासु बीजाकर्षणदर्शनात् । स जीवाकृष्टिकष्टानि विपरीतदृगन्वभूत् ॥

वेदविरुद्धदर्शी स कलिः जपतामक्षमालाकलितकमलबीजाकर्षणदर्शनात् स्वस्य जीवाकर्षणदुःखान्यन्वभूत् ।

त्रिसंध्यं तत्र विप्राणां संपश्यन्नघमर्षणम् । ज्वरमैक्षदक्ष्योरेव निजयोरपकर्षणम् ॥

सवनत्रये अघमर्षणस्नानं कुर्वतां दर्शनात् स्वस्य ज्वरं स्वनेत्रोत्पाटनममन्यतेति भावः ।

अद्राक्षीत्तत्र कञ्चिन्न कलिः परिचित क्वचित् । भैमीनलव्यलीकाणुप्रश्नकामः परिभ्रमन् ॥

भैमीनलयोर्दोषलेशप्रश्नकामनया परिभ्रमन् कलिः स्वपरिचितं पापिष्ठं कञ्चिदपि नाद्राक्षीत् ।

तपस्स्वाध्याययज्ञानामकाण्डद्विष्टतापसः । स्वविद्विषा स्वयं तस्मिन् पश्यन्नुपततताप सः ॥

निर्निमित्ततापसद्वेषी कलिः पुरे स्वविरोधिनां तपस्स्वाध्याययज्ञानां समृद्धिं पश्यन्नु-पततापं।

कर्म्ठं तत्रोपनम्राया विश्वस्या वीक्ष्य तुष्टवान् ।
स मम्लौ तं विभाव्याथ वामदेवाभ्युपासकम् ॥

रन्तुं स्वयमागतायाः सर्वस्याः स्त्रियाः कामयितारं वीक्ष्य तुतोष। तं पुनः 'न काञ्चन स्वयमागतां परिहरेत्' इति श्रुतिसिद्धनियमोपेतं वामदेवदेवताविशेषोपासकं विमृश्य म्लानो बभूव ।

वैरिणी शुचिना तस्मै न प्रवेशं ददौ भुवि । न वेदध्वनिरालंबमंबरे वितताार च ॥

कलेर्वैरिणी नगराश्रिता शुचिना तद्भूमौ प्रवेशं न ददौ । वेदध्वनिरपि आकाशे अवकाशं न ददौ ।

दर्शस्य दर्शनात्तुष्टमग्निष्टोमस्य चानशे । जुघूर्णे पूर्णमासेष्टि सोमं सोमन्यतान्तकम् ॥

कलिः दर्शेष्टेरग्निष्टोमस्यैव दर्शनात् क्लेशं प्रापत् । पौर्णमासेष्टिदर्शी घूर्णितोभूत् । सोमयागसामान्यमन्तकममन्यत ।

तेनादृश्यन्त वीरघ्ना न तु वीरहणो जनाः । नापश्यत्सोभिनिम्रुक्तान् जीवन्मुक्तानवैक्षत ॥

तत्र पुरे कलिः युद्धे शत्रुघातिनो वीरघ्नानपश्यत्, न तु वीरहणः वृथा क्षत्रियघातिनो वृथाऽग्नित्यागिनो वाऽपश्यत् । अभिनिम्रुक्तान् सूर्यास्तमये सुप्तानभि-जनान्नापश्यत् । जीवन्मुक्तानात्मारामानेवापश्यत् ।

स तुतोषाश्नतो विप्रान् दृष्ट्वा स्पृष्टपरस्परान् ।
होमशेषीभवत्सोमभुजस्तान् वीक्ष्य दूनवान् ॥

परस्परान्वारंभणेन भक्षयतो दृष्ट्वा कलिस्तुतोष । यज्ञे हुतशिष्टसोमपान् तानवगत्य परितप्तवान ।

दृष्ट्वा जनं रजोजुष्टं तुष्टिं प्रापज्झटित्यसौ । तं पश्यन् पावनस्नानावस्थं दुःस्थोऽभवत्ततः ॥

रजसा मलिनं जनं पश्यन् तुष्टिं प्रापत् । 'वायव्यं गोरजः स्मृतं' इति शास्त्र-विहिते स्नाने पावनाय प्रवृत्तं तमवगत्य दुस्स्थोऽभवत् ।

अधावत्क्वापि गां वीक्ष्य हन्यमानामयं मुदा ।
अतिथिभ्यस्तु तां बुध्वा मन्दो मन्दं न्यवर्तत ॥

मन्दः कश्चिद्धन्यमाना गामभिवीक्ष्य सन्तोषेणाभ्यधावत् । ता च अतिथ्यर्थं हता बुध्वा खेदेन न्यवर्तत ।

हृष्टवान् स द्विजं दृष्ट्वा नित्यनैमित्तिकत्यजम् ।
यजमानं निरूप्यैनं ततो दीनमुखोऽद्रवत् ॥

स कलिः नित्यनैत्तिककर्मत्यागिनं द्विजं हर्षमवाप । तं च दीक्षितो न ददाति न जुहोति न याचतीत्यादिनिषेधानुसारेण पुरुषार्थदानहोमाद्यननुष्ठातारं दीक्षितमभिवीक्ष्य विवर्णवदनोऽद्रवत् ।

आननन्द निरीक्ष्यायं पुरे तत्रात्मघातिनम् । सर्वस्वारस्य यज्वानमेनं दृष्ट्वा स विव्यथे ॥

स कलिः आत्मत्यागिनमभिवीक्ष्य आननन्द । तं च सर्वस्वारक्रतुविशेषयज्वानमवगत्य विव्यथे ।

क्रतौ महाव्रते पश्यन् ब्रह्मचारीत्वरीरतम् । जज्ञे यज्ञक्रियामज्ञ स भण्डाकाण्डताण्डवम् ॥

अतः स कलिः महाव्रते क्रतौ ब्रह्मचारीत्वरीसवादं पश्यन् यज्ञक्रिया भण्डस्य ग्राम्यभाषणस्य अकाण्डे अकाले ताण्डवं विजृंभणं जज्ञे स्वप्रवेशस्याशक्यत्वात्, असूयया यज्ञं निंदितवानिति भावः ।

यज्वभार्याश्वमेधाश्वलिङ्गालिङ्गिवराङ्गताम् । दृष्ट्वाचष्ट च कर्तारं श्रुतौ भण्डमपण्डितः ॥

मूढः कलिः अश्वमेधाश्वजननयुक्तगुह्यां यज्वभार्यां दृष्ट्वा श्रुतेः कर्तारं भण्डं ग्राम्यभाषिणममन्यत ।

अथ भीमजया जुष्टं व्यलोकत कलिर्नलम् । दुष्टदृग्भिर्दुरालोकं प्रभयेव प्रभाकरम् ॥

कलिः भैमीसेवितं पापदृष्टिभिरदृश्यं नलं दुष्टदृग्भिः रोगोपहतदृष्टिभिः दुर्दर्शं प्रभावन्तं सूर्यमिव अपश्यत् ।

तयोः सौहार्दसार्द्रत्वं पश्यञ्छल्यमिवानशे । मर्मच्छेदमिवानच्छे स तं नर्मोक्तिभिर्मिथः ॥

स कलिः दमयन्तीनलयो प्रेमार्द्रत्वं पश्यन् शल्यं व्यसनं प्रापेव । तयोः परिहासविशेषैः स्वकीयमर्मच्छेदं प्राययेव यत्रानुकूलदापत्यं त्रिवर्गस्तत्र एधते इति भावः ॥

अमर्षादात्मनो दोषात्तयोस्तेजस्वितागुणात् । द्रष्टुं दृशाप्यनीशस्तौ तस्मादप्यचलत्कलिः ॥

कलिः अमर्षरूपात् स्वदोषात् भैमीनलयोस्तेजसा च तौ द्रष्टुमप्यशक्तस्सन् तस्माद्देशादप्यपलायत ।

अगच्छदाश्रयान्वेषी नलद्वेषी स निःश्वसन् । अभिराम गृहारामं तस्य रामसमश्रियः ॥

नलद्वेषी कलिः अवकाशान्वेषी सन् तदलाभादेव निःश्वसञ्च रामसमद्युतेर्नलस्य गृहाराममगच्छत् ।

रक्षिलक्षवृतत्वेन बाधनं न तपोधनैः । मेने मानी मनाक् तत्र स्वानुकूलं कलिः किल ॥

वनपालसहस्रसमाकीर्णे विविक्तदेशसेवितपस्विजनायोग्ये नलस्य गृहारामे ईषत्स्वस्यावकाशममन्यत ।

दलपुष्पफलैर्देवद्विजपूजाभिसंधिना । स नलेनार्जितान् प्राप तत्र नाक्रमितुं द्रुमान् ॥

कलिः दलपुष्पफलैः देवतातिथिपूजा कर्तुं स्थापितेषु वृक्षेषु क्रमणं न प्राप ।

अथ सर्वोद्भिदानतिपूरणाय स रोपितम् । बिभीतकं ददर्शैकं कुटं धर्मेष्वकर्मठम् ॥

नलेनारामे तरुगुल्मलतादिना सामस्त्यपूरणार्थमारोपितमकर्मठं सत्कर्मानुपयुक्तं बिभीतकमेकं कुटं वृक्षमपश्यत् ॥

स तं नैषधसौधस्य निकटं निष्कुटध्वजम् । बहुमेने निज तस्मिन् कलिरालंबनं वने ॥

गृहारामचिह्नभूतं नैषधसौधसमीपस्थितं तं वृक्षं निजाश्रयमधिकं मेने ।

निष्पदस्य कलेस्तत्र स्थानदानाद्बिभीतकः । कलिद्रुमः परं नासीदासीत्कल्पद्रुमोऽपि सः ॥

स बिभीतकः तत्र वने निराश्रयस्य कलेः आश्रयदानात् कलिद्रुमः केवलं न बभूव; किन्तु तदभीष्टदानात् कल्पद्रुमोऽपि बभूव इति ।

तस्मात् त्रेतायुगेऽपि धार्मिकेण रामेण कृतयुगधर्माः प्रावर्तन्त इति भगवता वाल्मीकिना यत्प्रतिपादितं तद्युक्तमेव ॥

**धर्म्यं यशस्यमायुष्यं राज्ञां च विजयावहम् ।**
**आदिकाव्यमिदं त्वार्षं पुरा वाल्मीकिना कृतम् ॥**

**यः शृणोति सदा लोके नरः पापात्प्रमुच्यते ॥**

अनेन महर्षिप्रणीतधर्मप्रधानमहापुरुषचरित्रश्रवणं धर्मादिफलप्रदं राज्ञां विशिष्य जयप्रदं चेति सूचितम् । अत एव तादृशस्य महाभारतश्रवणस्य धर्मादिकं फलं प्रतिपादितं भारते । तथा च **वनपर्वणि** धुन्धुमारचरिते —

धुन्धुमारमुपाख्यानं प्रथितं यस्य कर्मणा । इदं तु पुण्यमाख्यानं विष्णोस्समनुकीर्तनम् ॥

श्रृणुयाद्यः स धर्मात्मा पुत्रवांश्च भवेन्नरः । आयुष्मान् भूतिमांश्चैव श्रुत्वा भवति पर्वेद ॥

न च व्याधि[illegible] इति ।

[illegible] चरितं —

आख्यानमिदमाख्यातं सर्वपापहरं मया । य इदं श्रृणुयान्नित्यं मनोश्चरितमादितः ॥

स सुखी परिपूर्णार्थः स्वर्गलोकमियान्नरः ॥ इति ।

**स्वर्गारोहिके —**

यश्चैनं श्रृणुयान्नित्यमार्षं श्रद्धासमन्वितम् ।

स दीर्घमायुः कीर्तिं च सुगतिं चाप्नुयान्नरः ॥ इति ।

**आदिपर्वणि सौपर्णे —**

इमां कथां यः श्रृणुयान्नरः सदा पठेत वा द्विजगणमुख्यसंसदि ।

असंशयं त्रिदिवमियात्स पुण्यभाक् महात्मनः पतगपतेः प्रकीर्तनात् ॥

तत्रैवाऽन्यत्र पुण्यचारित्राणां वंशमधिकृत्योक्तम् —

आयुष्यश्चैव पुण्यश्च धन्यः श्रुतिसुखावहः । श्रोतव्यश्चैव सततं श्राव्यश्चैवानसूयया ॥

इदं तु वंशं नियमेन यः पठेन्महात्मनां ब्राह्मणदेवसन्निधौ ।

अपत्यलाभं लभते स पुष्कलं श्रियं यशः प्रेत्य च शोभनां गतिम् ॥

धन्यं यशस्यं पुत्रीयमायुष्यं विजयावहम् ।

वंशावतरणं श्रुत्वा देवगन्धर्वरक्षसाम् ॥

प्रभवाप्ययवित्प्राज्ञो न कृच्छ्रेष्ववसीदति ॥ इति ॥

**पुत्रकामश्च पुत्रान्वै धनकामो धनानि च ।**
**लभते मनुजो लोके श्रुत्वा रामाभिषेचनम् ॥**

**महीं विजयते राजा रिपूंश्चाप्यधितिष्ठति ।**
**राघवेण यथा माता सुमित्रा लक्ष्मणेन च ॥**

**भरतेन च कैकेयी जीवपुत्रास्तथा स्त्रियः ।**

अनेन धर्मप्रधानस्य महापुरुषस्य रामस्य राज्याभिषेकं श्रृण्वतः पुत्रधनाद्यभीष्टप्राप्तिर्भवतीत्युक्तम् । तथाच **उमासंहितायां —**

पूर्णे चतुर्दशे वर्षे पञ्चम्यां भरताग्रज. । भरद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिम् ॥
इत्यादि शृण्वना नृ ा यावत्पट्टाभिषेचनम् । सर्वकार्याणि सिध्यन्ति पापराशिश्च नश्यति ॥

रामाभिषेकश्रवणाद्धनवान् पुत्रवान् भवेत् ।
पार्थिवो विजयी भूयाज्ज्ञात्वा रामाभिषेचनम् ॥

**श्रुत्वा रामायणमिदं दीर्घमायुश्च विन्दति ।**
**रामस्य विजयं चेमं सर्वमक्लिष्टकर्मणः ॥**

**शृणोति य इदं काव्यं पुरा वाल्मीकिना कृतम् ।**
**श्रद्धानो जितक्रोधो दुर्गाण्यतितरत्यसौ ॥**

अनेन महापुरुषचरित्रं श्रद्धापूर्वकतयैव श्रोतव्यमिति सूचितम् । तथा च **भारते**—
भारताध्ययनात्पुण्यादपि पादमधीयतः । श्रद्धानस्य पूयन्ते सर्वपापान्यशेषतः ॥
देवदेवर्षयो यत्र तथा ब्रह्मर्षयोऽमलाः । कीर्त्यन्ते शुभकर्माणस्तथा यक्षमहोरगाः ॥
राजर्षयो महात्मानः सदा सुकृतकर्मिणः । भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः ॥
साहित्यममृतं चैव पवित्रं पुण्यमेव च । शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम् ॥
यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः ॥
असच्च सदसच्चैव यस्माद्विश्वं प्रवर्तते । श्रद्धान. सदोद्युक्त सत्यधर्मपरायणः ॥
आसेवन्निममध्यायं नरः पापात् प्रमुच्यते ॥ इति ।

**समागमं प्रवासांते लभते सह बान्धवै ।**

अनेन धर्मार्थतया बन्धुभिश्चिरविप्रयोगमपि सोढ्वा शत्रुविजयपूर्वकं पुनर्बन्धुभिः समागतस्य श्रीरामस्य चरितश्रवणेन चिरविप्रयुक्तबन्धुभिस्सह समागमं प्राप्नोतीति प्रतिपादनात् महापुरुषस्य यादृशं धर्म्यं चरित्रं शृणोति तादृशं फलं प्राप्नोतीति सूचितम् ॥

अत एव तपसा उत्तमस्थानं प्राप्तवतो ध्रुवस्य चरितश्रवणेन उत्तमस्थानाद्भ्रंशं न प्राप्नोतीति प्रतिपादितं **विष्णुपुराणे**—
यश्चैतत्कीर्तते नित्यं ध्रुवस्यारोहणं दिवि । सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥
स्थानभ्रंशं न चाप्नोति दिवि वा यदि वा भुवि ।
सर्वकल्याणसंयुक्तो दीर्घकालं च जीवति ॥ इति ।

अत एव तपस्विनः सौभरिमहर्षेः विषयासक्तिवशेन पुत्रपौत्रादिसन्ततिमनुभूय वैराग्यं प्राप्तवतः चरित्रश्रवणेन वैराग्यं फलं भवतीति प्रतिपादितं **विष्णुपुराणे** चतुर्थांशे सौभरिचरित्रे — "यश्चैतत्सौभरिचरितमनुस्मरति पठति पाठयति शृणोति श्रावयत्यवधारयति लिखति लेखयति शिक्षयत्यध्यापयति तस्याष्टौ जन्मान्यसन्नतिरपधर्मः वाङ्मनसयोरसन्मार्गानुसरणमशेषहेयेषु वा ममत्वं न भवतीति"। अत एव सत्पुरुषाणां सन्ततिश्रवणेन सन्तत्यभिवृद्धिरुक्ता **विष्णुपुराणे** —

ब्रह्माद्यं यो मनोर्वंशमहन्यहनि संस्मरेत् । तस्य वंशसमुच्छेदो न कदाचिद्भविष्यति ॥

अत एव बन्धुवियोगेन शोचतां कौरवाणां पुनर्व्यासकृतबन्धुसमागमप्रतिपादकपर्वश्रवणेन बन्धुसमागमरूपं फलं भवतीति प्रतिपादितं **आश्रमवासिके** —

तच्छ्रुत्वा नरदेवानां पुनरागमनं नराः । जहृषुर्मुदिताश्चासन् नानादेशगता अपि ॥

प्रियैस्समागमं तस्य यः सम्यक् शृणुयान्नरः ।
प्रियाणि लभते नित्यं इह च प्रेत्य चैव हि ॥

इष्टबान्धवसंयोगमनायासमनामयम् । यश्चैतच्छ्रावयेद्विद्वान् विदुषो धर्मवित्तमः ॥

स यशः प्राप्नुयाल्लोके परत्र च शुभां गतिम् ॥ इति ।

अत एव निरतिशयवैराग्यशालिनो जीवन्मुक्तस्य जडभरतस्य चरितश्रवणाद्विशुद्धज्ञानोदयेन वीतमोहस्सन् मुक्तियोग्यो भवतीति प्रतिपादितं **विष्णुपुराणे** —

इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ।
स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप ॥
इति भरतनरेन्द्रतत्त्ववृत्तिं कथयति यश्च शृणोति भक्तियुक्तः ।
स विमलमतिनुन्नमोहजालो भवति च संसरणेषु मुक्तियोग्यः ॥ इति ।

**शृण्वन्ति य इदं काव्यं पुरा वाल्मीकिना कृतम् ।**
**ते प्रार्थितान् वरान् सर्वान् प्राप्नुवन्ति हि राघवात् ॥**

अनेन यद्देवताचरित्रं श्रुतं सैव देवता प्रसन्ना अभीष्टं ददातीति सूचितम् । अत एव प्रसन्नायाः देव्याः फलदातृत्वमवगम्यते **मार्कण्डेयपुराणे** —

एभिस्स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः ।

तस्याहं सकलां बाधां नाशयिष्याम्यसंशयम् ॥

कीर्तयिष्यं० अष्टम्यां० श्रोष्यन्ति चैव भक्त्या० सुतम तेषां किंचि० भविष्यति न० ॥

तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः ।
श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं महत् ॥ इति ।

**श्रवणेन सुरास्सर्वे प्रीयन्ते संप्रशृण्वताम् ।**

अनेन देवकार्यसाधकपुरुषचरितश्रवणं देवताप्रीतिकरम् ॥

**विनायकाश्च शाम्यन्ति गृहे तिष्ठन्ति यस्य वै ।**

अनेन सत्पुरुषचरित्रप्रतिपादकग्रन्थः लिखितो यस्य गृहे तिष्ठति तस्य दुष्टग्रहपीडा न भवतीति सूचितम् ॥

**विजयेत महीं राजा प्रवासी स्वस्तिमान् व्रजेत् ।**
**स्त्रियो रजस्वलाः श्रुत्वा पुत्रान् सूयुरनुत्तमान् ॥**

अत्र राज्ञां विजयः प्रवासिनः सुखेन पुनर्गमनं गर्भधारणयोग्यानां स्त्रीणां पुत्रावाप्तिश्चेति प्रतिपादनात् उपासकस्य योग्यतानुगुणतया फलं भवतीति सूचितम् । अत एव अधिकारानुगुणं फलमुक्तं संक्षेपे — पठन् द्विजो । **कर्णपर्वणि —**

वेदावाप्तिर्ब्राह्मणस्येह दृष्टा रणे बलं क्षत्रियाणा जयश्च ।
धनज्येष्ठाश्चैव भवन्ति वैश्याः शूद्रारोग्य प्राप्नुवन्तीह सर्वे ॥ इति ।

**पुण्यं यश्च पठंश्चेममितिहासं पुरातनम् ।**
**सर्वपापैः प्रमुच्येत दीर्घमायुरवाप्नुयात् ॥**

अनेन महापुरुषचरित्रपुस्तकपूजनमपि महाफलमिति सूचितम् ॥

**प्रणम्य शिरसा नित्यं श्रोतव्यं क्षत्रियैर्द्विजात् ।**
**ऐश्वर्यं पुत्रलाभश्च भविष्यति न संशयः ॥**

अनेन राज्ञा ब्राह्मणमुखादेव महापुरुषचरित श्रोतव्यमिति सूचितम् । तथाच **स्कांदे —**

नत्वा नत्वा द्विजान् राजा शृणुयाद्विप्रवाक्यतः ॥ इति ॥

**स्वर्गारोहणिकेऽपि —**

व्यासोक्तं श्रूयते येन कृत्वा ब्राह्मणमग्रतः । स नरः सर्वकामांश्च कीर्तिं प्राप्येह शौनक ॥
गच्छेत्परमिमां सिद्धिमत्र मे नास्ति संशयः ॥ इति ॥

**रामायणमिदं कृत्स्नं शृण्वतः पठतस्सदा ।**
**प्रीयते सततं रामस्स हि विष्णुस्सनातनः ॥**

**आदिदेवो महादेवो हरिर्नारायणः परः ।**

अत्र रामायणपठनेन श्रीरामभद्रः प्रसीदतीत्यभिधाय तदनन्तरं रामस्य विष्णुरूपत्वप्रतिपादनात् विष्णुनामसंकीर्तनतत्स्मरणतच्चरितश्रवणादिना यत्फलं भवति तत्फलं रामनामोच्चारणतत्स्मरणतच्चरित्रश्रवणादिना भवतीति सूचितम् । तथा च **उमासंहितायां** पार्वती —

केनोपायेन लघुना विष्णोर्नामसहस्रकम् । पठ्यते पण्डितैर्नित्यं श्रोतुमिच्छाम्यहं प्रभो ॥

महेश्वर उवाच —

राम रामेति रामेति रमे रामे मनोरमे । सहस्रनामतत्तुल्यं रामनाम वरानने ॥

विष्णुनामोच्चारणादिफलं **विष्णुपुराणे —**

यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् । मैत्रेयाशेषपापानां धातूनामिव पावकः ॥
अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः । पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥
स सर्वस्सर्ववित्सर्वस्वरूपो रूपवर्जितः । भगवान् कीर्त्यते विष्णुरत्र पापप्रणाशनः ॥
चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् । नाशौचं कीर्तने तस्य सपवित्रकरो यतः ॥
ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥
प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै । यानि तेषां अशेषाणां कृष्णानुस्मरणं परम् ॥
कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते । प्रायश्चित्तं तु तस्यैतत् हरिसंस्मरणं परम् ॥
विष्णुसंस्मरणात् क्षीणसमस्तक्लेशसंचयः । मुक्तिं प्रयाति स्वर्गाप्तिं नास्य विघ्नोऽनुमीयते ॥

आयासः स्मरणे कोऽस्य स्मृतो यच्छति शोभनम् ।
पापक्षयश्च भवति स्मरतां तमहर्निशम् ॥

स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषं तमजं विष्णुं व्रजामि शरणं विभुम् ॥

रूपमारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान् । ददाति ध्यायते नित्यमपवर्गप्रदो हरिः ॥

चिन्त्यमानस्समस्तानां क्लेशानां हानिदो हरिः ।
समुत्सृज्याखिलं चिन्त्यं सोऽच्युतः किं न चिन्त्यते ॥

गङ्गास्नानसहस्रेषु पुष्करस्नानकोटिषु । यत्पापं विलयं याति स्मृते नश्यति तद्धरौ ॥

मुहूर्तमपि यो ध्यायेत् नारायणमतन्द्रितः । सोऽपि सिद्धिमवाप्नोति किं पुनस्तत्परायणः ॥

एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते । दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम् ॥

यथाऽग्निरुद्धूतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषान् ॥

**विष्णुपुराणे —**

भगवान् कीर्त्यते विष्णुरत्र पापप्रणाशनः । यदश्वमेधावभृथे स्नातः प्राप्नोति मानवः ॥

तत्फलं समवाप्नोति श्रुत्वैतन्मुनिसत्तम । प्रयागे पुष्करक्षेत्रे कुरुक्षेत्रे तथा मुने ॥

कृतोपवासः प्राप्नोति तदस्य श्रवणात्सकृत् । यदग्निहोत्रे सुकृते वर्षेणाप्नोति मानवः ॥

महापुण्यमयं विप्र तदस्य श्रवणात्सकृत् । यज्ज्येष्ठशुक्लद्वादश्यां स्नातो वै यमुनाजले ॥

मथुरायां हरिं दृष्ट्वा प्राप्नोति पुरुषः फलम् । तदाप्नोति फलं सम्यगध्यायं यश्शृणोति वै ॥

पुराणस्यास्य विप्रर्षे केशवार्पितमानसः । यमुनासलिले स्नातः प्रप्नोति मुनिसत्तम ॥

ज्येष्ठामूलेऽमले पक्षे द्वादश्यामुपवासकृत् । समभ्यर्च्याच्युतं सम्यङ्मधुरायां समाहितः ॥

अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं फलम् । आलोक्याधीयथान्येषामुदितानां स्ववंशजैः ॥

एतत्किलोचुरन्येषां पितरः सपितामहाः । कच्चिदस्मत्कुले जातः कालिन्दीसलिलाप्लुतः ॥

अर्चयिष्यति गोविन्दं मधुरायामुपोषितः । ज्येष्ठामूले सिते पक्षे येनेवं वशमप्युत ॥

परां ऋद्धिममावास्यां तारिताः सकुलोद्भवैः । ज्येष्ठामूले सिते पक्षे समभ्यर्च्य जनार्दनम् ॥

धन्यानां कुलजः पिण्डान् यमुनायां प्रदास्यति ।
तस्मिन् काले समभ्यर्च्य तत्र कृष्णं समाहितः ॥

दत्त्वा पिण्डं पितृभ्यश्च यमुनासलिलाप्लुतः ।
यदाप्नोति नरः पुण्यं तारयन् स्वपितामहान् ॥

श्रुत्वाऽध्यायं तदाप्नोति पुराणस्यास्य भक्तिमान् ।

एतत्संसारभीरूणा परित्राणमनुत्तमम् ।
दुस्स्वप्ननाशनं नृणा सर्वदुष्टनिबर्हणम् ॥ इति ॥

**विष्णुपुराणे —**

यश्चैतच्चरितं तस्य कृष्णस्य शृणुयात्सदा । सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥

**विष्णुपुराणे —**

इत्येतत्परमं गुह्यं कलिकल्मषनाशनम् । यः शृणोति नर. पापै. स सर्वैर्द्विज मुच्यते ॥
दृष्ट्वा समस्ततीर्थानि समस्तामरसन्तति । स्तुना तेन भवेदेतद्य' शृणोति दिने दिने ॥
कपिलादानजनितं पुण्यमत्यन्तदुर्लभम् । श्रुत्वा तस्य दशाध्यायं स चाप्नोति न संशयः ॥

यश्चैतत्सकलं शृणोति पुरुष' कृत्वा मनस्यच्युतं
सर्वं सर्वमयं समस्तजगतामाधारमात्माश्रयम् ।
ज्ञानं ज्ञेयमनादिमन्तरहितं सर्वामराणा हितं
स प्राप्नोति न सशयोपिविकलं यद्वाजिमेधे फलम् ॥

यत्रादौ भगवांश्चराचरगुरुर्मध्ये तथान्ते च स
ब्रह्मज्ञानमयोऽच्युतोऽखिलजगन्मध्यान्तसर्गप्रभुः ।
तच्छृण्वन् पुरुषः पवित्रमतुलं भक्त्या पठन् धारयन्
प्राप्नोत्यस्य न तत्समस्त्रिभुवनेष्वेकान्तसिद्धिर्हरिः ॥

यस्मिन्नयस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः ।
मुक्ति चेतसि यः स्थितोऽमलधिया पुंसा ददात्यव्ययः
किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते ॥

यज्ञैर्यज्ञविदो यजन्ति सततं यज्ञेश्वरं कर्मिणो
यं यं ब्रह्ममयं परावरपरं ध्यायन्ति वै ज्ञानिनः ।
यं संप्राप्य न जायते न म्रियते नो वर्धते हीयते
नैवासन्नच सद्भवत्यपि ततः किं वा हरेः श्रूयताम् ॥

काव्यं य. पितृरूपधृग्विधिहुतं हव्यं च भुंक्ते विभु-
र्देवत्वे भगवाननादिनिधन' स्वाहा स्वधासञ्जितम् ।
यस्मिन् ब्रह्मणि सर्वभूतनिलये मानानि नो मानिना
निष्ठायै प्रभवन्ति हन्ति कलुषं श्रोत्रात्ययातो हरि. ॥ इति ॥

कुटुंबवृद्धिं धनधान्यवृद्धिं
स्त्रियश्च मुख्याः सुखमुत्तमं च ।
श्रुत्वा शुभं काव्यमिदं महार्थं
प्राप्नोति सर्वा भुवि चार्थसिद्धिम् ॥

आयुष्यमारोग्यकरं यशस्यं
सौभ्रातृकं बुद्धिकरं शुभ च ।
श्रोतव्यमेतन्नियमेन सद्भि-
राख्यानमोजस्करमृद्धिकामैः ॥

अनेन महापुरुषचरितं नियमेन श्रोतव्यमिति सूचितम् । तथा च भारते —

तपो नियममास्थाय श्रुतमेतन्महर्षिणा । तस्मान्नियमसंयुक्तैः श्रोतव्यं ब्राह्मणैरिदम् ॥

देवाश्च सर्वे तुष्यन्ति ग्रहास्तच्छ्रवणात्तथा ।

भक्त्या रामस्य ये चेमां संहितां ऋषिणा कृताम् ।
शृण्वन्ति ये महात्मानस्तेषां वासस्त्रिविष्टपे ॥

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥

इत्यार्षे श्रीमद्रामायणे आदिकाव्ये वाल्मीकीये
चतुर्विंशतिसाहस्रिकाया **श्रीमद्युद्धकाण्डे** एकत्रिंशच्छततमः सर्गः

**श्रीमद्युद्धकाण्डं समाप्तम् ॥**



॥ श्रीः ॥

ये धर्मैकनिसर्गसिद्धरुचयो ये वेदवेद्ये परे
पुंसि ब्रह्मणि मैथिलीसहचरे भक्ता रघूणां वरे ।
ये वा कौतुकिनो रघूद्वहकथाशैलीसमाकर्णने
ये वा मर्मविदस्त एतदुररीकुर्वन्तु तैस्तैर्गुणैः ॥ १ ॥

प्रतिदिनमपि श्रीयज्ञेशप्रसादमुपेयुषा
गुरुवरकृपाधाम्ना श्रीत्र्यम्बकयज्वना ।
मुनिविरचिते षष्ठे काण्डेऽत्र युद्धसमाह्वये
प्रकटितमिदं धर्माकूतं यथामति गृह्यताम् ॥ २ ॥

अत्र भगवान् रामचन्द्रः,

सर्वे तस्यादृता धर्मा यस्यैते तत्र आहिताः ।

इत्यादिधर्मशास्त्रेण उत्कृष्टधर्मत्वेनावगतपितृवाक्यपरिपालनाय राज्यं परित्यज्यापि चतुर्दशवर्षाणि वने उषित्वा स्वप्राणानप्यविगणय्य युद्धे राक्षसहननेन महर्षिहितं विधाय राक्षसवधपरिकुपित दशाननकृत सीतापहरणजनितकोपातिशयो निखिलराक्षसहननसामर्थ्ये च सत्यपि तमेव च भार्यापहारिणमन्विष्य हनिष्यामि; एकस्यापराधे बहवो न हन्तव्या इति विचिन्त्य सर्वराक्षसवधादुपरम्य भार्यागवेषणलब्धं सुग्रीवं मित्रमासाद्य तदभीष्टार्थं प्रतिज्ञापूर्वकं साधयित्वा तत्सहायेन निखिलदेवकण्टकं सकलऋषिजनहिंसकं रावणं निषूदितवान् ॥

इत्थमापद्यपि धर्ममपरित्यजता रामेण इहैव लोके उत्कृष्टधर्मवशेनारण्येऽपि महाबलानां वानराणां सहायत्वेन लाभः, ग्राव्णामपि समुद्रमध्ये प्लवनं, शत्रुमर्मवेदिनः तदनुजस्य विभीषणस्य स्वत आगमनं, तेन आनुकूल्याचरणं, देवादिभिरवध्यस्य रावणस्य हननं, देवतानुग्रहवशेन परलोकं गतस्यापि पितुः पुनर्दर्शनं, स्वार्थं युद्धे पराक्रममृताना स्वकीयाना पुनरुज्जीवनं, स्वराज्यप्राप्तिः, स्वबन्धुभिस्समागम इत्यादिकं फलं सद्य एव प्राप्तम् ॥

ततः धर्मतो राज्यपरिपालनेन प्रजानां कृतयुगतुल्यान् भोगान् विधाय स्वीयानां जनानां स्थावराणामपि उत्तमलोकं दत्त्वा स्वयमपि स्वरूपमेष्यति ॥

रावणस्तु उत्पत्तिप्रभृति देवपीडनब्राह्मणहननयज्ञध्वंसननिखिललोकोद्वेजनपरदार-परद्रव्यापहरणभ्रातृद्रोहादिभिर्बाह्यैर्दोषैः कामक्रोधलोभमोहमदमात्सर्यादिभिस्तन्मूलकैरन्यै-रध्यान्तरैर्दोषैर्दूषितः पापातिशयेन, अनितरसाधारणतपस्संतोषितपितामहवरप्रसादलब्ध-देवाद्यवध्यभावं प्राप्यापि समुद्रपरिवेष्टितदृढप्राकारसवीतत्रिकूटशिखरनिविष्टलङ्कापुर्यां गज-वाजिसंपूर्णाया चतुरङ्गबलोपेतायां निवसन्नपि, इन्द्रादिविजेतृभिः इन्द्रजित्प्रमुखैः परिवृतोऽपि, सुवर्णरत्नमयप्राकारादिसमृद्धियुक्तोऽपि नैर्वानैश्च पुत्रज्ञातिबन्धुभिस्सह निहत इत्येवमादि-दुःखं अधर्मातिशयेन इहैव प्राप्तवान्। परत्रापि महापुरुषेण रामेण युद्धे हत इति सद्गतिर्जाता। तदभावे हि अतिदुःखाकरं रौरवादिनरकं प्राप्नुयादेव। इति धर्माधर्मयोरेवं प्रत्यक्षत एव फलमुपलभ्यते। अतो धर्मे प्रवर्तितव्यं अधर्मान्निवर्तितव्यमिति लोकान् बोधयितुं प्रवृत्तो **भगवान् वाल्मीकिः** एतादृशरावणहन्तु रामभद्रस्य आचारप्रतिपादनं व्याजीकृत्य व्यङ्ग्यमर्यादया श्रुतिस्मृतीतिहासानुगुणाचारलक्षणं धर्मं प्रकटयितुं रामायणं कृतवान्। तस्य च धर्मसत्पुरुषाचारलक्षणधर्मतात्पर्यकत्वमित्येतद्युक्तमेव। एतदभिप्रायेणैव भट्टाचार्यैः रामायणस्य तात्पर्यमभिहितं — रामवद्वर्तितव्यं स धर्मः रावणवन्न वर्तितव्यं सोऽधर्म इति ॥

अत्र धर्मव्यवस्थापनार्थमवतीर्णस्य धर्मैकतानमानसस्य भगवतः श्रीरामचन्द्रस्य चरितवर्णनमुखेन व्यंग्यमर्यादया निखिलधर्मान् प्रतिपादयितुं प्रवृत्तेन ब्रह्मणोपलब्धवरेण भगवता **वाल्मीकिना** विरचिते वेदोपबृंहणार्थं प्रवृत्ते निखिलविद्यास्थानोपबृंहिते उत्तम-काव्ये श्रीमद्रामायणे तात्पर्यविषयीभूतार्थं प्रकाशयितुं यद्यपि मादृशां नाधिकारः, तथाऽपि श्रीरामचन्द्रानुग्रहलब्धबुद्धिप्रसादेन मया यथामति श्रीरामायणधर्मतात्पर्यप्रकाशनं कृतम्। तच्च तत्स्मरणेनैव निरस्तसमस्तदोषं सत् श्रीरामचन्द्रप्रीतये भूयात् इति ॥

साधून् पालयितुं खलान् शमयितुं धर्मं दृढीकर्तुम-
 प्युत्पत्स्ये जगतीतलेऽनुयुगमित्याश्रुत्य विष्णुस्स्वयम्।
त्रेताया रघुसंतति तिलकयन् श्रीरामनामा परि-
 त्राताशेषऋषिर्दशाननवधाद्धर्मं व्यधादूर्जितम् ॥ ३ ॥

रामस्यास्य चरित्रवर्णनपरं रामायणाख्यं महा-
 काव्यं यत्प्रथमः कविर्व्यरचयत् पुण्यं पुमर्थप्रदम्।

तस्यैतस्य चिरन्तनीष्वपि महाव्याख्यास्वनुद्भावितं
भावं कञ्चिदसूचयद्विमलधीः श्रीत्र्यम्बकाख्यो मखी ॥ ४ ॥

यज्ञेशप्रबलप्रसादतरणेर्लाभादनायासतः
श्रीरामायणवारिधेरुपह्नतान् व्यङ्ग्यार्थमुक्तामणीन् ।
सूत्रेण ग्रथितान् प्रशस्तसुमनोबृन्देन चोपस्कृतान्
भक्त्या रामपदे समर्प्य सुकृतिष्वीधे सुधीस्त्र्यम्बकः ॥ ५ ॥

नानाशास्त्रपरिश्रमेण बहुधा यज्ज्ञानमासाद्यते
तज्ज्ञानं समुदञ्चति स्फुटतरं यामेव सशृण्वताम् ।
सेयं धर्मपरा मया विरचिता रामायणव्याकृतिः
श्रीरामस्य दयारसार्द्रमनसः संतुष्टये कल्पताम् ॥ ६ ॥

प्राचीनैः कविभिर्न धर्मपरता रामायणस्येरिता
सेयं सप्रति वर्ण्यतामिति मुहुः सप्रेरितेनादरात् ।
विद्वद्भिस्तदनुग्रहेण शरभक्ष्माभृत्कटाक्षेण च
व्याख्या त्र्यंबकयज्वना विरचिता विस्पष्टधर्माशया ॥ ७ ॥

यद्वंश्यैस्सहजाविशेषमविताः पूर्वे कुलीना हि मे
यस्याहं सहजाविशेषमधुना पोष्योऽस्मि धर्मात्मनः ।
मुक्त्वा तं शरभोजिराजतिलकं कस्येह संभाव्यते
श्रीरामायणभाववर्णनसमुद्भूतं समृद्धं यशः ॥ ८ ॥

अन्नप्राणमनोमतिस्मृतितपःश्रद्धामनीषाक्षमा-
सारस्सारविमुक्तिदोऽन्नमिह यो दत्ते स इत्यागमः ।
तस्मात्त्र्यंबकयज्वनः सपरिवारस्यान्नदाता महा-
राजश्री शरभोजिभोसलपतिर्नूनं चतुर्वर्गदः ॥ ९ ॥

तपश्श्रद्धामेधास्मृतिशममनश्चित्तधिषणा-
बलप्राणप्रत्यक्परमपुरुषैक्यावगतयः ।

वितीर्णाश्चौन्नास्स्युर्यदिह ददतान्नं तदमितं
प्रदातुस्ते पुण्यं कियदिति वदामः प्रभुमणे ॥ १० ॥

ये धर्मार्थविचारणप्रणयिनो ये नीतिजिज्ञासवो
ये कामागमसप्रदायरसिका ये मोक्षमार्गोन्मुखाः ।
ये वाक्यार्थमिथोविरोधपरिहारोक्तिप्रियम्भावुका-
स्ते सर्वे परिशीलयन्तु तदिदं त्रैयम्बकं वाङ्मयम् ॥ ११ ॥

क्वायं मन्दमतिर्जनो गहनगम्भीरं क्व रामायणं
श्रीरामेण तथाप्यमुष्य जगदन्तर्यामिणा प्रेरितः ।
भावोद्भावनमातनोदिह नहि स्वातन्त्र्यमस्यास्त्यतः
सद्योनुक्तिदुरुक्तयवद्यमखिलं रामस्मृतेश्शाम्यति ॥ १२ ॥

रामप्रसादमुखरेण मया कृताया-
मस्या कृतौ नहि भवामि यतः स्वतन्त्रः ।
आगस्ततो मम न किञ्चिदिहास्ति तच्चेत्
सद्यश्शमं रघुपतेः स्मरणादुपेयात् ॥ १३ ॥

शालीवाहशके सहस्रपरतः षट्के शतानां गते
चत्वारिंशत उत्तरे च शरदामब्दे विकार्याह्वये ।
मासेऽप्याश्वयुजे सितादिमतिथौ स्वातौ स्थिरे वासरे
धर्माकूतमिदं त्रियम्बकमखी संपूर्णतां नीतवान् ॥ १४ ॥

॥ श्रीरस्तु ॥



|| श्रीः ||

# || युद्धकाण्डपद्यार्धानुक्रमणिका ||



विषयाः पुट-संख्या

# धर्माकूतोदाहृत पद्यार्धानां गद्यरूपवाक्यानां च अनुक्रमणिका

| पद्यार्धं वाक्यं च | पुट-संख्या | मूलग्रन्थनाम |
| --- | --- | --- |
| असता च | ६८ | कामन्दके |
| असता च परिक्लेश | १८८ | ,, |
| असत्कृतमवज्ञातं | ३०८ | गीतायाम् |
| असत्यता निष्ठुरताऽकृतज्ञता | २५ | राजधर्मे |
| असत्यवचना नार्य· कस्ते | ३७४ | आदिपर्वणि |
| असदित्युच्यते | ३०९ | गीतायाम् |
| असद्वृत्ता | ४३६ | विष्णुपुराणे |
| असन्तुष्टमभक्तं | ४३ | मानवे |
| असन्तुष्टाः प्रमुह्यन्ति | ३ | स्त्रीपर्वणि |
| असभवे | १२६ | राजधर्मे |
| असभिन्नार्यमर्यादाः | ३१४ | आश्रमवासिके |
| असंमन्त्र्य | ८५ | द्रोणपर्वणि |
| असमानैश्च संकीर्णैः | ३१० | ब्रह्मपुराणे |
| असय इव | ३९२ | कादंबर्याम् |
| असिं समुद्यम्य | ३२५ | कर्णपर्वणि |
| असितो देवलश्चैव | २२२ | द्रोगपर्वणि |
| असुग्राह्यं | १४१ | उद्योगे |
| असुहृत्तादृशो | ४३ | राजधर्मे |
| असौ निवृत्तो | २७१ | कर्णपर्वणि |
| असंशयम् | ४४९ | आदिपर्वणि |
| असंशयं तेऽपि | १५२ | वनपर्वणि |
| अस्तब्धं | ६४ | राजधर्मे |
| अस्तब्धतामचापल्यं | ,, | कामन्दके |
| अस्त्रमस्त्रेण | ८५ | द्रोणपर्वणि |

| पद्यार्धं वाक्यं च | पुट-संख्या | मूलग्रन्थनाम |
|---|---|---|
| **उ** | | |
| उत्तलक्षणसंपन्नाः | ४१२ | ब्रह्मपुराणे |
| उक्ते वक्रो | ३७६ | वनपर्वणि |
| उग्रसेनसुतः कंसः | २५० | उद्योगे |
| उच्चैः प्रमोदम् | १८२ | प्राचीनाः |
| उच्चैः प्रहसनम् | ३३ | कामन्दके |
| उच्छिद्यमानो बलिना | ७३ | ,, |
| उच्छिद्यमानो बलिना | ६७ | ,, |
| उच्छिष्टचिह्नः | २१२ | वीतिहोत्रीये |
| उतङ्कस्य प्रियं | २२७ | आदिपर्वणि |
| उत वा विदुषो | ३५८ | वनपर्वणि |
| उताबलस्य | ३५८ | ,, |
| उत्कृष्टधर्मान्तरप्रतिषेधात् | १२१ | प्रजापतिवचनं |
| उत्तमेषूत्तमं | ४१५ | मानवे |
| उत्तमौजाः | १२९ | हरिवंशे |
| उत्तरं पार्श्वम् | १२९ | ,, |
| उत्तिष्ठति कबन्धोऽत्र | २०१ | राजधर्मे |
| उत्तिष्ठ राजन् | १४५ | द्रोणपर्वणि |
| उत्तीर्य सलिलात्तस्मात् | ३४८ | आदिपर्वणि |
| उत्थाय पश्चिवे | २७ | मानवे |
| उत्थाय सः | २५६ | कर्णपर्वणि |
| उत्थितो ब्राह्मणो | ४३५ | वनपर्वणि |
| उत्पतन्त | २८३ | आरण्यके |
| उत्पत्स्यते | ४३५ | वनपर्वणि |

| पद्यार्थं वाक्यं च | पुट-संख्या | मूलग्रन्थनाम |
|---|---|---|
| उल्काशनिधूमाद्यैर्हता | ,, | वराहसहितायां |
| उवाच कस्मादेकान्ते | ३३८ | विष्णुपुराणे |
| उवाच गालवं | ४०५ | उद्योगे |
| उवाच चैव | ३८४ | वनपर्वणि |
| उवाच पार्थं | १०५ | विष्णुपुराणे |
| उवाच प्रणतो | ३८५ | द्रोणपर्वणि |
| उवाच प्राञ्जलिर्भूत्वा | २५९ | शल्यपर्वणि |
| उवाच राजा | ८९ | भीष्मपर्वणि |
| उवाच सः | ३३६ | विष्णुपुराणे |
| उवाच सूतं | २८२ | वनपर्वणि |
| उशना चैव | ५९ | आपद्धर्मे |
| उशना विंशतिरिति | ६० | कामन्दके |
| उशना विशतिरिति | २३ | ,, |
| उशीनरः | ४०६ | उद्योगे |
| उशीरधात्री | २१३ | वीनिहोत्रीये |
| **ऊ** | | |
| ऊचु सामकल | ४४१ | विष्णुपुराणे |
| ऊर्जस्वि | ६ | राजधर्मे |
| ऊर्ध्वबाहुर्निरालम्बः | ३८३ | वनपर्वणि |
| ऊर्ध्वरश्मिरघोररश्मि. | ४७१ | ब्रह्मपुराणे |
| ऊर्ध्वं गच्छन्ति | ३०९ | गीतायां |
| ऊह्यमाना | २८३ | आरण्यके |
| **ऋ** | | |
| ऋचीकः | ४०६ | उद्योगे |

| पदार्थं वाक्यं च | पुट-संख्या | मूलग्रन्थनाम |
|---|---|---|
| एकांततो न | ७५ | आपद्धर्मे |
| एकां रात्रिं | ३६७ | आश्रमवासिके |
| एकाहार्यं युगं | ४३३ | वनपर्वणि |
| एकेन पादेन | ४३० | मनुः |
| एकेनापि | १० | ज्यो-रत्नमालायाम् |
| एको द्रोणो | २२५ | द्रोणपर्वणि |
| एकोऽपि दोषो | ६२ | कालिदासः |
| एकोऽप्यमात्यो | ७१ | उद्योगे |
| एकोर्थान् | २१ | भारते |
| एको वा | १४७ | काशीखण्डे |
| एको वीरो | ३५६ | वनपर्वणि |
| एकः कर्माणि | २१ | भारते |
| एकः समस्तं | ३३९ | विष्णुपुराणे |
| एकः संवारयामास | ३८६ | द्रोणपर्वणि |
| एडूकचिह्नाः | ४३४ | वनपर्वणि |
| एडूकान् पूजयिष्यन्ति | ,, | ,, |
| एतच्छ्रुत्वा तु | ४०५ | उद्योगे |
| एतच्छ्रुत्वा नृपो | ३६७ | भारते |
| एतत्कलियुगं नाम | ४३१ | वनपर्वणि |
| एतत्किल | ४५४ | विष्णुपुराणे |
| एतत्कृतयुगं | ४३१ | वनपर्वणि |
| एतत्तपश्च पुण्य | २०२ | राजधर्मे |
| एतत्तपश्च पुण्यं | १४० | ,, |

| पद्यार्धं वाक्यं च | पुट-संख्या | मूलग्रन्थनाम |
|---|---|---|
| जगाम स | ३३६ | विष्णुपुराणे |
| जगामास्तमिवादित्यः | १९२ | भीष्मपर्वणि |
| जग्राह पार्थ. | २९१ | कर्णपर्वणि |
| जग्राह रश्मीन् | ४११ | राजधर्मे |
| जघन्यगुणवृत्तिस्था | ३०९ | गीतायाम् |
| जघन्येषु | २ | सभापर्वणि |
| जघान युधि | १९२ | भीष्मपर्वणि |
| जज्ञे यज्ञक्रियामज्ञ. | ४४७ | नैषधे |
| जठरस्थोहि | ३३३ | याज्ञवल्क्यस्मृतिः |
| जडान्धमूकबधिरान् | ४३ | मानवे |
| जनको मैथिलो | २०० | राजधर्मे |
| जननी वापि | ३०७ | निर्णयसिन्धौ |
| जनशब्द | ३९२ | कादम्बर्यां |
| जनान्योऽभिभवति | ३२७ | उद्योगे |
| जनिष्यति | ४३४ | वनपर्वणि |
| जनैर्धर्मधनैः कीर्णां | ४४३ | नैषधे |
| जन्मन्यन्नं दिशती | ९ | ज्यो-रत्नमालायाम् |
| जन्मप्रभृति यत् पुण्यं | ९३ | यमस्मृतिः |
| जन्मप्रभृति | ४१७ | ,, |
| जन्मान्तर सहस्रेषु | ११२ | स्मृतिः |
| जपना अक्षमालासु | ४४५ | नैषधे |
| जपाप्रसूनारुणरोमयुक्तं | २१३ | वीतिहोत्रीये |
| जम्बूफलवदाकारस्तत्र | ४१८ | भारद्वाजस्मृतौ |
| जयति रिपुमहीपानाहवे | ४२१ | ब्रह्मपुराणे |

| पद्यार्धं वाक्यं च | पुट-संख्या | मूलग्रन्थनाम |
|---|---|---|
| जयत्यभिमुखान् | १५६ | कर्णपर्वणि |
| जयत्येकोऽपि | २१२ | वीतिहोत्रीये |
| जयाज्ञापय | ३६८ | कामन्दके |
| जयार्थं | २८१ | स्त्रीपर्वणि |
| जरत्कारू | ४०६ | उद्योगे |
| जरासन्धविनाशं | १२८ | सभापर्वणि |
| जलजास्स्थलजाश्चेति | ४१८ | आगस्त्यरत्नशास्त्रे |
| जलवद्धान्यधनवद्दुर्गं | ६ | कामन्दके |
| जलवांस्तृणवान्मार्गः | १० | राजधर्मे |
| जलार्थीवानलं प्राप्य | ४४५ | नैषधे |
| जलान्नायुध | ६ | कामन्दके |
| जलावगाहनासक्त. | २२१ | वीतिहोत्रीये |
| जलं निस्रावयेत् | ११ | राजधर्मे |
| जलं निस्रावयेत् | ११६ | ,, |
| जवसत्वोपपन्नाना | ४२३ | सभापर्वणि |
| जात्री जलविहारेच्छु | २०९ | वीतिहोत्रीये |
| जहर्षुर्मुदिताश्चासन् | ४५१ | आश्रमवासिके |
| जहर्षुर्मुदिताश्चासन् | ३१६ | ,, |
| जागर्ति लोको | २० | प्राचीनाः |
| जातमात्रं सुतं | ४०७ | उद्योगे |
| जातमिष्टमपत्यं मे | २९६ | अयोध्याकाण्डे |
| जातविस्मयम् | ३८४ | वनपर्वणि |
| जातो दानपतिः | ४०७ | उद्योगे |
| जानन्नुग्रप्रभावं | १८१ | आदिपर्वणि |

॥ श्री· ॥

## धर्माकूतानुस्मृतानां प्रमाणग्रन्थानां अथवा ग्रन्थकर्तॄणां नामानुक्रमणिका ॥